# ऋक्संहिता

पदपाठसहिता

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यं - श्रीमज्जयतीर्थश्रीचरणविरचिता ऋग्भाष्यटीका - मन्त्रार्थमञ्जरी - श्रीस्कन्दस्वामिभाष्यम् - वेङ्कटमाधवभाष्यम् - मुद्गलभाष्यम् - सायणभाष्यम् - सिद्धाञ्जनम् - नीतिमञ्जरी इत्येताभिर्नव व्याख्याभिः सहिता

## द्वितीयं सम्पुटम्

द्वितीयोऽध्यायः – विंशतितः द्वात्रिंशत् पर्यन्तानि सूक्तानि


प्रधानसम्पादकः

डा. सत्यध्यानाचार्य कट्टी

म्यानेजिङ्गट्रस्टी, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

सम्पादकः

डा. वादिराजाचार्य एल्.एस्.

उपनिर्देशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः



प्रकाशनम्

विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः, बेङ्गळूरु

(कर्नाटकसंस्कृतविश्वविद्यालयेन मानिता शोधसंस्था)

# ऋक्संहिता

पदपाठसहिता

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यं - श्रीमज्जयतीर्थश्रीचरणविरचिता ऋग्भाष्यटीका - श्रीराघवेन्द्रतीर्थविरचितमन्त्रार्थमञ्जरी - श्रीस्कन्दस्वामिविरचितं भाष्यम् - वेङ्कटमाधवाचार्यविरचितं भाष्यम् - मुद्गलविरचितं भाष्यम् - श्रीमत्सायणाचार्यविरचितं भाष्यम् - कपालिशास्त्रिविरचितं ऋक्संहिताव्याख्यानं सिद्धाञ्जनम् - श्रीयादेवविरचिता नीतिमञ्जरी इत्येताभिर्नव व्याख्याभिः सहिता

## द्वितीयं सम्पुटम्

द्वितीयोऽध्यायः विंशतितः द्वात्रिंशत् पर्यन्तानि सूक्तानि


प्रधानसम्पादकः

डा. सत्यध्यानाचार्य कट्टी

म्यानेजिङ्ग्ट्रस्टी, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

सम्पादकः

डा. वादिराजाचार्य एल्.एस्.

उपनिर्देशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः



*This Volume is published with the grant from the Govt. of Karnataka*





प्रकाशनम्

विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः, बेङ्गळूरु

(कर्नाटकसंस्कृतविश्वविद्यालयेन मानिता शोधसंस्था)

**Ṛk Samhitā** Vol.2 - Ṛg Bhāṣyam of Śrī Ānandatīrtha-bhagavatpādacārya, Ṛgbhāṣyatīkā of Śrīmajjayatīrtha, Mantrārthamañjarī of Śrī Rāghavendratīrtha, Ṛg Bhāṣyam of Śrī Skandhaswāmy, Śrī Venkatamādhava, Śrī Mudgala, Śrī Sāyaṇāchārya, Siddhāñjana by Śrī Kapāliśāstry, Nītimañjari by Śrīdyādeva

*Chief Editor*
**Dr. Satyadhyanacharya Katti,**

*Editor*
**Dr. Vadirajacharya L.S.**

*Published by :*
**Vidyadhisha Post-Graduate Sanskrit Research Centre,**
No.11, Uttaradi Matha Road, Basavanagudi, Bangalore-04.
Phone: 080-79689974. email : vidyadheeshashodha@gmail.com

No. of Pages : xvii+476

No. of Copies : 500

Year of Publication : 2021

Price : Rs.400



Printed at : **Vāgartha,** Hanumanthnagar, Bangalore-560 019.

।। श्रीदिग्विजयरामो विजयते ।।

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यनेकगुणगणालङ्कृत
श्रीमन्मूलसीतासमेतश्रीमन्मूलरामदिग्विजयरामवेदव्यासादिपादपद्माराधक
श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्यजगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थान
श्रीमदुत्तरादिमठाधीश
श्री श्री १००८ श्रीसत्याभिज्ञतीर्थकरकमलसञ्जात श्री श्री १००८ श्रीसत्यप्रमोदतीर्थवरकुमार
श्री श्री १००८ श्रीसत्यात्मतीर्थश्रीपादानां

# अनुग्रहसन्देशः

"अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः । तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते" इत्युद्घोषयत्याम्नायः स्वप्रवृत्तिप्रयोजनम् । दुःखं जिहासमानानां सुखं प्रेप्समानानां साधूनामधिकारिणां दुःखहानसुखप्राप्तिसाधनानि समुपदेष्टुं प्रववृतिरे निगमा इति निश्चप्रचम् ।

"यस्य प्रसादात् परमार्तिरूपादस्मात् संसारान्मुच्यते नापरेण", "बन्धको भवपाशेन भवपाशाच्च मोचकः", "त्वं मुक्तिदो बन्धदोऽतो मतो नः त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो" इत्यादिप्रमाणपर्यालोचनया प्रसन्नः परमेश्वरो नारायण एव संसारान्मोचकः इत्यपि सुद्रढिम्ना समसैत्सीत् ।

सत्येवं, यथा प्रतिपादने भगवान्नारायणः प्रसन्नः स्यात्तथैव श्रुतयः प्रतिपादयन्तीत्येवाङ्गीक्रियेत । "न तादृशी प्रीतिरीड्यस्य विष्णोः गुणोत्कर्षज्ञातरि यादृशी स्यादि"ति भाव[1]भावबोधकप्रमाणचरणशरणीकरणेन तु गुणभृद्गु[2]णोत्कर्ष एव सकलनिगममहातात्पर्यगोचर इत्यत्र नास्ति संशीतिगन्धः ।

यथाहुष्टीकाकृत्पादा जयतीर्थश्रीमच्चरणाः – सर्वाण्यपि हि वेदवाक्यान्यसङ्ख्येयकल्याणगुणाकरं सकलदोषगन्धविधुरमेकरूपमेव ब्रह्म नारायणाख्यं प्रतिपादयन्ति । किन्तु कानिचित् सर्वज्ञत्वसर्वेश्वरत्वसर्वान्तर्यामित्वसौन्दर्यौदार्यवीर्यादिगुणविशिष्टतया, कानिचिदपहतपाप्मात्वनिर्दुःखत्वप्राकृतभौतिकविग्रहरहितत्वादिदोषाभावविशिष्टतया, कानिचिदतिगहनताज्ञापनाय वाङ्मनसाद्यगोचरत्वाद्याकारेण, कानिचित् सर्वपरिहारेण तस्यैवोपादानायाद्वितीयत्वेन, कानिचित् सर्वसत्ताप्रतीतिप्रवृत्तिनिमित्तताप्रतिपत्यर्थं सर्वात्मकत्वे-

---
१. भावः - विष्णुः । २. गुणभृद् - विष्णुः ।

नेत्येवमाद्यनेकप्रकारैः परमपुरुषं बोधयन्ति । ततो व्याकुलबुद्धयो गुरुसम्प्रदायविकला अश्रुतवेदव्याख्यातारः सर्वत्राप्येकरूपतामननुसन्दधाना वेदं छिन्दन्ती''त्यादि ।

तथा अन्यत्रापि– ''यो हि सात्त्विकप्रकृतिर्लोकप्रवादात् कार्यत्वादिलिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठित-मानसस्तत्संस्कारवशाच्चान्यदगणयन् वर्तते तं प्रत्याप्तो बन्धुरिवायं समस्तो वेदस्तत्स्वरूपं स्वप्राधानमेव प्रतिपादयति । ततो वाक्यार्थज्ञानादवाप्तपरमानन्दस्तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवतीति तदर्थं कर्मविधयः । अथवा यः सांसारिकविविधदुःखं जिहासुः परमानन्दं च प्रेप्सुस्तत्साधनं जिज्ञासते, तं प्रति परमेश्वर एव प्रसन्नः परमेष्टसाधनतयोपदिश्यते । ततः कथमसौ प्रतीदतीत्यपेक्षायां तत्साक्षा-त्कारस्तदङ्गतया कर्माणीत्युभयथा स्वप्रधान एव परमेश्वरो वेदार्थः इति'' ।

तदेतद्वैदिकं महातात्पर्यं श्रीमदानन्दतीर्थकृतभाष्याधीत्यैव ज्ञायते । भाष्यश्चानन्दतीर्थीयं श्रीमज्जयतीर्थकृतटीकासहायेनैव परिज्ञाततात्पर्यं भवतीति विदितमेव विपश्चिदपश्चि-मानाम् । अतः सकलवेदाध्ययनप्रक्रमप्रदर्शनाय ऋग्वेदसंहिताया आद्याध्यायत्रयं समन्त्रार्थमञ्जरीटीक-मध्वभाष्योपेतप्रकाश्यमानमस्ति । समग्रापि संहिता सविमर्शतौलनिकाध्ययनसौकर्याय स्कन्दस्वामिवेङ्कटमाधवमुद्गलसायणभाष्यसिद्धाञ्जननीतिमञ्जर्यादियुता प्रकाश्यते । तदिदं प्रकाशनं सुप्रसिद्धनाम्ना विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रेण क्रियत इति महान् सन्तोषपारावारः । विद्याधीशस्नातकोत्तरशोधकेन्द्रस्य धर्मदर्शिनां मार्गदर्शकानां डा. पं. कट्टिसत्यध्यानाचार्याणां मार्गदर्शने उपनिर्देशकाः डा. पं. एल्.एस्. वादिराजाचार्याः प्रथमाध्यायस्य प्रथमाष्टके द्वितीयाध्यायस्यास्य संशोधने सम्पादने च कृतभूरिपरिश्रमाः । वैदिकग्रन्थसंशोधनं नाल्पस्य तपसः फलम् । सम्यग्व्याख्यान-योजनां विधाय मुद्राराक्षसान् परिहृत्य यथा पिपठिषवः पठेयुः सपटिम, तथा समपाद्येतैरिति महानानन्दथुः । अस्याः संस्थायाः स्थापकान् दि. प्रो. कृष्णाचार्यान् पाण्डुरङ्ग्युपनामधेयानपि साभिमानं संस्मरामः । तथा अन्येऽपि अस्याः संस्थायाः विश्वस्ताः धर्मदर्शिनः अस्य ग्रन्थस्य प्रकाशने महतीं सेवां व्यधुः । सर्वानेतान् अस्मदुपास्याः श्रीमूलसीतासमेतश्रीमन्मूलराम-दिग्विजयरामवेदव्यासवंशरामप्रसन्नविठ्ठलाः ज्ञानभक्तिवैराग्यादिदनेन सच्छास्त्रपाठप्रवचनसंशोधन-सम्पादनादिवाङ्मयसेवासौभाग्यदानेन च समनुगृह्णन्त्विति सम्प्रार्थयामहे ।

## प्राश्नो वाचः

''वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ।'' इति वचनानुसारेण वेदानां सर्वेषां अन्यतमस्य वा स्वप्रज्ञानुसारेणाध्ययनमुपनीतेन कर्तव्यम् । एकवेदपक्षे पितृपितामहादिपरम्पराप्राप्त एव वेदोऽध्येतव्य इत्यभिप्रेत्य ''स्वाध्यायोऽध्येतव्यः'' इति श्रुतिरस्मान् श्रावयत्यध्ययनाय स्वशब्दाम्नानेन । तच्चाध्ययनं न काम्यं किन्तु नित्यम् । अन्यथा पातित्यं स्यात् । ''वेदस्याध्ययनं नित्यमनध्ययने पातात्'' इति हि पुरुषार्थानुशासने सूत्रम् ।

यद्यप्ययमुपनीतो वटुः काव्यनाटकादिकं शृणोति तथापि निरर्थकमेव तच्छ्रवणम् । तेन सुकृतमार्गज्ञानाभावात् । अत एव मनुरप्यनुमन्यते–

**योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।।** इति ।

अत एव स्वाध्यायोऽवश्यमध्येतव्यः ।

परं भारतभणितिरेवं श्रूयते–

**चतुर्वेद्यपि यो विप्रः सूक्ष्मं ब्रह्म न विन्दति ।**
**वेदभारभराक्रान्तः सवै ब्राह्मणगार्दभः ।।**

इति केवलं वेदाध्ययनेन यो भारं बिभर्ति स भारवाही गार्दभः एव । वेदार्थभूतस्य ब्रह्मणोऽविज्ञानेनेति निन्दैव कृता महाभारते । अतो वेदार्थज्ञानमावश्यकम् । तच्चार्थज्ञानं व्याख्यानसापेक्षम् । वेदार्थस्तु विना सर्वज्ञोपदेशं देवानामपि दुरधिगम इति परमदयालुभिः श्रीमदानन्दतीर्थभगवत्पादैः तज्ज्ञापनाय ऋग्भाष्यं निरमायि । तच्च श्रीहरेरतितुष्टिकरं परममाङ्गलिकमिति तन्मङ्गलपद्य एव व्यक्तम् । ऋक्संहितार्थकथनमुखेन तत्र सर्वोऽपि वेदार्थो निर्णीयते । तदिदमुक्तं श्रीमच्चन्द्रिकाचार्यैः–

**ऋग्भाष्यं च चकारासौ सर्ववेदार्थनिर्णयम् ।**

शब्दसंक्षेपेऽपि बह्वर्थपरस्यास्य भाष्यस्य टीका श्रीमज्जतीर्थश्रीचरणैर्विनिर्मिता । तस्या अपि दुरधिगमत्वात् श्रीराघवेन्द्रश्रीचरणैः मन्त्रार्थमञ्जरी व्यरचि । सायणपूर्वा नैके व्याचक्रिरे ऋग्वेदम् ।

सायणाचार्योऽपि व्याचकार ऋक्संहिताम् । परं सम्पूर्णं व्याख्यानं सायणाचार्यवेङ्कटमाधवाचार्योयोरेव विराजते । परमेता व्याख्याः विशकलिततया नैकाः संस्थाः मुद्रापयामासुः । इदानीं अध्ययनविमर्शनसौकर्याय विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रेण ऋग्भाष्यं, जयतीर्थीया टीका मन्त्रार्थमञ्जरी, स्कन्दस्वामिभाष्यं, वेङ्कटमाधवीयं भाष्यं, मुद्गलभाष्यं, सायणभाष्यं, कपालिशास्त्रिभाष्यं, नीतिमञ्जरीति नव व्याख्याः एकत्रैव क्रोडीकृत्य मुद्राप्यन्ते इत्येतन्महन्मोदावहमस्माकम् ।

तदिदं भाष्यं मुद्रापयितुं अनुज्ञाय सन्देशं वितीर्य महदनुग्रहं चक्रुर्मान्याः धन्याः संस्थायाः प्रधानपोषकाः श्रीमदुत्तरादिमठाधीशाः **श्रीश्रीमत्सत्यात्मतीर्थश्रीचरणाः** । तेभ्यो नतिशत-ततीरर्पयामि ।

**प्रो. के.टि. पाण्डुरङ्गि** महोदयानां आशयः आसीत् यद्वेदव्याख्यानं शोधकेन्द्रेण प्रकाशनीयमिति । तदिदं वेदव्याख्यानं शोधकेन्द्रेण कृतमस्ति । तेषामाशयः पूरितः तेभ्यः प्रणमाञ्जलिं समर्पयामि ।

मुद्रणमिदं यथाशोभं पठनानुकूलं समपीपदत् कोविदः अस्याः संस्थाया उपनिदेशकः डा. एल्.एस्. वादिराजाचार्यः । अयश्च विद्वान् नैकग्रन्थान् समपादयत् । ते च मुद्रापिता विद्यधीशशोधकेन्द्रेण द्वैतवेदान्ताध्ययनप्रतिष्ठानेन च । तमेनं बुधवरमभिनन्दामः । इतोऽपि नैके ग्रन्थाः अनेन विदुषा सम्पाद्यन्तामित्याशास्महे ।

अस्या ऋक्संहिताया मुद्रापणे नैकसंस्थानां ग्रन्था उपायुज्यन्त । ताभ्यः संस्थाभ्यः, संस्थाधिकारिभ्यश्च हार्दान्यभिनन्दनानि संसूचयामः ।

तामेतां संहितां अल्पीयसि काले व्यमुद्रापयन् वागर्थमुद्रणालयाधिकारिणः । तान् सर्वान् अभिनन्दामः ।

सैषा संहिता अध्येतृणां विदुषां विद्यार्थिनाञ्चोपकृतये भूयादित्याशास्महे ।

**डा. कट्टि सत्यध्यानाचार्यः**
*म्यानेजिङ्गट्रस्टी*
**विद्याधीशशोधकेन्द्रः, बेङ्गलूरु-४.**

# निदेशकवचांसि

## वेदः

संस्कृतसाहित्ये वेदानां स्थानं सर्वोपरि वर्तते । भारते धर्मव्यवस्था वेदायत्तैव । वेदो धर्मनिरूपणे स्वतन्त्रभावेन प्रमाणम्, स्मृत्यादयस्तु तन्मूलकतया । श्रुतिस्मृत्योर्विरोधे श्रुतिरेव गरीयसी । न केवलं धर्ममूलतयैव वेदाः समादृताः, अपि तु विश्वस्मिन् सर्वप्राचीनग्रन्थतयाऽपि । प्राचीनानि धर्मसमाजव्यवहारप्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते ।

प्रधानतया वेदो द्विविधः मन्त्ररूपो ब्राह्मणरूपश्च । मन्त्रसमुदाय एव संहिताशब्देन व्यवहृतः । ब्राह्मणरूपो वेदभागस्तु संहिताभागस्य व्याख्यारूप एव । स चायं ब्राह्मणभागो यागस्वरूपबोधकतया प्रथितः । ब्राह्मण ग्रन्थोऽपि त्रिधा विभक्तो भवति– ब्राह्मणम्, आरण्यकम्, उपनिषदश्च । यज्ञस्वरूपप्रतिपादको ब्राह्मणभागः । अरण्ये पठिताः यज्ञस्याध्यात्मिकं रूपं विवेचयन्तो वेदभागा आरण्यकानि । उपनिषदो ब्रह्मबोधिकाः मोक्षसाधनानि, अयमेव भागो वेदस्यान्तरूपतया वेदान्त इत्युच्यते । ब्राह्मणभागो गृहस्थानामुपयोगी, आरण्यकभागो वानप्रस्थमाश्रितानाम्, उपनिषद्भागश्च सन्यस्तानामुपयोगीत्यपि कथयितुं शक्यते । नकेवलं सन्यासिनां किन्तु सर्वेषां साधकानामपि उपयोगी ।

## वेदशब्दार्थः

वेद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदाः, इति बह्वृचप्रातिशाख्यम् । सायणस्तु अपौरुषेयं वाक्यं वेद इत्याह । इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेद इति भाष्यभूमिकायामुक्तम् । तत्र प्रमाणमपि तत्रैवोक्तम्–

> **'प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।**
> **एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।।'**

आम्नायः, आगमः, श्रुतिः वेदः, इति सर्वे शब्दाः पर्यायाः ।

यथोक्तं 'वेदास्ते नित्यविन्नत्वात् श्रुतयश्चाखिलैः श्रुतेः । आम्नायोऽनन्यथापाठात्' इति । नित्यं विद्यमानत्वात् नाम नित्यत्वात् वेदाः इति कथ्यन्ते । अनादिकालादारभ्य सर्वैः पुरुषैः श्रुता एव । न तु कृताः । अतः श्रुतय इत्यच्यन्ते । एकयैवरीत्या निरन्तरं आम्नात्वात् पठिततत्वात्

आम्नाय इत्युच्यन्ते । "पान्ति शंसाधनाश्चेति वेदाः पशव ईरिताः" इत्युक्तेः परतत्वस्य ज्ञानमापाद्य निरन्तरं पालनात् सुखसाधनत्वाच्च वेदाः पशवः इतीर्यन्ते ।

सोऽयं वेदस्त्रयीति पदेनापि व्यवह्रियते, वेदरचनायास्त्रिप्रकारकत्वेन त्रयीति कथ्यते । या खलु रचना पद्यमयी सा ऋक्, या गद्यमयी सा यजुः, या पुनः समग्रा गानमयी रचना सा सामेति कथ्यते, तदुक्तं जैमिनिना–

'तेषामृग् यत्रार्थवशेन पादव्यवस्था । गीतिषु सामाख्या । शेषे यजुः शब्दः' इति । द्वितीयाध्याये प्रथमपादे ३२–३३–३४ सूत्राणि ।

यास्कस्तु– 'ता ऋचः परोक्षकृताः प्रत्यक्षकृताः आध्यात्मिक्यश्चेति भेदात् त्रिविधाः । ऋक्शब्दोऽत्र मन्त्रवचनः । यासु प्रथमपुरुषक्रियास्ताः परोक्षकृताः, यासु मध्यमपुरुषक्रियास्ताः प्रत्यक्षकृताः यासु चोत्तमपुरुषक्रियास्ता आध्यात्मिक्यः' इति ।

अतः यत्र कुत्रापि प्राचीनग्रन्थे वेदार्थे 'त्रयी'ति पदं प्रयुक्तं तत्र सर्वत्र रचनात्रैविध्यं मनसि कृतं बोध्यम् ।

यत्तु केचन 'ऋग्यजुः सामाख्यास्त्रय एव वेदाः पूर्वमासन्, तद्यथा–'

**'अग्नेर्ऋचो वायोर्यजूंषि सामादित्यात् ।' छा.ब्रा.६.१७**

**'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।'**
**दुदोह यज्ञसिध्यर्थमृग्यजुःसामलक्षणम् ।। मनु.१.१३**

अतो वेदानां त्रित्वादेव तत्र त्रयीति व्यवहारो वास्तवो न प्रकारभेदकृतः' इति तदयुक्तम्, ऋग्वेदेऽपि अथर्ववेदनामोल्लेखदर्शनात् । भगवता पतञ्जलिनाऽपि 'चत्वारो वेदाः साङ्गाः सरहस्याः' इति पस्पशाह्निके स्पष्टमुक्तम् । छान्दोग्यब्राह्मणे मनुस्मृतौ च यज्ञोपयोगिनो वेदा एव परामृष्टाः, नाभिचारिकः सामवेद इति त्रित्वमेवोक्तम्, एवं परत्रापि । जैमिनिस्तु मन्त्राणां त्रिप्रकारकतामेव लक्षितवान्, न वेदसङ्ख्यां व्यवस्थापितवान् । अतो वेदाश्चत्वार एव, त्रयीति व्यवहारस्तु प्रकारकृतः । अथर्ववेदीयमन्त्रा अपि पूर्वोक्तप्रकारत्रयान्यतमरूपा एवेति बोध्यम् ।

## ऋग्वेदः

ऋच्यते स्तूयते यया सा ऋक् । तादृशीनामृचां समूह एव ऋग्वेदः । यत्रार्थवशेन

पादव्यवस्था सा ऋगिति मीमांसकाः । स ऋग्वेदः सूक्तमण्डलभेदेन द्विधा विभक्तः । तत्र सूक्तं चतुर्विधम्– ऋषिसूक्तदेवतासूक्तच्छन्दःसूक्तार्थसूक्तभेदात् । एकर्षिदृष्टमन्त्राणां समूहो ऋषिसूक्तम् । एकदेवताकमन्त्राणां समूहो देवतासूक्तम् । समानच्छन्दसां मन्त्राणां समूहो नाम च्छन्दःसूक्तम् । यावदर्थसमाप्तानां मन्त्राणां समूहोऽर्थसूक्तम् । सुष्ठूक्तत्वात्सर्वं सूक्तमित्याख्यायते ।

ऋग्वेदः सोऽयं मण्डलानुवाकवर्गभेदेन अष्टकाध्यायसूक्तभेदेन च द्विधा। बालखिल्यसूक्तानि विहाय सम्पूर्णायामृग्वेदसंहितायां दशमण्डलानि, पञ्चाशीतिश्चानुवाकाः, अष्टोत्तरशतद्वयमिताश्च वर्गाः इति प्रथमो भेदः । अष्टौ अष्टकानि, चतुष्षष्टिरध्यायाः, सप्तदशोत्तरसहस्राणि च सूक्तानि इति द्वितीयो भेदः ।

सर्वेऽपि मन्त्राः चतुर्दशसु छन्दस्सु विभक्ता बोध्याः । ऋग्वेदगतमन्त्रद्रष्टारो ऋषयः गृत्समदविश्वामित्रवामदेवात्रिभरद्वाजवसिष्ठादयः सन्ति ।

ऋग्वेदस्य दशसु मण्डलेषु नवमं मण्डलं पवमानमण्डलनाम्ना प्रथितम् । तत्र हि सोमविषयकमन्त्राणां सङ्कलनं कृतम् । पवमानः–सोमः । पूर्वोक्ताः सप्तापि मन्त्रद्रष्टारो ऋषयो द्वितीयमण्डलतः सप्तमण्डलपर्यन्तगताभिः ऋग्भिः सम्बद्धाः, दशममण्डले मन्त्रा नानर्षिसम्बद्धाः । दशमे मण्डले न केवलं देवतास्तुतय एव, अन्यप्रकारका अपि मन्त्रा दृश्यन्ते ।

**अर्थज्ञ इत्सकलं भद्रमश्नुते–**

वेदार्थहीनस्य भारवाहत्वमुक्तं वेदाङ्गे निरुक्ते–

**स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।**
**योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ।।**

स्वयं ऋग्वेदेऽपि श्रूयते अर्थज्ञानस्य प्राशस्त्यम् ।

**उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन् न शृणोत्येनाम् ।**
**उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ।। १०.७१.४ ।।**

अविज्ञातवागर्थ एकः मनसा पर्यालोचयन्नपि ऋग्यजुस्सामादिलक्षणां वाचं न ददर्श । उत अविज्ञातार्थ एकः सुमुखेनोच्चार्यमाणं वाचं शृण्वन्नपि नशृणोत्येव । कुतः? श्रवणफलं अर्थमानमेव । तन्नास्ति अतो न शृणोति ।

अप्येकस्मै विज्ञातवागर्थाय सबाह्याभ्यन्तरं तन्वं स्वशरीरं प्रकाशयति । कथम्? यथा भार्या सम्भोगं, अपत्यं भर्तारं च कामयमाना शोभनवासाः ऋतुकाले चतुर्थेऽहनि निर्णिक्तवस्त्रा सती सम्भोगकाले भर्त्रे स्वशरीरं सबाह्याभ्यन्तरं दर्शयति एवम् ।

वाक्सङ्घे वाचा क्रियमाणे सखिकर्मणि विद्वत्सखिसंकथनलक्षणे स्थिरपीतं स्थिरज्ञानं परिनिष्ठितविद्यं प्रशंसन्ति विद्वांसः । सारभूतेषु निरूपणीयेष्वर्थेषु नैनमर्थज्ञं बहिष्कुर्वन्ति ।

यथा वन्ध्या पीना गौः किमियं द्रोणदुघेति मायामुत्पादयान्ती चरति एवं वेदपाठं ब्रुवाणश्चरतीत्यपि वेदो निगदति ।

वेदमधीत्य वेदार्थो ज्ञातव्यः । श्रौतस्मार्तकर्म कर्तव्यं फलत्यागपूर्वकम् । कृतेन स्वशाखोक्तकर्मणा चित्तशुद्धिर्भविष्यति । तत्कारणात् वेदार्थज्ञानमवश्यं साधयितव्यम् ।

## वेदैश्च सर्वैरहमेव वेद्यः

वेदार्थस्तु भगवानेव । भगवानेव परममुख्यवृत्यावेदप्रतिपाद्यः । मुख्यवृत्या यज्ञादिरपि प्रतिपाद्यो भवति । तदेतत् आथर्वणोपनिषदि उक्तम्–

तस्मै स होवाच द्वे विद्ये वेदितव्ये परा चैवापरा च ।

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ।

वेदानां भगवतो बोधकत्वे परविद्यात्वम् । अन्यदा अपरविद्यात्वम् ।

ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ।।

श्रुतिस्मृतीतिहासपुराणेषु दरीदृश्यते भगवान् सर्ववेदप्रतिपाद्य इति ।

१) काठके श्रूयते– सर्वे वेदा यत्पदमामनन्ति; इति ।

२) ऐतरेयेच– तावा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एवेति ।

गीतायां, वेदैश्च सर्वैरहमेववेद्यः'' श्रीकृष्णेनाप्युक्तम् ।

वेदे रामायणे चैव पुराणे भारते तथा ।

आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ।

**सर्वे शब्दा विष्णुबोधकाः**

नामवाचिनः अग्न्यादिशब्दा अपि हरिमेव प्रतिपादयन्ति ।

यो देवानां नामधा एक एव ।

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् ।

सर्वनामा सर्वकर्मा सर्वलिङ्गः ।

सर्वच्छन्दोभिधो ह्येषः सर्वदेवाभिधो ह्यसौ ।

बृंहणाद् ब्रह्मनामासौ ऐश्वर्यादिन्द्र उच्यते

आसमन्तात् काशते यदाकाशो मुख्यतो हरिः

बलज्ञानस्वरूपत्वाद्वायुः अग्निः अगं नयन् ।<br>
आप आपालनाच्चैव पृथिवी प्रथितो यतः ॥<br>
एवं नानाविधैः शब्दैः एक एव त्रिविक्रमः ।<br>
वेदेषु सपुराणेषु गीयते पुरुषोत्तमः ॥

सर्वे वेदाः परममुख्यवृत्या विष्णुं बोधयन्ति । तच्चेत्थम्–

ओङ्कारो ब्रह्मवाचकः । ओमिति ब्रह्मेति श्रुतेः । ओङ्कारस्यार्थः गुणपूर्णत्वम् । ब्रह्मशब्दस्यापि स एवार्थः । अतः ओंकारो गुणपूर्णस्य ब्रह्मणो वाचकः ।

ओंकारार्थः एव व्याहृतयः । तिस्रो व्याहृतयः अ, उ म इति वर्णत्रयस्य व्याख्यानरूपाः । व्याहृतयश्चेमाः भूः भुवः सुवः । गुणपूर्णाभिधायकाः । अतो भगवद्वाचिकाः । प्रणवार्था व्याहृतयः । व्याहृतेर्व्याख्यानं त्रिपदा गायत्री । त्रिपदाया गायत्रेर्व्याख्यानं वर्गत्रयात्मकं पुरुषसूक्तम् । वर्गत्रयात्मकस्य पुरुषसूक्तस्य व्याख्यानं त्रयो वेदाः । सर्वो वेदः ओङ्कारार्थरूपः । ओङ्कारार्थश्च ब्रह्म, विष्णुः । ओङ्कारेण सर्वावाक् सन्तृण्णा । वेदाः विष्णुपराः विष्णपरोङ्कार-

व्याख्यानत्वात् इति सर्वो वेदः विष्णुपर इति बोधयामास श्रीमदानन्दतीर्थभगवत्पादाचार्यः स्वीये ऋग्भाष्ये ।

**अङ्गीचकार सायणाचार्यो न व्याचकार**

सायणोऽप्याचार्यो मनुते सर्वोवेदः परमेश्वरस्य भगवतो हरेः प्रतिपादक इति । तथाहि तस्य वाक्यानि आदावेवोपाद्धाते–

अत्र केचिदाहुः ऋग्वेदस्यैव प्राथम्येन सर्वत्राम्नानात्, अभ्यर्हितं पूर्वं इति न्यायेनाभ्यर्हितत्वात् तद्व्याख्यानमादौ युक्तम् । प्राथम्यञ्च पुरुषसूक्ते स्पष्टम्–

तस्माद्यज्ञात् सर्वहुतः ऋचःसामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ।। इति ।

तस्मात् ''सहस्रशीर्षा पुरुषः'' इत्युक्तात् परमेश्वरात् यज्ञात् यजनीयात् पूजनीयात् सर्वहुतः सर्वैः हूयमानात् । यद्यपि इन्द्रादयः तत्र तत्र हूयन्ते तथापि परमेश्वरस्यैव इन्द्रादिरूपेण अवस्थानात् अविरोधः । तथा च मन्त्रवर्णः–

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ।। ऋ.१.१६४.४६

वाजसनेयिनश्चामनन्ति–

तत्तदिदमाहुरमुं यजामुं यजेत्येकैकं देवम् ।
एकस्यैव सा विसृष्टिः एष उ ह्येव सर्वे देवाः ।।
तस्मात् सर्वैरपि परमेश्वर एव हूयते ।

सर्ववेदप्रतिपाद्यो भगवान्नारायण इत्याह परं न व्याचख्यौ तत्परतया । केवलं कर्मपरतया रचयामास व्याख्याम् ।

**ऋषिच्छन्दोदेवताः–**

अविदितार्षछन्दोदैवतब्राह्मणेन मन्त्रेण यजनयाजनादिकं अध्ययनाध्यापनञ्च अनर्थनिदानम् ।

अतो ऋष्यादिज्ञानमावश्यकम् । तच्च ज्ञापयामास श्रीमदानन्दतीर्थभगवत्पादाचार्यः । सर्वविद्यानां मुनिः भगवान् पुरुषोत्तमः । अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवेतानि निश्वसितानीति श्रुतिः ऋग्वेदादिकमस्य विष्णोरेव निश्वसितं प्राह । निश्वसितमिति हि निश्वसितमिव अनायासेन आदिकाले तेनोच्चरितमिति । हयग्रीवादिमा विद्या निश्वासिताः उपदिष्टाः स एव प्रथमदृष्टा ।

परमेश्वरेण युगपत्समुदीरितं अखिलं विद्याजातं सकृन्निगदमात्रेण ब्रह्मा चतुर्मुखो जग्राह । रुद्रशेषविपाः ब्रह्मणो जगृहुः । तेभ्यः शक्राद्याः । तेभ्यः दक्षाद्याः । तेभ्यः सनकादयः मनवश्च । सनकादयश्च जगति उपदिदिशुः ।

१. हयग्रीवरूपी परमात्मा श्रीः
२. चतुर्मुखब्रह्मा वायुः ब्रह्माणी भारती च
३. रुद्रशेषविपाः तेषां पत्न्यः
४. शक्राद्याः एतेषां पत्न्यः
५. दक्षाद्याः
६. सनकाद्याः
७. मनवः । इतीयमृषिपरम्परा ।

**हयग्रीवादिमा विद्या श्वसितत्वेन निसृताः ।**
**ब्रह्मणा स्वीकृतास्ताश्च रुद्रशेषविपा अपि ।**
**दक्षाद्या सनकाद्याश्च शक्राद्या मनवस्तथा ।**
**जगृहुस्ते च विश्वस्मिन् चक्रुर्व्याप्तास्ततोऽखिलाः ।**
**सकृन्निगदमात्रेण गृहीतं ब्रह्मणाऽखिलम्**
**अन्तर्गतस्य व्याप्तस्य प्रसादान्नित्यशक्तितः ।**

वेदाः परममुख्यवृत्या भगवद्बोधकाः मुख्यवृत्या अग्न्यादिबोधकाः । तदिदं मनसि निधाय श्रीमदानन्दतीर्थभगवत्पादाचार्याः अग्न्यादिदेवतापरत्वेन, तदन्तर्गतविष्णुपरत्वेन, अध्यात्म-परत्वेनार्थं प्रदर्शयामासुः । पुराणश्च इदं रीतित्रयं प्रदर्शयति ।

**त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।**
**विष्णोः सहस्रनामाऽपि निरन्तरशतार्थकम् ।।**

देवताश्च ज्ञापयामास श्रीमदानन्दतीर्थभगवत्पादाचार्यः । सर्वस्यापि वेदस्य ।

नारायणः साक्षात् सर्ववेदप्रतिपाद्यः ।

भगवति प्रसिद्धाः पुरुषसूक्तादिविद्या वर्जयित्वा अन्यासां विद्यानां श्रीश्च देवता ।

श्रीदेव्यां प्रसिद्धाः अम्भृणीसूक्ताद्या वर्जयित्वा अन्यासां ब्रह्मैव देवता ।

पूर्वस्यां देवतायां प्रसिद्धा विद्या वर्जयित्वा अन्यासां विद्यानां तारतम्यक्रमेणैव शक्रान्ता देवता मताः ।

**देवता सर्वविद्यानां स्वयं नारायणः प्रभुः ।**
**ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्र च ।**
**ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च ।**
**पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः ।।**

एतत्सर्वं विव्रियते श्रीमज्जयतीर्थश्रीचरणैः भाष्यटीकायाम् ।

छन्दांसि छन्दोऽभिमानिदेवताश्च प्रदश्यर्न्ते भाष्यकारैः ।

१) गायत्री, बृहती– श्रीः ब्रह्माणी, भारती गरुडः, स्वाहा, तारा,
२) अनुष्टुप्– ब्रह्माणी, रोहिणी,
३) त्रिष्टुप्– इन्द्राणी
४) जगती– वारुणी
५) पङ्क्तिः– शची
६) उष्णिक्– सौरी ।
७) जगती– सर्वदेवस्त्रियः
८) विराट्– मित्रावरुणभार्ये

नात्र देवतानां छन्दसामैक्यमुच्यते किन्तु तदभिमानितया तत्तन्नामवत्वम् । तच्च बह्वीनां देवतानामेकच्छन्दोऽभिमानित्वेन एकनामवत्वं न विरुध्यते । इत्येवमादिरूपेण बहवो विषया निरूपिताः स्वीये ऋग्भाष्ये ।

तदिदं श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यं प्रथममण्डले चत्वरिंशत्सूक्त-पर्यन्तमस्ति ।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यं, श्रीमज्जयतीर्थश्रीचरणविरचिता ऋग्भाष्य-टीका, श्रीराघवेन्द्रतीर्थविरचिता मन्त्रार्थमञ्जरीटीका, श्रीस्कन्दस्वामिविरचितं भाष्यं, वेङ्कट-माधवाचार्यभाष्यं, मुद्गलभाष्यं सायणभाष्यं द्यादेवविरचिता नीतिमञ्जरी, कपालिशास्त्रिविरचितं सिद्धाञ्जनं इति उद्गीथ इति च नैका व्याख्याः सन्ति ।

स्कन्दस्वामिभाष्यं मुद्गलभाष्यं सिद्धाञ्जनञ्च प्रथमाष्टकपर्यन्तमस्ति । वेङ्कटमाधवभाष्यं पूर्णतया उपलभ्यते । सायणञ्च सम्पूर्णं वर्तते । दशमण्डले उद्गीथभाष्यमस्ति ।

इतःपूर्वमेता व्याख्या विशकलिततया नैकाभिः संस्थाभिः मुद्रापिताः । ता व्याख्या इदानीं एकस्मिन् सम्पुटे विद्याधीशशोधकेन्द्रेण मुद्राप्यते इत्येततन्मोदावहमस्माकम् । नैकेषु सम्पुटेषु वरीवर्ति इयं ऋक्संहिता पदपाठसहिता सव्याख्या च ।

ऋक्संहितायाः प्रथमसम्पुटत्वेन प्रथमध्यायोऽयं मुद्रापितः । अस्मिन् प्रथमाध्याये एकोनविंशतिसूक्ताः सन्ति ।

अस्या ऋक्संहिताया मुद्रापणे धृतमनस्काः जितमनस्काः अस्य शोधकेन्द्रस्य प्रधान-सम्पोषकाः गाढावगाढसुधादिनैकग्रन्थाः पाठपीठाः श्रीपद्मनाभतीर्थादिश्रीमज्जयतीर्थाद्यधिष्ठित-श्रीमदुत्तरादिमठपीठाः वृष्टिखेटाधिष्ठितश्रीमज्जयतीर्थश्रीचरणनलिनचञ्चरीकायिताः श्रीश्री श्रीमत्सत्यात्मतीर्थाः ।

तेषामादेशेन अनुग्रहेण च सम्पादितेयम् । तेभ्यो गुरुवर्येभ्यः नतिशततततीरर्प्यन्ते ।

जयतीर्थविद्यापीठस्य कुलपतयः सुधाविशारदाः, सच्छास्त्रपाठप्रवचनेषु रताः मम आबाल्यं सुधान्तं वेदान्तं उपपदिश्य भगवन्मार्गोपदेशकाः पूज्या गुरवः श्रीगुत्तलाचार्याः । तेभ्यो गुरुवर्येभ्यः नमनानि अर्पयामि ।

विद्याधीशशोधकेन्द्रप्रवर्तकाः अभिवर्धकाश्च मान्याः यशःशरीराः प्रो. के.टि. पाण्डुरङ्गीमहोदयाः । तेषमामपि भूयांसि नमांसि निवेदयामि ।

साधनशरीरनिदानान् श्रीमदाचार्यशास्त्रे दीक्षाप्रदान् श्रीपादचरणासक्तान् तातपादान् श्रीप्रल्हादाचार्यान् शिलातनयोऽहं सभक्ति नमस्कुर्वे ।

मुद्रापणे सम्पादनेच दत्तावकाशेभ्यः द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानाध्यक्षेभ्यः विद्याधीश-स्नातकोत्तरसंस्कृतशोधकेन्द्रधर्मदर्शिभ्यो जनादरणीयपाठप्रवचनदीक्षेभ्यः संस्थायाः सर्वविधकार्येषु अनवरतमनितरसाधारण्येन प्रोत्साहकेभ्यो मान्येभ्यः डा. सत्यध्यानाचार्यकट्टिमहाभागेभ्यः मम हार्दानि नमनानि निवेदयामि ।

द्वितीयं सम्पुटं डा. एल्.एस्. वादिराजाचार्यः समपिपदत् । अयं च विद्वान् शोधकेन्द्रस्य उपनिदेशकः नैकान् ग्रन्थान् समपादयत् । युवा विद्वान् कार्यकुशलः पाठप्रवचनदीक्षश्च । तस्यापि हार्दानि अभिनन्दनानि संसूचयामि ।

विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रविश्वस्थ-धर्मदर्शिभ्यश्च हार्दानि अभिनन्दनानि । इतः पूर्वं विशकलिततया मुद्रापिताभ्यो नैकाभ्यः संस्थाभ्यश्च हार्दानि अभिनन्दनानि आवेदयामि ।

संहितामिमां सश्रद्धं अल्पियसि काले सुष्टु मुद्रापकेभ्यो वागर्थमुद्रणालयाधिकारिभ्यः धन्यवादान् वितरामि ।

सव्याख्यासपदपाठऋक्संहितासम्पादनं मुद्रापणश्च विदुषां विद्यार्थिनाश्चोपकृतये भवतीति विश्वासिमि । इदं कृतिकुसुमं भगवच्चरणनलिनार्पणाय गुरुणां श्रीश्रीमत्सत्यात्मश्रीचरणानां करकमलयोरर्पयामि ।

अध्येतृकरकमलयोश्चोपहारीकरोमि । अनेन कर्मणा गुरुहृद्गो भगवान् प्रीतोऽस्तु दिग्विजय-रामाभिन्नो श्रीमन्मूलसीतासमेतः श्रीमन्मूलरामः श्रीमत्सत्यात्मतीर्थाराधितः ।

सुधीजनविधेयः

**डा. कृष्णाचार्य उपाध्यायः**

निदेशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

श्रीः

# ऋक्संहिता

## अथ द्वितीयोऽध्यायः

।। प्रथमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् २०)

(मेधातिथिः काण्व ऋषिः । ऋभवः देवता । गायत्री छन्दः)

**अयं देवाय जन्मने स्तोमो विप्रेभिरासया । अकारि रत्नधातमः ।। १ ।।**

अयम् । देवाय । जन्मने । स्तोमः । विप्रेभिः । आसया । अकारि । रत्नऽधातमः ।। १ ।।

## श्री आनन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यम्

**ॐ सर्वजन्मकृते विष्णुदेवायेयं स्तुतिः कृता ।**
**मुखेन विप्रैः काण्वाद्यैः सैव यद्रतिधातमा ।। १ ।।**

## श्रीमज्जयतीर्थविरचिता ऋग्भाष्यटीका

**अयं देवाय** । अष्टर्चमिदमार्भवं सूक्तम् । यद्यपि त्रयाणामृभुनामैक एव । विभ्वा वाजश्चापरौ तथापि साहचर्यादिकस्य नाम्ना त्रयोऽप्युच्यन्ते । तत्राद्यामृचं विष्णौ व्याख्याति ।। **सर्वजन्मेति** ।। **विप्रेभिः** विप्रैः मेधाविभिः । कैः काण्वाद्यैः । कण्वपुत्रो मेधातिथिस्तदाद्यैः । **जन्मने** जनेः कर्तरि मनिन् । सर्वजन्मकृते सर्वेषां कार्याणां जनयित्रे । देवाय देवशब्दो व्याख्यातः । तस्याभिधेयं विष्णुदेवाय । अस्यंते क्षिप्यन्ते वर्णा अनयेत्यासा तया (**आसया**) मुखेन । न केवलं मनसा किं तु वचसापीति भावः । **अयं स्तोमः** इयं बुद्धिस्था स्तुतिः **अकारि** कृता । देवाय जन्मन इति तादर्थ्ये चतुर्थी । षष्ठ्यर्थे वा । ते चैकस्यापि बहव इत्युक्तत्वाद्विप्रेभिरिति बहुवचनम् । अनादित्वादकारीति । कस्मात् । **रत्नधातमः** । यत् यस्मात्सा विष्णुस्तुतिरेव रतिधातमा

अतिशयेन सुखदात्री । डुधाञ्दानधारणयोः । तस्मादकारि । ऋभुविषये तु देवाय जन्मन इति देवेभ्यो जातेभ्य इति योज्यम् । मानुषा एव हि ते देवा जाता इति निगमः ।। १ ।।

## श्रीराघवेन्द्रतीर्थविरचिता मन्त्रार्थमञ्जरी

ॐ अथ 'अयं देवाय' इति विंशमष्टर्चं वर्गद्वयात्मकमार्भवं (ऋभुदेवताकम्) गायत्रं सूक्तम् । विप्रेभिः, विप्रैः, मेधातिथिप्रभृतिभिः । अयम्, बुद्धिस्थः । रत्नधातमः, रत्नं सुखम्, रमेः क्त्नप्रत्ययोऽनुनासिकलोपश्च, रत्नं धत्ते ददातीति रत्नधाः, 'डुधाञ् धारणपोषणयोः' अतिशयितसुखदाता रत्नधातमः, हेतुगर्भमिदम् । स्तोमः, स्तुतिः । जन्मने, सर्वजननकर्त्रे, जनेः कर्तरि मनिन् । देवाय, 'अग्निमीळे' इत्यत्रोक्तदिशा क्रीडादिगुणविशिष्टाय विष्णवे । आसया, आस्येन, न केवलं मनसा, किं तु वचसापीति भावः । अकारि, कृता, 'डुकृञ् करणे' 'लुङ्' आस्यन्ते क्षिप्यन्ते वर्णा अनयेत्यासा मुखम्, 'असु क्षेपणे' इत्यतः करणे घञ्, (पुमान् ३४), 'घञबन्तः' (३५), 'घाजन्तश्च' (३६) 'घञजबन्ताः पुंसि' इति पाणिनीयलिङ्गानुशासनस्य 'नौ वृ धान्ये' इत्यत्रानित्यत्वोक्तेः (स्त्रीत्वम्) । देवतान्तरविषये तु 'जन्मने, देवाय' इत्येकवचनं बहुवचनार्थे, जन्मने, जातेभ्यः, 'मानुषा एव हि ते देवा जाताः' इति निगमात् 'ॐ तदुपर्यपि' (१।३।१६) इत्युक्तन्यायाच्च मनुष्यत्वेन सतामेव देवत्वेन जातेभ्यः, देवाय, देवेभ्यः, ऋभुभ्य इत्यर्थः । अन्यत्समानम् । ऋभुनामक-स्यैकत्वेऽपि 'विभ्वा, वाजः' इति नाम्नोरन्ययोः साहचर्यादृभुनाम्नैव त्रयाणां ग्रहणं ज्ञेयम् तत्साहचर्यं च ऋभुर्विभ्वा वाज' (ऋ० म० ४।३४।१) इति मन्त्रे स्पष्टम् ।। १ ।।

## श्रीस्कन्दस्वामिविरचितं ऋग्भाष्यम्

'आर्भवं प्रथमं सूक्तम्' । ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा रथकारा बभूवुः । ते अतिशयवद्भिः कर्मभिर्देवत्वमीयुः । तेऽत्र साहचर्यादन्यतमवचनेनापि ऋभुशब्देन सर्वेऽभिधीयन्ते । तद्देवत द्वितीयस्य प्रथमं सूक्तम् 'अयं देवाय' इत्येतत् । जन्मन इति मनिरयं कर्तरि सामर्थ्याच्चात्र भूते काले द्रष्टव्यः । देवाय जन्मने इति चोभयत्र बहुवचनस्य स्थाने एकवचनम् । देवेभ्यो जातेभ्यः ये ऋभवो मनुष्या सन्तः कर्मकौशलात् देवा जाता तेभ्यः । **स्तोमः** स्तुतिः । **विप्रेभिः** मेधाविभिरस्माभिः । **आसया** आसाशब्दोऽत्र सामर्थ्यात् ऋग्वचनः ।

ऋग्लक्षणया वाचा । आसा उपासना वा परिचर्याः । आसया हेतुना । प्रयोजनस्य चेवं हेतुत्वेन विवक्षा । परिचर्यार्थमित्यर्थः । **अकारि** कृतः । कीदृशः । **रत्नधातम** अतिशयेन धनानां दाता । येन स्तुता ऋभवोऽतिशयेन धनं दास्यन्तीत्यर्थः ।। १ ।।

## वेङ्कटमाधवाचार्यविरचितं ऋग्भाष्यम्

'अयं देवाय जन्मने' माधवो व्याचिकीर्षति ।
तत्रामन्त्रितशब्दानामादौ वृत्तिः प्रदर्श्यते ।। १ ।।

आमन्त्रिताद्युदात्तत्वमुच्चैरामन्त्रणे भवेत् ।
नीचैरामन्त्रणे कार्ये पदं सर्वं निहन्यते ।। २ ।।

अर्थस्वभावाद्वाक्यस्य मध्यस्थं तन्निहन्यते ।
'ऋतेन मित्रावरुणौ' 'कवी नो मित्रावरुणा' ।। ३ ।।

अर्थस्वभावादुच्चैस्त्वं क्वचिन्मध्येऽपि दृश्यते ।
तथैव नीचैस्त्वमपि तत्रोदाहरणे शृणु ।। ४ ।।

अह्वयच्छुनमन्धाय सा वृकी इति वक्ष्यति ।
'नरेति' तत्राद्युदात्तमेव हि परिदेवनम् ।। ५ ।।

'इन्द्राग्नी द्यावापृथिवी यजुष्यस्मिन् निहन्यते ।
बहुष्वामन्त्रितेष्वन्तर् ओषधी इति यत्पदम् ।। ६ ।।

'अग्ने पावक रोचिषा 'घृताहवन दीदिवः ।
'ग्रावो नेष्टः पिब ऋतुना 'सखायः स्तोमवाहसः ।। ७ ।।

'विश्वे देवासो मनुषो' विश्वे यजत्राः 'त आदित्या' ।
सर्वत्रार्थस्वभावोऽयमूह्यः प्राज्ञैरिति स्थितिः ।। ८ ।।

नामन्त्रितं कारकवद् वाक्यार्थेनान्वितं भवेत् ।
युवं वरो सुषाम्णे 'पेशो मर्या अपेशसे' ।। ९ ।।

ये इमे तत्रोदाहरणे स्पष्टे सर्वं च तादृशम् ।
अविद्यमानवत्वे च एष हेतुरिति स्थितिः ।। इति ।। १० ।।

मेधातिथिः । **अयम् स्तोमः** मनुष्यत्वमपहाय देवभूताय ऋभूणां गणाय मेधाविभिरस्माभिः आस्येन अतिशयेन रत्नप्रदाता क्रियते ।। १ ।।

## मुद्गलविरचितभाष्यम्

'अयं देवाय' इत्यष्टर्चं तृतीयं सूक्तम् । मेधातिथिः । गायत्रम् । आर्भवम् । सङ्घजन्मने जायमाना य ऋभवो मनुष्याः तपसा देवत्वं प्राप्ताः । तद्रूपाय **देवाय** तत्प्रीत्यर्थम् **अयम् स्तोम** स्तोत्रविशेषः **विप्रेभिः** मेधाविभिः ऋत्विग्भिः **आसया** स्वकीयेनास्येन **अकारि** निष्पादितः । कीदृशः स्तोमः । **रत्नधातमः** अतिशयेन रमणीयमणिमुक्तादिधनप्रदः स्तोत्रेण तुष्टाः ऋभवो धनं प्रयच्छन्तीत्यर्थः ।। १ ।।

## श्रीमत्सायणाचार्यविरचितं ऋग्भाष्यम्

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ।।

अथ प्रथमाष्टके द्वितीयोऽध्याय आरभ्यते । तत्र 'अयं देवाय' इत्यष्टर्चं सूक्तम् । तस्य ऋषिच्छन्दसी पूर्ववत् । ऋभुदेवताकत्वमनुक्रम्यते– 'अयमष्टावार्भवम् ' इति । विनियोगस्तु सूक्तस्य लैङ्गिकः स्मार्तो वा द्रष्टव्यः । व्यूढस्य प्रथमे छन्दोमे वैश्वदेवशस्त्रे 'अयं देवाय जन्मने' इति आर्भवस्तृचः । 'अथ च्छन्दोमाः' इति खण्डे सूत्रितम्-'अभि त्वा देव सवितः प्रेतां यज्ञस्य शंभुवायं देवाय जन्मन इति तृचाः'(आश्व.श्रौ.८-९) इति । ऋभवो हि मनुष्याः सन्तस्तपसा देवत्वं प्राप्ताः । ते चात्र सूक्ते देवताः । तत्संघो जायमानवाचिना जन्मशब्देन एकवचनान्तेन अत्र निर्दिश्यते । 'जन्मने जायमानाय ऋभुसंघरूपाय 'देवाय तत्प्रीत्यर्थम् **अयं स्तोमः** स्तोत्रविशेषः **विप्रेभिः** मेधाविभिः ऋत्विग्भिः **आसया** स्वकीयेनास्येन **अकारि** निष्पादितः । कीदृशः स्तोमः । **रत्नधातमः** अतिशयेन रमणीयमणिमुक्तादिधनप्रदः । स्तोत्रेण तुष्टा ऋभवो धनं प्रयच्छन्तीत्यर्थः ।

आसया । आस्यशब्दात् तृतीयैकवचनस्य 'सुपां सुलुक्' इत्यादिना याजादेशः । व्यत्ययेन प्रकृतियकारस्य लोपः । 'चितः' इत्यन्तोदात्तः । रत्नधातमः । रत्नानि दधातीति रत्नधाः । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १ ॥

## कपालिशास्त्रिविरचितं ऋक्संहिताव्याख्यानं सिद्धाञ्जनम्

अथ प्रथमाष्टके द्वितीयोऽध्याय आरभ्यते । प्रथममण्डलस्य पञ्चमेऽनुवाके तृतीयं अयं देवायेति अष्टर्चं आर्भवं सूक्तम् । ऋषिच्छन्दसी पूर्ववत् । तत्र प्रथमामृचमाह- **अयं देवाय इति** ॥ ऋभवो मनुष्याः सन्तस्तपसा देवत्वं प्राप्तास्त इह सूक्ते देवताः । आङ्गिरसस्य सुधन्वनः पुत्रा एत इत्याहुः । सूर्यरश्मय एत इत्येके । उभयथाऽप्युपपद्यत इति वयम् । सत्यं परं ज्योतिः सूर्यशब्दवाच्यं भवति वेदे । तस्यांशवः प्रज्ञानविभवा इह अन्नमयं क्षेत्रं स्थूलं जडमवतीर्णा जडीभूतचैतन्ये स्थूलशरीरेऽवस्थितं मनुष्यमुद्धरन्ति । एवं सूर्यरश्मय इमे भवन्ति । त एव ऋभवः परिपाकमहिम्ना मनुष्यस्य प्रभावविशेषात्मानः सम्पद्यन्ते । तादृशप्रभावविशेषसम्पादितेन दिव्यभावेन दिव्यजन्मना अमृतो भवति मर्त्यः । कथं पुनरिमे सुधन्वपुत्रा उच्यन्ते? घन्व निरुदकं क्षेत्रं, जडं केवलमन्नमयं लक्षयति । यथा पर्वतो गवां गोपनस्थानं, अपां वा आवरकं तमश्च सङ्केतयति, तथा नीरसं लक्ष्यमाणं घन्व च परिणामविभवेन अवतरतां दिव्यरश्मीनां स्वीकरणेन ऊर्ध्वसारादानेन च शोभनत्वं सम्पाद्य सुधन्वभावेन आर्भवं वैभवं विकासयतीति बोध्यम् । एवं उभयथाऽप्युपपत्तिः । सर्वथा स्वकर्मणा ज्ञानेन च देवत्वं प्राप्ता इमे मनुष्याणां देवत्वसम्पादने साहाय्यमाचरन्ति । तत्र यानि कर्माणि तैः क्रियन्ते, तानि देवकार्याण्येव भवन्ति । सङ्केतभाषयैव आर्भवाणि कर्माणि कीर्तितानि भवन्ति । ऋक्संहितायां ऋभुसूक्तानि दशाधिकानि सन्ति। सर्वत्र सैव भाषा, तान्येव कर्माणि, समानमेव फलं च तेषाम् । साङ्केतिकं गूढार्थमन्तरेण प्रहेलिका-प्रायाणामेषां सूक्तानां ऋजुविवरणं न सिद्ध्यतीत्यापाततोऽवलोकनादेव स्फुटं लक्ष्येतेति न संशयः । पुरस्तात्प्रदर्शयिष्यामः । ऋभुः विभ्वा वाज इति त्रय इमे प्रोक्ताः । एकवचनेन तत्सङ्घोऽभिधीयते । अथ च तेषां साहचर्यादन्यतमवचनेन ज्येष्ठभूतऋभुशब्देन सर्वेऽप्यभिधीयन्ते । त्रयाणां एकैकस्यापि स्वरूपवैशिष्ट्यं नाम्नैव कीर्तितं भवेत् । ऋभुः ज्येष्ठः धिया कर्मणा च अमृतत्वस्यानुरूपाणि रूपाणि तक्ष्णोति । तद्व्याप्तिमातनोति विभ्वा । तत्र दिव्यतेजस्त्वसमृद्धिमादधाति वाजः । मनुष्याय अमृतत्वशिल्पिन इमे तक्षाण उच्यन्ते ।

**अयं स्तोमः** स्तोत्रविशेषः **विप्रेभिः** विपश्चिद्भिः **आसया** आस्येन मुखेन तल्लक्षितेन मुख्यप्राणेन अकारि कृतः । कीदृशः? **रत्नधातमः** अतिशयेन रतीनां धारकः । किमर्थम् ? **देवाय** ऋभुसङ्घारूपाय, कीदृशे ? **जन्मने** जायमानाय जाताय वा । आसया– आस्यशब्दा-त्तृतीयैकवचनम्, प्रकृतियकारस्य लोपः याजादेशश्च । जन्मने– 'मनिरयं कर्तरि सामर्थ्याच्च भूते काले द्रष्टव्यः' इति स्कन्दस्वामी । जायमानवाची इति सायणीयम् । ऋतज्योतिषः प्रभावादृभवो देवताः सञ्जाताः । तस्यैव प्रकाशं शक्तिं च प्राप्तैर्विपश्चिद्भिर्मनुष्यैर्दिव्याय जन्मने लप्स्यमानाय आर्भवकर्मसाध्याय स्तोमोऽयं कृतः । स च वाचि देवताहृदयप्रवेशक्षमायां मुख्यप्राणेन आहितः । तेन वीर्यवान् भवति स्तोमः । प्रहर्षातिशयानां रत्नपदवाच्यानां रतीनां मनुष्यस्यान्तरात्मनि अवस्थापनं अस्य स्तोमस्य प्रयोजनम् । अयं सूक्तस्य प्रथमर्चो भावः । अथ ऋभूणां यज्ञभागसम्पत्तिं तदीयानि कर्माणि चाख्यातुमारभते ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**य इन्द्रा॑य वचो॒युजा॑ ततक्षु॒र्मन॑सा॒ हरी॑ । शमी॑भिर्य॒ज्ञमा॑शत ।। २ ।।**

ये । इन्द्रा॑य । व॒चः॒ऽयुजा॑ । त॒त॒क्षुः । मन॑सा । हरी॒इति॑ । शमी॑भिः । य॒ज्ञम् । आ॒श॒त ।। २ ।।

## ऋग्भाष्यम्

**वाङ्मात्रेणैव योज्यौ ये चक्रुरिन्द्राय वाजिनौ ।**
**शमीभिर्विष्णुनिष्ठाभिर्यज्ञभागं च लेभिरे ।**
**भगवांश्चैतदखिलं कृतवानृभुषु स्थितः ।**
**पृथग्वाफलदातृत्वात्...............।। २ ।।**

**ऋग्भाष्यटीका– य इन्द्राय** । वाङ्मात्रेणैव । **ये** ऋभवः इन्द्राय इन्द्रस्यार्थे **वचोयुजा** वचसा युज्येते इति सारथेर्वाङ्मात्रेणैव रथे योज्यौ । **हरी** वाजिनौ । **मनसा** सङ्कल्पमात्रेण । **ततक्षुः** तक्षतिः करोतिकर्मा चक्रुः । ये च **शमीभिः** विष्णुनिष्ठाभिः । शमोमन्त्रिष्ठताबुद्धेरिति वचनात् । स्त्रीलिङ्गं ङीप् च छान्दसः । **यज्ञं** यज्ञभागम् । **आशत** 'अशू व्याप्तौ' । आश्नुवत लेभिरे । तेभ्यः स्तोमोऽकारीति पूर्वेण सम्बन्धः । नन्विन्द्रस्य कर्मकरा ऋभव इति तेष्विन्द्रार्थं हरिनिर्माणमुपपद्यते । अदेवाश्च देवत्वं प्राप्ता इति शमीभिर्यज्ञमाशतेत्यपि । विष्णौ तु कथमित्यत

आह ।। **भगवांश्चेति** ।। एतद्धरिनिर्माणादिकम् । एतदित्यनेनैव सिद्धेऽऽखिलमिति वचनमागामिनो रथनिर्माणादेरपि सङ्ग्रहार्थम् । कथम् । ऋभुषु स्थितः । तास्ताः क्रियास्तत्तदन्तर्गतेन भगवतैव क्रियन्त इति हि शास्त्रम् । पक्षान्तरमाह । **पृथग्वेति** ।। ऋभुषु स्थितेन रूपेण विनापि पृथगीश्वररूपेणैवैतदखिलं कृतवान् । कथम् । फलदातृत्वात् इन्द्रादिभ्य इति शेषः ।

अत्रैवं योजना । ये भगवद्रूपविशेषा इन्द्रानुष्ठिताभिः शमीभिः प्रसन्नाः सन्तस्तदीयं यज्ञमाशत ऋभुभिः करणैरिन्द्राय हरी च ततक्षुरिति । एवमुत्तरत्रापि । अध्यात्मं तु । ये इन्द्राय परमेश्वराय तं विषयीकर्तुं भक्तानां हरी मनोबुद्ध्याख्यौ वचोयुजौ वेदानुसारिणौ ततक्षुः तदीयाभिः शमीभिस्तदीयं ज्ञानयज्ञं चाशतेति ।। २ ।।

**मन्त्रार्थमञ्जरी–** ये, ऋभवः । इन्द्राय, इन्द्रस्यार्थे । वचोयुजा, वचसा युज्येते इति वचोयुजा (जौ) वाङ्मात्रेण । रथे योज्यौ । हरी, वाजिनौ । मनसा, सङ्कल्पमात्रेण । ततक्षुः, चक्रुः, 'तक्ष करणे' इति धातोः । (ये) (च) शमीभिः, विष्णुनिष्ठाभिः, 'शमो मन्निष्ठता बुद्धेः' (भाग० ११।१९।३७) इत्युक्तेः, स्त्रीलिङ्गं ङीप्च छान्दसौ । यज्ञम्, यज्ञभागम् । आशत, 'अशू व्याप्तौ' आश्नुवत, लेभिरे । (तेभ्यः) स्तोमः अकारि इति पूर्वेण अन्वयः । अत्र ऋभ्वादिदेवतागतानि लिङ्गानि तत्तदन्तर्यामिभगवद्रूपेषु मुख्यानीति 'ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ' (१।१।३०) 'ॐ जीवमुख्यप्राणलिङ्गान्नेति चेत्' (१।१।३१) इत्यादिसूत्रे व्यक्तानीति तत्तदन्तर्गतरूपापेक्षया मन्त्राणां विष्णौ योजना सुशका । पृथक्स्थितभगवद्रूपपक्षे तु ये, भगवद्रूपविशेषाः । इन्द्रानुष्ठिताभिः शमीभिः (प्रसन्नाः), तदीयम् यज्ञम् आशत । (ऋभुभिः) करणैः । इन्द्राय मनसा वचोयुजा हरी (च) ततक्षुः । इति । एवमग्रेऽपि ज्ञेयम् । अध्यात्मं तु । ये इन्द्राय, परमेश्वराय, तं विषयीकर्तुम् । भक्तानाम् – हरी, मनोबुद्ध्याख्यौ । वचोयुजा, वेदानुसारिणौ । मनसा ततक्षुः । तदीयाभिः शमीभिः तदीयम्– ज्ञानयज्ञम् (च) आशत इति ।। २ ।।

**स्कन्द–** ऋभवः किं कृतवन्तः । **ये** ऋभवः **इन्द्राय वचोयुजा** वचनमात्रयोगिनौ **ततक्षुः** तक्षति करोतिकर्मा । कृतवन्तः । केन । **मनसा** ध्यानमात्रेणैव । कौ । **हरी** । ये **च शमीभिः** । एकचमसचतुष्टयकरणादिभिः **यज्ञम् आशत** प्राप्ताः । यज्ञियत्वं प्राप्ता इत्यर्थः । तद्वक्ष्यति 'एकं चमसं चतुरः कृणोतन' (ऋ १-१६१-२) इति ।। २ ।।

**वेङ्कटमाधव– ये** इन्द्रार्थं वचनमात्रेण रथे युज्यमानौ कृतवन्तौ बुद्धिमत्तया अश्वौ ते शिल्पकर्मभिर्देवप्रीणनैः यज्ञियभागं प्राप्तवन्तः ।। २ ।।

**मुद्गल– ये** ऋभवः **इन्द्राय** इन्द्रप्रीत्यर्थम् **वचोयुजा** ताडनादिकं विना वाङ्मात्रेण रथे युज्यमानौ सुशिक्षितौ **हरी** एतन्नामकावश्वौ **मनसा ततक्षुः** सम्पादितवन्तः । ऋभूणां सत्यसङ्कल्पत्वात् तत्सङ्कल्पमात्रेण इन्द्रस्याश्वौ सम्पन्नावित्यर्थः । ते ऋभवः **शमीभिः** ग्रहचमसादिनिष्णादनरूपै कर्मभिः **यज्ञम्** अस्मदीयम् **आशत** व्याप्तवन्तः ।। २ ।।

**सायण– ये** ऋभवः **इन्द्राय** इन्द्रप्रीत्यर्थं **वचोयुजा** ताडनादिकं विना वाङ्मात्रेण रथे युज्यमानौ सुशिक्षितौ **हरी** एनन्नामकावश्वौ **मनसा ततक्षुः** संपादितवन्तः । ऋभूणां सत्यसंकल्पत्वात् तत्संकल्पमात्रेण इन्द्रस्याश्वौ संपन्नावित्यर्थः । ते ऋभवः **शमीभिः** ग्रहचमसादिनिष्पादनरूपैः कर्मभिः **यज्ञम्** अस्मदीयम् **आशत** व्याप्तवन्तः ।

'अपः अप्नः' इत्यादिषु षड्विंशतिसंख्याकेषु कर्मनामसु 'शमी शिमी' (नि.२-१-२३) इति पठितम् । वचोयुजा । वचसा युञ्जाते । 'सत्सूद्विष' इत्यादिना क्विप् । 'सुपां सुलुक्' इत्यादिना विभक्तेः आकारः । कृदुत्तरपदप्रकृतिस्वरः । ततक्षुः । 'तक्षू त्वक्षू तनूकरणे'। लिटि झेः उसादेशः । पादादित्वादनिघातः । शमीभिः । शमयन्ति पापानीति शम्यः कर्माणि । ओणादिकः इन् । 'कृदिकारादक्तिनः' (पा.सू.४-१-४५ ग.) इति ङीप् । वृषादित्वादाद्युदात्तः । **आशत** । 'अशू व्याप्तौ' । लङि झस्य अदादेशः । 'स्वादिभ्यः श्नुः' । तस्य 'बहुलं छन्दसि' इति लुक् । आढागमः । 'तिङ्ङतिङः' इति निघातः ।। २ ।।

**सिद्धाञ्जनम्– ये** ऋभवः इन्द्राय इन्द्रार्थम् **वचोयुजा** वचोयुजौ (वचसा युञ्जाते) ऋभूणां वाग्बलेन सुयोजितौ **हरी** इन्द्राश्वौ **मनसा** साधनेन **ततक्षुः** तष्टवन्तः, सम्पादयामासुरित्यर्थः । ते ऋभवः **शमीभिः** (कर्मनाम) वक्ष्यमाणैः एकचमसचतुष्करणादिभिः **यज्ञं आशत** (अशु व्याप्तौ, लङ् छान्दसम्) प्राप्तवन्तो भोगायेत्यर्थः । ऋभवो मनुष्याः स्वकर्मणा देवत्वं प्राप्ता यज्ञभाग-स्वामिनोऽभवन् । सर्वकर्मशिखरभूतं यज्ञफलं तु मनुष्यस्योत्कर्षकानां दिव्यप्रभावविशेषाणां सम्पत्तिरित्यवगन्तव्यम् । तथा सम्पन्ना ऋभवः अन्यान् परिपक्वानधिकारिणो मनुष्यानुत्कर्षयितुं देवकार्याणि कुर्वन्तः देवराजस्येन्द्रस्य साहाय्यमाचरन्ति । तत्र तेषां कर्मसु मुख्यमिदं भवति,

यदिन्द्रस्य हर्योः दैव्यमनोवाहभूतप्राणयोः व्यवस्थितरूपनिष्पादनं मनुष्ये । तत्र कर्मणि तेषां साधनं सत्यसङ्कल्पं मनो भवति, येन निष्पादितौ अश्वौ यद्वाचैव सम्यग्योजितौ शुद्धस्य दिव्यस्य मनसो विलासाय कल्पन्ते । अथ कर्मान्तरमुक्तं परस्यामृचि ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**तक्षन्नासत्याभ्यां परिज्मानं सुखं रथम् । तक्षन्धेनुं सबर्दुघाम् ।। ३ ।।**
तक्षन् । नासत्याभ्याम् । परिऽज्मानम् । सुऽखम् । रथम् । तक्षन् । धेनुम् । सबःऽदुघाम् ।।

## ऋग्भाष्यम्

**.................परितो ज्मां यतश्चरेत् ।**
**परिज्माऽतो रथः काम्यं सबरित्यभिधीयते ।**
**ब कामन इति ह्यस्मात्............।। ३ ।।**

**ऋग्भाष्यटीका– तक्षन्** । अत्र रथविशेषणं परिज्मानमित्येतद्व्याख्याति ।। **परित इति** ।। ज्मां भूमिं वृत्तौ क्रियाया अन्तर्भावाच्चरेदित्युक्तम् । सबर्दुघामित्यत्र सबरित्यस्यार्थमाह– ।। **काम्यमिति** ।। कुत इति तत्राह । **ब कामन इति** ।। अस्माद्धातुव्याख्यानात् । सशब्दस्तु कर्मार्थप्रत्ययसन्नियोगेन धातोरागम इति हृदयम् । ऋभवो **नासत्याभ्याम्** । अश्विनोरेको नासत्यः । साहचर्यादुभावपि नासत्यावुच्येते । यथा दस्राविति । अत एवान्यत्र नासत्यदस्रावित्याचार्याः । अश्विनोरर्थे **परिज्मानं** सकलपृथिवीगामिनम् अप्रतिहतगतिं **सुखं रथम्** । **तक्षन्** अतक्षन् अकुर्वन् । **सबर्दुघां** काम्यस्य सर्वस्य दोग्ध्रीं धेनुं चातक्षन् ।। ३ ।।

**मन्त्रार्थमञ्जरी–** (ऋभवः) **नासत्याभ्याम्,** अश्विनोरेको नासत्यनामकः, तत्साहचर्यादुभावपि नासत्यावुच्येते, यथा– 'दस्रौ' (अम० १।१।५१) इति, अत एव भारततात्पर्ये तृतीयाध्याये 'नासत्यदस्रौ' (२९) इत्युक्तिः, अश्विनोरर्थे । परिज्मानम्, ज्मां भूमिं परितश्चरतीति परिज्मा, तं सकलपृथिवीगामिनम्, अप्रतिहतगतिम् । सुखम्, सुखेन । वाह्यम् रथम् । तक्षन्, अतक्षन्, अकुर्वन् । सबर्दुघाम्, 'ब कामने' इति धातोः कर्मणि रप्रत्यये सडागमे च 'सबर्' इति काम्यमुच्यते, सर्वकाम्यदोग्ध्रीम् । धेनुम्, बृहस्पतेः कामधेनुम् । (च) तक्षन्, अतक्षन् । इति ।। ३ ।।

**स्कन्द–** ये च **तक्षन्** कृतवन्तः । **नासत्याभ्याम्** अश्विनोरेको नासत्यनामा, दस्रनामाऽपरः । साहचर्यात्विदमन्यतरशब्देनाप्युभयोरभिधानम् । अश्विनोरर्थाय । **परिज्मानम्** अजेः गत्यर्थस्येदं रूपम् । सर्वतोगामिनं **सुखम् रथम्** । ये च **तक्षन् धेनुम्** । कीदृशम् । **सबर्दुघाम्** सबरित्यमृतस्याख्या । अमृतस्य दोग्ध्रीम् । कस्मै पुनरकुर्वन् । बृहस्पतये । कुत एतत् । 'बृहस्पतिर्विश्वरूपामुपाजत' (ऋ.१-१६१-६) इत्यत्र बृहस्पतेर्विश्वरूपया सम्बन्धदर्शनात् । विश्वरूपाव्यपदेशस्य च 'रथं ये चक्रुः सुवृतं नरेष्टां ये धेनुं विश्वजुवं विश्वरूपाम्' (ऋ.४-३३-८) इत्यत्र धेन्वा दृष्टत्वात् ।। ३ ।।

**वेङ्कटमाधव–** अकुर्वन् अश्विभ्याम् परितो गन्तारम् शोभनाक्षद्वारं **रथम् तक्षन्** धेनुम् च बृहस्पतयेऽमृतस्य दोग्ध्रीम् ।। ३ ।।

**मुद्गल– नासत्याभ्याम्** अश्विदेवप्रीत्यर्थम् । **रथम् तक्षन्** ऋभवो देवा कश्चिद् रथमतक्षन् । तक्षणेन सम्पादितवन्तः । कीदृशम् । **परिज्मानम्** परितो गन्तारम् **सुखम्** उपरि उपवेशने सुखकरम् । किञ्च **धेनुम्** काञ्चिद् गाम् । तक्षतिधातुरत्र सम्पादनवाची । तक्षन् सम्पादितवन्तः । कीदृशीं धेनुम् । **सबर्दुघाम्** सबर क्षीरस्य दोग्ध्रीम् ।। ३ ।।

**सायण– नासत्याभ्याम्** अश्विदेवप्रीत्यर्थं **रथं तक्षन्** ऋभवो देवाः कंचिद्रथमतक्षन् तक्षणेन संपादितवन्तः । कीदृशम् । **परिज्मानं** परितो गन्तारं सुखं उपर्युपवेशने सुखकरम् । किंच **धेनुं** कांचिद्गां **तक्षन्** । धातूनामनेकार्थत्वात् तक्षतिरत्र संपादनवाची । कीदृशीं धेनुम् । **सबर्दुघां** सबरः क्षीरस्य दोग्ध्रीम् ।

तक्षन् । 'बहुलं छन्दसि' (पा.सू.६-४-७५) इति अडभावः । नासत्याभ्याम् । न विद्यते सत्यं ययोस्तौ असत्यौ । न असत्यौ नासत्यौ । 'नभ्राण्नपात्' (पा.सू.६-३-७५) इत्यादिना नलोपाभावः । परिज्मानम् । अजेः परिपूर्वस्य 'श्वनुक्षन्' (उ.स.१-१५७) इत्यादिना मन्प्रत्यये अकारलोपः आद्युदात्तत्वं च निपातनात् । सबर्दुघाम् । सबः पयः दोग्धीति सबर्दुघा । 'दुहः कब्घश्च' (पा.सू.३-२-७०) इति कप् । सबर् इति रेफान्तं प्रातिपदिकं क्षीरवाची इति संप्रदायविदः । कपः पित्त्वादनुदात्तत्वम् । धातुस्वर एव शिष्यते । समासे कृदुत्तरपदप्रकृतिस्वरः ।। ३ ।।

**सिद्धाञ्जनम्**– ते ऋभव **नासत्याभ्यां** अश्विभ्यां अश्विनोरर्थाय **सुखं** सुखकरं **रथं** शीघ्रगतिसाधनं **तक्षन्** अतक्षन् (छन्दसि अडभावः)। कीदृशं रथं ? **परिज्मानं** परितो गन्तारं (परिपूर्वकस्य अजेर्गत्यर्थस्य रूपम्) । किं च, ते **सबर्दुघां** अमृतस्य दोग्ध्रीं **धेनुं तक्षन्** अतक्षन् । सबरिति अमृतस्याख्या इति स्कन्दस्वामी, क्षीरमिति सायणः । आश्विनरथतक्षणं अमृतदुघायाः धेनोर्निष्पादनं च ऋभूणां कर्मणी प्रोक्ते। देवभिषजोरश्विनोर्व्यापारः प्रागुक्तः । लोकान्तरेषु अवस्थान्तरेषु च सर्वत्र या मानुषी योगयात्रा वर्तते तस्या अध्यक्षौ देवावश्विनौ । अन्नमयस्य पुरुषस्य आयुरारोग्ययौवनबलपूर्णतादीनि तावनुगृह्णीतः, प्राणमयस्य क्रियाभोगसामर्थ्यं, मनोमयस्य सन्तोषभूयसीं ज्योतिषः शक्तिं चेति बोध्यम् । सर्वथा मनुष्यं सर्वात्मना शुद्धानन्दबलभरितं विधत्तः । अन्यच्च कर्म तेषामिदं भवति, धेन्वास्तक्षणं प्राह । किमुक्तं भवति? गौरियं आदिमा प्रभा अदितिर्भवति । ऋभवः एनां आवृण्वत् चर्म अपोद्धार्य संस्कृतवन्तः इत्यन्यत्र उक्तम् । 'निश्चर्मणो गामरिणीत धीतिभिः' (४-३६-४)। एषा गौः विश्वरूपेति चोक्तम् 'ये धेनुं विश्वजुवं विश्वरूपाम्' (४-३३-८)। विश्वस्य प्रेरयित्री विश्वरूपा च अदितिरेव माता अखण्डप्रज्ञास्वरूपिणी भवति । तस्या एव पुत्रो जीव आत्मा मनुष्यस्य । मातुः विप्रयुक्तः प्रज्ञायाम् । तत्र आवरणं चर्म हेतुर्भवति । तच्च तमोभूतं प्रकृतिकार्यमेव लक्षणीयम् । तदपाये अखण्डप्रज्ञाया अदितेरमृतसुवो धेनोः स्वीयां वृत्तिं रूपीभवन्तीं मानुषे पुरुषे निष्पादयन्त्येत ऋभव इति संक्षेपः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**युवा॑ना पि॒तरा॒ पुन॑ः स॒त्यम॑न्त्रा ऋजू॒यव॑ः । ऋ॒भवो॑ वि॒ष्ट्य॑क्रत ।। ४ ।।**

युवा॑ना । पि॒तरा॑ । पुन॒रिति॑ । स॒त्यऽम॑न्त्राः । ऋ॒जु॒ऽयव॑ः ।। ऋ॒भव॑ः । वि॒ष्टी । अ॒क्र॒त ।। ४ ।।

## ऋग्भाष्यम्

**................सुधन्वैषां पिता स्मृतः ।**
**बृहस्पतेः कामधेनुमृजुभक्ता ऋजूयवः ।**
**अवेतनं स्वामिबलात्कर्म विष्ट्यत्र तेऽक्रत ।**
**ऋतभूमिर्ज्ञानभूमिर्भगवानृभुरीरितः ।**
**येषां भूतमृतं कर्म यज्ञभागाश्रितोऽपि ते ।। ४ ।।**

**ऋग्भाष्यटीका– युवाना** । इह ऋभवः स्वीयौ पितरौ पुनर्युवानावक्रतेत्युच्यते तत्र क एषां पितेत्याकाङ्क्षायामाह । **सुधन्वेति** ।। ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा रथकारा बभूवुरिति हि वक्ष्यते । पूर्वस्यामृचि सबर्दुघां धेनुमतक्षन्नित्युक्तम् । कस्यासौ कामधेनुरित्यपेक्षायामाह । **बृहस्पतेरिति** ।। बृहस्पतिर्विश्वरूपामुपाजतेति वक्ष्यमाणत्वात् । ऋजूयव इति व्याचष्टे । **ऋजुभक्ता इति** ।। ऋजून् ब्रह्मपदयोग्यान् देवान् कामयन्त इति ऋजूयवः । सुप आत्मनः क्यच् । तदन्तात्ताच्छीलिक उकारः । भक्ता हि स्वामिनं कामयन्ते । विष्ट्यक्रतेति व्याख्याति । **अवेतनमिति** ।। यद्यपि विष्टिरिति कर्मसामान्यनामसु पठितम् । तथापि रूढिवशात् वेतनेन विना स्वामिनो बलाद्यत्कर्म क्रियते तद्विष्टिरित्युच्यते । तत्तेऽक्रत । ऋभवः स्वीयौ पितरौ मातापितरौ जीर्णौ सन्तौ युवानावक्रत अकुर्वन् । कथम् । **सत्यमन्त्राः** अमोघमन्त्राः । तदपि कथम् । **ऋजूयवः** । किं च विष्टी 'सुपां सुलुक्' पूर्वसवर्णेति विष्टिशब्दात्परस्याः द्वितीयायाः पूर्वसवर्णः । देवानां विष्टिम् एकं च समं चतुरः कृणोतनेत्यादि वक्ष्यमाणं **अक्रत** । ऋभुशब्दं भगवति निर्वक्ति । **ऋतभूमिरिति** ।। ऋगतौ । ततः परस्य क्तस्य लोपः । भूशब्दस्य च ह्रस्वः । निर्वचनत्वात् । भूमिराश्रयः । ऋतभूमिरित्यस्यैव व्याख्यानं **ज्ञानभूमिरिति** ।। यस्मात्तस्मादित्यध्याहारः । ऋभुशब्दं देवतान्तरे निर्वक्ति । **येषामिति** ।। येषां देवानाम् ऋतं कर्म भूतं सत्यं तेप्यृभव ईरिताः । पूर्ववदत्रापि लोपविकारौ द्रष्टव्यौ । यज्ञभागाप्तितोऽपीति निर्वचनान्तरम् । ऋताभागम् ऋभवः । ऋतशब्दस्य ऋकारः भागशब्दस्य च भुशब्दः पृषोदरादित्वात् । यद्वा ऋतशब्दो यज्ञनामा तस्य ऋकारादेशः । भूतशब्दो भूप्राप्तावित्यस्य रूपम् । ऋतं यज्ञभागं भूताः प्राप्ता इत्यृभवः ।। ४ ।।

**मन्त्रार्थमञ्जरी– ऋभवः**, ऋतस्य ज्ञानस्य भुव आश्रया इति ऋभुशब्दवाच्या विष्णुरूप-विशेषाः, ऋतशब्दे निष्ठालोपः, 'भु' इत्यस्य ह्रस्वता, ऋतं कर्म भूतं सत्यं येषामिति वा, ऋतं यज्ञभागं भूताः 'भू प्राप्तौ' प्राप्ता इति वा ऋभवः प्रसिद्धदेवताश्च, ऋतभूतशब्दयोश्च ऋभावभूभावौ पृषोदरादित्वात् । ऋजूयवः, ऋजून् ब्रह्मत्वयोग्यानात्मनः स्वामित्वेनेच्छन्तीति ऋजूयवः, 'सुप आत्मनः क्यच्' इति क्यचि शीलार्थक उप्रत्ययः, 'अकृत्सार्वधातुकयोः' इति पूर्वस्य दीर्घः, ऋजुभक्ता इति यावत् । अत एव सत्यमन्त्राः, अमोघमन्त्राः सन्तः । पितरा, पितरौ, सुधन्वाख्यं पितरं स्वमातरं च, 'पिता मात्रा' इत्येकशेषः । पुनः । युवाना, युवानौ । अक्रत, अकुर्वत,

जीर्णौ मातापितरौ पुनस्तरुणावकुर्वन् । किं च, विष्टी, विष्टिम्, द्वितीयायाः 'सुपां सुलुक्पूर्वसवर्ण' इत्यादिना पूर्वसवर्णः, वेतनेन विना बलात्क्रियमाणं कर्म । एकं चमसं चतुरः कृणोतन' (ऋ०भ० १।१६१।२) इति वक्ष्यमाणदिशा (अक्रत) देवानामर्थेऽकुर्वन्, 'डुकृञ् करणे', 'लुङ्' आत्मनेपदम्, विकरणलोपः । अत्र ऋजुभक्तत्वाद्यन्यगतलिङ्गानि तदन्तर्याम्यपेक्षया नेयानि, 'ॐ शास्त्रदृष्ट्या तूपदेशः' (१।१।३०) इति न्यायात् । तत्रापि, कथं नीचतापादकलिङ्गघटना? इति चेन्न, सर्वशास्तृत्वरूपसर्वव्यापारकर्तृत्वाख्यस्वातन्त्र्यात् । स्वातन्त्र्यस्य चान्यशब्दलिङ्गत्वे निमित्तत्वं च ॐ तदधीनत्वादर्थवत् ॐ (१।४।३) इति सूत्रसिद्धमिति ज्ञेयम् ।। ४ ।।

**स्कन्द–** ये च **पितरा** आत्मीयौ पितरौ । **युवाना पुनः** वृद्धभूतौ सन्तौ पुनस्तरुणौ । **सत्यमन्त्राः** मन्त्रणं मन्त्रः वचनं सत्यवचनाः **ऋजूयवः** ऋजुकामाः ऋभवः । विष्टी 'विष्ट्वी' (निघ.२-१) इति कर्मनाम । तस्याऽयं छान्दसो वकारलोपः । तृतीयान्तं चेदमत्र द्रष्टव्यम् । कर्मणा **अक्रत** कृतवन्तः ।। ४ ।।

**वेङ्कटमाधव–** वृद्धावात्मीयौ पितरौ **पुनः** तरुणौ अकुर्वन् । मन्त्रैरुच्यमानं सर्वम् एव सत्यम्, येषा न भाक्तम् । **ऋभवः** ऋजुकामाः विष्टयः तक्षणकर्मा विष्टिः ।। ४ ।।

**मुद्गल– ऋभवः** एतन्नामका देवाः **पितरा** स्वकीयौ मातापितरौ पूर्वं वृद्धावपि पुनः **युवाना** तरणौ **अक्रत** कृतवन्तः । कीदृशाः । सत्यमन्त्राः अवितथमन्त्रसामर्थ्योपेताः पुरश्चरणाद्यनुष्ठानेन सिद्धमन्त्रत्वात् जीर्णयोः पित्रोः युवत्वं सम्पादयितुं समर्था इत्यर्थः । **ऋजूयवः** ऋजुतामात्मन इच्छन्तः, छलेन रहिता इत्यर्थः । गत एवैतेषामनुष्ठिताः मन्त्राः सिध्यन्ति । **विष्टी** विष्टयः व्याप्तियुक्ताः ।। ४ ।।

**सायण–** द्वितीये छन्दोमे वैश्वदेवशस्त्रे 'युवाना पितरा पुनः' इति आर्भवस्तृचः । द्वितीयस्य 'अग्निं वो देवम्' इति खण्डे सूत्रितं- 'मही द्यौः पृथिवी च नो युवाना पितरा पुनरिति तृचौ'(आश्व.श्रौ.८-१०) इति ।

**ऋभवः** एतन्नामका देवाः **पितरा** स्वकीयौ मातापितरौ पूर्वं वृद्धावपि पुनः **युवाना** तरुणौ **अक्रत** कृतवन्तः । कीदृशाः । **सत्यमन्त्राः** अवितथमन्त्रसामर्थ्योपेताः । पुरश्चरणाद्यनुष्ठानेन सिद्धमन्त्रत्वात् यद्यत्फलमुद्दिश्य मन्त्राः प्रयुज्यन्ते तत्तत्फलं तथैव सम्पद्यते । तस्मात् जीर्णयोः

पित्रोर्युवत्वं सम्पादयितुं समर्था इत्यर्थः । **ऋजूयवः** ऋजुतामात्मन इच्छन्तः छलरहिता इत्यर्थः । अत एव एतेषामनुष्ठिता मन्त्राः सिध्यन्ति । **विष्टी** विष्टयो व्याप्तियुक्ताः ।

सर्वेषु कार्येषु एतदीयस्य मन्त्रसामर्थ्यस्याप्रतिघातोऽत्र व्याप्तिरुच्यते । ऋभुशब्दं यास्क एवं निर्वक्ति- 'ऋभव उरु भान्तीति वर्तेन भान्तीति वर्तेन भवन्तीति वा' (निरु.११.१५) इति । युवाना । युवन्शब्दो यौतेः कनिनन्तो नित्वादाद्युदात्तः । 'सुपां सुलुक्' इत्यादिना विभक्तेः आकारः । पितरा । पूर्ववदाकारः । सत्यमन्त्राः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । ऋजुशब्दो भावपरः । ऋजुत्वमात्मन इच्छन्ति । क्यच् । 'अकृत्सार्वधातुकयोर्दीर्घः' (पा.सू.७-४-२५) इति दीर्घः । 'क्याच्छन्दसि' (पा.सू.३-२-१७०) इति उप्रत्ययः । प्रत्ययस्वरः । विष्टी । 'विष्लृ व्याप्तौ' । 'क्तिचूक्तौ च संज्ञायाम्' (पा.सू.३-३-१७४) इति क्तिच् । 'तितुत्र' इत्यादिना इट्प्रतिबन्धः । तस्मात् जसः 'इयाडियाजीकाराणामुपसंख्यानम्' (पा.सू.७-१-३९१) इति तस्य ईकारादेशः। स च 'अलोऽन्त्यस्य' (पा.सू.१-१-५२) इति सकारस्य भवति । ततः 'आद्गुणः' इति गुणे कृते 'प्रथमयोः पूर्वसवर्णः' (पा.सू.६-१-१०२) इति पूर्वसवर्णदीर्घः । बाधित्वा परत्वात् 'जसि च' (पा.सू.७-३-१००) इति ह्रस्वस्य गुणेन भवितव्यमिति चेत्, न । संज्ञापूर्वकस्य विधेरनित्यत्वात् । अक्रत । कृञो लुङ् । आत्मनेपदम् । अस्य अदादेशः । 'मन्त्रे घस' (पा.सू.२-४-८०) इत्यादिना च्लेर्लुक् । यणादेशः । अडागमः । निघातः ॥

**सिद्धाञ्जनम्– ऋभवः** प्रकृता एते देवाः **पितरा** द्यौः पिता पृथिवी माता इति प्रसिद्धौ मातापितरौ वृद्धौ, **पुनः युवाना** युवानौ तरुणौ **अक्रत** अकुर्वत (करोतेर्लुङ् आत्मनेपदम्, झस्य अदादेशः, यणादेशः, च्लेर्लुक्-छान्दसम्)। केनोपायेन? **विष्टी** विष्ट्या व्याप्त्या (तृतीयैकवचनान्तमिदम्, तथा स्कन्दस्वामी । 'विष्लृ व्याप्तौ' इत्यस्य रूपम् । विष्टयो व्याप्तियुक्ता इति सा०) । कीदृशा ऋभवः? **सत्यमन्त्राः** सत्याः मन्त्रा येषां त इति प्राहुः, सत्यवचना इति स्कन्दस्वामी । अवितथमन्त्रसामर्थ्योपेता इति सा० । सत्यं मन्त्रेषु मनस्कारेषु येषां त इत्युपपन्नतरम्। पुनः कीदृशाः ? **ऋजूयवः** ऋजुत्वमात्मन इच्छन्तः, ऋजुशब्दोऽत्र भावप्रधानः । ऋजूभवन्ति ऋजुत्वकामा एते, तस्माद् एतेषां मननेषु मनस्कारेषु मन्त्रेषु वा सत्यमेवावतिष्ठते न त्वसत्यम् ।

अस्यामृचि मुख्यमन्यदार्भवं कर्म कथितम् । तच्च वृद्धयोः पित्रोः प्रायो जीर्णयोस्तारुण्या-

पादनम् । अन्नमयाख्यजडजगत्प्रज्ञाविशेषभूमिः पृथिवी माता । शुद्धसत्त्वमनःप्रधानप्रज्ञाविशेषभूमिः द्यौः पिता । बहोः कालात् सिद्धयोर्वृद्धयोर्जगत्पित्रोरुभयोः जोर्णतामपोह्य नवतां बलवतीमापादयन्ति ऋभवः । तत्र तेषां ऋजुपथवर्तिनां सत्यमन्त्राणां दिव्यमार्जवं सत्यवैभवानि तेजोबलादीनि समर्थानि साधनानि भवन्तीत्युक्तं भवति ।। ४ ।।

## श्रीद्यादेवविरचिता नीतिमञ्जरी

पित्रोर्भक्तिपरेण भाव्यमिति ऋग्दृष्टान्तेनाह–

**मातरं पितरं भक्त्या तोषयेद्यः सभात्युरु ।**
**पितरावृभवश्चक्रुरुरुभासो नवावतः ।। ९ ।।**

यः पुत्रः मातरं च पितरं च भक्त्या आदेशकरणादिना तोषयेत् सन्तोषयेत् स ऋभुदेववत् उरु अत्यर्थं भाति शोभते । यथा ऋभवो देवाः पितरौ मातापितरौ । पितामात्रा (पा.सू.१-२-७०) इत्येकशेषः । जीर्णौ सन्तौ नवौ युवानौ चक्रुः । अतः कारणादुरुभासः बहुकान्तियुक्ता आसन् । तमर्थं 'ऋभव उरु भान्ति' इति यास्केनोक्तम् । (नि०.१५-१६)

पित्रोर्युवदर्शनी ऋक्–

युवा॑ना पि॒तरा॒ पुन॑: स॒त्यम॑न्त्रा ऋजू॒यव॑: ।। ऋ॒भवो॑ वि॒ष्ट्य॑क्रत ।। ४ ।।

मेधातिथिः ऋभून् गायत्र्या स्तौति । द्वितीये छन्दोमे वैश्वदेवे विनियुक्तं तृचम् । महीद्यौ० (ऋ.सं.१-२२-१३ ) युवाना पितरेति तृचाविति । **ऋभव** एतन्नामका देवाः । **पितरौ** स्वकीयौ मातापितरौ । पूर्वं वृद्धावपि **युवाना पुनः** तरुणौ **अक्रत** कृतवन्तः । कीदृशाः । **सत्यमन्त्राः** । सत्या यथार्था मन्त्रा येषां ते तथोक्ताः । तस्माज्जीर्णयोः पित्रोर्युवत्वं सम्पादयितुं समर्थाः । पुनः कीदृशाः । **ऋजूयवः** ऋजुत्वमात्मन इच्छन्ति तथोक्ताः । छलरहिता इत्यर्थः । पुनः कीदृशाः । **विष्टीः** विष्टयो व्याप्तियुक्ताः- 'विष्लृ व्याप्तौ' ।

युवाना पितरेति– सुपां सुलुगित्यादिना (पा.सू.७-१-३९) द्विवचनस्याकारः । पुनः वारपुनःपुन(ऋ०प्रा०१.११७)रिति रेफः । ऋजूयवः पृशनाजिरर्ज्वेति (ऋ.प्रा.९-१५ ) यकारपरत्वाद्दीर्घः ।

तथा निगमाः- जिव्री यत्सन्ता पितरा० (ऋ.४-३६-३) पुनर्ये चक्रुः पितरा (ऋ०४-३३-३) तक्षन्पितृभ्यामृभवो० (ऋ०१-१११-११) इत्येवमादयः ।

## ऋक्संहिता पदपाठसहिता

**सं वो मदासो अग्मतेन्द्रेण च मरुत्वता । आदित्येभिश्च राजभिः ॥ ५, १ ॥**

सम् । वः । मदासः । अग्मत । इन्द्रेण । च । मरुत्वता । आदित्येभिः । च । राजऽभिः ॥

## ऋग्भाष्यम्

**स हेन्द्रेण सहादित्यैः प्राप्ता युष्माकमिन्दवः ॥ ५,१ ॥**

**ऋग्भाष्यटीका– सं वः** । सहेन्द्रेण । हे ऋभवो! **मदासो** मदहेतवः इन्दवः सोमाः **मरुत्वतेन्द्रेण** सह **राजभिः** आदित्यैश्च सह **वः** युष्माकम् । द्वितीयार्थे षष्ठी । **समग्मत** सम्प्राप्ताः ॥ ५,१ ॥

**मन्त्रार्थमञ्जरी–** (हे ऋभवः) **मदासः,** मदहेतवः । (इन्दवः) सोमाः । मरुत्वता इन्द्रेण च (सह) राजभिः, दीप्यमानैः । आदित्यैः च । वः, युष्माकम्, द्वितीयार्थे षष्ठी, युष्मान् । सम् अग्मत, सम्प्राप्ताः, 'गम्लृ गतौ' 'लुङ्' आत्मनेपदम्, उपधालोपादादेशौ छान्दसौ ॥ ५ ॥

**स्कन्द– व** इति प्रकृतानामृभूणाम् । **मदासः सम् अग्मत** सङ्गच्छन्ते । मदद्वारेण चेयं तद्वतामृभूणामेव सङ्गतिरुच्यते । यूयं सोमेन मत्ताः सङ्गच्छध्वमित्यर्थः । केन सह **इन्द्रेण मरुत्वता** सह **आदित्येभिश्च राजभिः** दीप्तैः ॥ ५ ॥

**वेङ्कटमाधव–** सङ्गताः युष्माकं सोमास्तृतीये सवने **मरुत्वता इन्द्रेण** अन्यैश्च आदित्यैः **राजभिः** ॥ ५ ॥

**मुद्गल–** हे ऋभवः! **वः** युष्माकं सम्बन्धिनः **मदासः** मदहेतवः सोमाः **इन्द्रेण च आदित्येभिः** आदित्यैः च **सम् अग्मत** सङ्गताः । ऋभूणामिन्द्रादित्यैः सह सोमपानं तृतीयसवनेऽस्ति । कीदृशेनेन्द्रेण । **मरुत्वता** मरुद्भिर्युक्तेन । कीदृशैरादित्येभिः । **राजभिः** दीप्यमानैः ॥ ५ ॥

**सायण–** हे ऋभवः! **वः** युष्माकं सम्बन्धिनः **मदासः** मदहेतवः सोमाः **इन्द्रेण** च **आदित्येभिः** आदित्यैः च **सम् अग्मत** संगताः । ऋभूणामिन्द्रादित्यैः सह सोमपानं तृतीयसवनेऽस्ति । अत एव आवाहननिगदः आश्वलायनेनैवं पठितः- 'इन्द्रमादित्यवन्तमृभुमन्तं विभुमन्तं वाजवन्तं बृहस्पतिवन्तं विश्वदेव्यावन्तमावह' (आश्व.श्रौ.५-३) इति । कीदृशेनेन्द्रेण । **मरुत्वता** मरुद्भिर्युक्तेन । अत एव मन्त्रान्तरमेवमाम्नायते– 'मरुद्भिरिन्द्र सख्यं ते अस्तु' (ऋ.सं.८-९६-७) इति । कीदृशैरादित्येभिः । **राजभिः** दीप्यमानैः ।

मदासः । माद्यति एभिरिति मदाः सोमाः । 'मदोऽनुपसर्गे' (पा.सू.३-३-६७) इत्यप् । तस्य पित्त्वादनुदात्तत्वम् । धातुस्वर एव शिष्यते । 'आज्जसेरसुक्' इति जसः असुगागमः । अग्मत । गमेः संपूर्वात् लुङ् । 'समो गम्यृच्छि' (पा.सू.१-३-२९ ) इत्यादिना आत्मनेपदम् । झस्य अदादेशः । 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । 'गमहन' (पा.सू.६-४-९८) इत्यादिना उपधालोपः । 'व्यवहिताश्च' इति समो व्यवहितप्रयोगः । निघातः । मरुत्वता । मरुतोऽस्य सन्तीति मरुत्वान् । 'तसौ मत्वर्थे' (पा.सू.१-४-१९) इति भसंज्ञया पदसंज्ञाया बाधितत्वात् जश्त्वाभावः । 'झयः' (पा.सू.८-२-१०) इति मतुपो वत्वम् । आदित्येभिः । 'बहुलं छन्दसि' (पा.सू.७-१-१०) इति भिस ऐसादेशाभावे 'बहुवचने झल्येत्' इति एत्वम् । राजभिः । राजन्शब्दस्य कनिनन्तत्वेन नित्वादाद्युदात्तत्वम् ।। ५,१ ।।

**सिद्धाञ्जनम्–** हे ऋभवः! **वः** युष्माकं सम्बन्धिनः **मदासः** मदाः (माद्यन्ते एभिरिति मदाः, असुन् छन्दसि) सोमाः **मरुत्वता** मरुत्समेतेन **इन्द्रेण च राजभिः आदित्येभिः च** अदितिपुत्रः वरुणादिभिश्च **समग्मत** सङ्गच्छन्ते (सम्-पूर्वकस्य गमेर्लुङ्, आत्मनेपदम्, च्लेर्लुक्, छान्दसम्) । प्रकारान्तरेणैवं वा स्यात् । 'मदासः' वः युष्मान् 'समग्मत' सम्यक् प्राप्नुवन्ति मरुत्वतां इन्द्रेण सह, 'राजभिः' दीप्यमानः 'आदित्येभिः' च सह । इमे च ऋभवः अमृतसारमानन्दभरितं सोमं सम्पाद्य मानुषे यज्ञे समाहरन्ति । तैः सह मरुतः (प्राणबलपूर्णा मतिवृत्तयः) इन्द्रः (शुद्धसत्त्वं दिव्यं चेतः) वरुणादयश्च राजानः (दिव्यपरिशुद्ध्यादीनि वैभवानि) समुपस्थिताः सङ्गता भवन्तीति भावः ।। ५,१ ।।

**।। इति प्रथमाष्टके द्वितीयाध्याये प्रथमो वर्गः ।।**

## ।। अथ द्वितीयो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् । अकर्त चतुरः पुनः ।। ६ ।।**
उत । त्यम् । चमसम् । नवम् । त्वष्टुः । देवस्य । निःऽकृतम् । अकर्त । चतुरः । पुनरिति ।।

## ऋग्भाष्यम्

**एकं चमसं चतुरः कुरुतेत्याहतान्पुरा ।**
**त्वष्टाग्निश्चैव देवानां वाक्यात्तदपि तैः कृतम् ।**
**द्व्यादिस्वोक्तं परित्यज्य त्वष्टुः शुश्रूषणं कृतम् ।**
**तं पूर्वकृतमेवैकं चमसं चतुरोऽक्रत ।। ६ ।।**

**ऋग्भाष्यटीका– उत त्यम्** । कथागर्भेयमृक् । अतः कथामाह । **एकमिति** ।। चतुरश्चमसान् तानृभून् । एवशब्द एकमित्यनेन सम्बध्यते । तद्दुष्करमपि तैर्ऋभुभिः । त्वष्टुरित्युपलक्षणं देवैः प्रेषितौ त्वष्टाग्निश्च ऋभूनाहतुः । इममेकं जीर्णं चमसं नवानेतत्प्रमाणान् चतुरश्चमसान् कुरुतेति । ते अब्रुवन् द्वौ वा त्रीन् वा करिष्यामः । चत्वारो दुष्करा इति । पुनश्चाग्निना त्वष्ट्रा च निर्बन्धे कृते द्व्यादिस्वोक्तं परित्यज्य चतुर्निर्माणरूपं त्वष्ट्रादीनां शुश्रूषणं तैः कृतमिति । ऋचं व्याख्याति । **तमिति** ।। **उत** अन्यच्च । ऋभवः त्यं तम् । पूर्वकृतम् । जीर्णमेकमेव **चमसं पुनः नवं** नवान् चतुरश्चमसान् **अकर्त** अक्रत अकुर्वत । एवं त्वष्टुर्देवस्य निष्कृतं शुश्रूषणम् अक्रत ।।

**मन्त्रार्थमञ्जरी– उत,** अन्यच्च । (ऋभवः) त्यम्, तम्, पूर्वकृतं जीर्णमेकमेव । चमसम्, पुनः । नवम्, नवान्, नूतनान् । चतुरः, चमसान् अकर्त, अकुर्वन् । एवम् त्वष्टुः देवस्य । निष्कृतम्, शुश्रूषणम् । (अकर्त) । अयं भावः देवैः प्रेषितोऽग्निस्त्वष्टा च ऋभूनाहतुः इममेकं जीर्णं चमसं नवानेतत्प्रमाणांश्चतुरश्चमसान्कुरुतेति । तेऽब्रुवन्– द्वौ वा त्रीन्वा करिष्यामश्चत्वारो दुष्करा इति । पुनश्चाग्निना त्वष्ट्रा च निर्बन्धे कृते स्वोक्तं द्वित्रकरणं परित्यज्य चतुर्निर्माणरूपं त्वष्ट्रादीनां शुश्रूषणं तैः कृतमिति ।। ६ ।।

**स्कन्द– अत** अपि च **त्यम् चमसम् नवम्** अजीर्णम् **त्वष्टुः देवस्य** स्वभूतम् **निष्कृतम्**

निरित्येवं समित्येतस्य स्थाने । **संस्कृतं** परिनिष्ठितं सन्तमित्यर्थः । 'एकं चमसं चतुरः कृणोतन' (ऋ १-१६१-२) इति देवसन्देशेनाग्नेः वचनात् **अकर्त** कृतवन्तः स्थ **चतुरः** चमसान् **पुनः** ॥ ६ ॥

**वेङ्कटमाधव–** अपि च तम् नवम् चमसम् त्वष्ट्रा देवेन संस्कृतमेकं सन्तं पुनः चतुरः चमसान् कृतवन्तः स्थ ॥ ६ ॥

**मुद्गल– उत** अपि च **त्वष्टुः** एतन्नामकस्य देवस्य सम्बन्धी तक्षणव्यापारः **नवम्** नूतनम् **त्यम्** तम् **चमसम्** सोमधारणे क्षमं काष्ठपात्रविशेषं **निष्कृतम्** निःशेषेण सम्पादितमकरोदिति शेषः । तक्षणव्यापारकुशलस्य त्वष्टुः शिष्याः ऋभवः तेन निर्मितं तमेकं चमसं **पुनरपि चतुरः अकर्त** चतुर्धा विभक्तांश्चमसान् कृतवन्तः ॥ ६ ॥

**सायण– उत** अपि च **त्वष्टुः** एतन्नामकस्य देवस्य संबन्धी तक्षणव्यापारः **नवं** नूतनं **त्यं चमसं** तं सोमधारणक्षमं काष्ठपात्रविशेषं **निष्कृतं** निःशेषेण संपादितमकरोदिति शेषः । तक्षणव्यापारकुशलस्य त्वष्टुः शिष्याः ऋभवः तेन निर्मितं तमेकं चमसं पुनरपि **चतुरः अकर्त** चतुर्धा विभक्तांश्चमसान् कृतवन्तः ।

एकस्य चतुर्विधत्वकरणरूपोऽयमर्थो मन्त्रान्तरेऽपि विस्पष्टः- 'एकं चमसं चतुरः कृणोतन' (ऋ.मं.१-१६१-२) इति । नवम् । 'णु स्तुतौ' । नूयत इति नवम् । कर्मणि अप्प्रत्ययः । स हि घञोऽपवादत्वात् घञर्थे सर्वत्र भवति । घञ्प्रत्ययश्च 'अकर्तरि च कारके संज्ञायाम्' (पा.सू.३-३-१९) इति कर्तृव्यतिरिक्ते सर्वत्र कारके भवति । यद्यपि तत्र संज्ञायां इत्युक्तं तथापि चकारस्य संज्ञाव्यभिचारार्थत्वात् असंज्ञायामपि भवत्येव । संबध्यते इति संबन्धः । कर्मणि घञ् इत्युक्तम् । त्वष्टुः । 'तक्षू त्वक्षू तनूकरणे' । औणादिकस्तृन् । ऊदित्वात्पक्षे इडभावः (पा.सू.७-२-४४) । 'स्कोः संयोगाद्योरन्ते च' (पा.सू.८-२-२९) इति ककारलोपः । निष्कृतम् । कृञो निरुपसृष्टात् कर्मणि क्तः । प्रादिसमासे 'नित्यं समासेऽनुचरपदस्थस्य' (पा.सू.८-३-४५) इति षत्वम् । अत्र 'कर्तृकर्मणोः कृति' (पा.सू.२-३-६५) इति प्राप्ता षष्ठी यद्यपि 'न लोकाव्यय' (पा.सू.२-३-६९) इति निषिद्धा तथापि कर्तुः शेषत्वेन विवक्षितत्वात् 'कर्तृकरणयोस्तृतीया' (पा.सू.२-३-१८) इत्येतस्याः प्राप्तेः शैषिकी षष्ठी

(पा.सू.२-३-५०) । यथा कर्मणि शेषत्वेन विवक्षिते माषाणामश्नीयादिति । 'गतिरनन्तरः' इति निस उदात्तत्वम् । अकर्त अकृषत । कृञो लुङि झस्य व्यत्ययेन तादेशः । 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । 'छन्दस्युभयथा' इति तिङ आर्धधातुकत्वात् ङित्वाभावेन गुणः । चतुरः । 'चतुरः शसि' (पा.सू.६-१-१६७) इत्युकार उदात्तः । पुनः । स्वरादिष्वाद्युदात्तः पठितः ॥ ६ ॥

**सिद्धाञ्जनम्–** **उत** अपि च **त्वष्टुः** त्वष्टृनामकस्य विश्वतक्षणव्यापाराधिकृतस्य **देवस्य नवं** नूतनं **निष्कृतं** तेन निष्पादितमित्यर्थः । **त्यं** तं **चमसं** सोमरसवाच्य-अमृतानन्दधारणक्षमपानपात्रं एकं **पुनः** पुनरपि **चतुरः** चतुर्धा विभक्तान् **अकर्त** कृतवन्तः, ऋभव इति कर्तृपदमध्याहार्यम् । नवम्-नूयते स्तूयते कर्मणि अप् । अकर्त अकृषत कृञो लुङि तादेशः छन्दसि, तथा च्लेर्लोपः । यज्ञे देवाश्चतुर्व्यूहात्मके चमसे पानपात्रे सौम्यममृतरसं पिबन्ति । आदौ विश्वरूपनिर्मात्रा त्वष्ट्रा मनुष्याय एक एव चमसो दत्तः, स तेनैव नवीकृतः परिनिष्ठितः । स चान्नमयो देहः जागरितस्थानप्रज्ञावस्थासमाश्रयो भवति । यत्र सर्वानुभूतिसारः सोमशब्दवाच्यो रसो देवानां पानाय समर्प्यते । ज्ञानप्रकाशविभवा ऋभवस्तमेकं अन्नमयदेहं चमसं चतुर्व्यूहं कुर्वन्ति । तथाकरणस्य सामग्री अन्नमयभुवोऽपि सूक्ष्मतराभ्यः ऊर्ध्वतनभूमिभ्यः समुपादीयते । एवमत्र प्रथमं पात्रं अन्नमयं शरीरम् । तस्मिन्नेव चतुर्धा क्रियमाणे अन्यानि त्रीणि निष्पादितानि भवन्ति । प्राणमयं मनोमयं त्रयाणां अपि मूलं कारणात्मकं शरीरं चेति बोध्यम् ॥ ६ ॥

**नीतिमञ्जरी–** कृतसंविभागो भुङ्क्ते इत्याह–

**विभज्य भुञ्जते सन्तो भक्ष्यं प्राप्य सहाग्निना ।**
**चतुरश्चमसान्कृत्वा तं सोममृभवः पपुः ॥ १० ॥**

सन्तः सत्पुरुषाः तद् भक्ष्यं प्राप्य सुखादिष्टं सुखभाक्षिकान्नादिकं प्राप्य विभज्य भागं कृत्वा तु देववद् भुञ्जते । भुजोऽनवने (पा.सू.१-३-६६) इत्यात्मनेपदम् । यथा ऋभवो देवास्त्वष्ट्रा निष्पादितम् एकं चमसं चतुरश्चमसान् चतुर्धा कृत्वा चतुर्थांशमग्नये दत्वा शेषं समं त्रयो भ्रातरः पपुः ।

तत्र ऋक्–

उतत्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् । अकर्त चतुरः पुनः ॥ ६ ॥

तत्र बृहद्देवता–

**सुधन्वन आङ्गिरसस्यासन्पुत्रास्त्रयः पुरा ।**
**ऋभुर्विभ्वा च वाजश्च शिष्यास्त्वष्टुश्च तेऽभवन् ॥ ८३ ॥**

**शिक्षयामास तांस्त्वष्टा त्वाष्ट्रं यत्कर्म किञ्चन ।**
**परिनिष्ठितकर्माणो विश्वे देवा उपाह्वयन् ॥ ८४ ॥**

**विश्वेषां ते ततश्चक्रुर्वाहनान्यायुधानि तु ।**
**धेनुं सबर्दुघां चक्रुरमृतं सबरुच्यते ॥ ८५ ॥**

**बृहस्पतेरथाश्विभ्यां रथं दिव्यं त्रिबन्धुरम् ।**
**इन्द्राय च हरी देवप्रहितेनाग्निनापि यत् ॥ ८६ ॥** (अ० ३ श्लो० ८३-९०)

एकं चमसं (ऋ०१.१६१.२ ) इत्युक्ते ज्येष्ठ आह (ऋ.४.३३.५ ) इत्यथो दिवि ।

**उक्त्वा ततश्चुश्रमसान् यथोक्तं तेन हर्षिताः ॥ ८७ ॥**

**त्वष्टा च सविता चैव देवदेवः प्रजापतिः ।**
**सर्वान् देवान् समामन्त्र्य अमृतत्वं ददुश्च ते ॥ ८८ ॥**

**तेषामाद्यन्त्ययोर्नाम्ना दृश्यते बहुवत्स्तवः ।**
**तृतीयसवने तेषां तैस्तु भागः प्रकल्पितः ॥ ८९ ॥**

**अपिबत्सोममिन्द्रश्च तैस्तत्र सवने सह ।**
**तेषां स्तुतिरिदं सूक्तं त्वयमित्यष्टकं** (ऋ०१.२०)**परम् ॥ ९० ॥** इति ।

वेदभाष्येऽपि (ऋ.सं.१-१६१-१ )- ऋभवो नाम सुधन्वन आङ्गिरसस्य त्रयः पुत्राः ऋभुर्विभ्वा वाज इति ते च मनुष्याः सन्तः (सुकर्मणा ) देवत्वं प्राप्यं कदाचित्कर्मकाले सोमपानाय प्रवृत्ताः तान्प्रति देवैः पेरितोऽग्निः परस्परं समानरूपान्दृष्ट्वा स्वयमपि तदाकारं देहं धृत्वा तेषु मध्ये स्वयमपि चतुर्थः सन् पातुं प्रवृत्तः ते च ऋभवः आगतं तं समानरूपमवलोक्य

विवेक्तुमसमर्थाः परस्परमेवं सन्देहं कृत्वा ज्येष्ठ आहेत्युक्तं (ऋ.सं.१-१६९-१-५.) संवादं कृत्वा त्वष्ट्रा निर्मितं एकं चमसं चतुर्धा कृत्वा तं सोममग्निना सह पपुः । इति ।

ऋष्यादि पूर्ववत् । अयमर्थः । **उत** अपि च **त्वष्टुः** एतन्नामकस्य **देवस्य** सम्बन्धलक्षणव्यापारः **त्यं** तं **नवं** नूतनं **चमसं** सोमधारणक्षमं काष्टपात्रविशेषं **निष्कृतं** निःशेषेण सम्पादितम् अकरोदिति शेषः । तक्षणव्यापारकुशलस्य तस्य त्वष्टुः शिष्याः ऋभवः तेन निर्मितं एकं चमसं सन्तं पुनरपि चतुरः कर्ता ज्येष्ठ आहेत्युक्तं संवादं कृत्वा चतुर्धा विभक्तान् चमसान् कृतवन्तः ।

चमसस्य च संस्तवेन बहूनि दाशतयीषु सूक्तानि भवन्तीति निरुक्तम् । तत्र निरुक्तम् (११.१६.)– 'ऋभुर्विम्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुस्तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन । तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दाशतयीषु सूक्तानि भवन्ति' । इति ।

तथा निगमाः–

एकं चमसं चतुरः कृणोतन (ऋ.सं.१-१६१-२) ।
यदा वाख्यंचमसाश्चतुरः कृतान् । (ऋ.सं.१-१६१-४) ।
एकं वि चक्र चमसं चतुर्वयं (ऋ.सं.४-३६-४) ।
व्यकृणोत चमसं चतुर्द्धा (ऋ.सं.४-३५-३) इत्येवमादयः।

एकं भक्ष्यं प्राप्य दत्त्वा ऋभूणामिव भक्षयेदिति फलितम् ।

## ऋक्संहिता पदपाठसहिता

**ते नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते । एकमेकं सुशस्तिभिः ।। ७ ।।**
ते । नः । रत्नानि । धत्तन । त्रिः । आ । साप्तानि । सुन्वते । एकम्ऽएकम् । सुशस्तिऽभिः ।।

## ऋग्भाष्यम्

**सप्तसङ्ख्यानि रत्नानि त्रिकालेष्वपि धत्तन ।**
**पुराणपञ्चरात्रेतिहासवेदान्हरिस्तथा ।**

**मीमांसातर्कसहितान् पश्चवेदानथापि वा ।**
**सप्तच्छंदांसि वैकैकं तद्गुणैरखिलैः सह ।। ७ ।।**

**ऋग्भाष्यटीका– ते नः** । सप्तसङ्ख्यानि । य एवम्भूता ऋभवः **ते नो**ऽस्माकं **सुन्वते** यजमानाय **त्रिः** त्रिकालेष्वपि **साप्तानि** सप्तसङ्ख्यानि । स्वार्थिकोऽत्र तद्धितः । सप्तैव साप्तानि । सप्तनोऽण् छन्दसीति वर्गे वाऽण् । छान्दसत्वादाद्युदात्तत्वम् । सप्तनोऽञ् छन्दसीति सूत्रपाठे न विरोधः । **रत्नानि धत्तन** दत्त । देवतान्तरपक्षे ''छत्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा । एतानि सप्तरत्नानि पूर्वेषां चक्रवर्तिना''मिति पुराणोक्तानि सप्तरत्नानि । विष्णुपक्षे त्वाह । **पुराणेति** ।। वेदांश्चतुरः । हरिः चेद्विवक्षित स्तदेति शेषः । तथाशब्दो वक्ष्यमाणसमुच्चये । अथापि वेति निपातसमुच्चयः पक्षान्तरद्योतकः । सप्तछन्दांसि वा गायत्र्यादीनि । उत्तरार्धं व्याख्याति । **एकैकमिति** ।। एषां रत्नानां मध्ये **एकमेकम्** एकैकं रत्नं **सुशस्तिभिः** प्रशंसाहेतुभिः तत्तद्गुणैरखिलैः सहवर्तमानम् । तथाभूतानि ।। ७ ।।

**मन्त्रार्थमञ्जरी–** (ये) एवं भूता ऋभवः । **ते** । नः, अस्माकम् । सुन्वते, यजमानाय । त्रिः, त्रिकालेष्वपि । साप्तानि, सप्तसङ्ख्याकानि, स्वार्थिकोऽत्राण्प्रत्ययः, 'सप्तनोऽञ्छन्दसि' इति वर्गार्थो वाञ्प्रत्ययः रत्नानि, चतुर्वेदेतिहासपुराणपञ्चरात्राख्यानि वा तर्कमीमांसासहितपञ्चवेदाख्यानि वा गायत्र्यादिसप्तच्छन्दांसि वा, देवतान्तरपक्षे तु– 'चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा । एतानि सप्त रत्नानि पूर्वेषां चक्रवर्तिनाम्' इत्युक्तरत्नानि । आधत्तन, दत्त । सुशस्तिभिः, प्रशंसाहेतुभिर्गुणैर्युक्तम् । एकमेकम् (वा) (आ धत्तन) प्रयच्छत, तशब्दस्य तनादेशः ।।७।।

**स्कन्द–** य ईदृशा स्थ **ते नो** अस्माकं स्वभूताय **रत्नानि धत्तन** दत्त । मा च सकृदेव । किं तर्हि । **त्रिः** । आकारस्तु पदपूरणः । कियन्ति । **साप्तानि** स्वार्थिकोऽत्र तद्धितः । सप्तैव साप्तानि । वर्गे वा तद्धितः । 'पञ्चद्दशतौ वर्गे वा' (पा.सू.५-१-६०) 'सप्तनोऽञ् छन्दसि' (पा.५-१-६१) इति छान्दसत्वादाद्युदात्तत्वम् । सप्तकवर्गाणि साप्तानि । कतमानि । 'छत्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा । एतानि सप्तरत्नानि पूर्वेषां चक्रवर्तिनाम् ।।' (बृ.दे.५-१२३) इति पुराणे श्रुतत्वात् छत्रादीनि । अथवा रत्नम् (निघ.२-२०) इति धननाम । सुवर्णरजतमाणिक्यमौक्तिकप्रभृतीनि सप्तधनानीति । त्रिरिति द्विस्त्रिश्चतुरिति कृत्वोर्थीयश्रुतेः आ

इति चोपसर्गात् योग्यक्रियाध्याहारः । त्रिरावृत्तानि सप्त एकविंशतिसुवर्णादिधनप्रकारं दत्तेत्यर्थः । कस्मै । **सुन्वते** यजमानाय । कीदृशानि रत्नानि । उच्यते । **एकमेकमिति** । निर्धार्यमाणश्रुते र्निर्धारणसम्बन्धो येषामिति शब्दोऽत्राध्याहर्तव्यः । सुशस्तिभि इति तृतीयाश्रुतेर्युक्तशब्दश्च । येषामेकैकं **सुशस्तिभिः** शोभनाभिः प्रशंसाभिर्युक्तम् । अत्यन्तोत्कृष्टमित्यर्थः ।। ७ ।।

**वेङ्कटमाधव– ते** अस्माकम् **रत्नानि आ धत्तन** त्रि आवृत्तानि सप्तसङ्ख्यान्येकविंशतिम् **सुन्वते** यजमानाय एकमेकम् स्तुतिभिः 'चतुर्दशोषधयः सप्त ग्राम्याः पशवस्तान्येकविंशतिः' इत्याहुः ।। ७ ।।

**मुद्गल–** पूर्वासु ऋक्षु ये प्रतिपादिता ऋभवः **ते** यूयम् **सुशस्तिभिः** शोभनैरस्मदीयशंसनैर्युक्ता सन्तः **नः** अस्माकं सम्बन्धिने **सुन्वते** सोमाभिषवं कुर्वते यजमानाय **रत्नानि** रमणीयानि सुवर्णमणिमुक्तादीनि धनानि **एकमेकम्** क्रमेण प्रत्येकम् **धत्तन** प्रयच्छत । सुवर्णादीनां मध्ये प्रतिद्रव्यं यावदपेक्षितं तावदिति विवक्षया एकमेकमित्युक्तम् । कीदृशानि रत्नानि । **त्रि आ** त्रिवारमावृत्तानि, उत्तमानि मध्यमान्यधमानि चेत्येवं रत्नानां त्रिरावृत्तिः । किञ्च **साप्तानि** सप्तसङ्ख्याकानि ।। ७ ।।

**सायण–** तृतीये छन्दोमे वैश्वदेवशस्त्रे 'ते नो रत्नानि धत्तन' इति द्वे ऋचावार्भव्यौ । 'तृतीयस्यागन्म मह' इति खण्डे सूत्रितम्- 'इन्द्र इपे ददातु नस्ते नो रत्नानि धत्तनेत्येका द्वे च' (आश्व.श्रौ.८-११) इति ।

पूर्वास्वृक्षु ये प्रतिपादिता ऋभवः **ते** यूयं **सुशस्तिभिः** शोभनैरस्मदीयशंसनैर्युक्ताः सन्तः **नः** अस्माकं सबन्धिने **सुन्वते** सोमाभिषवं कुर्वते यजमानाय **रत्नानि** रमणीयानि सुवर्णमणिमुक्तादीनि धनानि **एकमेकं** क्रमेण प्रत्येकं **धत्तन** प्रयच्छत । सुवर्णादीनां मध्ये प्रतिद्रव्यं यावदपेक्षितं तावदिति विवक्षया एकमेकमित्युक्तम् । कीदृशानि रत्नानि । **त्रिरा** त्रिवारम् आवृत्तानि । उत्तमानि मध्यमान्यधमानि च इत्येवं रत्नानां त्रिरावृत्तिः । किंच **साप्तानि** सप्तसंख्यानिष्पन्नवर्गरूपाणि कर्माणि च **धत्तन** संपादयत । कीदृशानि साप्तानि । त्रिरा त्रिवारम् आवृत्तानि । अग्न्याधेयदर्शपूर्णमासादीनां सप्तानां हविर्यज्ञानामेको वर्गः । औपासनहोमो वैश्वदेवमित्यादीनां सप्तानां पाकयज्ञानां वर्गो द्वितीयः । अग्निष्टोमोऽत्यग्निष्टोम इत्यादीनां सप्तानां सोमसंस्थानां वर्गस्तृतीयः ।

रत्नानि । 'रमु क्रीडायाम्' । 'नित्' इत्यनुवृत्तौ 'रमेस्त च' (उ.सू.३-२९४) इति नप्रत्ययः; तत्संनियोगेन मकारस्य तकारः । नित्वादाद्युदात्तः । धत्तन धत्त । 'तप्तनप्तनथनाश्च' इति तशब्दस्य तनादेशः । सप्तानां वर्गः साप्तम् । 'सप्तनोऽञ् छन्दसि' (पा.सू.५-१-६१) इति वर्गे अन्प्रत्ययः । 'नस्तद्धिते' (पा.सू.६-४-१४४) इति टिलोपः । ञित्वादादिवृद्धिः आद्युदात्तत्वं च । अत्र वर्गवचनेनानेन वर्गिणो लक्ष्यन्ते तेन बहुवचनम् । अन्यथा ह्येक एव वर्गस्त्रिरावृत्त इत्येकवचनमेव स्यात् । सुन्वते । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । एकमेकम् । 'नित्यवीप्सयोः' इति वीप्सायां द्विर्भावः । एकशब्द इणः कनन्तो नित्वादाद्युदात्तः । द्वितीयस्यैकशब्दस्य 'तस्य परमाम्रेडितम्' इति आम्रेडितसंज्ञायाम् 'अनुदात्तं च' (पा.सू.८-१-३) इत्यनुदात्तत्वम् । सुशस्तिभिः । शस्यते आभिरिति शस्तयः ऋचः । 'शंसु स्तुतौ' । करणे क्तिन् । तस्य कित्वात् लोपः । शोभनाः शस्तयः इति प्रादिसमासे यद्यपि च क्तिनो नित्वादाद्युदात्तत्वेन कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव प्राप्तं, तत्तु परेण 'मन्क्तिन्व्या ख्यान' (पा.सू.६-२-१५१) इत्यादिना उत्तरपदान्तोदात्तत्वेन बाध्यते ।। ७ ।।

**सिद्धाञ्जनम्– ते** पूर्वोक्तदिव्यकर्माणो यूयं हे ऋभवः **नः** अस्माकं सम्बन्धिने **सुन्वते** यजमानाय **रत्नानि** रमणीयानि रतीरित्यर्थः, **धत्तन** धत्त, धारयत (तनादेशश्छान्दसः) । कानि रत्नानि ? त्रिः आ त्रिवारं आवृत्तानि साप्तानि सप्तवर्गीयाणि, सप्तसङ्ख्यानिष्पन्नवर्गरूपाणि (सप्तानां वर्गः साप्तं, सप्तनोऽञ् छन्दसि । अत्र वर्गेण वर्गिं लक्ष्यते न चेदेकवचनमेव स्यात्) । तानि रत्नानि **एकमेकं** प्रत्येकं **सुशस्तिभिः** शोभनशंसनैः, साधुनिष्कर्षणैरित्यर्थः 'धत्तन' इति सम्बन्धः । मनुष्याय चतुर्व्यूहात्मकसुखमयशरीरसम्पादनेन ऋभवस्तं सत्यचिन्मयधामाधिवासक्षमं व्यधुः । तेन तस्मिन् सिद्धे सम्पन्ने, भूरादिसप्ततत्त्वात्मकविश्वसत्तागतं आनन्दं तस्य शरीरे प्राणे मनसि च त्रिष्वपि प्रत्येकं निष्कर्षेण प्रतिष्ठापयितुं प्रभव इति हेतोः 'एकमेकं त्रिः साप्तानि रत्नानि धत्तन' इत्युक्तम् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**अधा॑रयन्त॒ वह्न॑योऽभ॑जन्त सुकृ॒त्यया॑ । भा॒गं दे॒वेषु॑ य॒ज्ञिय॑म् ।। ८,२,२० ।।**

अधा॑रयन्त । वह्न॑यः । अभ॑जन्त । सु॒ऽकृ॒त्यया॑ ।। भा॒गम् । दे॒वेषु॑ । य॒ज्ञिय॑म् ।। ८,२,२० ।।

## ऋग्भाष्यम्

**सुकर्मणा यज्ञभागमभजन्नप्यधारयन् ।**
**वह्नयो धारकत्वेन स्थिरत्वेन यथागतिः ।। ८,२,१ ।।**

**ऋग्भाष्यटीका– अधारयन्त** । सुकर्मणा । जगतो धारकत्वेन स्वयं स्थिरत्वेन च **वह्नयः** वह्निनामानः । अनेकार्थत्वाद्धातूनां वहतिरत्र धृतौ वर्तते । ऋभवः **सुकृत्यया** सुकर्मणा **देवेषु** देवानां मध्ये भूत्वा । **यज्ञियं** भागं यज्ञार्हं भागं यज्ञभागम् । **अभजन्त** अभजन् प्राप्ताः । **अधारयन्त** अधारयन्नपि । भजनातिरिक्तं धारणं नास्तीत्यतः पौनरुक्त्यं तत्राह ।। **यथाऽगति-रिति** ।। यथा येन प्रकारेण प्राप्तस्य भागस्यागतिरविच्छेदस्तथाऽधारयन् । ततश्चेदानीमभजन्त । अधारयन्त कालान्तरेऽपि स्थिरीकृतवन्त इत्यर्थः । यद्वा यथा विश्वस्यागतिः प्रवृत्तिर्भवति तथा धारकत्वेनेति योज्यम् । एवं च धातोरर्थद्वयमङ्गीकृतं भवति ।। ८,२,१ ।।

**मन्त्रार्थमञ्जरी– वह्नयः**, जगतो धारकत्वेन स्वयं स्थिरत्वेन च वह्निनामानः, धातूना-मनेकार्थत्वाद्वहतिः अत्र धृत्यर्थः ऋभवः । सुकृत्यया, सुकर्मणा । देवेषु, देवानां मध्ये भूत्वा । यज्ञियम् भागम्, यज्ञार्हं भागम् । अभजन्त, अभजन्, प्राप्ताः । अधारयन्त (च) अधारयँश्च, प्राप्तं यज्ञभागमविच्छिन्नं यथा भवति तथा धृतवन्त इत्यर्थः, कालान्तरेऽपि स्थिरीकृतवन्त इति फलितोऽर्थः ।। ८ ।।

**स्कन्द– अधारयन्त** धारणं स्थिरीकरणं कालान्तरेणात्मनः स्थिरीकृतवन्तः । **वह्नयः** वोढारः सर्वकर्मणामृभव **अभजन्त** सेवितवन्तः । इदानीं लब्धवन्तः कालान्तरे च स्थिरीकृतवन्त इत्यर्थः । केन । **सुकृत्यया** एकचमसचतुष्टयकरणादिकया शोभनया क्रियया । किम् । **भागम्** । क्व । **देवेषु** निर्धारणे चेयं सप्तमी । देवानां मध्ये । **यज्ञियम्** यज्ञार्हं हविर्भागमित्यर्थः । अथवा वह्नयोऽत्र हविषा वोढारः ऋत्विजः । शोभनया संस्कारक्रियया शोभनैः संस्कारैः संस्कृतवन्तः आ च प्रदानकालाद् धारितवन्त इत्यर्थः । **भागं देवेषु** षष्ठ्यर्थे सप्तमीयम् । हविर्भागं देवानामृभूणां यज्ञार्हम् ।। ८ ।।

**वेङ्कटमाधव– अधारयन्त** मनुष्यत्वेऽपि न मृताः वोढारः । तथैकचमसचतुष्टयकरणादिकया शोभनया क्रियया **देवेषु यज्ञियम्** भागम् **अभजन्त** ।। ८ ।।

**मुद्गल– वह्नयः** चमसादिसाधननिष्पादनेन यज्ञस्य वोढारः ऋभवः **अधारयन्त** पूर्वं मनुष्यत्वेन मरणयोग्या अपि अमृतत्वलाभेन प्राणान् धारितवन्तः । किञ्चैते **सुकृत्यया** यज्ञसाधनद्रव्यसम्पादनरूपेण शोभनव्यापारेण देवेषु मध्ये स्थिताः **यज्ञियम्** यज्ञार्हम् भागम् हविर्लक्षणम् **अभजन्त** सेवितवन्तः ॥ ८ ॥

**सायण– वह्नयः** चमसादिसाधननिष्पादनेन यज्ञस्य वोढारः ऋभवः **अधारयन्त** पूर्वं मनुष्यत्वेन मरणयोग्या अपि अमृतत्वलाभेन प्राणान् धारितवन्तः । तथा च मन्त्रान्तरमाम्नायते- 'मर्तासः सन्तो अमृतत्वमानशुः' (ऋ.सं.१-११०-४) इति । किंचैते **सुकृत्यया** यज्ञसाधनद्रव्यसंपादनरूपेण शोभनव्यापारेण देवेषु मध्ये स्थिताः **यज्ञियं** यज्ञार्हं **भागं** हविर्लक्षणम् **अभजन्त** सेवितवन्तः ।

अयमर्थः 'सौधन्वना यज्ञियं भागमानश' (ऋ.सं.३-६०-१) इत्यादिमन्त्रान्तरे विस्पष्टः । ब्राह्मणेऽपि 'ऋभवो वै देवेषु तपसा सोमपीथमभ्यजयन्' (ऐ.ब्रा.३-३०) इत्याद्युपाख्यानं विस्पष्टम् । वह्नयः । 'नित्' इत्यनुवृत्तौ 'वहिश्रि:' इत्यादिना निप्रत्ययः । अभजन्त । पादादित्वादनिघातः । सुकृत्यया । 'विभाषा कृवृषोः' (पा.सू.३-१-१२०) इति कृतः कर्मणि क्यप् । शोभनं कृत्यं यस्या भजनक्रियायाः सा सुकृत्या । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं बाधित्वा 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । ननु कृत्यशब्दे क्यपः पित्वेनानुदात्तत्वात् धातुस्वरेणादिरुदात्तः । ततश्च 'आद्युदात्तं द्व्यच्छन्दसि' (पा.सू.६-२-११९) इत्यनेनाद्युदात्तत्वेन भवितव्यम् । तेन हि पुरस्तादपवादेन परमपि 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वं बाध्यते इत्युक्तम् । एवं तर्हि- 'कृञः श च' (पा.सू.३-३-१००) इति स्त्रियां भावे क्यप्प्रत्ययान्तः कृत्याशब्दः । क्यपः पित्वेऽपि व्यत्ययेनोदात्तत्वम् । प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते । भागम् । 'कर्षात्वतः' (पा.सू.६-१-१५९) इत्यन्तोदात्तः । यज्ञियम् । यज्ञमर्हतीत्यर्थे 'यज्ञर्त्विग्भ्यां घखञौ' (पा.सू.५-१-७१) इति घः । तस्य इयादेशः । प्रत्ययस्वरः ॥८,२॥

**सिद्धाञ्जनम्– वह्नयः** वोढारः, मनुष्यस्य अमृतत्वादिसम्पादनाय यज्ञनिर्वाहिन ऋभवः, **सुकृत्यया** शोभनं कृत्यं एकचमसचतुष्टयकरणादिकं यस्यां क्रियायां तया करणभूतया, **देवेषु** देवानां (षष्ठ्यर्थे सप्तमी) **यज्ञियं** यज्ञार्हं **भागं** प्रत्येकं देवानां यथाविधि भजनीयं अंशं **अधारयन्त** धारितवन्तः **अभजन्त** विभक्तवन्तश्च । मानुष्यां सिद्धायां प्रज्ञायां सदानन्दप्रवाहान् धारयितुमृभवः

प्रभवन्ति । तस्मात् यज्ञेनाविष्कृतानां देवानां एकैकस्मै युक्तमानन्दभरितं भागं विभज्य दातुं स्वकर्मसम्पत्त्या समर्था भवन्ति । तादृशं यथाभागं विभजनं साधुकर्मणे पूर्णफलाय यज्ञायात्यन्त-मपेक्षितमिति ग्राह्यम् ॥ ८ ॥ २ ॥

॥ इति प्रथमाष्टके द्वितीयाध्याये द्वितीयो वर्गः ॥

## ॥ अथ तृतीयो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

(सूक्तम् २१)

(मेधातिथिः काण्व ऋषिः । इन्द्राग्नी देवता । गायत्री छन्दः)

**इहेन्द्राग्नी उप॑ ह्वये तयोरित्स्तोम॑मुश्मसि । ता सोमं॑ सोमपात॑मा ॥ १ ॥**

इह । इन्द्राग्नीइति॑ । उप॑ । ह्वये । तयोः॑ । इत् । स्तोम॑म् । उश्मसि । ता । सोम॑म् । सोमऽपात॑मा ॥

## ऋग्भाष्यम्

**ह्वये सोमं प्रति च तौ......... ॥ १ ॥**

**ऋग्भाष्यटीका– इहेन्द्राग्नी** ॥ षळर्चमिदमैंद्राग्नं सूक्तम् । अत्र पदानि व्यवहितानीत्यन्वयं दर्शयन्व्याख्याति । **ह्वये सोममिति** ॥ अहमिह यज्ञे इन्द्राग्नी उपह्वये । कस्मात् । यस्मात् **तयोः** इन्द्राग्न्योः **इत्** एव । **स्तोमं** स्तुतिम् । **उश्मसि** सर्वे वयं कामयामहे । अनेन स्तोमं प्रत्युपह्वय इत्युक्तं भवति । किंच **ता** तौ **सोमपातमा** अतिशयेन सोमानां पाताराविन्द्राग्नी **सोमं** च **उप** प्रति **ह्वये** इति पूर्वेण सम्बन्धः ॥ १ ॥

**मन्त्रार्थमञ्जरी–** अथ **'इहेन्द्राग्नी'** इत्येकविंशं षळर्चमेकवर्गात्मकमैन्द्राग्नं गायत्रं सूक्तम् । (अहम्) इह, यज्ञे । इन्द्राग्नी उप ह्वये ॥ कस्मात् ? यस्मात् तयोः इत्, इन्द्राग्न्योरेव । स्तोमम्, स्तुतिम् । उश्मसि, सर्वे वयं कामयामहे, 'वश कान्तौ' 'ग्रहिज्यावयिव्यधिवष्टि' इत्यादिना सम्प्रसारणम्, अनेन 'स्तुतिं प्रत्युपह्वये' इत्युक्तं भवति । किं च, ता तौ । सोमपातमा, सोमपातमौ, अतिशयेन सोमानां पातारौ । अतः सोमम् (च प्रति) (उप ह्वये) ॥ १ ॥

**स्कन्द–** 'ततोऽनन्तरमैन्द्राग्नम्' । आर्भवानन्तरं सूक्तमैन्द्राग्नम् । **इह** यज्ञे **इन्द्राग्नी** अहम् **उप ह्वये** । इत्शब्दो यस्मादर्थे । **तयोः स्तोमम् उश्मासे** सर्वे वयं कामयामहे । कर्तुमित्थमिति वाक्यशेषः । एतज्ज्ञात्वा आगत्य **ता** तौ **सोमम्** द्वितीयानिर्देशात् पिबेतामिति वाक्यशेषः । **सोमपातमा** अतिशयेन सोमानां पातारौ इति ।। १ ।।

**वेङ्कटमाधव–** **इह इन्द्राग्नी उप ह्वये तयोः** एव **सोमम्** च कामयामहे । तौ हि सोमम् अतिशयेन पातारौ । विरम्याभिधानादेकवचनबहुवचनयोः सङ्गतिः ।। १ ।।

**मुद्गल–** 'इन्द्राग्नी' इति षड्चं चतुर्थं सूक्तम् । मेधातिथिः । गायत्रम् । ऐन्द्राग्नम् । **इह** अस्मिन् कर्मणि **इन्द्राग्नी** देवौ **उप ह्वये** आह्वयामि । तयोः इत् इन्द्राग्न्योरेव **स्तोमम्** स्तोत्रम् **उश्मसि** कामयामहे । **सोमपातमा** अतिशयेन सोमं पातुं क्षमौ तौ देवौ **सोमम्** पिबतामिति शेषः ।। १ ।।

**सायण–** 'इहेन्द्राग्नी' इत्यादिकं षड्चं चतुर्थं सूक्तम् । तस्य ऋषिच्छन्दसी पूर्ववत् । देवता त्वनुक्रम्यते– 'इह षळेन्द्राग्नम्' इति । विनियोगस्तु- अग्निष्टोमे अच्छावाकशस्त्रे 'इहेन्द्राग्नी उप ह्वये' इति सूक्तम् । 'स्तोत्रमग्रे शस्त्रात्' इति खण्डे 'इहेन्द्राग्नी उपेयं वामस्य मन्मन इति नव' (आश्व.श्रौ.५-१०) इति सूचितत्वात् । तथा अभिप्लवषडहे प्रातःसवने अच्छावाकशस्त्रे स्तोमातिशंसनार्थमेतदेव सूक्तम् । तथा च सूत्रितम् 'अभिप्लवपृष्ठ्याहानि' इत्युपक्रम्य 'इहेन्द्राग्नी इन्द्राग्नी आ गतम्' (आश्व.श्रौ.७-५) इति ।

**इह** अस्मिन्कर्मणि **इन्द्राग्नी** देवौ **उप ह्वये** आह्वयामि तयोरित् इन्द्राग्न्योरेव **स्तोमं** स्तोत्रं **उश्मसि** कामयामहे । **सोमपातमा** अतिशयेन सोमं पातुं क्षमौ तौ द्वौ देवौ **सोमं** पिबतामिति शेषः ।

इन्द्राग्नी । अत्र देवनाद्वन्द्वेऽपि पूर्वपदस्य आनङ् न भवति । तत्र हि द्वन्द्वे इत्यनुवृत्तौ पुनर्द्वन्द्वग्रहणात् लोकप्रसिद्धसाहचर्याणामेव द्वन्द्वे, आनङ् इत्युक्तम् (का.६-३-२६) । तस्मात् अत्र अवग्रहे ह्रस्व इन्द्रशब्दः । 'समासस्य' इत्यन्तोदात्तत्वम् । 'देवताद्वन्द्वे च' (पा.सू.६-२-१४१) इति उभयपदप्रकृतिस्वरत्वं तु न भवति । अग्निशब्दस्यानुदात्तादित्वेन 'नोत्तर-पदेऽनुदात्तादौ' (पा.सू.६-२-१४२) इति प्रतिषेधात् । उश्मसि । 'वश कान्तौ' । लटो मस् ।

'इदन्तो मसि' (पा.सू.७-१-४६) इति इकारोपजनः । अदादित्वात् शपो लुक् । मसेर्ङित्वात् 'ग्रहिज्या' इत्यादिना संप्रसारणम् । ता सोमपातमा । उभयत्र 'सुपां सुलुक्' इति आकारः ॥ १ ॥

**सिद्धाञ्जनम्–** पञ्चमेऽनुवाके चतुर्थं 'इहेन्द्राग्नी' इत्यादिकं षड्चं सूक्तम् । ऋषिच्छन्दसी पूर्ववत् । इन्द्राग्नी देवते ।

इह अस्मिन् प्रवर्तमाने यजने **इन्द्राग्नी** इन्द्रं अग्निं च **उपह्वये** आह्वयामि । तयोरित् इन्द्राग्न्योस्तयोरेव **स्तोमं** स्तोत्रं **उश्मसि** उश्मः, कामयामहे (वश कान्तौ, लटो मस्, इदन्तो मसिः इति इकारोपजनः) **ता तै सोमपातमा** अतिशयेन सोमानां पातारौ देवी **सोमं** अभिषुतं पिबेतामित्यध्याहार्यम् । द्युस्थान इन्द्रः पृथिवीस्थानोऽग्निः, यजमाने द्यावापृथिव्योर्जगत्पित्रोः साङ्गत्यं अनेन देवताद्वन्द्वेन सोमतर्पितेन साधितं स्यात् ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**ता यज्ञेषु प्रशंसतेन्द्राग्नी शुम्भतानरः । ता गायत्रेषु गायत ॥ २ ॥**

ता । यज्ञेषु । प्र । शंसत । इन्द्राग्नीइति । शुम्भत । नरः । ता । गायत्रेषु गायत ॥ २ ॥

## ऋग्भाष्यम्

**..........शुंभनं भूषणं मतम् ॥ २ ॥**

**ऋग्भाष्यटीका– ता यज्ञेषु** ॥ शुम्भतेत्यत्र प्रकृतेरर्थमाह । **शुम्भनमिति** ॥ हे **नरः!** ऋत्विजः । तौ प्रकृतौ **इन्द्राग्नी** । **यज्ञेषु प्रशंसत** प्रकर्षेण स्तुतः । शुम्भत भूषयत च । शुभशुम्भ शोभार्थे । अन्तर्भावितण्यर्थः । किञ्च ताविन्द्राग्नी **गात्रेषु** सामसु **गायत** । तृतीयार्थे सप्तमी । गायत्रैः स्तुतेत्यर्थः ॥ २ ॥

**मन्त्रार्थमञ्जरी–** (हे) **नरः**, ऋत्विजः । ता, तौ, प्रकृतौ । इन्द्राग्नी यज्ञेषु । प्र शंसत, प्रकर्षेण स्तुतिं कुरुत । शुम्भत, भूषयत । (च) 'शुभ, शुन्भ शोभार्थे' अन्तर्णीतण्यर्थः । किं च, ता, तौ इन्द्राग्नी । गायत्रेषु, सामसु । गायत्रेषु, सामसु । गायत, तृतीयार्थे सप्तमी, गायत्रैः स्तुतेत्यर्थः ॥ २ ॥

**स्कन्द– ता** तौ प्रकृतौ **यज्ञेषु प्र शंसत** ऋग्लक्षणाभिः शस्त्रस्तुतिभिः प्रकर्षेण स्तुतः । तौ कौ । **इन्द्राग्नी** । **शुम्भत** शुम्भ शोभार्थे । शोभध्वम् । हे **नरः!** मनुष्याः! ऋत्विजः! । ऋत्विजो ऋत्विक्त्वादेव देवताः स्तुवन्तः' शोभन्ते न तूष्णीमासीनाः । अथवा 'दाता राधांसि शुम्भति' (ऋ १-२२-८) इति प्रयोगदर्शनाच्छुम्भतिर्दानार्थः । दत्तं च ताभ्यां सोममित्यर्थः । तौ एष **गायत्रेषु** गीयन्त तानीति गायत्राणि सामानि । तृतीयार्थे चेयं सप्तमी । सामभिः स्तोत्रलक्षणै **गायत** स्तुतः ।। २ ।।

**वेङ्कटमाधव– तौ यज्ञेषु प्र शंसत इन्द्राग्नी** अलङ्कुरुत च स्तोत्रैः । तावेव गायत्रसामसु च **गायत नरः** ।। २ ।।

**मुद्गल–** हे **नरः!** मनुष्या ऋत्विजः । **ता** तौ **इन्द्रग्नी यज्ञेषु** अनुष्ठीयमानेषु कर्मसु **प्र शंसत** शस्त्रैः । तथा **शुम्भत** नानाविधैरलङ्कारैः शोभितौ कुरुतः । तथा **ता** तौ **इन्द्राग्नी** गायत्रेषु गायत्री छन्दस्केषु मन्त्रेषु सामरूपेण गायत ।। २ ।।

**सायण–** हे **नरः!** मनुष्या ऋत्विजः । **ता** पूर्वोक्तौ तौ **इन्द्राग्नी यज्ञेषु** अनुष्टीयमानकर्मसु **प्र शंसत** शस्त्रैः । तथा **शुम्भत** नानाविधैरलंकारैः शोभितौ कुरुतः । तथा **ता** पूर्वोक्तौ ताविन्द्राग्नी **गायत्रेषु** गायत्रीच्छन्दस्केषु मन्त्रेषु सामरूपेण **गायत** । ता । 'सुपां सुलक्' इति आकारः । शुम्भत । अस्य संहितायाम् 'अन्येषामपि दृश्यते' (पा.सू.६-३-१३७) इति दीर्घः ।।२।।

**सिद्धाञ्जनम्–** हे **नरः!** पुरुषाः, ता तौ **इन्द्राग्नी** उभौ देवौ **यज्ञेषु** यजनेषु **प्रशंसत** प्रकर्षेण स्तुत, **शुम्भत** शोभितो कुरुत (शुम्भतिः शोभार्थः, संहितायां तकारस्य दीर्घः छान्दसः) । **ता** तौ देवौ **गायत्रेषु** गायत्रीच्छन्दस्कमन्त्रेषु गीयमानेषु **गायत** गानेन स्तुत ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवामहे । सोमपा सोमपीतये ।। ३ ।।**

ता । मित्रस्य । प्रऽशस्तये । इन्द्राग्नीइति । ता । हवामहे । सोमऽपा । सोमऽपीये ।। ३ ।।

## ऋग्भाष्यम्

**तौ मित्रस्य प्रशस्त्यर्थौ हरेः........।। ३,४ ।।**

**ऋग्भाष्यटीका– ता मित्रस्य** । प्रथमपादं व्याख्याति । **ताविति** ।। यौ तौ प्रसिद्धौ **मित्रस्य** हरेः **प्रशस्तये** प्रशंसार्थौ भवतः । देवैर्हि परमेश्वरस्य प्रशंसालोकेषु ज्ञाप्यते । तौ सोमपाविन्द्राग्नी **सोमपीतये हवामहे** ।। ३ ।।

**मन्त्रार्थमञ्जरी– ता,** तौ, प्रसिद्धौ । मित्रस्य, निरुक्तमेतत् 'मित्रं हुवे' इत्यत्र, हरेः । प्रशस्तये, प्रशंसार्थौ भवतः, देवैर्हि परमेश्वरस्य प्रशंसा लोकेषु ज्ञाप्यते । ता, तौ । सोमपा, सोमपौ । इन्द्राग्नी सोमपीतये हवामहे (च) ।। ३ ।।

**स्कन्द– मित्रस्य** मित्रो देवतामात्रोपलक्षणार्थः । तौ देवतानाम् **प्रशस्तये** होतृत्वादग्निरागतो देवता स्तोष्यतीत्येवमर्थम् **इन्द्राग्नी हवामहे** । पुनस्तच्छब्दश्रुतेर्मित्रस्य प्रशस्तये **सोमपा** सोमपौ **सोमपीतये** सोमपानार्थमपि हवामहे ।। ३ ।।

**वेङ्कटमाधव–** तौ **मित्रस्य प्रशस्तये** तयोरितरेतरविषयां मैत्रीं स्तोतुम् **इन्द्राग्नी** तौ **हवामहे** । सोमपानशीलौ सोमपानाय च ।। ३ ।।

**मुद्गल– मित्रस्य** स्नेहविषयस्य ममानुष्ठातुः **प्रशस्तये ता** तौ इन्द्राग्नी सम्पद्येतामिति शेषः । **सोमपा** सोमपानक्षमौ **ता** तौ **इन्द्राग्नी सोमपीतये** सोमपानार्थम् **हवामहे** आह्वयामः ।।३।।

**सायण– मित्रस्य** स्नेहविषयस्य मम अनुष्ठातुः **प्रशस्तये ता** पूर्वोक्तौ देवौ संपद्येतामिति शेषः । यद्वा । मित्रस्य मम संबन्धिनौ ताविन्द्राग्नी प्रशस्तये प्रशंसितुमिच्छाम इति शेषः । **सोमपा** सोमपानक्षमौ **ता** पूर्वोक्तौ **इन्द्राग्नी सोमपीतये** सोमपानार्थं **हवामहे** आह्वयामः ।

प्रशस्तये । 'तुमर्थाच्च भाववचनात्' (पा.सू.२-३-१५) इति चतुर्थी । कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा 'तादौ च निति कृत्यतौ' (पा.सू.६-२-५०) इति गतेः प्रकृतिस्वरत्वम् । सोमपीतये । सोमस्य पीतिर्यस्मिन्कर्मणि तस्मै । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । सोमस्य पीति इति तत्पुरुषे वा दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ।। ३ ।।

**सिद्धाञ्जनम्– ता** तौ **इन्द्राग्नी** उभौ च देवौ सङ्गतौ द्वन्द्वभूतौ **हवामहे** आह्वयामः । किमर्थम् ? **मित्रस्य** यजने बह्वङ्गे वैषम्यनिवारणपूर्वकसामरस्यसंविधायकस्य मित्रात्मनः सुहृदो देवस्यादित्यस्य **प्रशस्तये** प्रकृष्टख्यातये । अपि च **ता** तौ **सोमपा** सोमपौ देवौ इन्द्राग्नी

**सोमपीतये** सोमपानाय हवामह इति सम्बन्धः । सन्तृप्तयोः इन्द्राग्नयोः सङ्गत्या साङ्गत्यसौहार्दादि-सम्पादकस्य मित्रस्य प्रख्यातिः स्यात् ॥ ३ ॥

## ऋक्संहिता पदपाठसहिता

**उ॒ग्रा स॒न्ता ह॑वामह॒ उपे॒दं सव॑नं सु॒तम् । इ॒न्द्रा॒ग्नी एह ग॑च्छताम् ॥ ४ ॥**
उ॒ग्रा । स॒न्ता । ह॒वा॒म॒हे॒ । उप॑ । इ॒दम् । सव॑नम् । सु॒तम् । इ॒न्द्रा॒ग्नी इति॑ । आ । इ॒ह । ग॒च्छ॒ता॒म् ।

**ऋग्भाष्यटीका– उग्रा सन्ता** । वयमुग्रौ क्रुरौ शत्रूणाम् । सन्तौ प्रशस्तौ **इन्द्राग्नी** । इदं सवनमिमं यज्ञम् । **सुतं** सोमं च प्रति **हवामहे** । तदवधार्येन्द्राग्नी इहागच्छताम् ॥४॥

**मन्त्रार्थमञ्जरी–** (वयम्) **उग्रा,** उग्रौ, शत्रूणां क्रूरौ । सन्ता, सन्तौ, प्रशस्तौ इन्द्राग्नी । इदम् सवनम्, इमं यज्ञम् । सुतम्, सोमम् । (च) उप प्रति । हवामहे । तदवधार्य (इन्द्राग्नी) इह आ गच्छताम्, गमेः लोट् ॥ ४ ॥

**स्कन्द– उग्रा** उग्रौ शत्रूणामपरि । सन्ता सच्छब्दः प्रशंसावचनः । सत्पुरुषः, सद्भवः, सदश्व इति यथा । प्रशस्तौ **हवामहे** । **उप इदम् सवनम् सुतम्** । उपशब्दोऽत्र प्रतिशब्दस्यार्थे । 'सवनम्' (निघ.३-१७) इति यज्ञनाम । यज्ञं सुतं च सोमं प्रति । अथवा सवनशब्दः सूयत तदिति सवनं सोमलक्षणं हविराह, न यज्ञनाम । इदं सोमलक्षणमभिषुतं हविः प्रति । एतज्ज्ञात्वा इन्द्राग्नी आ इह गच्छताम् । उप इदम् सवनम् सुतम् इत्येतत् पदचतुष्टयम् 'सेमं नः स्तोममागहि' (ऋ १-१६-५) इत्यत्र पठितम् । इह पुनः पदकाले पठ्यतेऽर्थभेदात् । कथमर्थभेदः । 'सेमं नः स्तोममागहि' इत्यत्र क्रियापदानन्तर्यात् स्तोमं सुतमिति चानयोः उपागमनकर्मण्येव सम्भवादुप-शब्दः उपसर्गः स्वार्थवृत्तिः । न कर्मप्रवचनीयप्रतिशब्दार्थे । इदं सवनमित्यपि स्तोमं सुत-मित्येतयोर्विशेषणर्थाधिकरणसप्तम्यर्थे प्रथमा । अस्मिन् यज्ञे स्तोमं सुतं च सोममुपागच्छेत्यर्थः । इह पुनः **इन्द्राग्नी एह गच्छताम्** इति क्रियाशब्दस्य व्यवहितत्वात् । सुतमित्यस्य कर्मणो हवामह इति पूर्वेणेन्द्राग्निकर्मकेणाह्वानेनासम्बन्धादागच्छतामित्यनेन सम्बन्धे इहशब्दस्य इदं सवनमितीदंशब्देन सप्तम्यर्थप्रवृत्तेन पौनरुक्त्यप्रसङ्गादुपशब्दः प्रत्यर्थे । कर्मप्रवचनीययोगलक्षणा च द्वितीया । इमं यज्ञं सुतं च सोमं प्रति सोमलक्षणं वा अभिषुतं हविः प्रति हवामहे इति । अथ तु तत्रापीदं सवनमित्युपागमनकर्मणि द्वितीया व्याख्यायते स्तोममिमं च यज्ञं सुतं च सोमम् उपागच्छेति । ततोऽस्य पदत्रयस्य पुनरिहाध्ययने पदकाराभिप्रायः पर्येष्यः ॥ ४ ॥

**वेङ्कटमाधव–** उग्रौ भवन्तौ **हवामहे इमम् सुतम्** सोमम् **उप** प्रति । तौ **इन्द्राग्नी इह आ गच्छताम्** ॥ ४ ॥

**मुद्गल– सुतम्** अभिषवोपेतम् **इदम्** अनुष्ठीयमानम् **सवनम्** प्रातःसवनादिरूपं कर्म **उप** सामीप्येन प्राप्तुम् **उग्रा सन्ता** वैरिवधादिषु क्रूरौ सन्तौ देवौ **हवामहे** आह्वयामः । **इन्द्राग्नी** देवौ **इह** कर्मणि **आ गच्छताम्** ॥ ४ ॥

**सायण– सुतम्** अभिषवोपेतम् **इदम्** अनुष्ठीयमानं **सवनं** प्रातःसवनादिरूपं कर्म **उप** सामीप्येन प्राप्तुम् **उग्रा सन्ता** वैरिवधादिषु क्रूरौ सन्तौ देवौ **हवामहे** आह्वयामः । **इन्द्राग्नी** देवौ **इह** कर्मणि **आ गच्छताम्** ।

सन्ता । अस्तेः शतरि 'श्नसोरल्लोपः' । सवनं सुतमिति द्वयं 'सेमं नः स्तोममा गहि' (ऋ.सं.१-१६-५) इत्यत्रोक्तम् ॥ ४ ॥

**सिद्धाञ्जनम्– सुतं** सुतसोमम् (पीता गावः, पीतोदकाः, भुक्ताः ब्राह्मणा भुक्तान्नाः इतिवत् सुतः सोमो यस्मिन् तत्) **इदं सवनं** यजनं **उप** उपगन्तुं **उग्रा** उग्रौ शूरौ **सन्ता** सन्तौ यज्ञद्विषां वधे विक्रान्तौ, तौ देवौ **हवामहे** आह्वयामः । **इन्द्राग्नी** तौ **इह** अस्मिन् अस्मदीये यजने यजनमुद्दिश्य, **आगच्छताम्** आगतौ भवताम् ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**ता म॒हान्ता॒ सद॒स्पती॒ इन्द्रा॑ग्नी॒ रक्ष॑ उब्जतम् । अप्र॑जाः सन्त्व॒त्रिणः॑ ॥ ५ ॥**

ता । म॒हान्ता॑ । स॒द॒स्पती॒इति॑ । इन्द्रा॑ग्नी॒इति॑ । रक्षः॑ । उ॒ब्ज॒त॒म् । अप्र॑जाः । स॒न्तु॒ । अ॒त्रिणः॑ ॥

## ऋग्भाष्यम्

**......................रक्षांसि चोब्जतम् ।**
**रक्षोरक्ष्याः प्रजा यस्मादत्र्यो मार्गत्रयोज्झिताः ।**
**पितृदेवमनुष्याणां गत्यभावादधोगतेः ॥ ५ ॥**

**ऋग्भाष्यटीका– ता महान्ता** ॥ रक्ष इत्येकवचनं जातावित्याशयेनाह । **रक्षांसीति** ॥ नन्वप्रजाः संत्वत्रिण इत्यत्र प्रकृतरक्षोग्रहणे लिङ्गवचनव्यत्यास स्यात् तदग्रहणे तु विशेष्यान्तरं

न दृश्यत इत्यतो भिन्नविषयतां तावच्चशब्देन सूचयति । ननूक्तं तर्हि विशेष्यान्तरं न दृश्यत इति तत्राह । **रक्षोरक्ष्याः प्रजा इति** ।। इदमुक्तं भवति । यद्यप्युत्तरार्धेऽपि रक्ष इत्येवानुवर्तते । तथापि तच्छब्देन तदीयाः प्रजाः लक्ष्यन्ते । उक्तानुपपत्तेरेव । रक्ष्यरक्षकभावसम्बन्धस्य च विद्यमानत्वादिति । रक्षोभी रक्ष्याः रक्षोरक्ष्याः । प्रजाः उत्तरार्धे लक्ष्यन्त इति शेषः । तास्वत्रिण इत्येतद्व्याख्याति । **यस्मादिति** ।। यस्मान्मार्गत्रयोज्झितास्तस्मादत्र्यः । वेदे तु त्रय एषां सन्तीति त्रिणः । व्रीह्यादिलक्षण इनिः न त्रिणः अत्रिणः । जना इति पुल्लिङ्गप्रयोगः । भाष्ये तु प्रजा इत्यभिधेयान्तरकथन एव तात्पर्यं न लिङ्गे । न विद्यन्ते त्रयो यासामिति बहुव्रीहेर्ङीप् । मार्गत्रयोज्झितत्वं कथमित्यत आह । **पितृदेवेति** ।। पितॄणां गतिः स्वर्गः । देवानां गतिर्मोक्षः । मनुष्याणां गतिः पृथिवी । एतदपि कथमित्यत आह । **अधोगतेरिति** ।। हे **इन्द्राग्नी!** यौ युवां महान्तौ पूज्यौ **सदसस्पती** सदसो यज्ञगृहविशेषस्य स्वामिनौ तौ **रक्षो** रक्षांसि **उब्जतम्** । यद्यप्युब्ज आर्जव इति पठ्यते तथाप्यत्र सामर्थ्याद्वधार्थो ग्राह्यः । हतम् । किञ्चात्रिणो गतित्रयरहिताः रक्षस्सम्बन्धिनो जना अप्रजास्सन्तु ।। ५ ।।

**मन्त्रार्थमञ्जरी–** (हे) **इन्द्राग्नी** (यौ युवाम्) महान्ता, महान्तौ, पूज्यौ । सदस्पती, सदसो यज्ञगृहविशेषस्य पती स्वामिनौ । ता, तौ रक्षः, रक्षांसि, एकवचनं बहुवचनार्थे । उब्जतम्, 'उब्ज आर्जवे' इति धातुपाठेऽपीह सामर्थ्याद्वधार्थः, हतमित्यर्थः । किं च अत्रिणः, त्रय एषां सन्तीति त्रिणः, व्रीह्यादित्वादिनिः, न त्रिणोऽत्रिणः, स्वर्गमोक्षपृथिवीरूपपितृमार्गदेवमार्गमनुष्य-मार्गाख्यमार्गत्रयहीनाः, तमोगतेरिति भावः, रक्षः सम्बन्धिजनाः । अप्रजाः सन्तु इति ।।५।।

**स्कन्द–** तच्छब्दश्रुतेर्मध्यमपुरुषयोगाच्च मन्त्रस्य प्रत्यक्षकृतत्वात् **महान्ता सदस्पती** इत्यनयोश्चानामन्त्रितयोस्तत्सम्बन्धी यच्छब्दोऽध्याहार्यः । यौ युवां महान्तौ सदस्पती सदः प्रसिद्धं यज्ञगृहं तस्य स्वामिनौ तौ हे **इन्द्राग्नी! रक्ष उब्जतम्** उब्जतिरत्र सामर्थ्याद् वधार्थः न्यग्भावार्थो वा । रक्षांसि हतम् । न्यग्भूतानि नाऽस्माकं कुरुतम् । **अप्रजाः** प्रजावर्जिताश्च **सन्तु अत्रिणः** 'अद भक्षणे' । भक्षयितारो हिंसितारोऽस्माकम् ।। ५ ।।

**वेङ्कटमाधव–** तौ महान्तावित्येतावान् परोक्षम् । **सदस्पती इन्द्राग्नी रक्षः** हतम् । अप्रादुर्भूताः भवस्तु अदनशीला राक्षसाः अप्रजाता वा ।। ५ ।।

**मुद्गल– ता** तौ **इन्द्राग्नी रक्षः** राक्षसजातिम् **उब्जतम्** ऋजु कुरुतम् । क्रौर्यं परित्याजयतमित्यर्थः । कीदृशौ । **महान्ता** महान्तौ गुणैरधिकौ **सदस्पती** सभापालकौ । तयोः प्रसादात् **अत्रिणः** भक्षका राक्षसाः **अप्रजाः** अनुत्पन्नाः **सन्तु** ॥ ५ ॥

**सायण–** तौ पूर्वोक्तौ **इन्द्राग्नी रक्षः** राक्षसजातिम् **उब्जतम्** ऋजु कुरुतम् । क्रौर्यं परित्याजयतमित्यर्थः । कीदृशौ । **महान्ता** महान्तौ गुणैरधिकौ **सदस्पती** सभापालकौ । तयोः प्रसादात् **अत्रिणः** भक्षकाः राक्षसाः **अप्रजाः** अनुत्पन्नाः **सन्तु** ।

महान्ता । 'सान्तमहतः संयोगस्य' (पा.सू.६-४-१०) इति दीर्घः । सदस्पती । सदसः प्रती इति समासे षष्ठ्या लुकि प्रातिपदिकसकारस्य रुत्वभावश्छान्दसः । 'उभे वनस्पत्यादिषु युगपत्' (पा.सू.६-२-१४०) इति उभयपदप्रकृतिस्वरत्वम् । इन्द्राग्नी । आमन्त्रिताद्युदात्तत्वम् । अप्रजाः । प्रजायन्ते इति प्रजाः । 'अन्येष्वपि दृश्यते' (पा.सू.३-२-१०१) इति जनेः ढप्रत्ययः । न प्रजाः अप्रजाः । प्रजाशब्दस्य बहुव्रीहौ हि 'नित्यमसिच् प्रजामेधयोः' (पा.सू.५-४-१२२) इति असिजादेशः स्यात् । अव्ययपूर्वपदप्रकृतिस्वरः । अत्रिणः । तृजन्तस्य अत्तृशब्दस्य जसश्छान्दसः इनुडागमः । 'चितः' इति ऋकार उदात्तः । तस्य यणादेशे 'उदात्तयणो हल्पूर्वात्' (पा.सू.६-१-१७४) इति इकार उदात्तः ॥ ५ ॥

**सिद्धाञ्जनम्–** तौ प्रकृतौ **महान्ता** महान्तौ **सदस्पती** सदसस्पती सदसो यज्ञगृहस्य सर्वान्तरङ्गबहिरङ्गसम्पन्नस्य यजमानशरीरस्य पती पालकौ **इन्द्राग्नी** इन्द्रोऽग्निश्च युवाम् **रक्षः** जात्येकवचनं रक्षांसीत्यर्थः **उब्जतं** हतम् (उब्जतिर्वधकर्मा) । **अत्रिणः** भक्षयितारोऽस्माकम् (अद भक्षणे) राक्षसा इत्यर्थः । **अप्रजाः** असन्तानाः **सन्तु** निर्वीर्या भवन्त्वित्यर्थः । सदस्पती-समासे प्रातिपदिकसकारस्य रुत्वाभावश्छान्दसः ॥ ५ ॥

## ऋक्संहिता पदपाठसहिता

**तेन॑ स॒त्येन॑ जागृत॒मधि॑ प्रचे॒तुने॑ प॒दे । इन्द्रा॑ग्नी॒ शर्म॑ यच्छतम् ॥ ६,३,२१ ॥**

तेन॑ । स॒त्येन॑ । जा॒ग॒त॒म् । अधि॑ । प्र॒ऽचे॒तुने॑ । प॒दे । इन्द्रा॑ग्नी॒इति॑ । शर्म॑ । य॒च्छ॒त॒म् ॥६,३,२१॥

## ऋग्भाष्यम्

**सत्येन गुणपूर्णेन विष्णुना तेन जागृतम् ।**
**स्वगुणैरेव विष्णुस्तु प्रकृष्टे चेतने हरौ ।**

**पदे गम्यत्वतः सम्यक्तस्मिन्नेव स्वभावतः ।**
**तथा स्थितौ तु जागृतमिति विष्णुर्विशेषतः ।**
**उक्तः..........................।। ६,३,२ ।।**

**ऋग्भाष्यटीका– तेन सत्येन** । प्रथमपादं प्रसिद्धेन्द्राग्न्योर्योजयति । **सत्येनेति** ।। विष्णौ योजयति । **स्वगुणैरेवेति** ।। विष्णुर्विवक्षितश्चेत्तदा सत्येनेत्यस्य स्वगुणैरित्येवार्थ इत्यर्थः । प्रचेतुन इत्येतद्व्याख्याति । **प्रकृष्ट इति** ।। पद इत्यस्यार्थमाह । **पद इति** ।। अधीत्येतद्व्याचष्टे । **सम्यगिति** ।। सम्यक्त्वं किमित्यत आह । **तस्मिन्नेवेति** ।। स्वभावतः फलानपेक्षया । नन्विन्द्राग्नी सदा परमेश्वरे जागरणवन्तावेव । तत्कथं जागृतमित्युच्यत इत्यत आह । **तथेति** ।। स्वभाव इत्येतदत्रापि सम्बध्यते । स्वभावतो विधानेन विना । तथा स्थितौ तु । जाग्रतौ स्थितावेवेन्द्राग्नी जागृतमिति । लकारव्यत्ययेनोक्ताविति । नन्विदं विष्णौ दुर्घटं करणाधिकरणकर्तृत्वादीनां भेदसमानाधिकरणत्वादित्यत आह । **विष्णुरिति** ।। विशेषतः भेदप्रतिनिधिविशेषशक्त्या उक्तः । करणत्वादिनेति शेषः । हे **इन्द्राग्नी!** युवां **तेन** प्रसिद्धेन **सत्येन** गुणपूर्णेन विष्णुना । तत्प्रसादनेति यावत् । **प्रचेतुने** प्रकृष्टचेतुने । आधिक्यार्थ उकारः । **पदे** गम्ये । 'पद गतौ' । कर्मण्यकारः । हरौ **अधि** सम्यगनन्ययोगेन स्वभावतो वा जागृतं तद्विषये जागरणवन्तौ स्थः । एवम्भूतावस्मभ्यं **शर्म** सुखं **यच्छतम्** । यद्वा हे इन्द्राग्नी युवां तेन सत्येन प्रसिद्धेनेच्छादिना गुणेन स्वविषये जागृतं स्वसामर्थ्येनैव स्वप्रकाशौ स्थ इति ।। ६,३,२ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्राग्नी (युवाम्) तेन, प्रसिद्धेन । सत्त्येन, गुणपूर्णेन विष्णुना, तत्प्रसादेनेति यावत् । प्रचेतुने, प्रकृष्टचेतने, आधिक्यार्थ उकारः । पदे, गम्ये, 'पद गतौ' कर्मण्यकारप्रत्ययः, हरौ । अधि, सम्यगनन्ययोगेन, स्वभावतो वा । जागृतम्, तद्विषये जागरणवन्तौ स्थः । एवं भूतौ (अस्मभ्यम्) शर्म, सुखम् । यच्छतम् । विष्णुपक्षे तु (हे) इन्द्राग्नी, विष्णुरूपे । (युवाम्) तेन सत्त्येन प्रसिद्धेनेच्छादिना गुणेन । स्वविषये– जागृतम्,

स्वसामर्थ्येनैव स्वप्रकाशौ स्थ इति । अत्र सत्यशब्दस्य गुणपूर्तिवाचिता– सत्शब्दस्य 'सद्भावे साधुभावे च' (गी० १७।२६) इत्यादेर्गुणवाचित्वात्सद्भिर्गुणैस्त्यो व्याप्त इति सत्शब्दोपपदात्तनोतेः ड्यप्रत्यय इत्येवंरूपेण ज्ञेया । ज्ञानेच्छादिगुणवाचित्वं तु– सत्शब्दपर्यायत्वात्सत्यशब्दस्येति ज्ञेयम् । अस्मभ्यम् इत्यादि पूर्ववत् ।। ६ ।।

**स्कन्द–** तेन तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः । येनान्येषामपि स्तोतॄणां यष्टॄणां च जागृथः **तेन सत्येन** अविसंवादिना स्तोत्रेण स्वसामर्थ्येन वा ममापि **जागृतम्** जागरणमप्रमादः सर्वार्थेष्वप्रमत्तौ भवतम् । किञ्च **अधि** उपरि सर्वस्य **प्रचेतुने पदे** प्रकर्षेण यच्चेतयति ज्ञापयति प्रकाशयते वा तत् प्रचेतुनम् । प्रचेतुने पदे मम जागृतम् अप्रमत्तौ भवतम् । मां प्रचेतुने पदे प्रापयतमित्यर्थः । हे इन्द्राग्नी! स्थानं गृहं वा दत्तम् ।। ६ ।।

**वेङ्कटमाधव–** यत् **पदे** ज्योतिषा मनुष्यान् प्रज्ञापयति तस्मिन् त्वदीये आधिपत्ये यथापूर्वम् **तेन सत्येन** जागरणं कुरुतम् **इन्द्राग्नी!** सुखं च **यच्छतम्** ।। ६ ।।

**मुद्गल–** हे **इन्द्राग्नी! सत्येन** अवश्यफलप्रदानादवितथेन **तेन** अस्माभिरनुष्ठितकर्मणा **प्रचेतुने** प्रकर्षेण फलभोगज्ञापके **पदे** स्वर्गलोकादिस्थानेषु **अधि जागृतम्** आधिक्येन सावधानौ भवतम् । ततोऽस्मभ्यम् **शर्म यच्छतम्** सुखं दत्तम ।। ६ ।।

**सायण–** हे **इन्द्राग्नी! सत्येन** अवश्यफलप्रदानादवितथेन **तेन** अस्माभिरनुष्ठितेन कर्मणा **प्रचेतुने** प्रकर्षेण फलभोगज्ञापके **पदे** स्वर्गलोकादिस्थाने **अधि जागृतं** आधिक्येन सावधानौ भवतम् । ततोऽस्मभ्यं **शर्म यच्छतं** सुखं गृहं वा दत्तम् ।

'गयः कृदरः' इत्यादिषु द्वाविंशतिसंख्याकेषु गृहनामसु 'शर्म वर्म' (नि.३-४-२१) इत्युक्तम् । जागृतम् । 'जागृ निद्राक्षये' । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'तिङ्ङतिङः' इति निघातः । प्रचेतुने । 'चिती संज्ञाने' इत्यस्मात् ण्यन्तात् बाहुलकादौणादिक उनुप्रत्ययः । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । इन्द्राग्नी । 'इहेन्द्राग्नी' इत्यत्रोक्तम् । आमन्त्रितत्वादाद्युदात्तत्व-मत्र विशेषः । शृणाति हिनस्ति दुःखमिति शर्म । 'शृ हिंसायाम्' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । यच्छतम् । 'इषुगमियमां छः' (पा.सू.७-३-७७) इति ।। छः ।। ६,३ ।।

**सिद्धाञ्जनम्**– हे **इन्द्राग्नी** ! तेन तच्छब्दवाच्येन सत्येन नित्यसिद्धेन धर्मेण, यस्यानुरोधेन वयं यजामहे देवान्, युवामुपास्महे वेत्यर्थः, **जागृतम्** जागरितौ भवतम्, अस्मद्विषये निर्निमेषी भवेतम् । क्व? **अधि** उपरि **प्रचेतुने** प्रकर्षेण चेतयते **पदे** स्थाने 'परमस्यां परावति' त्रिपादस्यामृतं दिवि' 'विष्णोर्यत्परमं पदम्' इत्यादिमन्त्रवर्णैर्महितं तत्पदमेव 'प्रचेतुनं पदम्' । (चिती संज्ञाने, ण्यन्तः, औणादिकः उन्प्रत्ययः)। तौ युवां **शर्म** शरणं दिव्यं गृहमित्यर्थः, **यच्छतं** दत्तम् नः इति शेषः । ज्वलितक्रतुभूतोऽग्निविभवः, भास्वरचेतोभूत इन्द्रविभवः । उभाभ्यां सङ्गताभ्यां जागरूकाभ्यां लब्धव्यं तत्पदं नः शरणं सिद्धमिति निश्चयोऽत्र प्रत्यपादि ।। ६ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये तृतीयो वर्गः ।।

## ।। अथ चतुर्थो वर्गः ।।

**(सूक्तम् २२)**

## ऋक्संहिता पदपाठसहिता

**(२१ मेधातिथिः काण्वः । १-४ अश्विनौ । ५-८ सविता । ९-१० अग्निः । ११ देव्यः । १२ इन्द्राणीवरुणान्यग्नाय्यः । १३-१४ द्यावापृथिव्यौ । १५ पथिवी । १६विष्णुर्देवा वा । १७-२१ विष्णुः । गायत्री ।)**

**प्रातर्युजा विबोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये ।। १ ।।**

प्रातःऽयुजा । वि । बोधय । अश्विनौ । आ । इह । गच्छताम् ।। अस्य । सोमस्य । पीतये ।।

## ऋग्भाष्यम्

**.....प्रातः स्तुतत्वेन प्रोक्तौ प्रातर्युजाविति ।**
**अश्विनौ भगवांश्चैव प्रातर्योगेन गम्यते ।**
**स्तुतिशब्दः स्तुतौ यस्माद् बुध्यते वर्तमानकः ।**
**बोधयेत्यत उक्तं तत्परतो बुद्ध्यते कथम् ।। १,२ ।।**

**ऋग्भाष्यटीका**– प्रातर्युजा । एकविंशत्यृचमिदं सूक्तम् । तत्राद्याश्चतस्र आश्विन्यः । प्रातर्युजावित्येतदश्विनोर्व्याख्याति । **प्रातः स्तुतत्वेनेति** ।। प्रातस्सवने स्तुतत्वेन । भगवति व्याख्याति । **भगवांश्चेति** ।। प्रातर्योगेन हंसोपास्तिलक्षणेन गम्यत इति प्रातर्युगिति प्रोक्त इत्यर्थः ।

उपायोपेययोरभेदोपचारात् । विबोधयेत्येतदज्ञानसूचकम् । अतः सयुक्तिकमन्यथा व्याख्याति । **स्तुतिशब्द इति** ।। यस्मात्स्तुत्यर्थः शब्दः स्तुतौ गुणसङ्कीर्तन एव व्याख्येयो न दोषसूचकतया प्रकरणासङ्गतेः । अतो बोधयेति यदुक्तं तत्तत्र लोट्प्रत्ययो बुध्यत इति वर्तमानको वर्तमानार्थो व्याख्येय इत्यर्थः । यथास्थितव्याख्याने कथं स्तुतित्वव्याघात इत्यत आह । **परत इति** ।। सर्वज्ञत्वादिति शेषः । परतो ऋत्विगादितः । हे होतः! प्रातर्युजावश्विनौ **विबोधय** । विबुद्धावेव वर्तेते तौ प्रार्थयस्वेति यावत् । ताविहास्य सोमस्य पीतये आगच्छताम् ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ **'प्रातर्युजा'** द्वाविंशमेकविंशत्यृचं वर्गचतुष्टयात्मकं नानादैवत्यं गायत्रं सूक्तम् । तत्र आद्याश्चतस्र आश्विन्यः । (हे होतः) प्रातर्युजा, प्रातर्युजौ, प्रातःसवने स्तुतिविषयत्वेन युज्येते इति प्रातर्युजौ । अश्विनौ, प्रसिद्धाश्विनौ । तथा– प्रातर्युजा, प्रातर्युजौ, प्रातःकाले क्रियमाणहंसोपासनारूपसमाधिः प्रातर्युक्, उक्तं च तन्त्रसारे चतुर्थे– 'प्रातर्योगो महानयम्' (२६) इति तद्विषयत्वाद्विष्णुरूपे अप्युपायोपेययोरभेदोपचारात् 'प्रातर्युजौ' इत्युच्येते । अश्विनौ, 'अश्विना यज्वरीरिषो' इत्यत्रोक्तनिरुक्त्या विष्णुरूपविशेषौ । वि बोधय, सर्वदा विबुद्धावेव वर्तमानौ तौ प्रार्थयस्वेति यावत् । (तौ) इह अस्य सोमस्य पीतये आ गच्छताम् ।। १ ।।

**स्कन्द–** 'तृतीयस्यादिराश्विनः' । तृतीयास्य सूक्तस्यादि प्राक् 'हिरण्यपाणिमूतये' (ऋ १-२२-५) इत्यश्विदेवतम् । प्रातर्यावश्विनौ ग्रहयागेन युज्येते तौ प्रातर्युजौ अमुष्य यजमानस्य यज्ञे गन्तव्यमित्येतद् **वि बोधय** । आत्मन एवायमन्तरात्मनः प्रैषणादग्नेर्वा होतृत्वात् । विबोधितौ च **अश्विनौ आ इह गच्छताम्** । किमर्थम् । **अस्य** आश्विनग्रहाख्यस्य **सोमस्य पीतये** पानाय ।। १ ।।

**वेङ्कटमाधव–** प्रातर्गमनायोद्युक्तौ **अश्विनौ** स्तोतः! **वि बोधय** । तौ **इह आ गच्छताम्** अमुं सोमं पातुम् ।। १ ।।

**मुद्गल–** 'प्रातर्युजा' इति एकविंशर्चं पञ्चमं सूक्तम् । मेधातिथिः । गायत्रम् । आद्याश्चतस्र ऋचः अश्विदेवताकाः । पञ्चम्याद्याः चतस्रः सावित्र्यः । नवमीदशम्यावाग्नेय्यौ । एकादशी देवसम्पत्नि देवताका । द्वादशी इन्द्राणीवरुणान्यग्नायीदेवताका । त्रयोदशीचतुर्दश्यौ द्यावापृथिवीये । पञ्चदशी पृथिवीदेवताका । षोडश्याद्या विष्णुदेवताकाः षोडशी कुत्स्नदेवत्या वा ।।

होता ब्रूते । हे अध्वर्यो! **प्रातर्युजा** प्रतस्सवनग्रहेण संयुक्तौ अश्विनौ देवौ **वि बोधय** विशेषेण प्रयुद्धौ कुरु । **अश्विनौ** प्रवुद्धौ तावश्विनौ देवो **अस्य** अभिषवसंस्कारयुक्तस्य **सोमस्य पीतये** पानाय **इह** कर्मणि **आ गच्छताम्** ।। १ ।।

**सायण–** 'प्रातर्युजा' इत्यादिकमेकविंशत्यृचं पञ्चमं सूक्तम् । तस्य ऋषिच्छन्दसी पूर्ववत् । देवताविशेषस्त्वनुक्रम्यते– 'प्रातर्युजा सैका चतस्र आश्विन्यस्तथा सावित्र्य आग्नेय्यौ द्वे देवीनामेकैकेन्द्राणीवरुणान्यग्नायीनां द्यावापृथिव्ये पार्थिवी षड्वैष्णव्योऽतो देवा दैवी वा' इति । 'सूक्तसंख्यानुवर्तते' इत्यस्मिन् खण्डे 'अनिरुक्ता संख्या विंशतिः'(अनु.१२-४) इति परिभाषितत्वात् 'प्रातयुजा' इति सूक्ते संख्याविशेषस्यानिरुक्ता संख्या विंशतिसंख्या द्रष्टव्या । सा च विंशतिः एकयाधिकया सह वर्तते इति सैका । तत्रादौ चतस्र ऋचः अश्विदेवताकाः । पञ्चमीमारभ्य अष्टम्यन्ताः चतस्रः सवितृदेवताकाः । नवमी दशमी चोभे अग्निदेवताके । एकादश्या ऋचो देवसंबन्धिन्यो देव्यो देवताः । द्वादश्या इन्द्रवरुणाग्निपत्न्य इन्द्राणीवरुणान्यग्नाय्यो देवताः । त्रयोदशीचतुर्दश्यौ द्यावापृथिवीदेवताके । पञ्चदशी पार्थिवी । षोडश्याद्याः षट् विष्णुदेवत्याः । षोडशी कृत्स्नदेवत्या वा अत्र सूक्तविनियोगो लैङ्गिकः । प्रातरनुवाके आश्विने क्रतौ 'प्रातर्युजा वि बोधय' इति चतस्र ऋचः । सूत्रितं च– 'अथाश्विन एषो उपाः प्रातर्युजेति चतस्रः' (आश्व.श्रौ.४-१५) इति । आश्विनग्रहस्य 'प्रातर्युजा' इत्येका पुरोनुवाक्या । 'द्विदेवत्यैश्चरन्ति' इति खण्डे सूत्रितम्– 'आश्विनस्य प्रातर्युजा वि बोधय' (आश्व.श्रौ.५-५) इति ।

अत्र होता अध्वर्युमुद्दिश्य ब्रूते । हे अध्वर्यो **प्रातर्युजा** प्रातःसवनग्रहेण संयुक्तावश्विनौ देवौ **वि बोधय** विशेषेण प्रबुद्धौ कुरु । **अश्विनौ** प्रबुद्धौ चाश्विनौ देवौ **अस्य** अभिषवसंस्कारयुक्तस्य **सोमस्य पीतये** पानाय **इह** कर्मणि **आ गच्छताम्** । प्रातर्युञ्जाते गृह्यमाणेन ग्रहेण सहेति प्रातर्युजा । 'सत्सूद्विष' इत्यादिना क्विप् । 'सुपां सुलुक्' इति आकारः । कृदुत्तरपद-प्रकृतिस्वरत्वम् । अस्य । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । पीतये । व्यत्ययेन क्तिन उदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** पञ्चमेऽनुवाके पञ्चमं प्रातर्युजेत्यादिकं एकविंशत्यृचं सूक्तम् । तस्य ऋषि-च्छन्दसी पूर्ववत् । देवताविशेषस्तु तत्र तत्र ऋचां व्याख्याने स्पष्टो भविष्यति । सूक्तेऽस्मिन्नाद्या-श्चतस्र आश्विन्यः । **प्रातर्युजा** प्रातर्युजौ प्रातः यजनस्य प्रारम्भे (प्रातस्सवने इति वाह्यपक्षे)

उपायोपेययोरभेदोपचारात् । विबोधयेत्येतदज्ञानसूचकम् । अतः सयुक्तिकमन्यथा व्याख्याति । **स्तुतिशब्द इति** ।। यस्मात्स्तुत्यर्थः शब्दः स्तुतौ गुणसङ्कीर्तन एव व्याख्येयो न दोषसूचकतया प्रकरणासङ्गतेः । अतो बोधयेति यदुक्तं तत्तत्र लोट्प्रत्ययो बुध्यत इति वर्तमानको वर्तमानार्थो व्याख्येय इत्यर्थः । यथास्थितव्याख्याने कथं स्तुतित्वव्याघात इत्यत आह । **परत इति** ।। सर्वज्ञत्वादिति शेषः । परतो ऋत्विगादितः । हे होतः! प्रातर्युजावश्विनौ **विबोधय** । विबुद्धावेव वर्तेते तौ प्रार्थयस्वेति यावत् । ताविहास्य सोमस्य पीतये आगच्छताम् ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ **'प्रातर्युजा'** द्वाविंशमेकविंशत्यृचं वर्गचतुष्टयात्मकं नानादैवत्यं गायत्रं सूक्तम् । तत्र आद्याश्चतस्र आश्विन्यः । (हे होतः) प्रातर्युजा, प्रातर्युजौ, प्रातःसवने स्तुतिविषयत्वेन युज्येते इति प्रातर्युजौ । अश्विनौ, प्रसिद्धाश्विनौ । तथा– प्रातर्युजा, प्रातर्युजौ, प्रातःकाले क्रियमाणहंसोपासनारूपसमाधिः प्रातर्युक्, उक्तं च तन्त्रसारे चतुर्थे– 'प्रातर्योगो महानयम्' (२६) इति तद्विषयत्वाद्विष्णुरूपे अप्युपायोपेययोरभेदोपचारात् 'प्रातर्युजौ' इत्युच्येते । अश्विनौ, 'अश्विना यज्वरीरिषो' इत्यत्रोक्तनिरुक्त्या विष्णुरूपविशेषौ । वि बोधय, सर्वदा विबुद्धावेव वर्तमानौ तौ प्रार्थयस्वेति यावत् । (तौ) इह अस्य सोमस्य पीतये आ गच्छताम् ।। १ ।।

**स्कन्द–** 'तृतीयस्यादिराश्विनः' । तृतीयास्य सूक्तस्यादि प्राक् 'हिरण्यपाणिमूतये' (ऋ १-२२-५) इत्यश्विदेवतम् । प्रातर्यावश्विनौ ग्रहयागेन युज्येते तौ प्रातर्युजौ अमुष्य यजमानस्य यज्ञे गन्तव्यमित्येतद् **वि बोधय** । आत्मन एवायमन्तरात्मनः प्रैषणादग्नेर्वा होतृत्वात् । विबोधितौ च **अश्विनौ आ इह गच्छताम्** । किमर्थम् । **अस्य** आश्विनग्रहाख्यस्य **सोमस्य पीतये** पानाय ।। १ ।।

**वेङ्कटमाधव–** प्रातर्गमनायोद्युक्तौ **अश्विनौ** स्तोतः! **वि बोधय** । तौ **इह आ गच्छताम्** अमुं सोमं पातुम् ।। १ ।।

**मुद्गल–** 'प्रातर्युजा' इति एकविंशर्चं पञ्चमं सूक्तम् । मेधातिथिः । गायत्रम् । आद्याश्चतस्र ऋचः अश्विदेवताकाः । पञ्चम्याद्याः चतस्रः सावित्र्यः । नवमीदशम्यावाग्नेय्यौ । एकादशी देवसम्यन्धि देवताका । द्वादशी इन्द्राणीवरुणान्यग्नायीदेवताका । त्रयोदशीचतुर्दश्यौ द्यावापृथिवीये । पञ्चदशी पृथिवीदेवताका । षोडश्याद्या विष्णुदेवताकाः षोडशी कृत्स्नदेवत्या वा ।।

होता ब्रूते । हे अध्वर्यो! **प्रातर्युजा** प्रतस्सवनग्रहेण संयुक्तौ अश्विनौ देवौ **वि बोधय** विशेषेण प्रयुद्धौ कुरु । **अश्विनौ** प्रवुद्धौ तावश्विनौ देवो **अस्य** अभिषवसंस्कारयुक्तस्य **सोमस्य पीतये** पानाय **इह** कर्मणि **आ गच्छताम्** ।। १ ।।

**सायण–** 'प्रातर्युजा' इत्यादिकमेकविंशत्यृचं पञ्चमं सूक्तम् । तस्य ऋषिच्छन्दसी पूर्ववत् । देवताविशेषस्त्वनुक्रम्यते– 'प्रातर्युजा सैका चतस्र आश्विन्यस्तथा सावित्र्य आग्नेय्यौ द्वे देवीनामेकैकेन्द्राणीवरुणान्यग्रायीनां द्यावापृथिव्ये पार्थिवी षड्वैष्णव्योऽतो देवा दैवी वा' इति । 'सूक्तसंख्यानुवर्तते' इत्यस्मिन् खण्डे 'अनिरुक्ता संख्या विंशतिः'(अनु.१२-४) इति परिभाषितत्वात् 'प्रातयुजा' इति सूक्ते संख्याविशेषस्यानिरुक्ता संख्या विंशतिसंख्या द्रष्टव्या । सा च विंशतिः एकयाधिकया सह वर्तते इति सैका । तत्रादौ चतस्र ऋचः अश्विदेवताकाः । पञ्चमीमारभ्य अष्टम्यन्ताः चतस्रः सवितृदेवताकाः । नवमी दशमी चोभे अग्निदेवताके । एकादश्या ऋचो देवसंबन्धिन्यो देव्यो देवताः । द्वादश्या इन्द्रवरुणाग्निपत्न्य इन्द्राणीवरुणान्यग्राय्यो देवताः । त्रयोदशीचतुर्दश्यौ द्यावापृथिवीदेवताके । पञ्चदशी पार्थिवी । षोडश्याद्याः षट् विष्णुदेवत्याः । षोडशी कृत्स्नदेवत्या वा अत्र सूक्तविनियोगो लैङ्गिकः । प्रातरनुवाके आश्विने क्रतौ 'प्रातर्युजा वि बोधय' इति चतस्र ऋचः । सूत्रितं च– 'अथाश्विन एषो उपाः प्रातर्युजेति चतस्रः' (आश्व.श्रौ.४-१५) इति । आश्विनग्रहस्य 'प्रातर्युजा' इत्येका पुरोनुवाक्या । 'द्विदेवत्यैश्चरन्ति' इति खण्डे सूत्रितम्– 'आश्विनस्य प्रातर्युजा वि बोधय' (आश्व.श्रौ.५-५) इति ।

अत्र होता अध्वर्युमुद्दिश्य ब्रूते । हे अध्वर्यो **प्रातर्युजा** प्रातःसवनग्रहेण संयुक्तावश्विनौ देवौ **वि बोधय** विशेषेण प्रबुद्धौ कुरु । **अश्विनौ** प्रबुद्धौ चाश्विनौ देवौ **अस्य** अभिषवसंस्कारयुक्तस्य **सोमस्य पीतये** पानाय **इह** कर्मणि **आ गच्छताम्** । प्रातर्युञ्जाते गृह्यमाणेन ग्रहेण सहेति प्रातर्युजा । 'सत्सूद्विष' इत्यादिना क्विप् । 'सुपां सुलुक्' इति आकारः । कृदुत्तरपद-प्रकृतिस्वरत्वम् । अस्य । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । पीतये । व्यत्ययेन क्तिन उदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** पञ्चमेऽनुवाके पञ्चमं प्रातर्युजेत्यादिकं एकविंशत्यृचं सूक्तम् । तस्य ऋषि-न्छन्दसी पूर्ववत् । देवताविशेषस्तु तत्र तत्र ऋचां व्याख्याने स्पष्टो भविष्यति । सूक्तेऽस्मिन्नाद्या-श्चतस्र आश्विन्यः । **प्रातर्युजा** प्रातर्युजौ प्रातः यजनस्य प्रारम्भे (प्रातस्सवने इति वाह्यपक्षे)

संयुक्तौ (प्रातर्युञ्जाते इति प्रातर्युजौ) **अश्विनौ** देवौ **वि बोधय** प्रबुद्धौ कुरु । आत्मन एव प्रैषणमिदम् । तथैवाह स्कन्दस्वामी च 'आत्मन एवायमन्तरात्मनः प्रैषणादग्नेर्वा होतृत्वात्' इति । तौ प्रबोधितौ **इह** यजनं प्रति **आगच्छताम्** । किमर्थम्? **अस्य** अभिषुतस्य **सोमस्य पीतये** पानाय । अश्विनौ प्रागुक्तौ परिचितावस्माकम् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**या सुरथा रथीतमोभा देवा दिविस्पृशा । अश्विना ता हवामहे ।। २ ।।**

या । सुऽरथा । रथिऽतमा । उभा । देवा । दिविऽस्पृशा । आश्विना । ता । हवामहे ।। २ ।।

**ऋग्भाष्यटीका– या सुरथा** । यावश्विनावुभौ देवौ । **सुरथौ** शोभनरथौ । **रथितमौ** अतिशयितरथिनौ । **दिविस्पृशौ** दिविवर्तमानौ । **तौ हवामहे** ।। २ ।।

**मन्त्रार्थमञ्जरी–** या, यौ उभा देवा, उभौ देवौ । अश्विना, अश्विनौ । सुरथा, सुरथौ, शोभनरथौ । रथितमा, रथितमौ, अतिशयेन रथिनौ । दिविस्पृशा, दिविस्पृशौ, दिवि स्वर्गे वर्तमानौ । ता, तौ । हवामहे, आह्वयामः ।। २ ।।

**स्कन्द– या सुरथा** यौ सुरथौ रथीतमा सारथिरत्र रथ्युच्यते । अतिशयेन सारथी च । **उभा देवा दिविस्पृशा** दिवि स्पृष्टारौ । गन्तारावित्यर्थः । **अश्विना ता हवामहे** ।। २ ।।

**वेङ्कटमाधव– यौ सुरथौ** अतिशयेन रथस्य नेतारौ भवतः, **उभौ** द्युस्थानौ **अश्विनौ तौ हवामहे** ।। २ ।।

**मुद्गल– या उभा** उभौ **अश्विना देवा** अश्विनौ देवौ **सुरथा** शोभनरथयुक्तौ **रथितमा** रथिनां मध्ये अतिशयेन रथिनौ **दिविस्पृशा** द्युलोकनिवासिनौ **ता हवामहे** तादृशावश्विनौ आह्वयामहे ।। २ ।।

**सायण– या उभा अश्विना देवा** यावुभावश्विनौ देवौ **सुरथा** शोभनरथयुक्तौ **रथीतमा** रथिनां मध्ये अतिशयेन रथिनौ **दिविस्पृशा** द्युलोकनिवासिनौ **ता हवामहे** तादृशावश्विना-वाह्वयामहे ।

या इत्यादिष्वष्टसु पदेषु 'सुपां सुलुक्' इति द्विवचनस्य आकारः । सुरथा । शोभनो रथो ययोस्तौ सुरथौ । समासान्तोदात्तत्वापवादं बहुव्रीहौ पूर्वपदप्रकृतिस्वरं बाधित्वा 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । रथीतमा । 'अन्येषामपि दृश्यते' (पा.सू.६-३-१३७) इति संहितायाम् इकारस्य दीर्घत्वम् । दिविस्पृशा । दिवि स्पृशतः इति दिविस्पृशौ । 'क्विप् च' इति क्विप् । 'तत्पुरुषे कृति बहुलम्' (पा.सू.६-३-१४) इति अलुक् । 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरत्वम् ।। २ ।।

**सिद्धाञ्जनम्– या यौ उमा** उभौ देवा देवौ अश्विना अश्विनौ **सुरथा** सुरथौ, शोभनो रथो ययोस्तौ **रथितमा** रथितमौ अतिशयेन रथिनौ **दिविस्पृशा** दिवि स्पृशौ (तत्पुरुषे कृति बहुलम् इत्यलुक्) दिवि स्पृशतः, द्युवासिनावित्यर्थः । **ता** तौ **हवामहे** आह्वयामः । येत्यादिषु द्विवचनस्य आकारः छन्दसि ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ।। ३ ।।**

या । वाम् । कशा । मधुऽमती । अश्विना । सूनृताऽवती । तया । यज्ञम् । मिमिक्षतम् ।। ३ ।।

## ऋग्भाष्यम्

**कशया स्पृष्टिमात्रेण मधुरं कुरुतोऽखिलम् ।**
**अतो मिमिक्षतमिति स्पर्शो मेक्षणमुच्यते ।**
**वेदवाक्यस्तुतत्वेन कशा सा सूनृतावती ।**
**तयैव घृतसोमादि स्पृशतं याज्ञिकं वसु ।। ३ ।।**

**ऋग्भाष्यटीका– यावाम्** । अत्र कशया यज्ञस्य मेक्षणं प्रार्थ्यते । तत्किं निमित्तमित्यत आह । **कशयेति** ।। कुरुतोऽश्विनौ । इति प्रार्थितमिति शेषः । मिमिक्षतमित्यत्र प्रकृत्यर्थमाह । **स्पर्श इति** ।। सूनृतावतीत्येतत्कशायां योजयति । **वेदेति** ।। यज्ञस्य क्रियारूपस्य कथं कशया स्पृष्टिः । कथं च मधुरत्वमित्याशङ्क्य परिहरन्व्याख्याति । **तयैवेति** ।। हे **अश्विनौ! या वां** युवयोः सम्बन्धिनी । **मधुमती** स्वादुमती स्वादुत्वकारिणी । **सूनृतावती** सूनृता वेदवाणी तद्वती

तत्स्तुता । **कशा** अश्वादिनोदिनी । **तया** अस्मदीयं **यज्ञं** यज्ञसम्बन्धिघृतसोमादिवस्तु । **मिमिक्षतं** स्पृशतम् ।। ३ ।।

**मन्त्रार्थमञ्जरी–** (हे) अश्विना, अश्विनौ । **या । वाम्,** युवयोः सम्बन्धिनी । मधुमती, स्वादुमती, अमृतस्राविन्वात् स्पर्शमात्रेण सर्वपदार्थस्वादुत्वकारिणी । सूनृतावती, सूनृता वेदवाणी, तया स्तुत्यतया तद्वती । कशा, अश्वादिनोदिनी । तया (अस्मदीयम्) यज्ञम्, यज्ञसम्बन्धिघृतसोमादि वस्तुजातम् । मिमिक्षतम्, स्पृशतम्, 'मिक्ष स्पर्शने' श्लुविकरणम्, लोट्, यद्वा– 'मिह स्पर्शने' इत्यतः स्वार्थिकसन्नन्तस्य रूपम् ।। ३ ।।

**स्कन्द– या वाम्** युवयोः **कशा** अश्वो यया तोद्यते सा कशोच्यते । कीदृशी । **मधुमती** 'मधु' (निघ.१-१२) इति उदकनाम । तद्वती । वृष्टिकारिणीत्यर्थः । हे **अश्विना! सूनृतावती** सूनृता वाक् तद्वती च । शब्दकारिणीत्यर्थः । **तया** मदीयम् **यज्ञम् मिमिक्षतम्** म्यक्षतेर्गतिकर्मण एतद् रूपम् । गच्छतम् । अथवा 'कशा' (निघ.१-११) इति वाङ्नाम । या युवयोर्गर्जितलक्षणा वाक् उदकवती सूनृतावती च । 'सूनृता' (निघ.२-७) इत्यन्ननाम । सस्यलक्षणेनान्नेन जनयितव्येन तद्वती । सस्यानां जनयित्री इत्यर्थः । अथवा सूनृतं प्रियमुच्यते तद्वती । श्रवणसुखेत्यर्थः । तया यज्ञं मिमिक्षतम् । 'मिह सेचने' । उदकेन सिञ्चतं वर्षतमित्यर्थः ।।

**वेङ्कटमाधव– या** युवयोः अश्वाजनी मधु क्षरन्ती शब्दवती **तया** अस्माकम् **यज्ञम्** सिञ्चतम्' ।। ३ ।।

**मुद्गल–** हे **अश्विना** अश्विनौ **वाम्** युवयोः सम्बन्धिनी **या कशा** अश्वताडनी विद्यते । **तया** सहागत्यास्मदीयम् **यज्ञम् मिमिक्षतम्** सोमरसेन सेक्तुमिच्छतम् । कशयाऽश्वं दृढं ताडयित्वा सहसा समागत्य भवद्विषया सोमाहुतिं निष्पादयितुमुद्युक्तौ भवतमित्यर्थः । कीदृशी कशा । **मधुमती** घर्मोदकवती । अश्वस्य शीघ्रगत्या यत् स्वेदोदकं स्रवति तेनेयं कशा क्लिन्नेत्यर्थः । **सूनृतावती** प्रियसत्यवाग्युता । तीक्ष्णं कशाताडनेन यो ध्वनिर्निष्पद्यते ताडनवेलायाम् अश्वारूढेन च य आक्रोश क्रियते तदुभयं शीघ्रगमनहेतुत्वेन यजमानस्य प्रियम् ।। ३ ।।

**सायण– अश्विना** हे अश्विनौ देवौ **वां** युवयोः संबन्धिनी **या कशा** अश्वताडनी विद्यते **तया** सहागत्य **यज्ञम्** अस्मदीयं **मिमिक्षतं** सोमरसेन सेक्तुमिच्छतम् । कशयाश्वान् दृढं ताडयित्वा

सहसा समागत्य भवद्विषयां सोमरसाहुतिं निष्पादयितुमुद्युक्तौ भवतमित्यर्थः । कीदृशी कशा । **मधुमती** । 'अर्णः क्षोदः' इत्यादिषु एकशतसंख्याकेषु उदकनामसु 'मधु पुरीषम्' (नि.१-१२-११) इति पठितम् । तस्मात् उदकवतीत्युक्तं भवति । अश्वस्य शीघ्रगत्या यत् स्वेदोदकं स्रवति तेनेयं कशा क्लिन्नेत्यर्थः । **सूनृतावती** प्रियसत्यवाग्युक्ता । तीव्रेण कशाताडनेन यो ध्वनिर्निष्पद्यते ताडनवेलायाम् अश्वारूढेन च य आक्रोशः क्रियते तदुभयं शीघ्रगमनहेतुत्वेन यजमानस्य प्रियम् । यद्वा । 'श्लोकः धारा' इत्यादिषु सप्तपञ्चाशद्वाङ्नामसु 'कशा धिषणा' (नि.१-११-४३) इति पठितम् । अश्विनोर्या वाक् मधुमती माधुर्योपेता पारुष्यरहिता सूनृतावती प्रियत्वसत्यत्वोपेता फलप्रदानविषयेत्यर्थः । तया वाचा युक्तौ यज्ञं मिमिक्षतमिति योजनीयम् ।

कशा । 'कश गतिशातनयोः' । पचाद्यच् । पृषादित्वादाद्युदात्तः । सूनृतावती । 'ऊन परिहाणे' । सुष्ठु ऊनयति अप्रियम् इति सून् । तथाविधम् ऋतं सत्यं यस्यां वाचि सा सूनृता । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वं बाधित्वा 'परादिश्छन्दसि बहुलम्' इति ऋकार उदात्तः । सा यस्या अस्ति सा कशा सूनृतावतीति कशायाः संज्ञा । एवंनामा या कशेत्यर्थः । 'संज्ञायाम्' (पा.सू.८-२-११) इति मतुपो वत्वम् । मिमिक्षतम् । मिहेः सन् । 'हलन्ताच्च' (पा.सू.१-२-१०) इति कित्वाद्गुणाभावः । ढत्वकत्वषत्वानि ।। ३ ।।

**सिद्धाञ्जनम्**– हे **अश्विना** अश्विनौ, **वां** युवयोः **मधुमती** माधुर्यवती **सूनृतावती** शोभनसत्यसम्पन्ना च **कशा** (वाङ्नाम) **या** वाग्वर्तते, **तया** कशया अश्वचोदनसमर्थया **यज्ञं** इमम् प्रकृतम् **मिमिक्षतम्** सिक्तं कुरुतम् (सेचनार्थस्य मिहेः सन्) । दिवो दुहितुरुषसः अश्विनोर्जायात्वं, सा चोषोदेवौ सूनृता ऋतावरी विभावरीत्यादिस्वरूपगुणबोधकैः शब्दैरभिवर्णितेति चात्र स्मार्यम् । कशा वागिति सायणीया वापक्षव्याख्या च अनुगृह्णाति । माधुर्यशोभन-सत्यत्वगुणविशिष्टया अत एव रसभूयिष्ठया वाचा यज्ञमिमं (सिक्तं) रसार्द्रं कुरुतमिति मन्त्रार्थः । अश्वो यया तोद्यते सा कशा अश्वताडनी प्रसिद्धा लोके । अत्र वाचोऽपि तत्सामर्थ्यं वर्तते, अत एव कशा वागिति पठितम् । अत्र चिन्तकानां तारतम्यपरीक्षायै कर्मठव्याख्यानसारांशो लक्षणीयो भवति । कशा अश्वताडनी 'मधुमती' उदकवती किल । कथम्? अश्वस्य शीघ्रगत्या यत् स्वेदोदकं स्रवति तेन क्लिन्ना ! कथं अश्वताडनी सा सूनृतावतीति चेदाहुः । तोत्रेण कशाताडनेन यो ध्वनिर्निष्पद्यते, ताडनवेलायां अश्वारूढेन यश्च आक्रोशः क्रियते, तदुभयं यजमानस्य प्रियम् । कुतः ? शीघ्रगमनहेतुत्वात्तयोः ताडनध्वनेराक्रोशस्य च ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**न हि वामस्ति दूरके यत्रा रथेन गच्छथः । अश्विना सोमिनो गृहम् ॥ ४ ॥**
न हि । वाम् । अस्ति । दूरके यत्र । रथेन । गच्छथः । अश्विना । सोमिनः । गृहम् ॥ ४ ॥

**ऋग्भाष्यटीका– न हि वाम्** । हे अश्विनौ यत्र **सोमिनो** यजमानस्य । **गृहं** गृहे । यत्रेति द्वितीयार्थे सप्तमी । **रथेन गच्छथः** आगच्छथः । तद्वां युवयोः **दूरके** दूरे नास्ति हि । दूरं न भवति **हि** तस्मादागच्छतम् ॥ ४ ॥

**मन्त्रार्थमञ्जरी–** (हे) **अश्विना,** अश्विनौ । यत्र । सोमिनः, यजमानस्य । गृहम् । 'यत्र' इति द्वितीयार्थे सप्तमी । रथेन । गच्छथः, आगच्छथः । (तत्) वाम्, युवयोः । दूरके, दूरे । नहि अस्ति, नास्ति हि, दूरं न भवति हि । तस्मादागच्छतम् ॥ ४ ॥

**स्कन्द– न हि वाम्** युवयोः **अस्ति दूरके** दूरे नाम अस्ति **यत्र रथेन गच्छथ** । यदपि दूरे तदपि रथेन शीघ्रमेव गच्छथ इत्यर्थः । किं तत् । उच्यते । **अश्विना सोमिन** सोमवतो यष्टु स्वभूतम् **गृहम्** ॥ ४ ॥

**वेङ्कटमाधव– न हि** युवयो अस्ति दूरे किञ्चिद् गृहम् यत्र युवाम् **रथेन गच्छथः** । अश्विनौ यजमानस्य गृहम् रथेन शीघ्रं गच्छतोर्न दूरे भवतीति ॥ ४ ॥

**मुद्गल– अश्विना** हे अश्विनौ! युवाम् **सोमिन** सोमवतो यजमानस्य **गृहम्** प्रति **रथेन गच्छथः** । स मार्ग **वाम्** युवयोः **दूरके** दूरदेशे नहि अस्ति न वर्तते खलु । यद्वा यत्र यस्मिन् गृहे गच्छथ तच्च गृहं दूरे न भवति ॥ ४ ॥

**सायण– अश्विना** हे अश्विनौ देवौ! युवां **सोमिनः** सोमवतो यजमानस्य **गृहं** प्रति **रथेन गच्छथः** स मार्गो वां युवयोः **दूरके** दूरदेशे **नहि अस्ति** न वर्तते खलु । यद्वा । **यत्र** गृहे गच्छथः तच्च गृहं दूरे न भवति ।

न हि । 'एवमादीनामन्तः' इत्यन्तोदात्तः । अस्ति । 'चादिलोपे विभाषा' इति निघाताभावः । अत्र हि गृहं दूरे च नास्ति युवां च रथेन गच्छथः इति समुच्चयश्चार्थो गम्यते, चशब्दो न प्रयुज्यते इति चलोपे प्रथमा तिङ्विभक्तिरस्तीति । यत्र । 'निपातस्य च' इति

संहितायां दीर्घत्वम् । गच्छथः । इयं यद्यपि न प्रथमा तथापि यत्र इति यद्धत्तयोगात् न निघातः । व्यूढस्य द्वितीये छन्दोमे वैश्वदेवशस्त्रे 'हिरण्यपाणिमूतये' इति सावित्र्यश्चतस्रः । 'द्वितीयस्य' इति खण्डे सूत्रितं– 'हिरण्यपाणिमूतय' इति चतस्रो 'मही द्यौः पृथिवी च नः' (आश्व.श्रौ.८-१०) इति ॥ ४ ॥

**सिद्धाञ्जनम्–** हे **अश्विना** अश्विनौ, **यत्र** यस्मिन् यज्ञे यज्ञगृहं प्रति **रथेन** शीघ्रगमनेन यानेन **वां** युवां **गच्छथः**, तत् **सोमिनः गृहं** सोमवतो यजमानस्य यज्ञगृहम् **दूरके** दूरे **नहि अस्ति** न वर्तते खलु । शीघ्रगत्या क्षणमपि न किञ्चिद्दूरे वर्तते । अपि च **सोमिनो** गृहं प्राणमयशरीराद्याधारभूतं अन्नमयं शरीरं कथं दूरे वर्तताम् ? ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**हिर॑ण्यपाणिमू॒तये॑ सवि॒तार॒मुप॑ ह्वये ॥ स चेत्ता॑ दे॒वता॑ प॒दम् ॥ ५,४ ॥**

हिर॑ण्यऽपाणिम् । ऊ॒तये॑ । स॒वि॒तार॑म् । उप॑ । ह्व॒ये ॥ सः॒ चेत्ता॑ । दे॒वता॑ । प॒दम् ॥ ५,४ ॥

## ऋग्भाष्यम्

**हितत्वाद्रमणीयत्वाद्धिरण्यं वर्णतोऽपि च ।**
**रूपं नारायणस्यैव पाणिशब्दोपलक्षितम् ।**
**स्रष्टृत्वात्सविता विष्णुः स ज्ञाता स्वपदादिकम् ।**
**स एव देवतामुख्या तद्गुणैक्येन देवता ॥ ५, ४ ॥**

**ऋग्भाष्यटीका– हिरण्यपाणिम्** । अतः पराश्चतस्रः सावित्र्यः । विष्णौ हिरण्यपाणिशब्दं व्याख्याति । **हितत्वादिति** ॥ जगत इति शेषः । नारायणस्य रूपमेव न तु पाणिमात्रम् । हितत्वाद्रमणीयत्वाद्धिरण्यम् । आदेशादिकमूह्यम् । वर्णतोऽपि च हिरण्यसदृशत्वाद्धिरण्यम् । अतोऽसौ हिरण्यपाणिरुच्यत इत्यर्थः । पाणिशब्दो रूपार्थः । कथमित्यत आह । **पाणीति** ॥ सवितृशब्दव्याख्यानं स्मारयति । **स्रष्टृत्वादिति** ॥ सपदं चेत्तेति व्याख्याति । **स ज्ञातेति** ॥ पदं स्वरूपम् । एकवाक्यत्वे सदेवतेत्यनुपपन्नं स्यादित्यतो वाक्यभेदेन व्याख्याति । **स एवेति** ॥ अत्र देवताशब्दो देवपर्यायो गृहीतः । यद्वा । अयं भावे तल् देवस्य भावो देवता । देवशब्द-

प्रवृत्तिनिमित्तम् । कथं तर्हि सदेवतेति व्यपदेश इत्यत आह । **तद्गुणैक्येनेति** ।। स एवेत्यनुवर्तते । तस्य परमेश्वरस्य गुणानां च क्रीडादीनामैक्येन कारणेन देवता देवत्वं स एवेति युक्तमित्यर्थः । अहं **हिरण्यपाणिं** हितं च रमणीयं चेति वा हिरण्यवर्णत्वाद्वा हिरण्यं पाणिशब्दं रूपं यस्य तम् । **सवितारमूतये** रक्षाद्यर्थमुपह्वये । कुतः स सवितापदं स्वरूपं स्वस्यान्यस्य च **चेत्ता** ज्ञाता । 'चिती संज्ञाने' तृन् । **स** एव **देवता** देवः । अन्ये तु देवाभासाः । यद्वा देवता देवशब्दप्रवृत्तिनिमित्तं गुणजातम् । स एव तदभिन्नमेव ।। ५,४ ।।

**मन्त्रार्थमञ्जरी– 'हिरण्य'** इत्यादि चतस्रः सावित्र्यः । (अहम्) हिरण्यपाणिम्, हितं च रमणीयं चेति वा हिरण्यवर्णत्वाद्वा हिरण्यं लक्षणया पाणिशब्दोक्तं सर्वावयवोपेतं रूपं यस्य तम्, हितशब्दस्य हिरादेशो रमेः न्यक्, अनुनासिकलोपश्च निरुक्तत्वात् । सवितारम्, जगत्प्रसवितृत्वहेतुना सवितृशब्दोक्तम्, षूङ् प्राणिप्रसवे, इत्यतस्तृच्, तृन्वा । ऊतये, रक्षार्थम् । उप ह्वये, आह्वयामि । कुतः ? सः, सविता । पदम्, स्वरूपम्, स्वस्यान्यस्य च । चेत्ता, ज्ञाता, 'चिती संज्ञाने' तृन् । (सः) (एव) देवता, देवः, अन्ये तु– देवताभासाः, अत्र देवता-शब्दो देवपर्यायो ग्राह्यः, यद्वा भावे तल्प्रत्ययः, देवस्य भावो देवता, देवशब्दप्रवृत्तिनिमित्तं क्रीडादिगुणजातम् (सः) (एव), तदभिन्नमेव, गुणगुण्यभेदस्य 'ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ' (३।२।२८) इति भक्तिपादीयाधिकरणे सिद्धत्वात् । प्रसिद्धसवितरि यथायोगं शब्दार्थो ज्ञेयः ।। ५ ।।

**स्कन्द–** 'हिरण्यपाणिम् सावित्री तिस्रश्चाप्यत उत्तरा' । हिरण्यपाणिमितीयं पराश्च तिस्र सावित्र्यः । हिरण्मयौ पाणी यस्य स हिरण्यपाणिः । अथ शाङ्खायना इतिहासब्राह्मणमधीयते– 'अथ यत्र ह तद्देवा यज्ञमतन्वत सवित्रे प्राशिन परिजह्रुस्तत्तस्य पाणी प्रचिच्छेद । तस्मै हिरण्मयौ प्रतिदधुस्तस्माद्धिरण्यपाणिः' (शात्रा ६,१३) इति । **हिरण्यपाणिम् ऊतये** तर्पणाय **सवितारम् उप ह्वये** । किं कारणम् । उच्यते । यस्मात् **स चेत्ता** 'चिती सञ्ज्ञाने' । सम्यक् ज्ञाता । नान्य कश्चित् । **देवता** षष्ठ्यर्थे प्रथमैषा । देवतानां पदम् स्थानम् । अथवा स चेत्ता स एव देवता स एव पदं स्थानमाश्रयो यष्टृणामिति ।। ५ ।।

**वेङ्कटमाधव–** प्राशिनः सवितु पाणी प्रचिच्छेद तस्मै देवा हिरण्यमयौ पाणी प्रत्यदधु'

इति शाङ्खायनब्राह्मणम् । **सवितारम् ऊतये उप ह्वये । सः देवता** प्रकाशं कुर्वन् **पदम्** प्रातरेव चेतयति पदनिधानयोग्यदेशं प्रकाशयति ।। ५ ।।

**मुद्गल–** **ऊतये** अस्मद्रक्षणार्थम् **सवितारम्** देवम् **उप ह्वये** आह्वयामि । सः च सविता देवः एतन्मन्त्रप्रतिपाद्यदेवता भूत्वा **पदम्** यजमानेन प्राप्यं स्थानम् **चेत्ता** ज्ञापयिता भवति । कीदृशं सवितारम् । **हिरण्यपाणिम्** यजमानाय दातुं हस्ते सुवर्णधारिणम् ।। ५ ।।

**सायण–** **ऊतये** अस्मद्रक्षणार्थं **सवितारं** देवम् **उप ह्वये** आह्वयामि । **सः** च सविता देवः एतन्मन्त्रप्रतिपाद्यदेवता भूत्वा **पदं** यजमानेन प्राप्यं स्थानं **चेत्ता** ज्ञापयिता भवति । कीदृशं सवितारम् । **हिरण्यपाणिं** यजमानाय दातुं हस्ते सुवर्णधारिणम् ।

यद्वा । देवकर्तृके यागे सविता स्वयमृत्विग्भूत्वा ब्रह्मत्वेन अवस्थितः । तदानीं कस्यांचिदिष्टौ अध्वर्यवः तस्मै सवित्रे ब्रह्मणे प्राशित्रनामकं पुरोडाशभागं दत्तवन्तः । तच्च प्राशित्रं हस्ते सवित्रा गृहीतं सत् तदीयपाणिं चिच्छेद । ततः प्राशित्रस्य दातारोऽध्वर्यवः सुवर्णमयं पाणिं निर्माय प्रक्षिप्तवन्तः । सोऽयमर्थः कौषीतकिबाह्मणे समाम्नातः- 'सवित्रे प्राशित्रं प्रतिजहुस्तत्तस्य पाणी प्रचिच्छेद तस्मै हिरण्मयौ प्रतिदधुस्तस्माद्धिरण्यपाणिरिति स्तुतः' इति । हिरण्यशब्दं पाणिशब्दं च यास्क एवं निर्वक्ति- 'हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हितरमणं भवतीति वा हृदयरमणं भवतीति वा हर्यतेर्वा स्यात्प्रेप्साकर्मणः' (निरु.२-१०) इति । तथा 'पाणिः पणायतेः पूजाकर्मणः' (नि.२-२६) इति ।

हिरण्यशब्दो नब्विषयवादाद्युदात्तः । बहुव्रीही पूर्वपदप्रकृतिस्वरः । ऊतये । 'उदात्तः' इत्यनुवृत्तौ 'अतियूतिजूतिसाति' इत्यादिना क्तिनन्तः अन्तोदात्तो निपातितः । सवितारम् । तृचश्चित्त्वादन्तोदात्तत्वम् । चेत्ता । 'चिती संज्ञाने' । अस्मादन्तर्भावितण्यर्थात्ताच्छील्ये तृन् । 'अनित्यमागमशासनम्' इति इडभावः । नित्वादाद्युदात्तः । देवता । 'देवात्तल्' (पा.सू.५-४-२७) इति स्वार्थे तल् । 'लिति' इति प्रत्ययात्पूर्वमुदात्तत्वम् । पदशब्दः पचाद्यजन्तः । 'चितः' इत्यन्तोदात्तः ।। ५,४ ।।

**सिद्धाञ्जनम्–** हिरण्यपाणिं हिरण्मयहस्तम् **सवितारं** प्रसवितारं सूर्यं **ऊतये** वृद्धये **उपह्वये** आह्वयामि । सः **चेत्ता** ज्ञाता भवति, चेतयिता वा अन्तर्भावितण्यर्थः । सः **देवता** सर्वदेवमयः

पुरुषः, सर्ववेदप्रतिपादिता देवता भवति । सः **पदम्** प्राप्तव्यं स्थानं भवति । सविता हिरण्मयः पुरुषः, स एव ज्ञाता, स एव देवता, स एव प्राप्तव्यं पदमिति च प्रतिपादितम् । पाणिपादहस्तकरादयो रश्मिवाचका बोध्याः । तस्य सवितुरुत्तमस्य पुरुषस्य सर्वदेवदेवस्य सर्वथा हिरण्मयत्वं साक्षात्कारक्षममित्यार्षं दर्शनं चिरन्तनः सिद्धान्तश्च ।। ५, ४ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये चतुर्थो वर्गः ।।

## ।। अथ पञ्चमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अपां नपा॑तमव॑से सवि॒तार॒मुप॑स्तुहि । तस्य॑ व्र॒तान्यु॑श्मसि ।। ६ ।।**

अ॒पाम् । नपा॑तम् । अव॑से । स॒वि॒तार॑म् । उप॑ । स्तु॒हि ।। तस्य॑ । व्र॒तानि॑ । उ॒श्म॒सि ।। ६ ।।

## ऋग्भाष्यम्

**व्यक्तत्वात्पार्थिवे देहे सोपां नप्ता जनार्दनः ।। ६ ।।**

**ऋग्भाष्यटीका– अपां नपातम्** । परमेश्वरे अपांनपाच्छब्दं घटयति । **व्यक्तत्वादिति** ।। नपाच्छब्दः पौत्रपर्यायः । अद्भ्यः पृथिवीति श्रुतेः पृथिवी तावदपां पुत्री । तदात्मकत्वाद्देहोऽपि । तत्र च पार्थिवदेहे व्यक्तत्वाज्जनार्दनः पृथिवीपुत्र इत्येवमपांनपादित्यर्थः । सोऽजत्वेन प्रसिद्धः । अत एव हि जनार्दनः । एवं सविताप्यपां कार्येऽण्डे जातत्वादपांनपात् । हे होतः! **अपांनपातं** सवितारम् **अवसे** रक्षार्थं **उपस्तुहि** । कुतः । **तस्य** सवितुः **व्रतानि** कर्माणि **उश्मसि** सर्वे वयं कामयामहे ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (हे) होतः । **अपां नपातम्,** अद्भ्यो जातपृथिव्यात्मकदेहे हरेर्व्यक्ततयाऽपां पौत्रत्वेनाऽपां नपातम् । सवितारम्, हरिम् । अपां कार्ये ब्रह्माण्डे रवेर्जाततयापां पौत्रत्वेनापां नपातं सूर्यं च । अवसे, रक्षार्थम् । उप स्तुहि । कुतः ? तस्य, सवितुः, हरे रवेश्च । व्रतानि, कर्माणि । उश्मसि, सर्वे वयं कामयामहे, 'वश कान्तौ' 'ग्रहिज्या' इति सम्प्रसारणम् ।।६।।

**स्कन्द–** नपाच्छब्दोऽपत्यनाम । इह सामर्थ्यात् पुत्रे वर्तते । न पौत्रे । **अपां** पुत्रम् इत्यर्थः । कुत एतत् । सवितुर्ह्युदयो जन्म । तत् साक्षादद्भ्यः । 'अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति' (ऐ.ब्रा.४-२०) इति श्रुतेः । अथवा अद्भ्यो वैद्युताग्निः जायते अग्नेः सविता । 'अग्नेर्वा आदित्यो जायते' इति श्रुतेः । अथवा 'आपो वा इदमग्र आसन्' इति श्रुतेः अद्भ्यः प्रजापतिरजायत । प्रजापतेः सविता । तेनायमपां पौत्र एव । तम् **अपाम् नपातम्** पौत्रम् **अवसे** तर्पणाय पालनाय वा सवितारम् **उप स्तुहि** आत्मन एवायमन्तरात्मनः प्रैषः । किं कारणम् । **तस्य व्रतानि** कर्माणि यागाख्यानि **उश्मसि** सर्वे वयं कामयामहे । कर्तुम् इति वाक्यशेषः । यस्मात् तं यष्टुमिच्छाम इत्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** योऽद्भ्यः प्रातरेवोदेति तम् **सवितारम् उप स्तुहि** । **तस्य** कर्माणि श्रोतुं कामयामहे ।। ६ ।।

**मुद्गल–** अत्र होता सामगम् ऋत्विजं ब्रूते । **अवसे** अस्मान् रक्षितुम् **सवितारम् उप स्तुहि** । **तस्य** सवितुः सम्बन्धीनि **व्रतानि** कर्माणि सोमयागादिरूपाणि **उश्मसि** कामयामहे । कीदृशं सवितारम् । **अपाम् नपातम्** जलस्य न पालकम् । सन्तापेन शोषकमित्यर्थः ।।६।।

**सायण–** अत्र होता सामगमृत्विजम् अन्यं वा शस्त्रिणं ब्रूते । **अवसे** अस्मान् रक्षितुं **सवितारम् उप स्तुहि** । **तस्य** सवितुः संबन्धीनि **व्रतानि** कर्माणि सोमयागादिरूपाणि **उश्मसि** कामयामहे । कीदृशं सवितारम् । **अपां नपातं** जलस्य न पालकम् । संतापेन शोषकमित्यर्थः ।

अपाम् । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । नपातम् । 'पा रक्षणे' । अस्य शत्रन्तः पाच्छब्दः । तस्य नञा समासे 'नभ्राण्नपात्' इत्यादिना नलोपप्रतिषेध इति वृत्तिकारः । अग्निर्ह्यपो न पाति तच्छोषकत्वात् । तर्हि कथम् अपाम् इति षष्ठी 'न लोकाव्ययनिष्ठाखलर्थ' (पा.सू.२-३-६९) इति कर्मणि षष्ठ्याः प्रतिषेधात् इति चेत्, तर्ह्येषा शेषलक्षणास्तु । अग्न्यादित्यौ अपां कारणतया संबन्धिनौ 'अग्नेरापः' (तै.आ.८-२) इति श्रुतेः । 'आदित्या-ज्जायते वृष्टिः' (मनु.३-७६) इति स्मृतेश्च । अस्मिन्पक्षे 'उगिदचाम्' इति नुमभावोऽपि निपातनादेवेति मन्तव्यम् । पातेः क्विबन्तस्य तुग्वा निपातनात् द्रष्टव्यः । अथवा न पातयति इति नपात् । 'पत्लृ गतौ' इति धातोर्ण्यन्तात्क्विप् । अग्न्यादित्यौ ह्यपां न प्रापकौ प्रत्युत तच्छोषकौ । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अवसे । 'तुमर्थे सेसेन्' इत्यादिना असेन् ।

नित्वादाद्युदात्तः । उश्मसि । 'वश कान्तौ' । 'अदिप्रभृतिभ्यः' इति शपो लुक् । 'इदन्तो मसि' इति इकारोपजनः ।। ६ ।।

**सिद्धाञ्जनम्–** 'आपो वा इदमग्र आसन्' इत्यादौ विश्वसृष्टेः प्रागवस्था द्रुतगतिसम्पन्न-विश्वमूलसामग्रीति विवक्षा ग्राह्या । वस्तुतो जन्मरहितस्य सवितुः अपां अपत्यत्वं विश्व-सृष्ट्यपेक्षया प्रोक्तम् । मनुष्ये यजमाने अप्छब्दसङ्केतितानां सर्जनसामग्रीभूततेजोबलादीनां अपत्यं यथा अग्निर्भवति, तथा सविता च अनन्तरापत्यं वा जायते । 'नपात्' अपत्यनाम, पौत्रेऽपि वर्तते । एवं ब्रह्माण्डे पिण्डाण्डे च अपां नपात् सावेता प्रोक्तः । सूर्यस्य जन्म प्रातः समुद्रादुदयः, तस्मादपां नपात् सविता इति स्थूला दृष्टिः । **अपां नपातं सवितारं** देवं **अवसे** स्ववर्धनाय **उपस्तुहि** उपेत्य स्तुत्या भजस्व । अन्तरात्मनः प्रैषः । **तस्य** सवितुः **व्रतानि** कर्माणि (नित्यसिद्धानि) **उश्मसि** उश्मः कामयामहे ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**विभक्तारं हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसम् ।। ७ ।।**

विऽभक्तारम् । हवामहे । वसोः । चित्रस्य । राधसः । सवितारम् । नृऽचक्षसम् ।। ७ ।।

## ऋग्भाष्यम्

**सदा विभज्य दातारं वसोरुत्तमराधसः ।**
**अशेषपुण्यपापादिविशेषैश्चितिदर्शकम् ।**
**आह्वयामः....................।। ७ ।।**

**ऋग्भाष्यटीका– विभक्तारम्** । सदा । वयं **चित्रस्य राधसः** उत्तमराधसः उत्तमसिद्धि-रूपस्य । **वसोः** वसुनः । **विभक्तारं** सदा विभज्यदातारम् । यस्य यावद्योग्यं तस्मै तावतो दातारम् । **नृचक्षसं** नृणां जीवानां द्रष्टारम् । अशेषपुण्यपापादिविशेषैर्धर्मैः सह चितिदर्शकं जीवचैतन्यसाक्षिणं **सवितारं हवामहे** आह्वयामः ।। ७ ।।

**मन्त्रार्थमञ्जरी– (वयम्)** चित्रस्य राधसः, उत्तमसिद्धिरूपस्य वसोः, वसुनः । विभक्तारम्, सदा विभज्य दातारम्, यस्य यावद्योग्यं तस्मै तावतो दातारम् । नृचक्षसम्, नृणां जीवानां द्रष्टारम्, अशेषपुण्यपापादिविशेषैः सह जीवचैतन्यसाक्षिणम्, चक्षिङः असुन् । सवितारम् । हवामहे, आह्वयामः ।। ७ ।।

**स्कन्द–** यस्मै यावद् योग्यं तस्मै तावतः प्रदातारं तं विभक्तारम् हवामहे । **वसोः चित्रस्य राधस** 'राघ साध समिद्धौ' । सर्वार्थसिद्धिकरस्य । **सवितारम् नृचक्षसम्** मनुष्यान् द्रष्टारम् मनुष्याणां शुभाशुभानां कर्मणां प्रत्यवेक्षितारमित्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** (वसोः) वासयितुं पूज्यस्य धनस्य दातारम् **हवामहे** । **सवितारम्** मनुष्याणां द्रष्टारम् ।। ७ ।।

**मुद्गल– वसोः** निवासहेतोः **चित्रस्य** सुवर्णरजतादिरूपेण बहुविधस्य **राधसः** धनस्य **विभक्तारम्** अस्य यजमानस्य एतावद्धनदानमुचितमिति विभागकारिणम् **नृचक्षसम्** मनुष्याणां प्रकाशकारिणम् । **सवितारम् हवामहे** ।। ७ ।।

**सायण– वसोः** निवासहेतोः **चित्रस्य** सुवर्णरजतादिरूपेण बहुविधस्य **राधसः** धनस्य **विभक्तारम्** अस्य यजमानस्य एतावद्धनदानम् उचितमिति विभागकारिणं **नृचक्षसं** मनुष्याणां प्रकाशकारिणं **सवितारं हवामहे** ।

कौशीतकिन एतस्या ऋचो व्याख्यानरूपे ब्राह्मणे सवितुर्विभागहेतुत्वमेव समामनन्ति- 'यदेतद्वसोश्चित्रं राधस्तदेष सविता विभक्ताभ्यः प्रजाभ्यो विभजति' इति । विभक्तारम् । तृचश्चित्वादन्तोदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते । हवामहे । ह्वयतेः 'बहुलं छन्दसि' इति सम्प्रसारगम् ।

वसोः । 'वस निवासे' । 'शृस्वृस्निहि' (उ.सू.१-१०) इत्यादिना उः । 'नित्' इत्यनुवृत्तेः नित्वादाद्युदात्तः । राधसः । अमुनन्तः नित्वादाद्युदात्तः । नृचक्षसम् । 'नृन् चष्टे' इति नृचक्षाः तं नृचक्षसम् । 'चक्षेर्बहुलं शिच्च' (उ.सू.४-६७२) इति असुन् । शित्वात् अनार्धधातुकत्वेन ख्याञादेशाभावः । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। ७ ।।

**सिद्धाञ्जनम्– चित्रस्य** बहुविधस्य **राधसः** सर्वसिद्धिनिधानस्य (राध साध संसिद्धौ) **वसोः** धनस्य (स्वर्लोकवासहेतुभूतद्रव्यस्य) **विभक्तारं** विभज्य दातारं **सवितारं** स्रष्टारं देवदेवं **हवामहे** आह्वयामः । कीदृशम् ? **नृचक्षसं** नराणां द्रष्टारं नृन् चष्टे इति नृचक्षाः तम्, चक्षेर्बहुलमिति असुन् । यद्यपि वसु राध इति उभयमपि धनवाचि तथाऽपि विशेषोऽवधेयः । 'चित्रं राधः' 'विभु प्रभु' इत्यत्र प्रागुक्तम् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**सखा॑य॒ आ नि षी॑दत सवि॒ता स्तो॒म्यो॒ नु नः॑ । दाता॒ राधां॑सि शुम्भति ॥ ८ ॥**

सखा॑यः । आ । नि । सी॒द॒त॒ । स॒वि॒ता । स्तो॒म्यः॑ । नु । नः॒ । दाता॑ । राधां॑सि । शु॒म्भ॒ति॒ ॥

## ऋग्भाष्यम्

**............सराधांसि शोभयत्यंजसा हरिः ॥ ८,९ ॥**

**ऋग्भाष्यटीका– सखायः** । अत्र राधांसि शुंभतीत्येतद्व्याख्याति । **सराधांसीति** ॥ हे **सखायः!** ऋत्विजः । **आ** अस्मत्समीपमागत्य **निषीदत** किमिति । **नु** इदानीं **नो**ऽस्माकं **दाता** अभिलषितस्य । **सविता स्तोम्यः** स्तोमार्हः स्तोतव्यः । यः स सविता हरिः **राधांसि** सिद्धीः । **शुम्भति** अंजसा शोभयति । स्वराधांसीति क्वचित्पाठः । तत्र स्वेन दत्तानि राधांसीति व्याख्येयम् । सेश्वरा हि सिद्धयः शोभावत्यो भवन्ति ॥ ८ ॥

**मन्त्रार्थमञ्जरी– (हे) सखायः,** ऋत्विजः । आ, अस्मत्समीपमागत्य । नि सी (षी)दत ॥ कुतः ? नु, इदानीम् । नः, अस्माकम् । दाता, अभीष्टस्य दाता । सविता । स्तोम्यः, स्तोतव्यः ॥ (यः) सविता । राधांसि, सिद्धीः । शुम्भति, अञ्जसा शोभयति, 'शुभ, शुम्भ शोभार्थे' इत्युक्तेः ॥ ८ ॥

**स्कन्द–** हे **सखाय!** अध्वर्यव । **आ नि सीदत** आ इत्यर्वागर्थे । अर्वाक् मत्समीपे दानार्थं निषीदत । किं कारणम् । यस्मात् **सविता स्तोम्य** स्तोमार्हं स्तोतव्यः । **नु** क्षिप्रम् **न** अस्माकम् । किं कारणम् । यस्माद् **दाता सविता राधांसि शुम्भति** । दानार्थोऽयं सामर्थ्यात् । किं हि दाता राधसामन्यत् कुर्यात् अन्यतो दानात् । ददाति स्तोतृभ्य इत्यर्थः । अथवा दाता यजमानः । **राधांसि** सोमलक्षणानि घनानि । शुम्भतिस्तु शोभनार्थ एव । सामर्थ्यात्त्वन्तर्णीत-ण्यर्थः । लट् च भूते काले । यस्माद् यजमानः सोमानभिषवादिभिः संस्कारै शोभितवान् संस्कृतवानित्यर्थः ॥ ८ ॥

**वेङ्कटमाधव–** प्रस्तोतृप्रभृतयः आगत्य उपविशत । सविता अस्माकं स्तोतव्यः क्षिप्रम् । अन्नानाम् दाता यजमान एव स्तुतिभिरलङ्करोति हविर्भिर्वेति ॥ ८ ॥

**मुद्गल–** हे **सखाय!** सखिभूता ऋत्विज **आ नि सीदत** सर्वत उपविशत । **न** अस्माकम् **सविता** तु क्षिप्रम् **स्तोम्यः** स्तुतियोग्यः । **राधांसि** धनानि **दाता** प्रदातुम् उद्युक्त एष **सविता शुम्भति** शोभते ॥ ८ ॥

**सायण–** सखिभूता हे ऋत्विजः! **आ नि षीदत** सर्वत्रोपविशत । **नः** अस्माकम् अयं **सविता नु** क्षिप्रं **स्तोम्यः** स्तुतियोग्यः । **राधांसि** धनानि **दाता** प्रदातुमुद्युक्तः एष **सविता शुम्भति** शोभते ।

समानाः सन्तः ख्यान्तिं प्रकाशन्ते इति सखायः । 'ख्या प्रकथने' । 'समाने ख्यश्चोदात्तः' (उ.सू.४-५७६) इति इण्प्रत्ययः; तत्संनियोगेन डित्वं यलोपश्च । डित्वात् आकारलोपः । 'समानस्य च्छन्दसि' (पा.सू.६-३-८४) इत्यादिना समानशब्दस्य सादेशः । इण्संनियोगे-नोदात्तत्वम् । जसि 'साख्युरसंबुद्धौ' (पा.सू.७-१-९२) इति णित्वात् वृद्धिः आयादेशश्च । नि षीदत । 'सदिरप्रतेः' (पा.सू.८-३-६६) इति षत्वम् । स्तोमेषु प्रतिपाद्यत्वेन भवः स्तोम्यः । 'भवे छन्दसि' (पा.सू.४-४-११०) इति यत् । 'यतोऽनावः' (पा.सू.६-१-२१३) इत्याद्युदात्तत्वम् दाता दानशीलः । ताच्छील्ये तृन् । नित्वादाद्युदात्तः । राधांसि । गतम् । 'कर्तृकर्मणोः कृति' (पा.सू.२-३-६५) इति प्राप्तायाः षष्ट्याः 'न लोकाव्यय' (पा.सू.२-३-६९) इति प्रतिषेधः ॥ ८ ॥

**सिद्धाञ्जनम्–** हे **सखायः,** समानेऽन्तर्यजने प्रवृत्तान् सुहृदः प्रति सम्बोधनम् । **आ** अर्वाक् **नि षीदत** उपविशत, स्तुत्यं देवं उपासीना भवत । **सविता** देवः **नः** अस्माकं **नु** क्षिप्रम् **स्तोम्यः** स्तोममर्हति, स्तुत्यः । सः **दाता** दिव्यवासहेतुभूतस्य 'वसोः' सर्वसिद्धिकरस्य 'राधसः' च प्रदाता राधांसि उक्तस्वरूपाणि धनानि **शुम्भति** दीपयति, प्रकाशयति, लभ्यत्वेन नः प्रदर्शयतीति यावत् । शुम्भतिर्दीप्तौ शोभायां च अन्तर्भावितण्यर्थः । शुम्भति ददातीति प्राहुरेके व्याख्यातारः ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**अग्ने पत्नीरिहा वह देवानामुशतीरुप । त्वष्टारं सोमपीतये ॥ ९ ॥**

अग्ने । पत्नीः । इह । आ । वह । देवानाम् । उशतीः । उप । त्वष्टारम् । सोमऽपीतये ॥ ९ ॥

**ऋग्भाष्यटीका– अग्नेपत्नीः** । आग्नेय्यौ द्वे इति केचित् । तदनुपपन्नमिव भाति । अग्नेरत्र प्रैषगोचरत्वात् । तस्य चानैकान्तिकत्वात् । अन्यथातिप्रसङ्गात् । तस्मादावोढुरग्नेरेवात्र प्राधान्यमित्यनुपपन्नम् । विशेषप्रमाणे सति त्वाग्नेयत्वं न निवार्यते । अतो यथाप्रतीत्येवातः परं देवताः । हे **अग्ने! उशतीः** कामयमानाः । यज्ञागमनमिति शेषः । **देवानां** पत्नीस्त्वष्टारश्च **सोमपीतये** इहोपावह ॥ ९ ॥

**मन्त्रार्थमञ्जरी–** यथा प्रतीता अत्र देवता ज्ञेयाः । (तत्र) (नवम्यां दशम्यां चाग्निर्देवता ।) **(हे) अग्ने ।** उशतीः, यज्ञागमनं कामयमानाः । देवानाम् पत्नीः, देवानां पातृत्वात् 'पत्नी' इत्युक्ता हरेः स्त्रीतनूः, 'पत्युर्नो यज्ञसंयोगे' इति तु नाश्रितम्, देवपत्नीश्च । प्रागुक्तनिरुक्त्या त्वष्टारम्, हरिं प्रसिद्धत्वष्टारं च । सोमपीतये । इह उप आ वह, यज्ञे संनिहितान्कुर्वित्यर्थः ॥ ९ ॥

**स्कन्द–** 'एकाऽग्ने' (बृद.३-९२) । एका ऋगाग्नेयी । हे **अग्ने । पत्नी इह** कर्मणि **उप आ वह** । कस्य पत्नी । **देवानाम्** । **उशतीः** कामयमाना सामर्थ्याद् देवान् वा यजमानं वा । **त्वष्टारम्** च । किमर्थम् । **सोमपीतये** । आवोढुरग्नेरेवात्र प्राधान्यं न देवपत्नीनां त्वष्टुश्च । तस्माद् आग्नेयत्वम् ॥ ९ ॥

**वेङ्कटमाधव– अग्ने!** देवपत्नी इह **उप आ वह** कामयमाना । **त्वष्टारम्** च सोमपानार्थम् ॥ ९ ॥

**मुद्गल–** हे **अग्ने! उशतीः** कामयमाना देवानाम् **पत्नी** इन्द्राण्याद्या **इह** देवयजते देशे **आ वह** । तथा **त्वष्टारम्** देवम् **सोमपीतये** सोमपानार्थम् **उप** समीपे आ वह ॥ ९ ॥

**सायण–** अग्निष्टोमे प्रातःसवने 'अग्ने पत्नीरिहा वह' इति नेष्टुः प्रस्थितयाज्या । 'प्रशास्ता ब्राह्मणाच्छंसी' इति खण्डे सूत्रितम्– 'अग्ने पत्नीरिहा वहोक्षान्नाय वशान्नाय' (आश्व.श्रौ.५-५) इति । हे **अग्ने! उशतीः** कामयमानाः **देवानां पत्नीः** इन्द्राण्याद्याः **इह** देवयजनदेशे **आ वह** । तथा **त्वष्टारं** देवं **सोमपीतये** सोमपानार्थम् **उप** समीपे आ वह ।

पत्नीः । ङत्यन्तः पतिशब्द आद्युदात्तः । 'पत्युर्नो यज्ञसंयोगे' (पा.सू.४-१-३३) इति ङीप्; तत्संनियोगेन नकारश्च । ङीपः पित्वात् ङतिस्वर एव । उशतीः । 'वश कान्तौ' ।

लटः शतृ । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । शतुर्ङित्वात् ग्रहिज्यादिना संप्रसारणम् । 'उगितश्च' इति ङीप् । 'शतुरनुमः' इति ङीप् उदात्तः ॥ ९ ॥

**सिद्धाञ्जनम्–** आग्नेय्यो द्वे ऋचौ भवतः । हे **अग्ने, देवानाम्** इन्द्रादीनां **पत्नीः** इन्द्राण्याद्याः इह अस्मिन् यजने **उप** समीपे **आ वह** । कीदृशीः? **उशतीः** कामयमानाः यजमानस्य यजनमिति शेषः (वश कान्तौ कर्तरि ङीप्)। तथा **त्वष्टारम्** देवशिल्पिनं उपावह इति सम्बन्धः । किमर्थम्? **सोमपीतये** सोमपानाय । स्त्रीदेवतां अधिकृत्य प्रागुक्तम् ; पत्युर्देवस्य कारयितुः कर्मणः कर्त्री पत्नी निर्वाहिनी ॥ ९ ॥

## ऋक्संहिता पदपाठसहिता

**आ ग्ना अ॑ग्न इ॒हाव॑से होत्रां॑ यविष्ठ॒भार॑तीम् । वरू॑त्रीं धि॒षणां॑ वह ॥ १०,५ ॥**

आ । ग्नाः । अ॒ग्ने । इ॒ह । अव॑से । होत्रा॑म् । य॒वि॒ष्ठ॒ । भार॑तीम् ॥ वरू॑त्रीम् । धि॒षणा॑म् । व॒ह ॥

## ऋग्भाष्यम्

**नदीश्च भारतीं चैव होत्रामाहुतिरूपतः ।**
**वरूत्रीं वरणीयत्वात्त्राणाद्बुद्धिस्वरूपिणीम् ।**
**विष्णुश्च प्राणसम्बन्धाद्भारतीत्येव चोदितः ।**
**प्राणस्तु भरतो भारततत्त्वाद्भर्तृरूपतः ।**
**होत्रा हुतत्वतो विष्णुः श्रीर्वाऽपि धिषणा मता ॥ १०, ५ ॥**

**ऋग्भाष्यटीका–** आग्नाः । नदीश्च । हे **यविष्ठ!** युवन् । **अग्ने** । **ग्नाः** नदीश्च आहुतिरूपतः आह्वानमन्त्राभिमानित्वतो **होत्रां** हुदानादनयोः अस्मात्करणे त्रप्रत्ययः । वरणीयत्वात्त्राणाच्च जगतो वरूत्री । वृणोतेः कर्मण्यूकारः । त्रायतेः कर्तरि टः । ततः कर्मधारयः । **धिषणां** बुद्धिस्वरूपिणीं बुद्ध्यभिमानिनीं **भारतीं** च **अवसे**ऽस्मद्रक्षणाय **इहावह** । ग्नाशब्दो विष्णौ पूर्वं निरुक्तः । भारतीशब्दं तत्र निर्वक्ति । **विष्णुश्चेति** ॥ द्वितीयेन चशब्देन देवानां पालकत्वाद्देवानां पत्नीति चोदित इति समुच्चिनोति । यज्ञसंयोग इति तु नाश्रितम् । प्राणसम्बन्धाद्भारतीति कथं लभ्यत इत्यत आह । **प्राणस्त्विति** ॥ भरो भारस्तेन ततत्वात् । तेनोतेर्डः । निरवधिकगौरवादित्यर्थः । भर्तृरूपतः जगत इति शेषः । 'डु भृञ् भरणे' अस्मादतच् । भरतस्येयं स्वामिनी भारती ।

विष्णोरभिमानित्वाभावात्कथं तत्र होत्राशब्द इत्यत आह । **होत्रेति** ।। अस्मिन्पक्षे कर्मणि त्रप्रत्यय इत्यर्थः । ह्वयतेर्वोभयत्र त्रप्रत्ययः । एवं धिषणाशब्दोऽपि बुद्धिप्रेरकत्वेन योज्यः । पूर्वं धिषणाशब्दो भारतीविशेषणत्वेनैव व्याख्यातः । इदानीं भिन्नविषयतां च दर्शयति । **श्रीर्वेति** ।। १०, ५ ।।

**मन्त्रार्थमञ्जरी–** (हे) **यविष्ठ,** युवन् । अग्ने । ग्राः, 'अभि यज्ञं गृणीहि' इत्यत्रोक्तनिरुक्त्या भवदीयस्त्रीतनूर्नदीश्च । होत्राम्, आहूयमानत्वादाह्वानमन्त्राभिमानित्वाद्वा 'होत्रा' इत्युक्ताम्, 'ह्वेञ् शब्दे' इत्यतः कर्मणि करणे च त्रपत्ययः, सम्प्रसारणं च बहुलग्रहणात् । वरूत्रीम्, वरणीयत्वाज्जगतस्त्राणाच्च 'वरूत्री' इत्युक्ताम्, वृणोतेः कर्मण्यूकारस्त्रायतेः टप्रत्ययष्टित्वान्ङीप् च, वरूश्चासौ त्री च वरूत्री, ताम् । धिषणाम्, बुद्धिस्वरूपिणीम्, सर्वबुद्धिप्रेरिकां सर्वबुध्यभिमानिनीं च । भारतीम्, भरतस्य वायोः स्वामित्वसम्बन्धात्स्त्रीत्वसम्बन्धाद्वा भारतीं विष्णोः स्त्रीतनुं भारतीदेवीं च । 'धिषणाम्' इत्यस्योक्तनिमित्ताभ्यां 'श्रीदेवीम्' इति वार्थः । अवसे, अस्मद्रक्षणाय । इह, यज्ञे । आ वह । भरेण भारेण तत्वात्ततत्वात्, अतिगुरुत्वादिति यावत्, भरतो वायुर्ज्ञेयः, तनोतेः कर्मणि डः ।। १० ।।

**स्कन्द–** 'द्वे तु देवीनाम्' (बृ.दे.३-९२) । द्वे एते ऋचौ देवीनाम् । आ इत्युपसर्गोऽन्त्येन वह इत्यतेन सम्बन्धयितव्यः । 'ग्राः' (निघ.१-११) इति स्त्रीनाम । हे **अग्ने!** स्त्रिय **आ वह** । **इह** कर्मणि **अवसे** पालनाय तर्पणाय वा । कतमाम् । **होत्राम्** हूयतेऽसाविति होत्राऽग्नेर्दीप्तिः पत्नी वा ताम् । हे **यविष्ठ!** युवतम । **भारतीम्** भरत आदित्य तस्य भाः पत्नी वा भारती तां च । **वरूत्रीम् धिषणाम्** 'धिषणा' (निघ.१-११) इति वाङ्नाम । वरणीयां च वाचम् आ वह ।। १० ।।

**वेङ्कटमाधव–** आ वह इह **अग्ने!** देवपत्नी रक्षणाय **होत्राम्** । युवतम । आदित्यस्य पत्नीं वरणीयां सरस्वतीं च ।। १० ।।

**मुद्गल–** हे **अग्ने! अवसे** अस्मानवितुम् ग्राः देवपत्नी **इह आ वह** । तथा हे **यविष्ठ** । युवतमाग्ने । **होत्राम्** होमनिष्पादिकाम् अग्निपत्नीम् **भारतीम्** भरतनामकस्यादित्यस्य पत्नीम् **वरूत्रीम्** वरणीयाम् **धिषणाम्** वाग्देवीं च **आ वह** ।। १० ।।

**सायण–** हे **अग्ने! अवसे** अस्मानवितुं **ग्नाः** देवपत्नीः **इह आ वह** । तथा हे **यविष्ठ** युवतमाग्ने । **होत्रां** होमनिष्पादकाग्निपत्नीं **भारतीं** भरतनामकस्य आदित्यस्य पत्नीं **वरूत्रीं** वरणीयां **धिषणां** वाग्देवीं च **आ वह** ।

'वाग्वै धिषणा' इति वाजसनेयकम् । 'भरत आदित्यः' (निरु.८-१३) इति यास्केन उक्तत्वात् तस्य पत्नी भारती इत्युच्यते । गम्यन्त इति ग्नाः । 'गम्लृ गतौ' । औणादिको डप्रत्ययः । डित्वात् टिलोपः । प्रत्ययस्वरः । होत्राम् । 'हुयामाश्रुभसिभ्यस्त्रन्' (उ.सू.४-६०७) इति अनन्तो नित्वादाद्युदात्तः । अतिशयेन युवा यविष्ठः । 'अतिशायने तमविष्ठनौ' (पा.सू.५-३-५५)। 'स्थूलदूर' (पा.सू.६-४-१५६) इत्यादिना यणादिपरस्य लोपः पूर्वस्य च गुणः । भारतीम् । शार्ङ्गरवादेः अवृत्कृतत्वात् ङीनन्तो नित्त्वादाद्युदात्तः । वरूत्रीम् । 'ग्रसितस्कभित' (पा.सू.७-२-३४) इत्यादौ यद्यपि वरूतृशब्दः तृजन्त इत्युक्तं तथापि अन्ते इतिकरणस्य प्रदर्शनार्थत्वात् वरूतृशब्दः तृनन्तोऽपि द्रष्टव्यः । तेन नित्वादाद्युदात्तत्वम् । शेषनिपातेन ऋकारस्य अनुदात्तत्वात् 'उदात्तयणो हल्पूर्वात्' इत्यपि न ङीप उदात्तत्वम् । धिषणाम् । क्युप्रत्ययानुवृत्तौ 'धृषेर्धिष च संज्ञायाम्' (उ.सू.२-२४०) इति क्युः ॥१०,५॥

**सिद्धाञ्जनम्–** हे **अग्ने! अवसे** वृद्धये अस्मदभिवर्धनाय **ग्नाः** देवपत्नीः **इह** यज्ञेऽस्मिन् **आ वह** । हे **यविष्ठ** युवतम, आवहनसमर्थ, होत्रां वाचं, आह्वात्रीं शक्तिं आ वह । तथा **भारतीं** भरतस्यादित्यस्य भां, ऋतस्य बृहतो ज्योतिषः बृहत्त्वभास्वरत्वसम्पन्नां सत्यप्रभां **आ वह** । **वरूत्रीं** वरयित्रीं सर्वमावृत्य लसन्तीं **धिषणां** प्रजामयीं भारतीं आवहेति सम्बन्धः । अत्र भारतीमधिकृत्य आप्रीसूक्ते अन्यत्र च प्राक्प्रपञ्चितम् । सा बृहज्योतिषः ऋतभा, दृष्टिश्रुत्योः इळासरस्वत्योः प्रतिष्ठा भवति । अत्र 'होत्रा वरूत्री धिषणा' इति तस्याः प्रभावस्वरूपबोधिनीनां शक्तीनां भारतीसामानाधिकरण्यं प्रतिपादितम् । समुच्चयवाचकस्याश्रवणं एवं अन्वयग्रहणस्य प्रोद्बलकं उपपादकं च भवति । सायणस्तु होत्रा होमनिष्पादिका अग्निपत्नी, भारती आदित्यपत्नी, वरूत्री धिषणा सरस्वती चेति मन्यते ॥ १०,५ ॥

॥ इति प्रथमाष्टके द्वितीयाध्याये पञ्चमो वर्गः ॥

## ।। अथ षष्ठो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अभि नो देवीरवसा महः शर्मणा नृपत्नीः । अच्छिन्नपत्राः सचन्ताम् ।। ११ ।।**

अभि । नः । देवीः । अवसा । महः । शर्मणा । नृऽपत्नीः । अच्छिन्नऽपत्राः । सचन्ताम् ।।११।।

## ऋग्भाष्यम्

**शर्म दत्त्वैव महतो विष्णो रक्षंतु नोऽभितः ।**
**प्राणेनैवावसा साकं यस्मादविधवाः सदा ।**
**अतो ह्यच्छिन्नपत्रास्ताः सदायुक्कर्णभूषणाः ।। ११,१२ ।।**

**ऋग्भाष्यटीका– अभिनः** । शर्म दत्वा । **नृपत्नीः** नरो देवाः प्रधानपुरुषत्वात् । तेषां पत्न्यः नृणां पालयित्र्यो वा । **देवीः** देव्योऽ**वसा** वनकर्त्रा प्राणेन साकमेव । **महो** महतः सर्वोत्तमस्य विष्णोः । **शर्मणा** तत्सम्बन्धिमोक्षादिरूपं शर्म दत्वैव । **नो**ऽस्मान् **अभि** अभितः । **सचन्तां** रक्षन्तु । **अच्छिन्नपत्रा** इति देवीनां विशेषणं व्याख्याति । **यस्मादिति** ।। अवैधव्येन कथमच्छिन्नपत्रत्वं लभ्यत इत्यत आह । **सदेति** ।। पत्रशब्देन हि ताटंकमुच्यते । ततश्चाच्छिन्न-पत्रा इति सदा कर्णभूषणयोगो लभ्यते । स चाविधवानामेव सम्भवतीत्यतो युक्तमुक्तमिति

।। ११ ।।

**मन्त्रार्थमञ्जरी–** (एकादश्या देव्यो देवताः) **अच्छिन्नपत्राः**, निरन्तरोपेतताटङ्काख्यकर्णा-भरणाः, अवैधव्यहेतुनित्यसौमङ्गल्योपेताः । नृपत्नीः, नृपत्न्यः, नरो देवाः प्रधानपुरुषत्वात्, तेषां पत्न्यः, नृणां पालयितृत्वात्स्त्रीत्वाद्वा विष्णोः स्त्रीतनवस्तद्धार्याश्च । देवीः, देव्यः । अवसा, रक्षणकर्त्रा प्राणेन साकम् । महः, महतः सर्वोत्तमस्य हरेः । शर्मणा, तत्सम्बन्धिमोक्षादि सुखं दत्त्वेति यावत् । नः, अस्मान् । अभि, अभितः । सचन्ताम्, रक्षन्तु, 'षच रक्षणे' ।।११।।

**स्कन्द–** अभीत्युपसर्गोऽन्त्येन सचन्तामित्याख्यातेन सम्बन्धयितव्यः । **न** अस्मान् **देवी** होत्रा भारती धिषणा देव्यः **अवसा** पालनेन तर्पणेन वा **मह** तृतीयार्थे षष्ठ्येषा । महता **शर्मणा**

गृहेण सुखेन वा । **नृपत्नीः** नरो देवता तदाकारत्वात् तेषां पत्नी । होत्राग्नेः पत्नी, भारत्यादित्यस्य पत्नी, वाग् यज्ञस्य पत्नी । अथवा मनुष्याणां पालयिन्यो नृपत्नीः । **अच्छिन्नपत्राः** छिन्नं श्रान्तम् । पतत्यनेनेति पत्रं वाहनम् । अश्रान्तवाहनाः **अभि सचन्ताम्** अभिसेवन्ताम् । अवश्च महच्छर्म चास्माकं कुर्वन्तु इत्यर्थः । 'सचन्यृच्छति' (निघ.२-१४) इति गतिकर्मसु पाठात् सचतिरत्र गत्यर्थः । **अवसा** महता च **शर्मणा** अभिगच्छन्त्वस्मान् । अवो महच्छर्मास्मानभिगच्छत्वित्यर्थः ।। ११ ।।

**वेङ्कटमाधव– अभि सचन्ताम्** अस्मान् देव्यः रक्षणेन महता च सुखेन सह देवानां पत्न्यः **अच्छिन्नपत्राः** ।। ११ ।।

**मुद्गल– देवीः** देव्यः देवपत्न्यः **अवसा** रक्षणेन **महः** महता **शर्मणा** सुखेन च सह **नः** अस्मान् **अभि सचन्ताम्** आभिमुख्येन सेवन्ताम् । कीदृश्यो देव्यः । **नृपत्नीः** मनुष्याणां पालयिन्यः **अच्छिन्नपत्राः** अच्छिन्नपक्षाः । न हि पक्षिरूपाणां देवपत्नीनां पक्षाः केनचित् छिद्यन्ते ।। ११ ।।

**सायण– देवीः** देव्यः देवपत्न्यः **अवसा** रक्षणेन **महः** महता **शर्मणा** च सुखेन च सह **नः** अस्मान् **अभि सचन्ताम्** आभिमुख्येन सेवन्ताम् । कीदृश्यो देव्यः । **नृपत्नीः** मनुष्याणां पालयित्र्यः **अच्छिन्नपत्राः** अच्छिन्नपक्षाः । न हि पक्षिरूपाणां देवपत्नीनां पक्षाः केनचित् छिद्यन्ते ।

देवीः । 'पुंयोगादाख्यायाम्' (पा.सू.४-१-४८) इति ङीषन्तः प्रत्ययस्वरेणान्तोदात्तः । 'दीर्घाज्जसि च' (पा.सू.६-१-१०५) इति प्रतिषेधस्य 'वा छन्दसि' (पा.सू.६-१-१०६) इति पाक्षिकस्योक्तेः पूर्वसवर्णदीर्घत्वम् । अवसा । 'अव रक्षणे' । असुन् । नित्त्वादाद्युदात्तः । महः । 'मह पूजायाम्' । क्विप् । 'सुपां सुपो भवन्ति' (पा.सू.७-१-३९) इति तृतीयैकवचनस्य ङसादेशः । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । नृपत्नीः । समासान्तोदात्तत्वे प्राप्ते 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । अच्छिन्नपत्राः । न च्छिन्नानि अच्छिन्नानि । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अच्छिन्नानि पत्राणि यासां ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। ११ ।।

**सिद्धाञ्जनम्–** **देवीः** देव्यः अस्यां प्रतिपाद्यमाना देवपत्न्यः **ग्नाः** इत्यर्थः, **नः** अस्मान् **अवसा** वर्धनेन **महः** महता (मह पूजायां, क्विप्, तृतीयैकवचनस्य ङसादेशः) **शर्मणा** सुखेन च **अभि सचन्तां** आभिमुख्येन सेवन्ताम् । कीदृश्यः ? **नृपत्नीः** नराणां देवानां पत्न्यः शक्तयः । **अच्छिन्नपत्राः** अच्छिन्नानि पत्राणि यासां ताः, विहायसा गमनसाधनानां पत्राणां आसां पक्षाणां छेदो नास्ति । अश्रान्तवाहना इति स्कं० । 'अवः' महत् शर्म च नोऽनुगृह्णन्त्विति भावः ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**इहेन्द्राणीमुप॑ ह्वये वरुणानीं स्वस्तये॑ । अ॒ग्नायीं॒ सोम॑पीतये ।। १२ ।।**

इ॒ह । इ॒न्द्रा॒णीम् । उप॑ । ह्व॒ये॒ । व॒रु॒णा॒नीम् । स्व॒स्तये॑ । अ॒ग्नायीम् । सोम॑ऽपीतये ।। १२ ।।

**ऋग्भाष्यटीका–** **इहेन्द्राणीम्** । अहं **इन्द्राणीम्** इन्द्रस्य पत्नीम् । **वरुणानीं** वरुणस्य पत्नीम् । **अग्नायीम्** अग्नेः पत्नीं च । **सोमपीतये स्वस्तये** सोमं पीत्वास्मभ्यं सन्ततसौख्यं दातुमिति यावत् **इहोपह्वये** ।। १२ ।।

**मन्त्रार्थमञ्जरी–** (द्वादश्यामिन्द्राणीवरुणान्यग्नाय्यो देवताः) (अहम्) **इन्द्राणीम्,** इन्द्रपत्नीम् । वरुणानीम्, वरुणस्य पत्नीम् । अग्नायीम्, अग्नेः पत्नीम् (च) सोमपीतये, सोमपानाय । स्वस्तये, सोमं पीत्वास्मभ्यं सन्ततं सौख्यं दातुमिति यावत् । इह उप ह्वये । ईश्वरपक्षे तु स्वामित्वेनेन्द्रादि-सम्बन्धिनीमिति वा पालकतयेन्द्रादिपत्नीत्वेन वेन्द्राण्यादिशब्दैरीश्वरस्त्रीतनवो ग्राह्याः ।। 'पुंयोगा-दाख्यायाम्' इति ङीषि 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' इत्यानुगागमे 'इन्द्राणी' इत्यादिरूपम् । 'वृषाकप्यग्निकुसितकुसीदानामुदात्तः' इत्यग्निशब्दस्यै आदेशे 'अग्नायी' इति च ध्येयम् ।। १२ ।।

**स्कन्द–** 'द्वादश्याम् तिस्र ईरिताः । इन्द्राणी वरुणानी चाग्नायी ताश्च पृथक् स्तुताः' (बृ.दे.३-९२) । सूक्तस्य द्वादश्यामस्यामृचि तिस्रः स्त्रियो देवताः । कतमाः । इन्द्राणी वरुणानी चाग्नायी च । ताश्च पृथक् स्तुताः न सह । इह कर्मणि **इन्द्राणीम्** इन्द्रस्य पत्नीम् **उप ह्वये** । **वरुणानीम्** वरुणस्य पत्नीम् । किमर्थम् । **स्वस्तये** अविनाशायात्मनः । **अग्नायीम्** अग्नेश्च पत्नीम् । न च स्वस्तये एव केवलायै । किन्तर्हि । **सोमपीतये** च । अस्मान् रक्षिष्यन्ति सोमं पास्यन्ति इत्येवमर्थमित्यर्थः ।। १२ ।।

**वेङ्कटमाधव–** उत्तरा निगदसिद्धेति ।। १२ ।।

**मुद्गल–** इह अस्मिन् कर्मणि **स्वस्तये** अस्मकम् अविनाशाय **सोमपीतये** सोमपानाय च **इन्द्राणीम् वरुणानीम् अग्नायीम्** इन्द्रवरुणाग्नीनां पत्नीः **उप ह्वये** आह्वयामि ।। १२ ।।

**सायण–** इह अस्मिन्कर्मणि **स्वस्तये** अस्माकमविनाशाय **सोमपीतये** सोमपानाय च इन्द्रवरुणाग्नीनां पत्नीः आह्वयामि ।

इन्द्राणीम् । वरुणानीम् । 'इन्द्रवरुण' (पा.सू.४-१-४९) इत्यादिना पुंयोगे ङीष्प्रत्ययः आनुगागमश्च । प्रत्ययस्वरः । अग्नायीम् । 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' (पा.सू.४-१-३७) इति ङीप्; तत्संनियोगेन इकारस्य ऐकार उदात्तः । सोमपीतये । असकृत् पूर्वोक्तम् ।।

**सिद्धाञ्जनम्–** **इह** अस्मिन् यज्ञे स्वस्तये क्षेमाय **इन्द्राणीं** इन्द्रपत्नीं **वरुणानीं** वरुणपत्नीं **अग्नायीं** अग्निपत्नीं **उप ह्वये** आह्वयामि । किमर्थम् ? **सोमपीतये** सोमपानाय । आसां सोमपानेन स्वस्ति भवत्येव यजमानस्य, ततः स्वस्तय इत्युक्तम् ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ।। १३ ।।**

मही । द्यौः । पृथिवी । च । नः । इमम् । यज्ञम् । मिमिक्षताम् । पिपृताम् ।। नः । भरीमऽभिः ।।

## ऋग्भाष्यम्

**भरणैर्नः पारयेतां दुःखेभ्यः श्रीश्च भूश्च ते ।**
**स्वयं वा भगवानन्ये रोदसी लोकदेवते ।। १३ ।।**

**ऋग्भाष्यटीका– महीद्यौः** । भरणैर्नः । **मही** महती **द्यौः पृथिवी** च **नो**ऽस्मदीयं **इमं यज्ञं मिमिक्षतां** स्पृशताम् आगच्छताम् । आगत्य च **भरीमभिः** । भावे इमन् । भरणैर्नोऽस्मान् । **पिपृताम्** पारयेताम् । दुःखेभ्य इति शेषः । अत्र के द्यावापृथिव्यावित्यत आह । **श्रीश्चेति** ।। ते द्यावापृथिव्यौ । अन्ये श्रीभूमिभ्याम् । भगवतश्च लोकदेवते लोकाभिमानिन्यौ । रोदसी च द्यावापृथिव्यौ ।। १३ ।।

**मन्त्रार्थमञ्जरी–** (त्रयोदशीचतुर्दश्योर्द्यावापृथिव्यौ देवते) **मही,** महती । द्यौः पृथिवी च, विष्णोः स्त्री रूपे वा, श्रीभूमी वा, द्युपृथिवीलोकाभिमानिन्यौ वा । नः, अस्मदीयम् । इमम् यज्ञम् । मिमिक्षताम्, स्पृशताम्, आगच्छताम् । आगत्य च भरीमभिः, भृञः भाव इमनिच्प्रत्ययो गुणश्च, भरणैः । नः, अस्मान् । पिपृताम्, पारयेताम् (दुःखेभ्यः) इति शेषः, 'पृ पालनपूरणयोः', लोट्, अन्तर्णीतणिच् ।। १३ ।।

**स्कन्द–** 'द्यावापृथिव्यौ द्वे ऋचौ' (बृदे.३-९३) । द्वे एते ऋचौ द्यावापृथिवीदेवते । **मही द्यौः पृथिवी च नः इमम् यज्ञं मिमिक्षताम्** । म्यक्षतेर्गतिकर्मण एतद्रूपम् । गच्छताम् । गत्वा च **पिपृताम्** । 'पृ पालनपूरणयोः' इत्यस्यैतत् छान्दसं ह्रस्वत्वम् । पूरयतां तर्पयतामित्यर्थः । **नः** अस्मान् **भरीमभिः** भरणसमर्थैरन्नैः रसैश्च ।। १३ ।।

**वेङ्कटमाधव–** महत्यौ द्यावापृथिव्यौ अस्माकम् **इमम् यज्ञम्** आगच्छताम् । पालयेतां च अस्मान् भरणैः ।। १३ ।।

**मुद्गल– मही** महती **द्यौः** द्युलोकदेवता **पृथिवी** भूमिदेवता च **नः** अस्मदीयम् **इमम् यज्ञम् मिमिक्षताम्** स्वकीयसारभूतेन रसेन मिमिक्षताम् सेक्तुमिच्छताम् । तथा **भरीमभिः** भरणैः पोषणैः **नः** अस्मान् **पिपृताम्** उभे देव्यौ पूरयताम् ।। १३ ।।

**सायण–** द्वितीये छन्दोमे वैश्वदेवशस्त्रे 'मही द्यौः पृथिवी च नः' इति द्यावापृथिव्य-निविद्धानीयस्तृचः । द्वितीयस्याग्निं वः' इति खण्डे सत्रितं– 'मही द्यौः पृथिवी च नो युवाना पितरा पुनः' (आश्व.श्रौ.८-१०) इति । आग्रयणेष्टौ 'मही द्यौः' इत्येषा द्यावापृथिव्यैककपालस्य अनुवाक्या । 'आग्रयणं व्रीहिश्यामाक' इति खण्डे सूत्रितं- 'ये के च ज्मा महिनो अहिमाया मही द्यौः पृथिवी च नः' (आश्व.श्रौ.२-९) इति । अग्निमन्थनेऽप्येषा विनियुक्ता । 'प्रातर्वैश्वदेव्याम्' इति खण्डे सूत्रितम्– 'अभि त्वा देव सवितर्मही द्यौः पृथिवी च नः' (आश्व.श्रौ.२-१६) इति । विप्यन्दमानं(?) सांनाय्यमनयैव आहवनीयदेशे निनयेत् । 'विध्यपराधे' इति खण्डे तथैव सूत्रितम्– 'विष्यन्दमानं(?) मही द्यौः पृथिवी च न इत्यन्तः-परिधिदेशे निनयेयुः' (आश्व.श्रौ.३-१०) इति । आश्विनशस्त्रेऽप्येषा 'संस्थितेष्वाश्विनाय' इति खण्डे सूत्रितं– 'मही द्यौः पृथिवी च नस्ते हि द्यावापृथिवी विश्वशंभुवा' (आश्व.श्रौ.६-५) इति ।

**मही** महती **द्यौः** द्युलोकदेवता **पृथिवी** भूमिदेवता **च** **नः** अस्मदीयम् **इमं** **यज्ञं** **मिमिक्षतां** स्वकीयसारभूतेन रसेन मिमिक्षतां सेतुमिच्छताम् । तथा **भरीमभिः** भरणैः पोषणैः **नः** अस्मान् **पिपृताम्** उभे देव्यौ पूरयताम् ।

मही । महच्छब्दात् 'उगितश्च' (पा.सू.४-१-६) इति ङीप् । अच्छब्दलोपश्छान्दसः । 'बृहन्महतोरुपसंख्यानम्' (पा.सू.६-१-१७३) इति ङीप उदात्तत्वम् । द्यौः । दिवशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । 'गोतो णित्' (पा.सू.७-१-९०) इति ततः परस्य सोः णिद्भावात् भवन्ती वृद्धिरपि स्थानिवद्भावेनोदात्ता । पृथिवी । 'प्रथ प्रख्याने' । 'प्रथेः षिवन्संप्रसारणं च' (उ.सू.१-१४८) इति षिवन्प्रत्ययः । 'षिद्गौरादिभ्यश्च' (पा.सू.४-१-४१) इति ङीप् । प्रत्ययस्वरः । मिमिक्षताम् । 'मिह सेचने' । सनि द्विर्भावहलादिशेषौ । ढत्वकत्वषत्वानि । पिपृताम् । 'पृ पालनपूरणयोः' । ह्रस्व इत्येके । शपः श्लुः । 'अर्तिपिपर्त्योश्च' (पा.सू.७-४-७७) इति अभ्यासस्य अकारस्य इकारः । तिङः प्रत्ययस्वरः । भरीमभिः । 'डुभृञ् धारणपोषणयोः'। 'हुसृभृधृस्वृसृभ्य ईमन्' (दश.पा.६) इति ईमन् । नित्त्वादाद्युदात्तः ।। १३ ।।

**सिद्धाञ्जनम्–** अस्या उत्तरस्याश्च द्यावापृथिव्यौ देवते । **मही** महती (अत्-शब्दलोपश्छान्दसः, महच्छब्दात् ङीप्) **द्यौः** द्युलोकदेवता **पृथिवी** **च** भूदेवी च **नः** अस्माकं **इमं** **यज्ञं** **मिमिक्षतां** सेक्तुमिच्छतामित्यर्थः, (मिहेः सेचनार्थस्य सनि रूपम्) **भरीमभिः** भरणैः पोषणैः (बिभर्तेः इमन्) **नः** अस्मान् **पिपृताम्** पूरयताम् । (पृ धातोः पूरणार्थस्य लोटि रूपम्, अभ्यासस्याकारस्य इकारः छान्दसः)। उभे द्यौः पृथिवी च स्वसारभूतेन रसेनास्मान् सुखार्द्रान् रसभरितान् कुरुताम्, स्वीयैर्भरणसामर्थ्यैः पूरयतां च ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**तयोरिद्धृतवत्पयो विप्रा रिहन्ति धीतिभिः ।। गन्धर्वस्य ध्रुवे पदे ।। १४ ।।**
तयोः । इत् । घृतऽवत् । पयः । विप्राः । रिहन्ति । धीतिऽभिः ।। गन्धर्वस्य । ध्रुवे । पदे ।।१४।।

## ऋग्भाष्यम्

**तयोः पयस्तु विज्ञानं घृतवत्सापरोक्षकम् ।**
**यल्लोकदेवताऽपि स्याद्भारती ज्ञानदेवता ।**

**विष्णोर्नित्यपदस्थं यज्ज्ञानं यद्धृतवत्पयः ।**
**लिहंति विप्रास्तज्ज्ञानं बुद्धिभिस्तत्प्रसादतः ।**
**गां धारयन्वर्तते यद्गंधर्वस्तेन केशवः ।। १४ ।।**

**ऋग्भाष्यटीका– तयोरित्** । तयोः पय इत्येतद्व्याख्याति । **तयोरिति** ।। द्यावापृथिव्योः । पीयते मुमुक्षुभिः सेव्यत इति पयो विज्ञानम् घृतवदित्येतद्व्याख्याति । **घृतवदिति** ।। घृक्षरणदीप्त्योः भावेद्धचक्तः । घृतं दीप्तिरपरोक्षज्ञानम् । तेन सहितं घृतवदित्यर्थः । परोक्षापरोक्षज्ञाने कथं तयोः सम्बन्धिनी इत्यत आह । **यदिति** ।। यद्यस्माद्भारत्यपि लोकदेवता द्यावापृथिव्योर्देवता स्यात् सैव च ज्ञानदेवता स्यात् तस्मात्तयोरिति युक्तमिति । इदानीमृचं व्याचष्टे । **विष्णोरिति** ।। यत् **पयो** ज्ञानं **गन्धर्वस्य** विष्णोः **ध्रुवे पदे** नित्यपदस्थं नित्यस्वरूपविषयं यच्चोक्तप्रकारेण **घृतवत्** तज्ज्ञानं **विप्रा** मेधाविनो **धीतिभिः** बुद्धिभिः । वृत्त्यपेक्षं बहुवचनम् । **रिहन्ति** लिहन्ति सेवन्ते । प्राक्तयोरित्येतत्पयसो विशेषणत्वेन व्याख्यातं तयोः प्रसादतो रिहन्तीत्यपि व्याख्येय-मित्याह । **तत्प्रसादत इति** ।। गन्धर्वशब्दं विष्णौ निर्वक्ति । **गामिति** ।। गोपदोपपदाभ्यां धृञ्अवस्थाने वृतुवर्तन इत्याभ्यां डः । उपपदस्य च गंभावः । गां वाचम् ।। १४ ।।

**मन्त्रार्थमञ्जरी– तयोः**, द्यावापृथिव्योः सम्बन्धि, यत् । पीयते मुमुक्षुभिः सेव्यत इति पयः, ज्ञानम् । गन्धर्वस्य, विष्णोः । ध्रुवे पदे, विषयसप्तमी, नित्यस्वरपविषयम् । घृतवत्, 'घृ क्षरणदीप्त्योः' भावे क्तः, घृतं दीप्तिरपरोक्षज्ञानम्, तदस्यास्तीति घृतवदपरोक्षज्ञानसहितम्, तज्ज्ञानम् । विप्राः, मेधाविनः । धीतिभिः, बुद्धिभिः, वृत्त्यपेक्षं बहुवचनम् । 'तयोः' इत्येतदत्रा-प्यन्वेति (तयोः) तयोः प्रसादेन । रिहन्ति इत्, (रलयोरभेदात्) लिहन्ति, सेवन्ते, 'लिह आस्वादने' अत्र गां वाचं धारयन्वर्तत इति व्युत्पत्त्या गन्धर्वो विष्णुर्ज्ञेयः, गोशब्दोपपदाभ्यां 'धृङ् अवस्थाने' 'वृतु वर्तने' इत्याभ्यां डः, उपपदस्य गम्भावः । ज्ञानस्य द्यावाभूमिसम्बन्धित्वं च– तदभिमानिभारतीदेव्यभिमन्यमानत्वादिति ज्ञेयम् । 'पा पाने' इत्यतोऽयसुक्प्रत्यय आकारलोपे च 'पयस्' इति रूपम् ।। १४ ।।

**स्कन्द– तयोः** द्यावापृथिव्योः स्वभूतं **घृतवत्** घृ क्षरणदीप्त्योः । क्षरणं घृतं तद्वत् । **पयः** उदकं **विप्राः** सर्वत्र विविधं प्राप्ताः मेघाविनो वा आदित्यरश्मयः **रिहन्ति** आस्वादयन्ति **धीतिभिः** कर्मभिर्गमनाख्यैः । गत्वेत्यर्थः । क्व । **गन्धर्वस्य ध्रुवे पदे** सुषुम्ना नाम सूर्यरश्मिः

साऽत्र गौः उच्यते, तां धारयतीति गन्धर्वश्चन्द्रमाः । तद्वक्ष्यति– 'अत्राह गोरमन्वत' (ऋ.१-८४-९५) इति । तस्य गन्धर्वस्य ध्रुवे पदे स्थाने चन्द्रमण्डलाख्ये । या ह्येताः पूर्वपक्षे कलाख्याः चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति । सोमोत्पत्त्याम् 'प्रथमा पिबते वह्निः' इत्याद्युक्तत्वात् । तदेतदिहोच्यते । अन्यथा वा योजना । तयोरुपस्तरणाभिघारणघृतेन तद्धविर्लक्षणं पयः त एव मेधाविन ऋत्विजः स्तुवन्ति स्तुतिकर्मभिः । 'रिह स्तुतौ' सप्तम्यर्थे वा तृतीया । धीतिषु यागकर्मसु । क्व । गन्धर्वस्य ध्रुवे पदे । यज्ञो गन्धर्वः गोर्वाचो धारयितृत्वात् तस्य ध्रुवं पदं वेदिस्तत्र ।। १४ ।।

**वेङ्कटमाधव– तयोः** एव क्षरणवत् **पयः** सारं मेधाविनः **लिहन्ति** कर्मभिः आदित्यस्य **ध्रुवे** स्थानेऽवस्थितम् ।। १४ ।।

**मुद्गल– ध्रुवे पदे** ध्रुवं पदम् अन्तरिक्षम् । तेनान्तरिक्षेणोपलक्षिते आकाशे वर्तमानयोः तयोः इत् द्यावापृथिव्योरेव **सम्बन्धि पयः** जलम् **घृतवत्** घृतसदृशम् **विप्राः** मेधाविनः प्राणिनः **धीतिभिः** कर्मभिः **रिहन्ति** लिहन्ति ।। १४ ।।

**सायण– गन्धर्वस्य** ध्रुवं पदम् अन्तरिक्षम् । तथा च तापनीयशाखायां समाम्नायते- 'यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षम्' (नृ.ता.१-२) इति । तेनान्तरिक्षेण उपलक्षिते आकाशे वर्तमानयोः **तयोरित्** द्यावापृथिव्योरेव सम्बन्धि **पयः** जलं **घृतवत्** घृतसदृशं **विप्राः** मेधाविनः प्राणिनः **धीतिभिः** कर्मभिः **रिहन्ति** लिहन्ति । यद्वा । घृतवत् घृतं सारं तेनोपेतं रिहन्ति । लिहेर्व्यत्ययेन रेफः ।

गन्धर्वस्य । 'धृञ् धारणे' । 'गवि गन् धृञो वः' इति वप्रत्ययः; तत्संनियोगेन गोशब्दस्य च गन्नादेशः ।। १४ ।।

**सिद्धाञ्जनम्– तयोरित्** द्यावापृथिव्योरेव **घृतवत्** दीप्तिमत् **पयः** सारभूतं रसमित्यर्थः, **विप्राः** विपश्चितः **धीतिभिः** धारणसमर्थप्रज्ञावृत्तिभिः **रिहन्ति** लिहन्ति, आस्वादयन्ति (लकारस्य रेफः छान्दसः) । स्थूला जडस्थाना भौमा चित् पृथिवीशब्दसङ्केतिता भवति । सूक्ष्मतरा चेतःस्थाना दिव्या चित् द्यौरिति सङ्केतिता । उभयोः सारांशभूतो रसः अमृतमयः भास्वरो भवति 'घृतवत् पयः' । तं आस्वादयन्ति विप्राः स्वाभिर्विशिष्टप्रज्ञाभिः । तर्हि क्व तं रसं 'रिहन्ति?' **गन्धर्वस्य**

ध्रुवे स्थिरे पदे स्थाने । गन्धर्वस्य स्थानं अन्तरिक्षमिति वदन्, आकाशे वर्तते द्यौः पृथिवी च तयोरेव सम्बन्धि घृतसदृशं जलं विप्रा लिहन्तीति व्याचष्टे सायणः । यास्क एवं मन्यते 'सुषुम्नः सूर्यरश्मिः गौरुच्यते' तां धारयते यः सोमः स गन्धर्वः, आह्लादमयत्वात् स चन्द्रमा इति क्वचित् कीर्त्यते । 'अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे' (१-८४-१५) इति पुरस्ताद्वक्ष्यते । तस्मान्नेह विस्तर इष्यते । इदं त्विह बोध्यम्, यत्र ऋतरश्मिर्दीप्तः स्थिरो लसति तस्मिन् सौम्ये पदे 'विष्णोः पदे परमे मध्व उत्सः' इत्यत्र च मन्त्रवर्णोऽवधेयः (१-१५४-५) 'विप्राः घृतवत् पयो रिहन्ति' भासमानं अमृतं रसमास्वादयन्ति ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ।। १५,६ ।।**

स्योना । पृथिवि । भव । अनृक्षरा । निऽवेशनी । यच्छ । नः । शर्म । सऽप्रथः ।। १५,६ ।।

## ऋग्भाष्यम्

**स्योना सुखकरी स्यान्नो यतो नश्यसि नो नृवत् ।**
**निवेशनी साऽऽधारत्वाच्छर्म यच्छ महत्तरम् ।। १५,६ ।।**

**ऋग्भाष्यटीका– स्योना पृथिवि** । स्योना भवेत्यस्यार्थमाह । **स्योनेति** ।। स्योनाशब्दः सुखनामसु पठ्यते । स सुखमासनमितिवत्तत्कारिण्यपि वर्तते । अनृक्षरेत्यस्यार्थमाह । **यत इति** ।। ततोऽनृक्षरेति शेषः । नृवत्क्षरति मनुष्यवन्नश्यतीति नृक्षरा । न नृक्षरा अनृक्षरा । नश्यतीति वक्तव्ये नश्यसीति वचनेन यात्वमनृक्षरेति योजनां सूचयति । निवेशनीति व्याख्याति । **निवेशनीति** ।। सा पृथिवी । निविशन्तेऽस्यामित्यधिकरणे ल्युट् । उत्तरार्धं व्याख्याति । **शर्मेति** ।। हे **पृथिवि!** या त्वं **अनृक्षरा निवेशनी** च साऽस्माकं **स्योना भव** । **नो**ऽस्मभ्यं **सप्रथः** प्रथो विस्तारः सहप्रथसा वर्तत इति सप्रथः । महत्तरं **शर्म** गृहं च **यच्छ** प्रयच्छ ।। १५,६ ।।

**मन्त्रार्थमञ्जरी–** (पञ्चदश्याः पृथिवी देवता) (हे) **पृथिवि** (या त्वाम्) अनृक्षरा, नृवन्मनुष्यवत्क्षरति नश्यतीति नृक्षरा, क्षरतेः अकारप्रत्ययः, न नृक्षरानृक्षरा । निवेशनी,

निविशन्तेऽस्यां भूतानीति निवेशनी, निपूर्वाद्विशतेः अधिकरणे ल्युट्, सर्वाश्रयभूता । (च सा) नः, अस्माकम् । स्योना, सुखकरी । भव । (नः) अस्मभ्यम् । सप्रथः, प्रथसा विस्तारेण सहितं सप्रथः । शर्म, महत्तरं सुखं गृहं वा । यच्छ, प्रयच्छ ।। १५ ।।

**स्कन्द–** स्योनादिस्त्वेव पार्थिवा' (बृ.दे.३-९३) । स्योना आदिर्यस्या सा ऋक् पार्थिवी पृथिवी देवता । 'स्योनम्' (निघ.३-६) इति सुखनाम । सुखा हे **पृथिवि** । **भव अनृक्षरा** ऋक्षरं कण्टकं तद्रहिता । **निवेशनी** निवेशनयोग्या । **यच्छ** देहि च **नः शर्म** गृहं सुखं वा **सप्रथः** सर्वत पृथु ।। १५ ।।

**वेङ्कटमाधव–** सुखा **पृथिवि! भव** कण्टकवर्जिता **निवेशनी** । 'ऋक्षरं कण्टकं ऋच्छते' (या.९-३२) । **यच्छ** च अस्मभ्यम् सर्वतः पृथु गृहम् ।। १५ ।।

**मुद्गल–** हे **पृथिवि! स्योना** स्योनत्वादिगुणयुक्ता **भव** । स्योनशब्दो विस्तीर्णवाची । **अनृक्षरा** कण्टकरहिता **निवेशनी** निवेशस्थानभूता । **सप्रथः** विस्तारयुक्तम् **शर्म** शरणम् **न** अस्मभ्यम् **यच्छ** देहि ।। १५ ।।

**सायण–** 'स्योना पृथिवि' इत्येषा महानाम्नीव्रते भूमिस्पर्शने विनियुक्ता । 'एतद्विदं ब्रह्मचारिणम्' इति खण्डे सूत्रितम्– 'स्योना पृथिवि भवेति समाप्य' (आश्व.श्रौ.८-१४) इति । स्मार्ते हेमन्तप्रत्यवरोहणेऽपि एषा जप्या । 'मार्गशीर्ष्यां प्रत्यवरोहणम्' इति खण्डे सूत्रितम्– 'तस्मिन्नुपविश्य स्योना पृथिवि भवेति जपित्वा' (आश्व.गृ.२-३-६ ) इति

हे **पृथिवि** स्योनत्वादिगुणयुक्तो **भव** । स्योनशब्दो विस्तीर्णवाची । तथा च वाजसनेयब्राह्मणे स्योनशब्दोपेतं कंचिन्मन्त्रमुदाहृत्य व्याख्यातम्– 'इन्द्रस्योरुमाविश स्योनः स्योनमिति विस्तीर्णो विस्तीर्णमित्येव तदाह' इति । यद्वा । स्योनशब्दः सुखवाची (नि.३-६-१५) । तथा च यास्कवाक्यमुदाहरिष्यते । **अनृक्षरा** कण्टकरहिता निवेशनी निवेशस्थानभूता **सप्रथः** विस्तारयुक्तं **शर्म** शरणं **नः** अस्मभ्यं **यच्छ** हे पृथिवि देहि । तामेतामृचमुदाहृत्य यास्क एवं व्याचष्टे- 'सुखा नः पृथिवि भवानृक्षरा निवेशन्यृक्षरः कण्टक ऋच्छतेः कण्टकः कन्तपो वा कृन्ततेर्वा कण्टतेर्वा स्याद्गतिकर्मण उद्गततमो भवति यच्छ नः शमं शरणं सर्वतः पृथु' (निरु.९-३२) इति ।

स्योना । 'षिवु तन्तुसन्ताने'। 'सिवेष्टेर्यो च' (उ.सू.३-२८९) इति नप्रत्ययः । टेश्च यो इत्यादेशः । प्रत्ययस्वरः । स्योना पृथिवि इत्यनयोः भव इत्याख्यातेनैवान्वयो न परस्परम् । अतः असामर्थ्येनैव पराङ्गवद्भावाभावात् ओकारस्य न आमन्त्रिताद्युदात्तत्वम् । अनृक्षरा । 'ऋषी गतौ' । गच्छति अन्तः इति ऋक्षरः कण्टकः । 'तन्यृषिभ्यां क्सरन्' (उ.सू.३-३५५)। 'षढोः कः सि' (पा.सू.८-२-४१) इति कत्वम् । 'आदेशप्रत्यययोः' इति षत्वम् । नञा बहुव्रीहिः । 'तस्मानुडचि' (पा.सू.६-३-७४) इति नुडागमः । 'नमुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । निविशन्ति अस्याम् इति निवेशनी । 'करणाधिकरणयोश्च' (पा.सू.३-३-११७ ) इति ल्युट् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । यच्छ । 'दाण् दाने' । 'पाघ्रा' (पा.सू.७-३-७८) इत्यादिना यच्छादेशः । 'द्व्यचोऽतस्तिङः' इति दीर्घः । सप्रथः । 'प्रथ प्रख्याने'। असुन् । प्रथसा सह वर्तते इति 'तेन सहेति तुल्ययोगे' (पा.सू.२-२-२८) इति समासः । 'वोपसर्जनस्य' (पा.सू.६-३-८२) इति सभावः । कृत्स्वरः ।। १५ ।। ६ ।।

**सिद्धाञ्जनम्–** अस्याः पृथिवी देवता । हे **पृथिवि**, त्वं **स्योना** सुखा (स्योनं सुखनाम) **अनृक्षरा** कण्टकशून्या (ऋक्षरः कण्टकः) **निवेशनी** निवेशस्थानभूता, अस्माकं निवेशनयोग्या वा भव । शत्रुशून्यसुखवासभूर्भवेत्युक्तम् । **नः** अस्मभ्यं **सप्रथः** विस्तारभूतं (प्रय प्रख्याने, असुन्) **शर्म** शरणं **यच्छ** देहि ।। १५,६ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये षष्ठो वर्गः ।।

## ।। अथ सप्तमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्त धामभिः ।। १६ ।।**

अतः । देवाः । अवन्तु । नः । यतः । विष्णुः । विऽचक्रमे । पृथिव्याः । सप्त । धामऽभिः ।।१६।।

## ऋग्भाष्यम्

**असुरेभ्यो जगद्धृत्वा यतो विष्णुस्त्रिभिः क्रमैः ।**
**आरभ्य पृथिवीं सप्तलोकैः साकं जगत्पतिः ।**

**चक्रे सुरान्पदस्थानप्यतो देवा अवन्तु नः ।**
**विशिष्टबलचेष्टत्वाद्विष्णुरित्यभिधा हरेः ।**
**प्राणं बलं षकारं च णकारं चाह हि श्रुतिः ।। १६ ।।**

**ऋग्भाष्यटीका– अतो** देवाः । षट्वैष्णव्यः । आद्या दैवी च । अत्राद्यामृचं कथितहेतु-हेतुमद्भावं घटयन्व्याख्याति । **असुरेभ्य इति** ।। यतः कारणाद्विष्णुर्जगत्पतिः । **पृथिव्याः** पृथिवीमारभ्य । **सप्तधामभिः** सप्तलोकैः साकम् । **त्रिभिः क्रमैः** पादविक्षेपैः । इदमिति वक्ष्यमाणं जगत् । **विचक्रमे** असुरेभ्यो जहारेति यावत् । हृत्वा च सुरान् स्वस्वपदस्थानपि चक्र इति शेषः । अतः एवं विष्णुप्रसादाल्लब्धपदत्वेन समर्थत्वात् । देवाः **नो**ऽस्मान् **अवन्तु** रक्षंतु । विष्णुशब्दं भगवति निर्वक्ति । **विशिष्टेति** ।। भवतु विशब्दो विशिष्टवाची षकारणकारयोस्तु चेष्टाबलवाचित्वं कुत इत्यत आह । **प्राणमिति** ।। परमेश्वरस्य प्राणं चेष्टां षकारं षशब्देनाक्रियमाणं बलं च णकारं णशब्देनाक्रियमाणमाहेत्यर्थः । श्रुतिः णकारो बलं षकारः प्राण आत्मेत्येषा ।। १६ ।।

**मन्त्रार्थमञ्जरी–** एतदादिषड्वैष्णव्यः । आद्या दैवी च । यतः, कारणात् । विष्णुः, विशेषचेष्टाबलवान्, 'णकारो बलं षकारः प्राणः' (ऐ०उ०३।२।६) इति श्रुतेः । पृथिव्याः, ल्यब्लोपे पञ्चमी, पृथिवीमारभ्य । सप्त धामभिः, सप्तलोकैः साकम् । (त्रिभिः) (क्रमैः) पादविक्षेपैः । 'इदम्' इति वक्ष्यमाणम् आकृष्यते (इदम्) जगत् । विचक्रमे, आक्रान्तवान्, असुरेभ्यो जहारेति यावत् । हृत्वा च (सुरान्स्वस्वपदस्थाँश्चक्रे) इति शेषः । अतः, एवं विष्णु-प्रसादाल्लब्धपदत्वेन समर्थत्वात् । देवाः । नः, अस्मान् । अवन्तु, रक्षन्तु ।। १६ ।।

**स्कन्द–** 'अता देवा इत दैवी' (बृ.दे.३-९३) । अतो देवा इतीयमृक् देवदेवत्या । **अतः देवा अवन्तु नः यतः विष्णुः विचक्रमे** विक्रान्तवान् । कुतः । **पृथिव्याः** अवयवभूतेभ्यः **सप्त धामभिः** पञ्चम्यर्थ एते प्रथमातृतीये । सप्तभ्यः स्थानेभ्यो द्वीपाख्येभ्यः । सर्वत उपजायमानामापदमस्माकम् अपनयन्त्वित्यर्थः । केचित्तु पृथिव्या इति पञ्चमी व्याचक्षते । सप्तेति च तृतीयार्थे प्रथमा । यतः पृथिवीतो विचक्रमे सप्तभिः धामभिः छन्दोभिर्वायुस्कन्धैर्वा, अतः अपन्तु ।। १६ ।।

**वेङ्कटमाधव–** अस्मात् स्थानात् अस्मान् **देवाः** रक्षन्तु । ततो योऽनर्थ उत्पद्यते तस्मादवनम् । **यतः विष्णुः विचक्रमे** यत्र विक्रमम् अकृत **पृथिव्याः** सप्तभिः छन्दोभिः । पृथिवीमुपक्रम्य त्रीन् लोकान् विचक्रमे, त्रिभ्योऽपि लोकेभ्यो नास्मान् भयमुपगच्छत्विति ।।१६।।

**मुद्गल– विष्णुः** परमेश्वरः **सप्त धामभिः** गायत्र्यादिभिः छन्दोभिः साधनभूतैः **यतः पृथिव्याः** यस्मात् भूप्रदेशात् **विचक्रमे** विशेषेण क्रमं कृतवान् । **अतः** पृथिव्याः सकाशात् **देवाः** द्योतनशीलाः **नः** अस्मान् **अवन्तु** रक्षन्तु ।। १६ ।।

**सायण–** प्रातःसवने सोमातिरेके एकं शस्त्रं शंसनीयम् । अत्र 'अतो देवाः' इत्याद्याः षडृचः । 'सोमातिरेके' इति खण्डे सूत्रितम्– 'महाँ इन्द्रो य ओजसातो देवा अवन्तु न इत्यैन्द्रीभिर्वैष्णवीभिश्च' (आश्व.श्रौ.६-७) इति । अप्तोर्यामे अच्छावाकातिरिक्तोक्थेऽपि एनाः षडृचः स्तोत्रियानुरूपार्थाः । तथा च 'यस्य पशवः' इति खण्डे सूत्रितम्– 'अतो देवा अवन्तु न इति स्तोत्रियानुरूपौ' (आश्व.श्रौ.९-११) इति । दर्षपूर्णमासयोः प्रायश्चित्तहोमेऽपि आद्ये विनियुक्ते । तथैव 'वेदं पत्न्यै' इति खण्डे सूत्रितम्- 'अतो देवा अवन्तु न इति द्वाभ्यां व्याहृतिभिश्च' (आश्व.श्रौ.१-११) इति । याज्यानुवाक्ययोर्मध्ये लौकिकभाषणे 'अतो देवाः' इत्येषा जप्या । सूत्रितं हि– 'आपद्यातो देवा अवन्तु न इति जपेत्' (आश्व.श्रौ.१-५) इति ।।

**विष्णुः** परमेश्वरः **सप्त धामभिः** सप्तभिर्गायत्र्यादिभिश्छन्दोभिः साधनभूतैः **यतः पृथिव्याः** यस्माद्भूप्रदेशात् **विचक्रमे** विविधं पादक्रमणं कृतवान्, **अतः** अस्मात् पृथिवीप्रदेशात् **नः** अस्मान् **देवाः अवन्तु** । विष्णोः पृथिव्यादिलोकेषु च्छन्दोभिः साधनैर्जयं तैत्तिरिया आमनन्ति- 'विष्णुमुखा वै देवाश्छन्दोभिरिमाल्लोकाननपजय्यमभ्यजयन्' (तै.सं.५.२.१.१ ) इति । विष्णोस्त्रिविक्रमावतारे पादत्रयक्रमणस्य पृथिव्यपादानम् । पृथिवीप्रदेशाद्रक्षणं नाम भूलोके वर्तमानानां पापनिवारणम् ।

अतः । एतच्छब्दात् 'पञ्चम्यास्तसिल्' (पा.सू.५-३-७) इति तसिल् । 'एतदोऽश्' (पा.सू.५-३-५) इति अशादेशः । लित्स्वरेण अकार उदात्तः । यतः । तसिलः 'प्राग्दिशो विभक्तिः' (पा.सू.५-३-१) इति विभक्तिसंज्ञायां त्यदाद्यत्वम् । लित्स्वरः । विष्णुः । 'विषेः किच्च' (उ.सू.३-३१९) इति नुप्रत्ययः । कित्वात् न गुणः । 'नित्' इत्यनुवृत्तेः आद्युदात्तत्वम् ।

विचक्रमे । 'सुप' इति योगविभागात् विशब्दस्य समासः । समासान्तोदात्तत्वम् । यद्वृत्तयोगात् न निघातः । सप्त । 'सुपां सुलुक्' इति भिसो लुक् । धामभिः । दधातेः' आतो मनिन्' (पा.सू.३-२-७४) इति मनिन् । नित्स्वरः ।। १६ ।।

**सिद्धाञ्जनम्–** सर्वोत्तम आदित्यो विष्णुः परमेश्वरः प्रस्तुतः । अतः (एतच्छब्दात्तसिल्) एतस्मात्, तस्मादित्यर्थं ग्राह्यम्, यत्तदोर्नित्यसम्बन्धात् यत इत्युत्तरत्र श्रवणाच्च । **देवाः** इन्द्रादयः **नः** अस्मान् **अवन्तु** वर्धयन्तु । **यतः** यस्मात् **विष्णुः** (व्यापनार्थाद्विषेर्नुक्) व्यापको देवः **पृथिव्याः** (सम्बन्धे षष्ठी) पृथिवीसम्बन्धिभिः **सप्त** सप्तभिः (विभक्तिव्यत्ययः) **धामभिः** स्थानैः द्वारा **विचक्रमे** विशेषेण पदविन्यासं कृतवान्, विक्रान्तवानित्यर्थः । यस्मात्तेजोनिधेः (स्थानात्) विष्णुः पार्थिवानि सप्त धामानि वितत्य क्रान्तवान् तदेव स्थानं तदेकमूलानां देवानामपि । व्यापारभेदात्पृथग्व्यक्तास्ते स्वानुग्राह्यां अभिवृद्धिं नः प्रयच्छन्त्विति प्रार्थना ।। १६ ।।

## ऋक्संहिता पदपाठसहिता

**इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे ।। १७ ।।**

इदम् । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदम् । सम्ऽऊळ्हम् । अस्य । पांसुरे ।। १७ ।।

## ऋग्भाष्यम्

**रमंति पांसवो यत्र पांसुरं पदमीरितम् ।**
**समूढं तत्र विश्वं हि पांसुवज्जगतः पतेः ।। १७ ।।**

**ऋग्भाष्यटीका–** **इदं विष्णुर्विचक्रमे** । पूर्वोर्धर्चः पूर्वेणैव व्याख्यातः । द्वितीयं व्याख्याति । **रमन्तीति** ।। रमन्ति शोभन्ते । यद्वा पांसुशब्देन तदाश्रिता देवाः विवक्षिताः । समूढमित्यनेन समूह्ळमित्येतद्वहतेरूपमित्युक्तं भवति । प्रापितमित्यर्थः । अत्रापीदमिति सम्बध्यत इत्यतो विश्वमित्युक्तम् । पद इत्यनुक्त्वा पांसुर इत्युक्तस्य तात्पर्यमाह । **पांसुवदिति** ।। **विष्णुः** भगवान् **इदं** विश्वं **विचक्रमे** विक्रान्तवान् । कथम् । **त्रेधा पदं निदधे** तदाऽस्य जगतः पतेः । पांसुरे पदे । इदं विश्वं समूह्ळं प्रतिष्ठितमिति यावत् ।। १७ ।।

**मन्त्रार्थमञ्जरी–** **विष्णुः**, भगवान् । इदम्, विश्वम् । वि चक्रमे, विक्रान्तवान् । कथम् ?

त्रेधा पदं नि दधे । तदा अस्य, जगत्पतेः । पांसुरे, पांसवो रेणवः पांस्वभिमानिदेवा वा रमन्तेऽत्रेति पांसुरः पादस्तस्मिन्, रमेः अधिकरणे डः । (इदम्) विश्वम् । समूळ्हम्, समूढम्, पांसुवत्प्रतिष्ठितमिति यावत् ।। १७ ।।

**स्कन्द–** 'सूक्तशेषस्तु वैष्णवः' (बृ.दे.३-९३) । सूक्तशेषा पञ्चर्चः, ता विष्णुदेवताः । विष्णुश्च भगवान् वासुदेवः । इदम् इति सर्वस्य प्रतिनिर्देशः । सर्वम् इदं **विष्णुः** बलिबन्धनकाले **वि चक्रमे** विकान्तवान् । केन प्रकारेण । **त्रेधा** स्थानभेदेन त्रिप्रकारं निहितवान् । **पदम्** आत्मीयम् । त्रिषु स्थानेषु पदं कृतवान् इत्यर्थः । पृथिव्यामन्तरिक्षे दिवीत्येके । समारोहणे विष्णुपदे गयशिरसीत्यन्ये । तच्च त्रिविधमपि **समूळ्हम्** 'वह प्रापणे' इत्येतस्यैतद्रूपम् । सम्यक् दृढं प्रापितम् । सम्यक् प्रतिष्ठापितमित्यर्थः । **अस्य** स्वभूतम् । कथम् । **पांसुरे** पांसवो यस्मिन् सन्ति स पासुरः । रो मत्वर्थीयः । लुप्तोपमं चेदं द्रष्टव्यम् । पांसुर इव । यथा पांसुमति देशे प्रतिष्ठापितमित्यर्थः । अस्य स्वभूतं वा भवेत् तद्वदित्यर्थः । अथवा पांसुशब्दः पृथिवीमाह समारोहणं वा तद्वत् । पदं विष्णोः तत् समूढम् । विष्णुरादित्यो वा इदं सर्वमहरहर्विचक्रमे । त्रेधा उदयगिरौ नभोमध्ये चास्तगिरौ च त्रिविधं सम्यक् प्रतिष्ठापितमस्य पदं पांसुरूपदेशे इति । केचित्तु संपूर्वस्य मुहे रूपमिति समूढं छन्नं न दृश्यते इत्यर्थः । अथवा त्रेधा निदधे पदम् अग्न्यात्मना पृथिव्यां वैद्युतात्मनान्तरिक्षे आदित्यात्मना दिवि । एकमेवेदं ज्योतिस्त्रेधा विभक्तमिति एतत् वक्ष्यति– 'तम् अकृण्वन् त्रेधा भुवे कम्' (ऋ १०-८८-१०) इति । तत्र यदन्तरिक्षे वैद्युतात्मकमस्य पदं तत् समूळ्हं छन्नं न दृश्यत इत्यर्थः ।। १७ ।।

**वेङ्कटमाधव– इदम्** त्रैलोक्यम् विष्णुः **वि चक्रमे** । विक्रममाणश्च **त्रेधा** निहितवान् **पदम्** । तत्र यास्कः– 'पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः' (या.१२-१९) इति । सङ्गतम् अस्य पांसुले पदे त्रैलोक्यम् ।। १७ ।।

**मुद्गल–** यदा **विष्णुः** परमेश्वरः **वि चक्रमे** विशेषेण क्रमं कृतवान् तदा **त्रेधा** त्रिभिः प्रकारैः **पदम् नि दधे** स्वकीयं पादं प्रक्षिप्तवान् । **अस्य** विष्णोः **पांसुरे** धूलियुक्ते पादस्थाने समूळ्हम् इदम् सर्वं जगत् सम्यगन्तर्भूतम् ।। १७ ।।

**सायण–** वैष्णवोपांशुयाजस्य 'इदं विष्णुः' इत्येषा अनुवाक्या । 'उक्ता देवताः' इति खण्डे

सूत्रितम्– 'इदं विष्णुर्विचक्रमे त्रिर्देवः पृथिवीमेष एताम्' (आश्व.श्रौ.१-६) इति । गार्हपत्याहवनीययोर्मध्ये श्वातिक्रमणे अनयैव श्वपदेषु भस्म प्रक्षिपत् । 'विध्यपराधे' इति खण्डे सूत्रितम्– 'भस्मना शुनः पदं प्रतिवपेदिदं विष्णुर्विचक्रमे' (आव.श्रौ.३-१०) इति । आतिथ्यायां प्रधानस्य हविषः एषैवानुवाक्या । 'अथातिथ्येळान्ता' इति खण्डे सूत्रितम्- 'इदं विष्णुर्वि चक्रमे तदस्य प्रियमभिपाथो अश्याम्' (आश्व.श्रौ.४-५) इति । उपसत्सु वैष्णवस्य एवैषानुवाक्या । 'अथोपसत्' इति खण्डे सूत्रितम्- 'गयस्फानो अमीवहेदं विष्णुर्वि चक्रमे' (आश्व.श्रौ.४-८) इति ।

**विष्णुः** त्रिविक्रमावतारधारी इदं प्रतीयमानं सर्वं जगदुद्दिश्य **वि चक्रमे** विशेषेण क्रमणं कृतवान् । तदा **त्रेधा** त्रिभिः प्रकारैः **पदं नि दधे** स्वकीयं पादं प्रक्षिप्तवान् । **अस्य** विष्णोः **पांसुरे** धूलियुक्ते पादस्थाने **समूळ्हम्** इदं सर्वं जगत् सम्यगन्तर्भूतम् । सेयमृक् यास्केनैवं व्याख्याता 'विष्णुर्विशतेर्वा व्यश्नोतेर्वा यदिदं किंच तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः समूळ्हमस्य पांसुरेऽप्यायनेऽन्तरिक्षे पदं न दृश्यतेऽपि वोपमार्थे स्यात् पांसुर इव पदं न दृश्यत इति पांसवः पादैः सूयन्त इति वा पन्नाः शेरत इति वा पंसनीया भवन्तीति वा' (निरु.१२.१८-१९) इति ।

त्रेधा । 'एधाच' (पा.सू.५-३-४६) इति एधाच्प्रत्ययः । चितोऽन्तोदात्तः । समूळ्हम् । 'वह प्रापणे' । 'निष्ठा' इति क्तः । 'वचिस्वपि' (पा.सू.६-१-१५) इत्यादिना संप्रसारणम् । ढस्वधत्वष्टुत्वढलोपदीर्घत्वानि । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अस्य । 'इदमोऽन्वादेशे' इति अश् अनुदात्तः, प्रत्ययश्च सुप्स्वरेण । पांसुरे । 'नगपांसुपाण्डुभ्यश्चेति वक्तव्यम्' (का.५-२-१०७.२ ) इति मत्वर्थीयो रः । प्रत्ययस्वरः ।। १७ ।।

**सिद्धाञ्जनम्–** इदं सर्वमिदं विश्वं विष्णुः व्यापकः परमो देवः **विचक्रमे** विक्रान्तवान् । विक्रमणप्रकारमाह । **त्रेधा** विविधं पृथिव्यां अन्तरिक्षे द्युलोके च **पदं निदधे** पादविन्यासं कृतवान् । तेन किं वृत्तम्? **अस्य** विष्णोः पांसुरे पदधूलिमति प्रदेशे (मत्वर्थीयः रः) **समूळ्हं** समूढं सम्यक् दृढं प्रतिष्ठापितं इदं सर्वमित्यर्थः (संपूर्वकाद् वहेः क्तः, संप्रसारणम् )। त्रेधा-विशब्दाद् एधाच प्रत्ययः ।। १७ ।।

## ऋक्संहिता पदपाठसहिता

**त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ।। १८ ।।**

त्रीणि । पदा । वि । चक्रमे । विष्णुः । गोपाः । अदाभ्यः । अतः । धर्माणि । धारयन् ।।१८।।

## ऋग्भाष्यम्

**वेदान्कालान्गुणाँल्लोकान्देवमानुषदानवान् ।**
**चेतनाचेतनान्मिश्रांस्त्रीणि पदा विचक्रमे ।**
**रक्षकत्वेन सर्वाणि स्रष्टृभर्तृत्वतस्तथा ।**
**मोक्षदत्वेन च विभुः स्तंभनीयो नकेनचित् ।**
**धारकांश्चैव वाय्वादीन्धारयन्वर्तते ततः ।। १८ ।।**

**ऋग्भाष्यटीका–** **त्रीणि पदा** । प्रथमपादं व्याख्याति । **वेदानिति** ।। **विष्णुः त्रीणि पदा** सर्वाणि त्रिविधानि पदानि स्वरूपाणि । **विचक्रमे** अतिक्रान्तः । कानि तानि वेदांस्त्रीन्कालानतीतानागतवर्तमानान् गुणान्सत्त्वादींल्लोकान् भूर्भुवःस्वराख्यान्देवमानुषदानवान् जीवान् चेतनाचेतनान्मिश्रान्सकलपदार्थान् । तत्र चेतना श्रीर्मुक्ताश्च । अचेतना घटादयः । मिश्राः सात्मका देहाः । कथं विचक्रम इत्यत उक्तं **गोपा** इति । तदुपलक्षणपरमित्यशयेन व्याख्याति । **रक्षकत्वेनेति** ।। सर्वाणीत्यस्य पूर्वत्र सम्बन्ध उक्तः । **विभुः विचक्रम इति** । पूर्वेणान्वयः । **अदाभ्य** इत्यस्यार्थमाह । **स्तम्भनीय इति** ।। स्तम्भनीयो निवारणीयः । पोरदुपधादिति दम्भेर्ण्यः । उत्तरार्धं व्याख्याति । **धारकानिति** ।। यत एवं महामहात्म्यो विष्णुः अतः कारणात् **धर्माणि** जगतो धारकानपि वाय्वादीन् स एव **धारयन्** वर्तत इति शेषः ।। १८ ।।

**मन्त्रार्थमञ्जरी–** **अदाभ्यः**, अस्तम्भनीयः, अनिवारणीय इति यावत्, 'आसुयुवपिरपिलपित्रपिचमश्च' इति तृतीयाध्यायाद्यपादीयसूत्रे 'ऋहलोर्ण्यत्' इति ण्यत्प्रकरणगतेऽनुक्तसमुच्चयार्थश्चकारः, 'दभ दाम्भे' इति वृत्तावुक्तेर्दभेर्धातुष्वपठितस्यापि चुरादौ 'बहुलमेतन्निदर्शनम्' इति वचनाच्छिष्टप्रयोगाच्च 'क्षपयति, तुत्थयति, अवधीरयति' इत्यादिवद्धातुत्वं वक्तव्यम्' इति मञ्जर्यामुक्तेरतोऽत्र दभेर्ण्यत्प्रत्ययो ध्येयः, 'पोरदुपधात्' इति दम्भेः ण्यत्' इति टीकापाठो लेखकदोषमूलः, यद्वा टीकायाम् इति शब्दो हेत्वर्थः, 'पवर्गान्तादकारोपपधाद्धातोर्यत्प्रत्ययो भवति' इति विधानाद्धेतोरिह

च दम्भेः अदुपधत्वाभावाद्यत्प्रत्ययाप्राप्तौ 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः' इत्यभिप्रायो ध्येयः, बहुलग्रहणादुपधालोपः, 'अत उपधायाः' इति वृद्धिः । विष्णुः । त्रीणि पदा, सर्वाणि त्रिविधानि पदानि स्वरूपाणि (ऋग्यजुःसाम) वेदाख्यानि, अतीतानागतवर्तमानकालाख्यानि, सत्त्वरजस्तमो-गुणाख्यानि, भूलोकभुवर्लोकस्वर्लोकाख्यानि, देवमानुषदानवरूपजीवाख्यानि, चेतनाचेतनमिश्ररूप-श्रीमुक्तघटादिसात्मकदेहाख्यानि च । गोपाः, रक्षकः सन्, रक्षकत्वेनेति यावत्, उपलक्षणम्– 'स्रष्टृत्वादिना (भर्तृत्वमोक्षदत्वे चादिपदार्थौ) च' इत्यपि ध्येयम् । वि चक्रमे, अतिक्रान्तः । यत एवं माहात्म्यो विष्णुः अतः, कारणात् । धर्माणि, जगतो धारकान्वाय्वादीन्, धृञः मनिन्, गुणः । धारयन् (वर्तते) इति शेषः ।। १८ ।।

**स्कन्द– त्रीणि** पदानि **वि चक्रमे विष्णुः गोपाः** गोपायिता कृत्स्नस्य जगतो रक्षिता **अदाभ्यः** अहिंस्यः । कुतो विचक्रमे । **अतः** पार्थिवाल्लोकात् । **धर्माणि धारयन्** धर्मशब्दः कर्मवचनः । धारयितव्यवचनो वा । सर्वाणि कर्माणि धारयितव्यानि वा आत्मनि धारयन् । सर्वस्य हि भगवान् विष्णुराश्रयः ।। १८ ।।

**वेङ्कटमाधव– त्रीणि पदानि वि चक्रमे विष्णुः** गोपायिता अहिंस्यः पृथिवीमारभ्य मनुष्याणां कर्माणि **धारयन्** ।। १८ ।।

**मुद्गल– आदाभ्यः** केनापि हिंसितुमशक्यः **गोपाः** सर्वस्य जगतो रक्षकः **विष्णुः अतः** एतेषु पृथिव्यादिस्थानेषु **त्रीणि पदानि वि चक्रमे** । किं कुर्वन् । **धर्माणि** अग्निहोत्रादीन् **धारयन्** पोषयन् ।। १८ ।।

**सायण**– उपसदि वैष्णवयागस्य प्रातःकाले याज्या सायंकालेऽनुवाक्या 'त्रीणि पदा' इत्येषा । सूत्रितं च– 'त्रीणि पदा वि चक्रम इति स्विष्टकृदादि लुप्यते' (आश्व.श्रौ.४-८) इति । **अदाभ्यः** केनापि हिंसितुमशक्यः **गोपाः** सर्वस्य जगतः रक्षकः **विष्णुः अतः** एतेषु पृथिव्यादिस्थानेषु **त्रीणि पदानि वि चक्रमे** । किं कुर्वन् । **धर्माणि** अग्निहोत्रादीनि **धारयन्** पोषयन् ।

पदा । 'सुपां सुलुक्' इत्यादिना विभक्तेः डादेशः । तस्य स्थानिवद्भावेन अनुदात्तत्वे प्राप्ते उदात्तनिवृत्तिस्वरेणोदात्तत्वम् । गोपाः । 'गोपामृतस्य' (ऋ.सं.१-१.८) इत्यत्रोक्तम् । अदाभ्यः ।

दभेः 'ऋहलोर्ण्यत्' (पा.सू.३-१-१२४) इति ण्यत् । नञ्समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । धारयन् । शपः पित्वादनुदात्तत्वम् । शतुश्च लसार्वधानुकस्वरेण णिच एव स्वरः शिष्यते ॥१८॥

**सिद्धाञ्जनम्– गोपाः** गोपायिता रक्षकः सर्वस्य जगतः **अदाभ्यः** न दम्भयितुं वशयितुं वा शक्यः अनभिगम्यप्रभावः **विष्णुः त्रीणि पदा** पदानि **वि चक्रमे** विशेषेण क्रान्तवान् । कुतः? अतः अस्मात् पृथिवीस्थानात् । किं कुर्वन् ? **धर्माणि** धर्मान्, विश्वस्मिन् जगति धारयितव्यानि कर्माणि **धारयन्** सन् विचक्रम इति सम्बन्धः । इह त्रैलोक्यस्य आश्रयः पृथिवीस्थानम्, तदस्माद्विक्रम्य त्रैलोक्ये धारयितव्यान् शाश्वतान् धर्मान् पालयति ॥ १८ ॥

## ऋक्संहिता पदपाठसहिता

**विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ १९ ॥**

विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे । इन्द्रस्य । युज्यः । सखा ॥ १९ ॥

## ऋग्भाष्यम्

**जानीथ विष्णुकर्माणि प्राणिकर्माण्यशेषतः ।**
**यतो जातान्यविज्ञातो भगवान्सर्वदैव च ।**
**स्पशाज्ज्ञातदृशौ यस्मादिन्द्रस्य सहितः सखा ।**
**प्राणस्यैवेन्द्रनाम्नश्च कस्मिन्न्वहमिति श्रुतेः ।**
**त्वयेदिन्द्रेति वचनात्प्राण इन्द्राभिधो मतः ॥ १९ ॥**

**ऋग्भाष्यटीका– विष्णोः कर्माणि** । जानीथ । हे जनाः! **विष्णोः कर्माणि पश्यत** जानीथ । कथं भूतानि **व्रतानि** अशेषतः प्राणिकर्माणि च **यतो** येभ्यः कर्मभ्यो जातानीति शेषः । विष्णोर्वैतद्विशेषणम् । अनुपलम्भबाधितमेतदित्यत उक्तं **पस्पशे** भगवान्सर्वदैवाविज्ञातश्च-शब्दाज्ज्ञातश्च । तदुपपादयति । **स्पशेति** ॥ यस्मादेवं धातुव्याख्यानं तस्मादुक्तं युक्तम् । अज्ञात-दृशौ प्रत्यक्षायोग्यस्यार्थस्य दर्शने । ततश्च पस्पश इति लिडंतस्य प्राकृतैरदृश्य एव योगिभिर्दृष्टो बभूवेत्यर्थः । उत्तरार्धं व्याख्याति । **इन्द्रस्येति** ॥ **युज्यः** सर्वदा योगार्हः । तस्यार्थः **सहित** इति । अत्र यः पस्पशे यश्चेन्द्रस्य युज्यः सखा तस्य विष्णोरित्येकवाक्यतया योजना । इन्द्र-शब्दस्य प्रसिद्धेन्द्रस्तावदर्थः । अर्थान्तरं चाह । **प्राणस्यैवेति** ॥ सखेति सम्बन्धः ।

एवशब्देनायमेव मुख्योऽर्थ इत्याचष्टे । तत्कुत इत्यत आह । **कस्मिन्निति** । 'कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत' इति श्रुतेर्विष्णुप्राणयोरेव नित्ययोगदर्शनादित्यर्थः । इन्द्रशब्दस्य प्राणवाचित्वं कुत इत्यत आह । **त्वयेदिन्द्रेति** ।। त्वयेदिन्द्र युजावयमित्यस्यामृचीन्द्रशब्दस्य प्राणे प्रयोगदर्शनात् । इयं हि तं देवा अब्रुवन्नित्यत्रार्थे सम्मतित्वेनोपनिषद्युदाहृता ।। १९ ।।

**मन्त्रार्थमञ्जरी–** (हे जनाः) **विष्णोः कर्माणि** । पश्यत, जानीथ । व्रतानि, सर्वप्राणि-कर्माणि । यतः, येभ्यः कर्मभ्यः, यस्माद्विष्णोरिति वा । (जातानि) इति शेषः । (यः) विष्णुः । पस्पशे, प्राकृतैरदृष्टोऽपि योगिभिर्दृष्टो बभूवेत्यर्थः, 'स्पश अज्ञातदृशौ' इति धातोः । (यश्च) इन्द्रस्य, पुरंदरस्य, वायोर्वा । युज्यः, योगार्हः, अविनाभूतः । सखा (तस्य) 'विष्णोः' इति पूर्वेणान्वयः । अत्रेन्द्रशब्देन वायुग्रहणं तु 'कस्मिन्वहमुत्क्रान्ते' (ष०प्र०उ०६।२) इत्यादिश्रुत्या वायोरेव मुख्यतो विष्ण्वविनाभावात्, 'तं देवा अब्रुवन्' (२।१।४) इत्युक्तप्राणमहिमविषयतयैत-रेयोपनिषदुदाहृते 'त्वयेदिन्द्र युजा वयम्' (ऋ० म० ८।९२।३२) इति मन्त्रे इन्द्रशब्दस्य प्राणे प्रयोगाच्च, इति ध्येयम् ।। १९ ।।

**स्कन्द– विष्णोः** अद्भुतानि **कर्माणि पश्यत** यूयमृषयः ऋत्विजो वा । **यतः** इति आद्यादिभ्यः उपसंख्यानम् (पा.वा ५-४-४४) इति तृतीयायां तसिः । यैः व्रतानि प्रवर्त्यन्ते तानीति हविर्लक्षणान्यन्नानि कर्माणि वा यागाख्यानि च तानि **पस्पशे** 'स्पश बन्धने' । आत्मनि प्रतिबद्धवान् । आत्मदेवत्यानि कृतवान् इत्यर्थः । अथवा व्रतानि कर्माणि बलिप्रभृतीनां दानवानाम् असुराणां च । तानि पस्पशे । प्रतिबद्धवानित्यर्थः । कीदृशः । **इन्द्रस्य युज्यः** योग्यः सखा ।। १९ ।।

**वेङ्कटमाधव– विष्णोः कर्माणि पश्यत** । यैर्मनुष्याणां कर्माणि बध्नाति इन्द्रस्य नियोज्यः सखा ।। १९ ।।

**मुद्गल–** हे ऋत्विगादयः! **विष्णोः कर्माणि** पालनादीनि **पश्यत** । **यतः** यैः कर्मभिः **व्रतानि** अग्निहोत्रादीनि **पस्पशे** सर्वो यजमानः स्पृष्टवान् । विष्णोरनुग्रहात् अनुतिष्ठतीत्यर्थः । तादृशः विष्णुः **इन्द्रस्य युज्यः** योग्येऽनुकूलः सखा भवति ।। १९ ।।

**सायण–** हे ऋत्विगादयः! **विष्णोः कर्माणि** पालनादीनि **पश्यत** । **यतः** यैः कर्मभिः **व्रतानि** अग्निहोत्रादीनि **पस्पशे** सर्वो यजमानः स्पृष्टवान् । विष्णोरनुग्रहात् अनुतिष्ठति इत्यर्थः । तादृशो विष्णुः **इन्द्रस्य युज्यः** योज्यः अनुकूल **सखा** भवति । विष्णोः इन्द्रानुकूल्यं 'त्वष्टा हतपुत्रः' इत्यनुवाके 'अथ वै तर्हि विष्णुः' (तै.सं.२-४-१२.२) इत्यादिना प्रपञ्चेन तैत्तिरीया आमनन्ति ।

पस्पशे । 'स्पश बाधनस्पर्शनयोः'। लिट् । द्विर्भावे 'शर्पूर्वाः खयः' (पा.सू.७-४-६१) इति षकारः शिष्यते सकारो लुप्यते । यद्वृत्तयोगादनिघातः । युज्यः । युजेः बाहुलकात् क्यप् । कित्त्वागुणाभावः । क्यपः पित्वादनुदात्तत्वम् । धातुस्वरः ।। १९ ।।

**सिद्धाञ्जनम्–** सखीन् उपासकान् प्रति सम्बोधनम् । **विष्णोः कर्माणि** विक्रमसाधितानि **पश्यत यतः** यः कर्मभिः त्रिलोकक्रमणरूपैः (सः विष्णुः) **व्रतानि** त्रैलोक्यधारणार्थानि नियतविधानानि कर्माणि **पस्पशे** स्पृष्टवान् स्पष्टीकृतवानित्यर्थः (स्पश स्पर्शने, लिट्)। नित्या गूढा धर्मा लोकक्रियाः, विष्णोर्विक्रमकर्मणा स्पष्टाः स्पष्टीकृता इत्यर्थः । सः **इन्द्रस्य** त्रैलोक्यसम्राजः कार्यधुरन्धरस्य **युज्यः** योग्यः युक्तः (युजेः क्यप्, कित्वाद्गुणाभावः) **सखा** समानख्यानः ।।

## ऋक्संहिता पदपाठसहिता

**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ।। २० ।।**
तत् । विष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः । दिविऽइव । चक्षुः । आऽततम् ।।

## ऋग्भाष्यम्

**रमाब्रह्मशिवादिभ्यो यद्विष्णोः परमं पदम् ।**
**रूपं पश्यन्ति निर्मुक्ताः संसारात्सूरयः सदा ।**
**चक्षुर्दिवीव व्याप्तं यददृश्यं फलदर्शितम् ।। २० ।।**

**ऋग्भाष्यटीका– तद्विष्णोः** । रमाब्रह्म । परमत्वस्य प्रतियोगिसापेक्षत्वाद्रमाब्रह्मशिवादिभ्य इत्युक्तम् । पदमित्यनुवादेन रूपमिति व्याख्यानम् । सूरय इत्यस्यार्थः संसारान्निर्मुक्ता इति । ते हि मुख्यतः सूरयः । दृष्टान्तस्य तात्पर्यमाह । **अदृश्यमिति** ।। यथाहि चक्षुराकाशे व्याप्तमपि

न दृश्यते । केवलं विषयोपलब्धिलक्षणेन फलेनानुमीयते तथा परमेश्वरस्वरूपं सर्वगतमपि न दृश्यं किं त्वस्वतन्त्राणां पदार्थानां सत्ताप्रतीतिप्रवृत्तिभिर्ज्ञायत इति ।। २० ।।

**मन्त्रार्थमञ्जरी– आततम्,** व्याप्तम् । चक्षुः । दिवीव, आकाश इव, रश्मिरश्मिमतोरभेदात् 'चक्षुः' इत्येवोक्तम् । तत् विष्णोः । परमम्, रमाब्रह्मशिवादिभ्य उत्तमम् । पदम्, स्वरूपम् । सूरयः, ज्ञानिनः । सदा पश्यन्ति । यथा चक्षुराकाशे व्याप्तमपि न दृश्यते, केवलं विषयोपलब्धिरूपफलेनानुमीयते, तथा परमेश्वरस्वरूपं सर्वगतमपि नोपलभ्यते, किं त्वस्वतन्त्राणां पदार्थानां सत्ताप्रतीतिप्रवृत्तिभिर्ज्ञायते, इति दृष्टान्तोक्तितात्पर्यम् ।। २० ।।

**स्कन्द– तद् विष्णोः** स्वभूतम् **परमम् पदम् सदा पश्यन्ति सूरयः** स्तोतारः । कथम् । **दिवि इव चक्षुः आततम्** । चक्षुः प्रकाशनमादित्यमण्डलम् । यथा दिवि विततमादित्यमण्डलं तद्वत् । अथवा विष्णुरादित्य एव । इवशब्दः पदपूरणः । 'अस्ति ह्युपमार्थस्य संप्रत्यर्थे प्रयोगः इहेव निधेहीति यथा' (तु.या.७-३१) विष्णोः परमं पदं दिवि विततमादित्यमण्डलाख्यं पश्यन्तीत्यर्थः । अथवा चक्षुःशब्दस्येन्द्रिये प्रसिद्धत्वादेवं योजयितव्यः । विष्णोः परमं पदं सदा पश्यन्ति सूरयः यथा दिवि, एवं विष्णावपि सर्वमनुष्याणां चक्षुराततम् इति ।। २० ।।

**वेङ्कटमाधव– तत् विष्णोः** उत्तमं स्थानम् **सदा पश्यन्ति** प्राज्ञाः अन्तरिक्षे विततमिव तेजः । यद्वाऽन्तरिक्षे विततं यथा चक्षुः पश्यति तद्वत् ।। २० ।।

**मुद्गल– सूरयः** विद्वांसः ऋत्विगादयः **विष्णोः** सम्बन्धि **परमम्** उत्कृष्टम् **तत्** शास्त्रप्रसिद्धम् **पदम्** स्वर्गस्थानं शास्त्रदृष्ट्या **सदा** सर्वदा पश्यन्ति । दृष्टान्तः । **दिवि इव** आकाशे यथा **आततम्** सर्वतः प्रसृतम् चक्षुः निरोधाभावेन विशदं पश्यति तद्वत् ।। २० ।।

**सायण– सूरयः** विद्वांसः ऋत्विगादयः **विष्णोः** संबन्धि **परमम्** उत्कृष्टं **तत्** शास्त्रप्रसिद्धं **पदं** स्वर्गस्थानं शास्त्रदृष्ट्या सर्वदा पश्यन्ति । तत्र दृष्टान्तः । **दिवीव** । आकाशे यथा **आततं** सर्वतः प्रसृतं चक्षुः निरोधाभावेन विशदं पश्यति तद्वत् ।।

सदा । 'सर्वैकान्य' (पा.सू.५-३-१५) इति दाप्रत्ययः । 'सर्वस्य सोऽन्यतरस्यां दि' (पा.सू.५-३-६) इति सर्वशब्दस्य सभावः । व्यत्ययेनाद्युदात्तत्वम् । दिवि । 'ऊडिदम्'

इत्यादिना विभक्तेरुदात्तत्वम् । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति तदेव शिष्यते । चक्षुः । 'नब्विषयस्य' इत्याद्युदात्तत्वम् । आततम् । तनोतेः कर्मणि क्तः । 'यस्य विभाषा' इति इप्रतिषेधः । 'अनुदात्तोपदेश' इत्यादिना नलोपः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'गतिरनन्तरः' इति गतेरुदात्तत्वम् ।। २० ।।

**सिद्धाञ्जनम्– सूरयः** विद्वांसः विष्णोः **तत्** तच्छब्दवाच्यं **परमं** उत्तमं **पदं** स्थानं **सदा** कालानवच्छेदेन नित्यमित्यर्थः, पश्यन्ति । दृष्टान्तमाह । **दिवीव** आकाशे यथा **आततं** समन्ततः व्याप्तं **चक्षुः** नेत्रम् । ऊर्ध्वमाकाशे सर्वतो व्याप्तं विश्वदर्शनसमर्थ चक्षुरिव स्थितं ध्रुवं विष्णोः तत् परमं पदं सदा सूरयः पश्यन्ति । अत्र भूमिकायां इदं प्रसक्तं द्रष्टव्यम् ।। २० ।।

## ऋक्संहिता पदपाठसहिता

**तद्विप्रा॑सो विप॒न्यवो॑ जागृ॒वांसः॒ समि॑न्धते । विष्णो॒र्यत्प॑र॒मं प॒दम् ।। २१,७,२२ ।।**

तत् । विप्रा॑सः । वि॒प॒न्यवः॑ । जा॒गृ॒ऽवांसः॑ । सम् । इ॒न्ध॒ते । विष्णोः॑ । यत् । प॒र॒मम् । प॒दम् ।।

## ऋग्भाष्यम्

**सन्दीपयन्ति विज्ञानैः संसारात्प्राप्तजागराः ।**
**विपन्यवो ज्ञानितमा विष्णोर्यत्परमं पदम् ।**
**तात्पर्याधिक्यविज्ञप्त्या अर्थमेतं पुनर्जगौ ।। २१,७,३ ।।**

**ऋग्भाष्यटीका– तद्विप्रासः** । सन्दीपयन्ति । 'इन्धी दीप्तौ' । सन्दीपयन्ति जानन्ति ज्ञापयन्ति वा । विज्ञानैरिति शेषः । करणे ल्युट् । **जागृवांसः** प्राप्तजागराः । के ते । संसारात् मुक्ता इति शेषः । **विपन्यव** इत्यस्य व्याख्यानं ज्ञानितमा इति । पनतिरत्र ज्ञानार्थः । ततो युः । नन्वेतदृगर्थः पूर्वस्यामृच्युदित एव अतः किमर्थं पुनरुच्यत इत्यत आह । **तात्पर्येति** ।। सर्वेषामपि वेदानामस्मिन्नर्थे तात्पर्याधिक्यमित्यस्यार्थस्य विज्ञप्त्यै । एतमर्थं विष्णोः सर्वोत्तमत्वादिकम् । जगौ वेदः ।। २१,७,३ ।।

**मन्त्रार्थमञ्जरी– यत् विष्णोः परमं पदं तत्** । विपन्यवः, विशेषेण पन्यवो ज्ञानिनः, 'पन ज्ञाने' इत्यतो युप्रत्ययः । जागृवांसः, प्राप्तजागराः, संसारान्निर्मुक्ता इति यावत् । विप्रासः,

विप्राः, मेधातिथिप्रभृतयः । सम् इन्धते, 'ञिइन्धी दीप्तौ' जानन्ति, अन्तर्णीतणिज्वा, समिन्धयन्ति, ज्ञापयन्तीत्यर्थः । प्रागुक्तस्यैव पुनरत्र उक्तिः सर्ववेदानामत्रोक्तसर्वोत्तमत्वे परमं तात्पर्यमिति ज्ञापनार्था ।। २१ ।।

**स्कन्द– तत् विप्रासः** विप्रः(निघ.३-१५) इति मेधाविनाम । मेधाविनः । **विपन्यवः** नेदं मेधाविनाम, विप्रासः इत्यनेन पौनरुक्त्यप्रसङ्गात् । किन्तर्हि । पनतेः स्तुत्यर्थस्य विपनः स्तुतिः । तत्कामा विपन्यवः । तद्वदर्थे वा युशब्दः । स्तुतिमन्तः । **जागृवांसः** जागरणेनात्राप्रमादो लक्ष्यते । अप्रमाद्यन्तः **समिन्धते** स्तुतिभिः सन्दीपयन्ते । स्तुवन्तीत्यर्थः । किं तत् । विष्णोः यत् परमम् पदम् ।। २१ ।।

**वेङ्कटमाधव– तत्** उत्तमम् **पदम्** मेधाविनः विविधं स्तुवन्तः स्वप्रवर्जिताः कर्मभिः सन्दीपयन्ति यज्ञाख्यम् ।। २१ ।।

**मुद्गल–** पूर्वोक्तम् **यत् विष्णोः परमम् पदम्** अस्ति **तत्** पदम् **विप्रासः** मेधाविनः **समिन्धते** सम्यग् दीपयन्ति । कीदृशाः । **विपन्यवः** विशेषेण स्तोतारः **जागृवांसः** शब्दार्थयोः प्रमादराहित्येन जागरूकाः ।। २१ ।।

**सायण–** पूर्वोक्तं **विष्णोः यत् परमं पदम्** अस्ति **तत्** पदं **विप्रासः** मेधाविनः **समिन्धते** सम्यक् दीपयन्ति । कीदृशाः । **विपन्यवः** विशेषेण स्तोतारः **जागृवांसः** शब्दार्थयोः प्रमादराहित्येन जागरूकाः ।

विप्रासः । 'आज्जसेरसुक्' । विपन्यवः । स्तुत्यर्थस्य पनेः बाहुलक औणादिको युप्रत्ययः । तत्र प्रत्ययस्वरः । जागृवांसः । 'जागृ निद्राक्षये' । लिटः क्वसुः । क्रादिनियमाप्राप्तस्य इटः 'वस्वेकाजाद्घसाम्' (पा.सू.७-२-६७) इति नियमात् निवृत्तिः ।। २१,७ ।।

**सिद्धाञ्जनम्– विप्रासः** विप्राः विपश्चितः **विपन्यवः** विशेषेण स्तोतारः सन्तः (स्तुत्यर्थः पनिः, युप्रत्यय औणादिकः) **जागृवांसः** (जागृ निद्राक्षये, लिटः क्वसुः) निनिद्राः नित्योन्मेषशालिनो भूत्वा **यत्** पूर्वोक्तं **विष्णोः परमं** उत्तमं **पदं** धाम भवति, **तत्** प्रसिद्धं **समिन्धते** सम्यग्ज्वलयन्ति । नित्यज्वलितस्य परमपदस्य साक्षात्कारिषु विप्रेषु अविच्छिन्नजागरणेषु

अनवरतं आविष्कारणमेव पुनर्ज्वलनं भवति, अत एव सन्दीपयन्ति 'समिन्धते' इत्युक्तम् । ईदृशाः विस्पष्टपरमार्था ऋचः औपनिषदर्षीणां कचिदाधारभूताः 'तदुक्तमृषिणा' 'तदृचाऽभ्युक्तम्' इत्यादिवाक्यानां बीजायन्ते ।। २१,७ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये सप्तमो वर्गः ।।

## ।। अथ अष्टमो वर्गः ।।

(सूक्तम् २३)

## ऋक्संहिता पदपाठसहिता

(२४ मेधातिथिः काण्व ऋषिः । १ वायुः, २-३ इन्द्रवायू, ४-६ मित्रावरुणौ, ७-९ इन्द्रो मरुत्वान्, १०-१२ विश्वे देवाः, १३-१५ पूषा, १६-२२,२३ (पूर्वार्धस्य) आपः, २३ (उत्तरार्धस्य), २४ अग्निः देवता । १-१८ गायत्री, १९ पुरउष्णिक्, २१ प्रतिष्ठा, २०, २२-२४ अनुष्टुप् छन्दः)

**तीव्राः सोमास आ गह्याशीर्वन्तः सुता इमे । वायो तान्प्रस्थितान्पिब ।। १ ।।**

तीव्राः । सोमासः । आ । गहि । आशीःऽवन्तः । सुताः । इमे । वायोइति । तान् । प्रऽस्थितान् । पिब ।। १ ।।

## ऋग्भाष्यम्

**वीर्यवंतश्च ये सोमा यजमानेष्टसाधकाः ।**
**पिब तान् ..................... ।। १ ।।**

**ऋग्भाष्यटीका– तीव्राः सोमासः** । चतुर्विंशत्यृचमिदं सूक्तम् । तत्राद्या वायव्या । यच्छब्दाध्याहारेणैकवाक्यतया व्याख्याति । **वीर्यवन्त इति** ।। हे **वायो**! य **इमे** तीव्रास्तिग्मा आशुकारिणो वीर्यवन्त इति यावत् । **आशीर्वन्तः** । आशीरित्याशास्यमानोऽर्थः । तद्वंतस्तेन सह साध्यसाधनभाववन्त इत्यर्थः । यजमानेष्टसाधकाश्च । **सुता** अभिषुताः । **सोमासः** सोमाः सन्ति । **तान्प्रस्थितान्** प्रस्थितनामकांस्त्वदभिमुखान्वा प्रत्यागह्यागच्छ **पिब** च ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ **'तीव्राः'** इति त्रयोविंशं चतुर्विंशत्यृचं वर्गपञ्चतयात्मकं नानादैवत्यं

नानाछन्दस्कं सूक्तम् । तत्र (आदितोऽष्टादश गायत्र्यः) आद्या वायव्या । (हे) वायो (ये) इमे । तीव्राः, तिग्माः, आशुकारिणो वीर्यवन्त इति यावत् । आशीर्वन्तः, 'आशीः' इत्याशास्यमानोऽर्थः, तद्वन्तः, तेन सह साध्यसाधनभाववन्तो यजमानेष्टसाधकाश्च । सुताः, अभिषुताः । सोमासः, सोमाः । (सन्ति) तान् । प्रस्थितान्, त्वदभिमुखान्प्रति । आ गहि, आगच्छ । पिब (च) ।। १ ।।

**स्कन्द–** 'तीव्राः सोमासो वायव्या' (तु.बृदे.३-९४) । 'तीव्राः सोमासः' इतीयमृग् वायुदेवत्या । तीव्राः तीव्रशब्दस्तिक्तवचनः । तिक्तरसाः कटुरसा वा । **सोमासः आशीर्वन्तः** सोममिश्रं दधि आशीः तद्वन्तः । **सुताः इमे** । एतज्ज्ञात्वा **आ गहि** । आगत्य च हे **वायो !** तान् **प्रस्थितान्** प्रस्थितसंज्ञकान् सोमान् **पिब** ।। १ ।।

**वेङ्कटमाधव–** मदोत्पादनसमर्थाः सोमाः । आगच्छः । आशिरेण युक्ताः **इमे सुताः** सोमाः । **वायो! तान् प्रस्थितान् पिब** ।। १ ।।

**मुद्गल–** 'तीव्राः' इति चतुर्विंशत्यृचं षष्टं सूक्तम् । मेधातिथिः ऋषिः । 'अप्स्वन्तः' इत्येषा पुर उष्णिक् । 'अप्सु मे सोमः' इत्येषाऽनुष्टुप् । 'इदमापः' इत्याद्यास्तिस्रोऽनुष्टुभः । 'आपःपृणीत' इत्येषा प्रतिष्ठागायत्री । शिष्टा अष्टादश गायत्र्यः । आद्या वायुदेवताका । द्वितीयतृतीयके इन्द्रवायुदेवताके । चतुर्थ्यादयस्तिस्रो मित्रावरुणदेवत्याः । सप्तम्याद्यास्तिस्रो मरुद्गणविशिष्टेन्द्रदेवत्याः । दशमी एकादशी द्वादशी च वैश्वदेव्यः । त्रयोदशी चतुर्दशी पञ्चदशी च पूषदेवत्याः । षोडश्याद्याः सार्धद्वाविंशत्यन्ता अब्देवताकाः । 'पयस्वानग्ने' इत्यर्धर्चयुक्ता चतुर्विंशी अग्निदेवताका ।

हे **वायो! इमे सोमासः** ऐन्द्रवायवग्रहादिरूपाः सोमाः **सुताः** अभिषुताः । ते च **तीव्राः** प्रभूतत्वात् तर्पयितुं समर्थाः **आशीर्वन्तः** आशीर्युक्ताः । अतस्त्वम् **आ गहि** अस्मिन् कर्मण्यागच्छ । **प्रस्थितान्** उत्तरवेदिं प्रति आनीतान् **तान्** सोभान् **पिब** ।। १ ।।

**सायण–** 'तीव्राः' इति चतुर्विंशत्यृचं षष्टं सूक्तम् । अत्रेयमनुक्रमणिका– 'तीव्राश्चतुर्विंशतिर्वायव्यैकैन्द्रवायव्यौ मैत्रावरुणमरुत्वतीयवैश्वदेवपौष्णास्तृचाः शेषा ओप्योऽन्त्याध्यर्धाग्नेय्यप्स्वन्तः पुरउष्णिक् परानुष्टुप्तिस्रश्चान्त्या एकविंशी प्रतिष्ठा' इति । 'ऋषिश्चान्यस्मात्' (अनु.१२-२)

इति परिभाषया अनुवर्तनात् मेधातिथिः काण्व ऋषिः । 'अप्स्वन्त' इत्येषा पुरउष्णिक् । प्रथमपादस्य द्वादशाक्षरेण 'आद्यश्चेत्पुरउष्णिक्'(अनु.५-२) इति लक्षणसद्भावात् । 'अप्सु मे सोमः' इत्येषा अनुष्टुप् । 'इदमापः' इत्याद्यास्तिस्रः अनुष्टुभः। शिष्टा एकोनविंशतिसंख्याका ऋचो गायत्र्यः । 'आदौ गायत्र्यम्'(अनु.१२-१४) इति परिभाषितत्वात् आद्या वायुदेवताका । ततो द्वे ऋचौ इन्द्रवायुदेवताके । तत एकस्तृचो मित्रावरुणदेवत्यः । तत उत्तरतृचस्य मरुद्गण-विशिष्टेन्द्रो देवता । तत एकस्तृचो वैश्वदेवः । तदन्तरभावी पौष्णः । शिष्टा ऋचोऽब्देवताकाः । 'पयस्वानग्ने' इत्यर्धर्चयुक्ता 'सं माग्ने' इत्येषा तु अग्निदेवताका । सूक्तविनियोगो लिङ्गादव-गन्तव्यः । अभिप्लवपडहस्य द्वितीयेऽहनि प्रउगशस्त्रे वायव्यतृचस्य 'तीव्राः सोमासः' इत्येषा तृतीया । 'द्वितीयस्य चतुर्विंशेन' इति खण्डे सूत्रितम्– 'तीव्राः सोमास आ अहीत्येका' (आश्व.श्रौ.७-६) इति । पृष्ठ्यपडहेऽपि द्वितीयेऽहनि प्रउगे एषा ।

हे **वायो! इमे सोमासः** ऐन्द्रवायवग्रहादिरूपाः सोमाः **सुताः** अभिषुताः । ते च **तीव्राः** प्रभूतत्वात् तर्पयितुं समर्थाः **आशीर्वन्तः** आशीर्युक्ताः अतस्त्वम् **आ गाहि** अस्मिन् कर्मणि आगच्छ । **प्रस्थितान्** उत्तरवेदिं प्रति आनीतान् **तान्** सोमान् **पिब** ।

सोमासः । अर्तिस्तु (उ.सू.१-१३७) इत्यादिना मन् । नित्वादाद्युदात्तः । 'आज्जसेरसुक्' । गहि । 'मरुद्भिरग्न आ गाहि' (ऋ.सं.१-१९-२) इत्यत्रोक्तम् । आशीर्वन्तः । 'श्रीञ् पाके' । 'अपस्पृधेथाम्' (पा.सू.६-१-३६) इत्यादिसूत्रे आङ्पूर्वस्य क्विपि शिरादेशो निपातितः । करणस्यापि श्रयणद्रव्यस्य स्वव्यापारे कर्तृत्वविवक्षया कर्तरि क्विप् न विरुध्यते । आशीः एषाम् अस्तीति आशीर्वन्तः । 'छन्दसी रः' इति वत्वम् । वायो । आमन्त्रिताद्युदात्तत्वम् । प्रस्थितान् । प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा व्यत्ययेन अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** पञ्चमेऽनुवाके षष्ठं 'तीव्रा' इति चतुर्विंशत्यृचं सूक्तम् । मेधातिथिरेव ऋषिः । देवताः वाय्वाद्यास्तत्र तत्र व्याख्यायां स्पष्टाः स्युः । अत्र एकविंशतिसङ्ख्याका ऋचः गायत्रीच्छन्दस्काः, शिष्टानां छन्दोभेदो व्याख्यायां द्रष्टव्यः ।।

हे **वायो!** जगत्प्राण, यजमानस्य शरीरेऽत्र विशेषतः प्राणभृत्! **तीव्राः** निशिताः, अविरतशीघ्रक्षरणशालिन इत्यर्थः (तिज निशाने, रक्, दीर्घत्वं, जस्य वः) **इमे सोमासः** सोमाः

**सुताः** अभिषुताः । ते **आशीर्वन्तः** दयाशिरः व्याख्यातम् (१-५-५) । **आ गहि** आगच्छ तान् स्वीकर्तुम् । **प्रस्थितान्** क्षरणाय प्रवृत्तान् । सर्वं यजमानस्य अन्तरङ्ग-बहिरङ्गात्मकं शरीरं व्याप्य पूरयितुं प्रवर्तन्ते सोमाः । तान् **पिब** । वायुना सोमरसादानेनैव शरीरं धृतसम्मदभरं उत्तरदेवताकार्यविलसितस्य पानं भवेत् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**उभा देवा दिविस्पृशेन्द्रवायू हवामहे । अस्य सोमस्य पीतये ।। २ ।।**

उभा । देवा । दिविऽस्पृशा । इन्द्रवायूइति । हवामहे । अस्य । सोमस्य । पीतये ।। २ ।।

## ऋग्भाष्यम्

### ........सर्वदेवानां ज्ञानाधिक्यौ दिविस्पृशौ ।। २ ।।

**ऋग्भाष्यटीका– उभा** । द्वे ऐन्द्रवायव्यौ । अत्र दिविस्पृशेति व्याख्याति । **सर्वदेवानामिति** ।। निर्धारणे षष्ठ्येषा । द्यौरिति दीव्यतेर्द्युत्यर्थस्य गत्यर्थस्य वा रूपम् । उभयथापि ज्ञानवाचकम् । विषयसप्तमी चेयम् । ततश्च दिविस्पृशौ । ज्ञानसम्बन्धिनाविति लभ्यते । देवशब्द-सन्निधानसामर्थ्याच्च देवानां मध्य इत्यपि । ज्ञानेनाधिक्यं ययोरिति व्यधिकरणो बहुव्रीहिः । ज्ञानस्याधिक्यमिति तत्पुरुषाद्वाऽर्श आदिभ्योच् । आधिक्यग्रहणं निर्धारणसामर्थ्यलभ्यम् । **उभौ देवौ दिविस्पृशाविन्द्रवायू वयमस्य सोमस्य पीतये हवामहे** ।। २ ।।

**मन्त्रार्थमञ्जरी– द्वयोरिन्द्रवायू** देवते ।। उभा, उभौ । देवा, देवौ, क्रीडादिगुणयुक्तौ । दिविस्पृशौ, दीव्यतेः द्युत्यर्थस्य गत्यर्थस्य वा क्विपि रूपम्, विषयसप्तम्येषा, उभयथापि ज्ञानं तदर्थः, दिवि ज्ञानविषये स्पृशतः सम्बन्धीत इति दिविस्पृशौ ज्ञानाधिकौ । इन्द्रवायू (वयम्) अस्य सोमस्य पीतये हवामहे ।। २ ।।

**स्कन्द–** 'द्वृचोऽन्यस्त्वैन्द्रवायवः' (तु.बृदे ३,९४) । 'तीव्राः सोमासः' इत्यतोऽन्यः समनन्तर एव द्वृच इन्द्रवायुदेवतः । उभौ देवौ **दिविस्पृशा** दिविस्प्रष्टारौ । द्युलोकं गन्तारौ इत्यर्थः । **इन्द्रवायू हवामहे** । किमर्थम् । **अन्य सोमम्य पीतये** ।। २ ।।

**वेङ्कटमाधव–** उभौ देवौ द्युस्थानौ । इमौ हवामहे सोमपानायेति ।। २ ।।

**मुद्गल– दिविस्पृशा** द्युलोकवर्तिनौ **उभा देवा** द्वौ देवौ **इन्द्रवायू हवामहे** आह्वयामः । किमर्थम् । **अस्य सोमस्य पीतये** ।। २ ।।

**सायण– दिविस्पृशा** द्युलोकवर्तिनौ **उभा देवा** द्वौ देवौ **इन्द्रवायू हवामहे** आह्वयामः । किमर्थम् । **अस्य सोमस्य पीतये** । असकृत् व्याख्यातम् ।

उभा देवा । 'सुपां सुलुक्' इति आकारः । दिविस्पृशा । 'हृद्द्युभ्यां ङेरुपसंख्यानम्' (पा.सू.६-३-९१) इति सप्तम्या अलुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । इन्द्रवायू । इन्द्रश्च वायुश्च इति द्वन्द्वः । 'उभयत्र वायोः प्रतिषेधो वक्तव्यः' (पा.सू.६-३-२६.१) इति आनङो निषेधः । 'देवताद्वन्द्वे च' इति प्राप्तस्य उभयपदप्रकृतिस्वरत्वस्य 'नोत्तरपदेऽनुदात्तादौ' (पा.सू.६-२-१४२) इति निषेधात् समासान्तोदात्तत्वमेव शिष्यते । हवामहे । 'ह्वञ् स्पर्धायां शब्दे च' । 'बहुलं छन्दसि' इति संप्रसारणम् । 'सम्प्रसारणाच्च' इति परपूर्वत्वम् । शप् । गुणावादेशौ । शपः पित्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण पदस्य आद्युदात्तत्वे प्राप्ते 'तिङ्ङतिङः' इति आष्टमिको निघातः । अस्य । 'अडिदम्' इत्यादिना षष्ठ्या उदात्तत्वम् । पीतये । 'पा पाने' । 'स्थागापापचः' (पा.सू.३-३-९५) इति भावे तिन् । 'घुमास्था' इति ईत्वम् । व्यत्ययेनान्तोदात्तत्वम् ।। २ ।।

**सिद्धाञ्जनम्– दिविस्पृशा** दिविस्पृशौ (हृद्युभ्यां ङिः, सप्तम्या अलुक्) द्युलोकवर्तिनौ **उभा** उभौ **देवा** देवौ **इन्द्रवायू** इन्द्रं मनोधिदैवतं वायुं प्राणाधिदैवतं च **हवामहे** आह्वयामः । किमर्थम् ? **अस्य सोमस्य पीतये** स्पष्टम् । यद्यपि वायुमध्यमस्थानः इन्द्रसाहचर्यात् द्युस्थानः स्तूयते । प्रथमं वायुः इदानीं इन्द्रो वायुश्च सोमपानायाहूतौ । अथ मित्रावरुणौ च प्रस्तुती भवतः । अस्य सर्वस्य गूढं तात्पर्यं प्राक् प्रपञ्चितं मधुच्छन्दसः प्रथमानुवाकीय द्वितीयसूक्ते । तथा तृतीयानुवाके मरुत्वन्तमधिकृत्यापि यदुक्तं तदप्यत्रावधेयम् व्याख्यायमानेषु मन्त्रेषु ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रवायू मनोजुवा विप्रा हवन्त ऊतये । सहस्राक्षा धियस्पती ।। ३ ।।**

इन्द्रावायूइति । मनःऽजुवा । विप्राः । हवन्ते । ऊतये । सहस्रऽअक्षा । धियः । पतीइति ।। ३ ।।

## ऋग्भाष्यम्

**मनसः प्रेरकौ चैव बहुज्ञानौ धियस्पती ।। ३ ।।**

**ऋग्भाष्यटीका– इन्द्रवायू** । अत्र मनोजुवाविति व्याख्याति । **मनस इति** ।। जुवतिः प्रेरणार्थः सौत्रो धातुः । अर्थान्तरसमुच्चयार्थश्चशब्दः । मनोजुवौ मनोवेगिनौ । सहस्राक्षशब्दं व्याख्याति । **बहुज्ञानाविति** ।। सहस्रशब्दोऽपरिमितनाम । अक्षशब्देन च तज्जन्यसाक्षात्कारो लक्ष्यते । एकः सहस्राक्षः । अपरस्मिंल्लक्षणेति व्याख्यानं मुख्ये सत्ययुक्तमित्येव शब्देनाह । किं चास्मद्व्यख्याने धियस्पती इत्येतदपि हेतुत्वेन सङ्गच्छत इत्याशयेनाह । **धियस्पतीति** ।। **मनोजुवौ** सहस्राक्षौ **धियस्पती** इन्द्रवायू **विप्रा** मेधाविनः **ऊतये** रक्षायै **हवन्ते** आह्वयन्ति ।। ३ ।।

**मन्त्रार्थमञ्जरी– मनोजुवा,** मनोजुवौ, मनःप्रेरकौ, 'जु प्रेरणे' (सौत्रो धातुः), विच् (क्विप्) मनोवेगिनौ वा धातूनामनेकार्थत्वात् । धियः पती, बुद्धीनां स्वामिनौ, हेतुगर्भम् धीपतित्वात् सहस्राक्षा, सहस्राक्षौ, सहस्रशब्दोऽमितवाची, अक्षशब्दस्तज्जन्यसाक्षात्कारपरः, बहुज्ञानौ । इन्द्रवायू, विष्णुरूपविशेषौ, प्रसिद्धदेवौ वा । विप्राः, मेधातिथिप्रभृतयः । ऊतये, रक्षार्थम् । हवन्ते, आह्वयन्ति ।। ३ ।।

**स्कन्द– इन्द्रवायू मनोजुवा** जुवतिर्गतिकर्मा । मनोवच्छीघ्रगामिनौ । **विप्राः** मेधाविनो यष्टारः स्तोतारश्च **हवन्ते ऊतये** सोमेन तर्पणाय पालनाय वा । **सहस्राक्षा** सहस्रमक्ष्णां ययोस्तौ सहस्राक्षौ । केवलस्यापि चेन्द्रस्य सहस्राक्षत्वे साहचर्यादुभयोरिन्द्रवाय्वोः सहस्राक्षत्वव्यपदेशः । **धियः पती** कर्मणः प्रज्ञाया वा पालयितारौ स्वामिनौ वा ।। ३ ।।

**वेङ्कटमाधव–** इन्द्रवायू मनोवेगौ मेधाविनः **हवन्ते** रक्षणाय अनेकदर्शनौ कर्मपती ।। ३ ।।

**मुद्गल– विप्राः** मेधाविनः ऋत्विग्यजमानाः **ऊतये** रक्षणार्थम् **इन्द्रवायू हवन्ते** आह्वयन्ति । कीदृशौ । **मनोजुवा** मन इव वेगयुक्तौ **सहस्राक्षा** सहस्रनयनयुक्तौ । यद्यपि इन्द्र एव सहस्राक्षः तथापि छत्रिन्यायेन वायुरपि तथोच्यते । **धियः पती** कर्मणः पालकौ ।। ३ ।।

**सायण– विप्राः** मेधाविनः ऋत्विग्यजमाना **ऊतये** रक्षणाथम् **इन्द्रवायू हवन्ते** आह्वयन्ति ।

कीदृशौ मनोजुवौ मन इव वेगवत्तरौ **सहस्राक्षा** सहस्रनयनयुक्तौ । यद्यपि इन्द्र एव सहस्राक्षः तथापि छत्रिन्यायेन वायुरपि तथोच्यते । **धियस्पती** कर्मणः बुद्धेर्वा पालकौ । **मनोजुवा** । जवतिर्गतिकर्मा । मनोवत् जवतः इति मनोजुवा मन इव वेगयुक्तौ । कृदुत्तरपदप्रकृतिस्वरत्वम् । 'सुपां सुलुक् 'इति आकारः ।

विप्राः । औणादिको रन् । रन्प्रत्ययान्तः आद्युदात्तः । ऊतये । 'ऊतियूति' इत्यादिना क्तिनः उदात्तत्वम् । सहस्राक्षा । सहस्रम् अक्षीणि ययोस्तौ । 'बहुव्रीहौ सक्थ्यक्ष्णोः' (पा.सू.५-४-११३) इति पच् समासान्तः । बहुव्रीहिस्वरे प्राप्ते समासान्तप्रत्ययस्य सतिशिष्टत्वात् 'चितः' इत्यन्तोदात्तत्वम् । धियः । 'सावेकाच' इति ङस उदात्तत्वम् । 'षष्ठ्याः पतिपुत्र' इति संहितायां विसर्जनीयस्य सकारः । पती । डत्यन्तः आद्युदात्तः ।। ३ ।।

**सिद्धाञ्जनम्– मनोजुवा** मनोजुवौ मनोवद्गतिमन्तौ (जुवतिर्गतिकर्मा) **इन्द्रवायू** उभौ देवौ **विप्राः** विपश्चितः **ऊतये** वृद्धये **हवन्ते** आह्वयन्ति । कथंभूतौ ? **सहस्राक्षा** सहस्रं अक्षीणि ययोस्तौ, बहुदर्शिनः सहस्राक्षस्येन्द्रस्य साहचर्यात् वायोरपि सहस्राक्षत्वम् । **धियः** धारणात्मिकायाः प्रज्ञायाः **पती** पालकौ, अत्रापि इन्द्रसाहचर्यं हेतुः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**मि॒त्रं व॒यं ह॑वामहे॒ वरु॑णं॒ सोम॑पीतये । ज॒ज्ञा॒ना पू॒तद॑क्षसा ।। ४ ।।**

मि॒त्रम् । व॒यम् । ह॒वा॒म॒हे॒ । वरु॑णम् । सोम॑ऽपीतये । ज॒ज्ञा॒ना । पू॒तऽद॑क्षसा ।। ४ ।।

## ऋग्भाष्यम्

### जज्ञानौ व्यज्यमानौ तु यजमानस्य शोधकौ ।। ४ ।।

**ऋग्भाष्यटीका– मित्रम्** । तृचो मैत्रावरुणः । जज्ञाना पूतदक्षसेति पदद्वयं क्रमेण व्याख्याति । **जज्ञानाविति** ।। **वयं मित्रं वरुणं** च **सोमपीतये हवामहे** । यावाहूतौ जज्ञासौ यज्ञेषु व्यज्यमानौ भवतः । व्यक्तौ पूतदक्षसौ पूतो दक्षो यजमानो याभ्यां तौ तथोक्तौ ।।४।।

**मन्त्रार्थमञ्जरी–** तृचो मैत्रावरुणः । वयम् मित्रम् वरुणम् (च) सोमपीतये हवामहे । (यौ) आहूतौ । जज्ञाना, जज्ञानौ, यज्ञेषु व्यक्तौ भवतः । व्यक्तौ च पूतदक्षसा, पूतदक्षसौ,

पूतो दक्षो यजमानो याभ्यामिति तथोक्तौ, यजमानं पूतं कृतवन्तावित्यर्थः । 'जनी प्रादुर्भावे' इत्यतो लिटि द्विर्वचने लिटः कानचि 'गमहनजन' इत्युपधालोपे 'जज्ञान' इति रूपं ज्ञेयम् ॥ ४ ॥

**स्कन्द–** 'तृचो मित्रावरुणाभ्याम्' (बृ.दे.३-९४) । तृचोऽयं मित्रावरुणदेवतः । **मित्रम् वयम् हवामहे वरुणम्** च । किमर्थम् । **सोमपीतये** । कीदृशौ । **जज्ञाना** जायमानावेव **पूतदक्षसा** शुद्धबलौ ॥ ४ ॥

**वेङ्कटमाधव–** **वयम्** मित्रावरुणौ प्राज्ञौ शुद्धबलौ सोमपानाय **हवामहे** इति ॥ ४ ॥

**मुद्गल–** **वयम्** अनुष्ठातारः **सोमपीतये** सोमपानार्थम् । **मित्रम्** वरुणम् चोभौ **हवामहे** आह्वयामः । कीदृशौ उभौ । **जज्ञाना** कर्मदेशे प्रादुर्भवन्तौ **पूतदक्षसा** शुद्धबलौ ॥ ४ ॥

**सायण–** चतुर्विंशकेऽहनि प्रातःसवने मैत्रावरुणशस्त्रे 'मित्रं वयं हवामहे' इति तृचः षडहस्तोत्रियः । 'चतुर्विंशे' इति खण्डे सूत्रितम्- 'आ नो मित्रावरुणा मित्रं वयं हवामहे' (आश्व.श्रौ.७-२) इति । अभिप्लवषडहेऽपि प्रातःसवने मैत्रावरुणस्यायं तृचः आवापार्थः । 'अभिप्लवपृष्ठ्याहानि' इति खण्डे सूत्रितम्-'परिशिष्टानावापानुद्धृत्य मित्रं वयं हवामहे' (आश्व.श्रौ.७-५) इति । मैत्रावरुणस्य 'मित्रं वयं हवामहे' इत्येषा प्रातःसवने प्रस्थितयाज्या । 'प्रशास्ता ब्राह्मणाच्छंसी' इत्युपक्रम्य 'इदं ते सोम्यं मधु मित्रं वयं हवामहे' (आश्व.श्रौ.५-५) इति सूत्रितम् ।

**वयम्** अनुष्ठातारः **सोमपीतये** सोमपानार्थं **मित्रं वरुणं** च उभौ आह्वयामः । कीदृशावुभौ । **जज्ञाना** कर्मप्रदेशे प्रादुर्भवन्तौ **पूतदक्षसा** शुद्धबलौ ।

वरुणम् । 'वृञ् वरणे' । 'कृवृदारिभ्य उनन्' (उ.सू.३-३३३) । नित्वादाद्युदात्तः । सोमपीतये । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । जज्ञाना । 'जनी प्रादुर्भावे' । 'छन्दसि लिट्' (पा.सू.३-२-१०५) । तस्य 'लिटः कानज्वा' (पा.सू.३-२-१०६ ) इति कानजादेशः । 'गमहन' इत्यादिना उपधालोपः । तस्य 'अचः परस्मिन्' इति स्थानिवद्भावात् जनशब्दस्य द्विर्वचनम् । 'स्तोः श्चुना श्चुः' (पा.सू.८-४-४०) इति नकारस्य प्रकारः । 'चितः'

इत्यन्तोदात्तत्वम् । पूर्ववत् आकारः । पूतदक्षसा । 'पूञ् पवने' । 'निष्ठा' इति क्तः । 'श्र्युकः किति' (पा.सू.७-२-११) इति इट्प्रतिषेधः । पूतं दक्षो ययोस्तौ । 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** **वयं** यजमानाः **सोमपीतये** सोमपानार्थं **मित्रं वरुणम्** उभौ च **हवामहे** आह्वयामः । कीदृशौ ? **जज्ञाना** जायमानौ यजमाने जन्म लभमानौ । **पूतदक्षसा** पवित्रधीकौशलौ (शब्दद्वयं च प्राग्व्याख्यातम्) ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती । ता मित्रा वरुणा हुवे ।। ५,८ ।।**

ऋतेन । यौ । ऋतऽवृधौ । ऋतस्य । ज्योतिषः । पतीइति । ता । मित्रावरुणा । हुवे ।।

## ऋग्भाष्यम्

**परेण ब्रह्मणा तस्मिन्वृद्धौ सत्यपती सदा ।**
**सत्यं ज्योतिः प्रकाशत्वात्तौ मित्रावरुणौ हुवे ।। ५,८ ।।**

**ऋग्भाष्यटीका–** **ऋतेन यौ** । परेण यावृतेन सकलवेदावगतेन ज्ञानरूपेण वा परेण ब्रह्मणा **ऋत वृधौ** ऋतेतस्मिन्नेव ब्रह्मणि वृद्धौ ऋतस्य **पती** सत्यपती । तौ मित्रावरुणावहं **हुवे** । परमेश्वरविषये वृद्धिः कादाचित्की न सम्भवतीत्यतः सदेत्युक्तम् । **ऋतस्य** ज्योतिष इति सामानाधिकरण्यम् । तत्र सत्यस्य ज्योतिष्ट्वं कथमित्यत आह । **सत्यमिति** ।। प्रकाशत्वात् प्रसिद्धत्वात् । सत्यमेव हि प्रमाणप्रसिद्धं भवति ।। ५,८ ।।

**मन्त्रार्थमञ्जरी–** **यौ** । ऋतेन, सकलवेदावगतेन, ज्ञानरूपेण वा, 'ऋ गतौ' इत्यतः कर्मणि भावे वा क्तः, परब्रह्मणा । ऋतवृधौ, ऋते ब्रह्मणि वृधौ वृद्धिमन्तौ । ज्योतिषः, प्रकाशरूपस्य, प्रमाणसिद्धस्येति यावत् । ऋतस्य, सत्यस्य । पती । ता, तौ । मित्रावरुणा, मित्रावरुणौ । (अहम्) हुवे, आह्वयामि । विष्णुविषये तु 'ऋतेन, ऋतवृधौ' इत्यनयोः 'ऋतेन मित्रावरुणा' इत्यत्रेवार्थो ध्येयः ।। ५ ।।

**स्कन्द– ऋतेन** उदकेन यज्ञेन वा **यौ ऋतावृधौ** यज्ञस्योदकस्य वा वर्धयितारौ ऋतस्य यज्ञस्योदकस्य वा **ज्योतिषः पती** । अथवा ऋतस्य ज्योतिष इति समानाधिकरणे । ऋगतौ । सर्वत्र गतस्य रश्म्याख्यस्य ज्योतिषः पती । तौ मित्रावरुणौ **हुवे** ।। ५ ।।

**वेङ्कटमाधव–** सत्येन यौ सत्यस्य वर्धयितारौ सत्यस्य ज्योतिषः **पती** तौ मित्रावरुणौ **हुवे** ।। ५ ।।

**मुद्गल– यौ** मित्रावरणौ **ऋतेन** सत्यवचनेन यजमानानुग्रहकारिणा **ऋतावृधौ** ऋतमवश्य-भावितया सत्यं कर्मफलं तस्य वर्धकौ । **ऋतस्य** सत्यस्य प्रशस्तस्य **ज्योतिषः** प्रकाशस्य **पती** पालकौ **ता मित्रावरुणा** तथाविधौ मित्रावरुणौ **हुवे** आह्वयामि ।। ५ ।।

**सायण– यौ** मित्रावरुणौ **ऋतेन** सत्यवचनेन यजमानानुग्रहकारिणा **ऋतावृधौ** ऋतम् अवश्यंभावितया सत्यं कर्मफलं तस्य वर्धकौ । **ऋतस्य** सत्यस्य प्रशस्तस्य **ज्योतिषः** प्रकाशस्य **पती** पालकौ । श्रुत्यन्तरे मित्रावरुणयोः अदितिपुत्रत्वेन श्रुतत्वात् द्वादशादित्येष्वन्तर्भूतत्वेन ज्योतिष्पालकत्वं युक्तम् । श्रुत्यन्तरे च 'अष्टौ पुत्रासो अदितेः' इत्युपक्रम्य' 'मित्रश्च वरुणश्च' (तै.आ.१-१३.२-३) इत्यादिकमाम्नातम् । **ता मित्रावरुणा** तथाविधौ मित्रावरुणा **हुवे** आह्वयामि ।

ऋतावृधौ । 'वृधु वृद्धौ' । 'क्विप् च' इति क्विप् । 'अन्येषामपि दृश्यते' इति दीर्घः । कृदुत्तरपदप्रकृतिस्वरत्वम् । ज्योतिषः । 'द्युत दीप्तौ' । 'श्रुतेरिसिन्नादेश्च जः' (उ.सू.२-२६७) इति इसिन्प्रत्ययः । नित्वादाद्युदात्तः । 'षष्ठ्याः पतिपुत्र' इति संहितायां विसर्जनीयस्य सत्वम् । मित्रावरुणा । 'देवताद्वन्द्वे च' (पा.सू.६-३-२६) इति आनङ् । 'देवताद्वन्द्वे च' (पा.सू.६-२-१४१ ) इति उभयपदप्रकृतिस्वरत्वम् । 'सुपां सुलुक्' इति पूर्वसवर्णदीर्घ आकारः । हुवे । हे । आत्मनेपदोत्तमपुरुषैकवचने संप्रसारणे परपूर्वत्वे च कृते 'बहुलं छन्दसि' इति यो लुक् । टेः एत्वम् । गुणे प्राप्ते 'क्ङिति च' (पा.सू.१-१-५) इति प्रतिषेधः । उवङादेशः । 'तिङ्ङतिङः' इति निघातः ।। ५,८ ।।

**सिद्धाञ्जनम्– यौ ऋतेन** सत्येन (स्वात्मीयेन) **ऋतवृधौ** यजमाने सत्यस्य वर्धयितारौ, **ऋतस्य** सत्यस्य **ज्योतिषः** (बृहच्छब्दप्रतिपादितस्य उत्तमस्य) **पती** पालकौ भवतः, **ता** तौ **मित्रावरुणा** मित्रावरुणौ **हुवे** आह्वयामि । मित्रावरुणविचारः प्राक् कृतः ।। ५,८ ।।

।। इति प्रथमस्य द्वितीयेऽष्टमो वर्गः ।।

## ।। अथ नवमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः । करतां नःसुराधसः ।। ६ ।।**

वरुणः । प्रऽअविता । भुवत् । मित्रः । विश्वाभिः । ऊतिऽभिः । करताम् । नः । सुऽराधसः ।। ६ ।।

## ऋग्भाष्यम्

### संसिद्धान्कुरुतां नस्तौ.............।। ६ ।।

**ऋग्भाष्यटीका– वरुणः** । अत्रोत्तरार्धं व्याख्याति । **संसिद्धानिति** ।। **वरुणो विश्वाभिरूतिभिः** सर्वाभि रक्षाभिः **प्राविता** प्रकर्षेणास्माकं रक्षको **भुवत्** भवेत् । तथा मित्रश्च । किञ्च तौ मित्रावरुणौ । **नो**ऽस्मान् **सुराधसः** शोभनसिद्धिमतः । संसिद्धान् **करतां** कुरुताम् ।। ६ ।।

**मन्त्रार्थमञ्जरी– वरुणः** मित्रः (च) विश्वाभिः ऊतिभिः, सर्वाभी रक्षाभिः । प्राविता, प्रकर्षेणास्माकं रक्षकः । भुवत्, भवेत्, प्रत्येकमन्वयः, 'भूः सत्तायाम्' लेट्, शविकरणोवङादेशौ, तिप इकारलोपः । किं च, (तौ) मित्रावरुणौ । नः, अस्मान् । सुराधसः, शोभनसिद्धिमतः । करतां, कुरुतां, शब्विकरणं छान्दसम् ।। ६ ।।

**स्कन्द– वरुणः प्राविता** प्रकर्षेण रक्षिताऽस्माकम् **भुवत्** भवतु । **मित्रः च विश्वाभि ऊतिभिः** सर्वैः पालनैः **करताम्** कुरुतां च **नः** अस्मान् **सुराधसः** सुधनान् ।। ६ ।।

**वेङ्कटमाधव– वरुणः** प्रकर्षेण रक्षकः भवतु मित्रः च विश्वैः पालनैः । तौ अस्मान् कुरुतां च स्वन्नान् ।। ६ ।।

**मुद्गल–** अयम् **वरुणः** अस्माकम् **प्राविता भुवत्** प्रकर्षेण रक्षको भवतु । **मित्रः च विश्वामि ऊतिभिः** सर्वाभिः रक्षाभिः प्राविता भुवत् । तावुभावपि न अस्मान् **सुराघसः** प्रभूतधनयुक्तान् **करताम्** कुरुताम् ।। ६ ।।

**सायण–** अयं **वरुणः** अस्माकं **प्राविता भुवत्** प्रकर्षेण रक्षको भवतु । **मित्रः** च **विश्वाभिरूतिभिः** सर्वाभिः रक्षाभिः प्राविता भुवत् । तावुभावपि **नः** अस्मान् **सुराधसः** प्रभूनधनयुक्तान् **करतां** कुरुताम् ।

अविता । नृचश्चित्वादन्तोदात्तत्वम् । प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते । भुवन् । 'भू सत्तायाम्' । लेटस्तिप् । 'लेटोऽडाटौ' इति अडागमः । 'इतश्च लोपः' इति इकारलोपः । 'बहुलं छन्दसि' इति शपो लुक् । गुणे प्राप्ते 'भूसुवोस्तिङि' (पा.सू.७-३-८८) इति प्रतिषेधः । उवादेशः । 'तिङ्ङतिङः' इति निघातः । विश्वाभिः । 'अशिषि' इत्यादिना क्वनन्तो विश्वशब्द आद्युदात्तः । टाप्सुपोः अनुदात्तत्वात् तदेव शिष्यते । ऊतिभिः । 'ऊतियूति' इत्यादिना क्तिन् उदात्तः । करताम् । 'कृञ् करणे' । भौवादिकः । लोटस्तस् । तसस्ताम् । कर्तरि शप् । गुणो रपरत्वम् । शपः पित्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । सुराधसः । 'राध साध संसिद्धौ' । राध्नोति अनेन इति राधः धनम् । शोभनं राधः येषां ते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वं प्राप्तं 'सोर्मनसी अलोमोषसी' (पा.सू.६-२-११७) इत्युत्तरपदाद्युदात्तत्वेन बाध्यते ।। ६ ।।

**सिद्धाञ्जनम्–** **वरुणः** देवः अस्माकं **प्राविता** प्रकर्षेण वर्धयिता **भुवत्** भवतु लेट् छान्दसः, **मित्रः** देवश्च **विश्वाभिः** सर्वाभिः **ऊतिभिः** अभिवृद्धिभिः प्राविता भवतु । उभौ च **नः** अस्मान् **सुराधसः** शोभनं राधो धनं येषां तान् **करताम्** कुरुताम् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**मरुत्वन्तं हवामह इन्द्रमा सोमपीतये । सजूर्गणेन तृम्पतु ।। ७ ।।**

मरुत्वन्तम् । हवामहे । इन्द्रम् । आ । सोमऽपीतये ।। सऽजूः । गणेन । तृम्पतु ।। ७ ।।

## ऋग्भाष्यम्

**.................सगणस्तृप्यतां हरिः ।। ७ ।।**

**ऋग्भाष्यटीका– मरुत्वन्तम्** । तृचो मरुत्वतीयः । अत्रोत्तरार्धं व्याख्याति । **सगण इति** ।। वयं **मरुत्वन्तं** मरुद्भिः सहितमिन्द्रम् । **सोमपीतये आ हवामहे** । आहूतश्चेन्द्रो हरिः **गणेन** मरुद्गणेन । **सजूः** सह सगणः **तृम्पतु** तृप्यताम् ।। ७ ।।

**मन्त्रार्थमञ्जरी–** तृचो मरुत्वतीयः (ऐन्द्रः) (वयम्) मरुत्वन्तम्, मरुद्भिः सहितम् । इन्द्रं सोमपीतये आ हवामहे । आहूतश्च (इन्द्रः) गणेन, मरुद्गणेन । सजूः, सहगणः । तृम्पतु, तृप्यतां, 'तृम्प तृप्तौ' शविकरणम् ।। ७ ।।

**स्कन्द–** 'तथेन्द्राय मरुत्वते' (बृ.दे.३-९४) । यथैव मित्रावरुणाभ्यां तृचः तयैवेन्द्रायाऽपि मरुत्वते तृचः एव । **मरुत्वन्तम्** मरुद्भिः सहितम् **हवामहे इन्द्रम्** । आकारस्तु पदपूरणो वा हवामहे इत्याख्यातेन वा सम्बन्धयितव्यः । अर्वाचि वा अर्वाग्धवामहे इति । किमर्थम् । **सोमपीतये** । एतज्ज्ञात्वा **सजूः** जुषी प्रीतिसेवनयोः । सम्प्रीयमाणः **गणेन** मरुद्गणेन सह **तृम्पतु** तृप्यतु ।। ७ ।।

**वेङ्कटमाधव–** मरुद्भिः सहितम् इन्द्रम् आ हवामहे सोमपानाय । सः मरुद्गणेन सहितः सोमेन तृप्यतु ।। ७ ।।

**मुद्गल– मरुत्वन्तम्** मरुद्भिर्युक्तम् **इन्द्रम् सोमपीतये** सोमपानाय **आ हवामहे** आह्वयामः । स चेन्द्रः **गणेन** मरुत्समूहेन **सजूः** सह **तृम्पतु** तृप्तो भवतु ।। ७ ।।

**सायण– मरुत्वन्तम्** मरुद्भिर्युक्तम् **इन्द्रम् सोमपीतये** सोमपानाय **आ हवामहे** आह्वयामः । स च इन्द्रः **गणेन** मरुत्समूहेन **सजूः** सह **तृम्पतु** तृप्तो भवतु ।

मरुत्वन्तम् । मरुतः अस्य सन्तीति मरुत्वान् । 'झयः' (पा.सू.८-२-१०) इति मतुपो वत्वम् । 'तसौ मत्वर्थे' (पा.सू.१-४-१९) इति भसंज्ञायां पदसंज्ञाया बाधितत्वात् जत्वाभावः । मतुप्सुपौ पित्वादनुदात्तौ । ननु 'ह्रस्वनुड्भ्यां मतुप्' (पा.सू.६-१-१७६) इति मतुप उदात्तत्वेन भवितव्यं, 'स्वरविधौ व्यञ्जनमविद्यमानवत्' (परिभा.७९) इति तकारस्य अविद्यमानवत्वेन ह्रस्वात् परत्वात् । न । 'ह्रस्वनुड्भ्याम्' इत्यत्र नुड्ग्रहणसामर्थ्यात् अविद्यमानपरिभाषा नाश्रीयते इति वृत्तावुक्तम् (का.६-१-१७६ ) । अतो मरुच्छब्दस्य स्वर एव शिष्यते । सजूः । 'जुषी

प्रीतिसेवनयोः' । सम्पदादिलक्षणः क्विप् । समाना प्रीतिः यस्य इति बहुव्रीहिः । 'समानस्य च्छन्दसि' इति सभावः । 'ससजुषो रुः' (पा.सू.८-२-६६) इति रुत्वम् । 'र्वोरुपधायाः' (पा.सू.८-२-७६) इत्युपधादीर्घः । बहुव्रीहिस्वरे प्राप्ते 'त्रिचक्रादीनां छन्दसि' (पा.सू.६-२-१९९-१) इत्युत्तरपदान्तोदात्तत्वम् । तृम्पतु । 'तृपं तृम्प तृप्तौ' । 'तुदादिभ्यः शः'। 'शे तृम्पादीनाम्' (पा.सू.७-१-५९.१) इति नुमागमः ।। ७ ।।

**सिद्धाञ्जनम्–** अथ तृचस्य मरुत्वानिन्द्रो देवता । **मरुत्वन्तं** मरुद्गणविशिष्टं (मरुतोऽस्य सन्तीति मतुपो वत्वम्) **इन्द्रं सोमपीतये** सोमपानाय **आ हवामहे** आह्वयामः । स इन्द्रः **गणेन** मरुद्गणेन सह **सजूः** समानप्रीतियुक्तः **तृम्पतु** तृप्तो भवतु (तृप तृम्प तृप्तौ, लोट्)। सजूः-जुषी प्रीत्यर्थे, सम्पदादिलक्षणः क्विप्, समानस्य सभावः, बहुव्रीहिः । पूर्वपदप्रकृतिस्वरो बाधितः उत्तरपदान्तोदात्तेन । इन्द्रस्य समरुद्गणस्य माधुच्छन्दसे सूक्ते प्रसक्तिः स्मार्या ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवम् ।। ८ ।।**

इन्द्रऽज्येष्ठाः । मरुत्ऽगणाः । देवासः । पूषऽरातयः । विश्वे । मम । श्रुत । हवम् ।। ८ ।।

## ऋग्भाष्यम्

### पूषा पूर्णत्वतो विष्णुस्तन्मित्राः पूषरातयः ।। ८ ।।

**ऋग्भाष्यटीका– इन्द्रज्येष्ठाः** । पूषरातय इत्यस्यार्थमाह । **पूषेति** ।। 'पुष पुष्टौ' । समित्रं येषां ते तन्मित्राः । हे **इन्द्रज्येष्ठाः** इन्द्रो ज्येष्ठो येषान्ते इन्द्रज्येष्ठाः । पूषा विष्णुः रातिर्मित्रं येषां ते **पूषरातयो** मरुद्गणाः । सप्तसप्तका हि ते इति बहुवचनम् । **देवासो** देवाः । **विश्वे** सर्वे । **मम हवम्** आह्वानं **श्रुत** शृणुत ।। ८ ।।

**मन्त्रार्थमञ्जरी– इन्द्रज्येष्ठाः,** इन्द्र एव ज्येष्ठो येषां ते तथा । पूषरातयः, पुष्टत्वात्पूषा विष्णूरातिर्मित्रं येषां ते तथोक्ताः । मरुद्गणाः, सप्तसप्तकतया स्थितत्वेन हेतुना मरुत्समूहभूताः । (हे) देवासः, देवाः । विश्वे, सर्वे । (यूयम्) मम । हवम्, आह्वानम् । श्रुत, शृणुत, 'श्रु श्रवणे' व्यत्ययेन लुग्विकरणम्, लोट् ।। ८ ।।

**स्कन्द–** ज्येष्ठशब्दः प्रधानवचनः । इन्द्रः प्रधानभूतो येषां त इन्द्रज्येष्ठाः । हे **इन्द्रज्येष्ठाः** मरुद्गणाः! सप्तसप्तका मरुतां गणाः, तदपेक्षमेतद्बहुवचनम् । **देवासः पूषरातयः विश्वे** सर्वे **मम श्रुत** शृणुत **हवम्** आह्वानम् ।। ८ ।।

**वेङ्कटमाधव–** इन्द्रनेतृकाः पूषज्ञातिकाः मरुतः देवाः । ते सर्वे **मम** शृणुत ह्वानम् ।। ८ ।।

**मुद्गल–** हे **देवासः!** इन्द्रमरुद्रूपाः **विश्वे** सर्वे यूयम् **मम हवम्** आह्वानम् **श्रुत** शृणुत । कीदृशाः । **इन्द्रज्येष्ठाः** इन्द्रो ज्येष्ठो मुख्यो येषु ते तथाविधाः **मरुद्गणाः** मरुत्समूहरूपाः **पूषरातयः** पूषाख्यो वेदो रातिर्दाता येषाम् इन्द्रमरुतां ते ।। ८ ।।

**सायण–** हे **देवासः!** इन्द्रमरुद्रूपाः **विश्वे** सर्वे यूयं **मम हवम्** आह्वानं **श्रुत** शृणुत । कीदृशाः । **इन्द्रज्येष्ठाः** । इन्द्रो ज्येष्ठो मुख्यो येषु ते तथाविधाः **मरुद्गणाः** मरुत्समूहरूपाः । **पूषरातयः** । पूषाख्यो देवो रातिः दाता येषाम् इन्द्रमरुतां ते पूषरातयः ।

इन्द्रज्येष्ठाः । आमन्त्रिताद्युदात्तत्वम् । पादादित्वादनिघातः । मरुद्गणाः । 'विभाषितं विशेषवचने बहुवचनम्' (पा.सू.८-१-७४) इति पूर्वस्याविद्यमानवत्त्वादनिघातः। देवासः पूषरातयः । पूर्ववत् । श्रुत । 'श्रु श्रवणे'। लोण्मध्यमबहुवचनं । 'तस्थस्थमिपाम्' (पा.सू.३-४-१०१) इति तादेशः । व्यत्ययेन शप् । 'बहुलं छन्दसि' इति शपो लुक् । 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते– 'क्ङिति च' इति प्रतिषेधः । 'द्व्यचोऽतस्तिङः' इति दीर्घः । हवम् । 'ह्वे स्पर्धायां शब्दे च' । 'भावेऽनुपसर्गस्य' (पा.सू.३-३-७५) इति अप् । संप्रसारणं परपूर्वत्वं गुणावादेशौ । पित्वादनुदात्तत्वम् । धातुस्वरः शिष्यते ।। ८ ।।

**सिद्धाञ्जनम्–** **इन्द्रज्येष्ठाः** इन्द्रो ज्येष्ठो मुख्यो येषां ते **मरुद्गणाः** गणरूपा गरुत्समूहाः **पूषरातयः** पूषा पोषको देवः पूषाख्यः रातिः दाता येषां ते (पूष्णो देवस्य प्रभावात् यजमानस्य पोषे सति मरुद्गणप्रादुर्भावो भवति, तस्मात् स दाता 'रातिः' उक्तः) **विश्वे** सर्वेऽपि हे **देवासः** देवाः **मम हवं** आह्वानं **श्रुत** शृणुत (छान्दसः संहितायां दीर्घः, लोट्, मध्यमपुरुषबहुवचनम्, शप् व्यत्ययेन, अन्यच्च छान्दसम्) ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**ह॒त वृ॒त्रं सु॑दानव॒ इन्द्रे॑ण॒ सह॑सा यु॒जा । मा नो॑ दुः॒शंस॑ ईशत ॥ ९ ॥**

ह॒त । वृ॒त्रम् । सु॒ऽदा॒न॒वः॒ । इन्द्रे॑ण । सह॑सा । यु॒जा । मा । नः॒। दुः॒ऽशंसः॑ । ई॒श॒त ॥ ९ ॥

## ऋग्भाष्यम्

**सहसा बलरूपेण शक्रेण सहिताः सुराः ।**
**मदज्ञानं हतातीव दानशीला न शक्नुयात् ।**
**दुर्वाक्तद्वान्पुमान्वा नो............... ॥ ९ ॥**

**ऋग्भाष्यटीका–** **हत** । सहसा । हे **सुदानवः**! 'दाण् दाने' । अस्मात्ताच्छीलिको नुः । अतीवदानशीलाः सुराः मरुतः **सहसा** बलरूपेण बलवता बलाभिमानिना च **इन्द्रेण युजा** सता शक्रेण सहिता इति यावत् । **वृत्रं** सम्यग्ज्ञानावरणत्वादज्ञानम् । अभ्यर्हितत्वान्मदज्ञानम् । **हत** नाशयत । किञ्च । **दुःशंसो** दुष्टं शंसनं दुर्वाक् । यद्वा दुष्टः शंसो यस्यासौ दुःशंसः दुर्वाग्वान्पुमान् **नो**ऽस्माकं **मा ईशत** न शक्नुयात् । अज्ञानमुत्पादयितुं शक्तो न भवेत् ॥ ९ ॥

**मन्त्रार्थमञ्जरी–** (हे) **सुदानवः**, अतीव दानशीला मरुतः, सुपूर्वात् 'दाण् दाने' इत्यतस्ताच्छीलिको नुप्रत्ययः । सहसा, बलेन बलाभिमानिना च । इन्द्रेण । युजा, युक्तेन सता, शक्रेण सहिता इति यावत् । वृत्रम्, सम्यग्ज्ञानावरकत्वादज्ञानम्, अभ्यर्हितत्वान्मदज्ञानम् । हत, नाशयत, 'हन हिंसागत्योः' लोट् । किं च, दुःशंसः, दुर्दुष्टं शंसः शंसनं वचो दुर्वाक्, यद्वा– दुष्टः शंसो वाग्यस्यासौ दुःशंसो दुर्वाग्वान्पुमान् । नः, अस्माकम् । मा ईशत, न शक्नुयात्, अज्ञानमुत्पादयितुं शक्तो माभूदिति, 'ईश ऐश्वर्ये' लुङ्, च्लेरङि रूपम्, माङ्योगादाडभावः ॥ ९ ॥

**स्कन्द–** **हत वृत्रम्** असुरमस्मच्छत्रुं वा हे **सुदानवः**! शोभनदाना मरुतः । **इन्द्रेण** सहयोगलक्षणैषा तृतीया । इन्द्रेण सह । कीदृशेन । **सहसा** बलनामैतत् (तु.निष.२-९) । सामर्थ्याच्चान्तर्णीतमत्वर्थम् । बलवता **युजा** सहायेन । **मा** च **नः** अस्माकं युष्मत्प्रसादेन **दुःशंसः** दुराशंसः क्रूराभिप्रायः **ईशत** ईशो भवेत् ॥ ९ ॥

**वेङ्कटमाधव–** **हत** वृत्रासुरं सुदानाः! **इन्द्रेण** सहायेन बलवता सह । **मा** अस्माकं दुर्वचनो वृत्रः ईशिष्टः ॥ ९ ॥

**मुद्गल–** हे **सुदानवः**! शोभनदानयुक्ता मरुद्गणाः! **सहसा** बलवता **युजा** योग्येन **इन्द्रेण** सह **वृत्रम्** शत्रुम् **हत** नाशयत । **दुःशंसः** दुष्टेन शंसनेन कीर्तनेन युक्तो वृत्रः **नः** अस्मान् प्रति **मा ईशत** समर्थो मा भूत् ॥ ९ ॥

**सायण–** हे **सुदानवः!** शोभनदानयुक्ताः मरुद्गणाः **सहसा** बलवता **युजा** योग्येन **इन्द्रेण** सह **वृत्रं** शत्रुं **हत** नाशयत । **दुःशंसः** दुष्टेन शंसनेन कीर्तनेन युक्तो वृत्रो **नः** अस्मान् प्रति **मा ईशत** समर्थो मा भूत् ।

हत । 'हन हिंसागत्योः' । लोटः थ । तस्य त । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'अनुदात्तोपदेश' (पा.सू.६-४-३७) इत्यादिना अनुनासिकलोपः । सुदानवः 'डुदाञ् दाने' । 'दाभाभ्यां नुः' (उ.सू.३-३१२) इति औणादिको नुप्रत्ययः । प्रादिसमासे आमन्त्रितनिघातः । युजा । 'युजिर् योगे' । 'ऋत्विक्' इत्यादिना क्विन् । 'सावेकाचः' इति तृतीयैकवचनस्योदात्तत्वम् । दुःशंसः । 'ईषद्दुःसुपु' (पा.सू.३-३-१२६) इति खल् । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । ईशत । 'ईश ऐश्वर्ये' । माङि लुङि प्राप्ते 'छन्दसि लुङ्लङ्-लिटः' इति व्यत्ययेन लङ् । तस्य 'बहुलं छन्दसि' इति शपो लुगभावः । 'न माङ्योगे' इति आडागमाभावः । 'तिङ्ङतिङः' इति निघातः ॥ ९ ॥

**सिद्धाञ्जनम्–** हे **सुदानवः** शोभनदानाः (दानुर्भानुरित्यौणादिको नुः) मरुद्गणाः, **सहसा** सहस्वता बलवता (अन्तर्गौतमत्वर्थः) **युजा** युक्तेन (युजिर्योगे, क्विन्) **इन्द्रेण** सह **वृत्रं** एतन्नामकमसुरं **हत** नाशयत (हन्तेः लोट्, मध्यमपुरुषबहुवचनम्) **दुःशंसः** दुराशंसः, दुष्टाभिप्रायः कोऽपि **नः** अस्मान् प्रति **मा ईशत** मा भूत् प्रभुः । 'ईश ऐश्वर्ये, छन्दसि लुङो लङ्, न माङ्योग इति अडभावः ॥ ९ ॥

## ऋक्संहिता पदपाठसहिता

**विश्वान्देवान्हवामहे मरुतः सोमपीतये । उग्रा हि पृश्निमातरः ॥ १०,९ ॥**

विश्वान् । देवान् । हवामहे । मरुतः । सोमऽपीतये । उग्राः । हि । पृश्निऽमातरः ॥ १०,९ ॥

## ऋग्भाष्यम्

**........................भारती पृश्निरुच्यते ।**
**गोरूपा च कचित्साऽभूत्तत्सुताश्चाखिलाः सुराः ।**
**अन्यत्रापि सुतास्तस्याः................।। १०,९ ।।**

**ऋग्भाष्यटीका–** **विश्वान्** । वैश्वदेवस्तृचः । अत्र पृश्निमातर इत्यस्यार्थमाह । **भारतीत्यादिना** ।। कथं भारती पृश्निरुच्यत इत्यत आह । **गोरूपा चेति** ।। पृश्निशब्दो हि गोनामसु पठ्यते । चशब्दो वक्ष्यमाणापेक्षया । कचित्काले कार्यविशेषार्थं वा । तत्सुता अखिलाः सुराः । तस्मात्पृश्निमातर इति शेषः । किंच । अन्यत्र वेदाद्यभिमानित्वेऽपि पृश्निशब्दो वागादिनामापि भवति । वयं **विश्वान्देवान्मरुतश्च सोमपीतये हवामहे** । कुतः । **हि** यस्मात् पृश्निर्गोरूपा वाग्रूपा द्युरूपा भारती माता येषां ते **पृश्निमातरो** विश्वेदेवाः **उग्राः** अप्रसह्याः शत्रुभिः ।।१०,९।।

**मन्त्रार्थमञ्जरी–** वैश्वदेवस्तृचः । (वयम्) विश्वान् देवान्, सर्वान्देवान् । मरुतः (च) सोमपीतये हवामहे । कुतः ? हि, यस्मात् । पृश्निमातरः, पृश्निर्गोरूपा वाग्रूपा च भारती माता येषां ते पृश्निमातरो विश्वे देवाः उग्राः, शत्रुभिरप्रसह्याः । **अतः इति** । कालविशेषे गोरूपासीद्भारती, अतः कारणाद्वेदाभिमानित्वाच्च गोवागुभयपर्यायपृश्निपदेनात्र भारत्युच्यते ।। १० ।।

**स्कन्द–** 'तृचो विश्वेषां देवानाम्' (बृ.दे.३-९८) । अत्र चाद्य पादो विश्वलिङ्गः शिष्टं मारुतम् । वक्ष्यति हि–

'बहुशस्तु वैश्वदेवेषु सन्त्यृच पादार्धर्चा द्वैपदास्त्रैपदाश्च ।
द्विप्रधाना अपि चैकप्रधाना बहुप्रधाना अपि वैश्वदेवे ।। (बृ.दे.४,८) इति ।

**विश्वान् देवान् हवामहे** एतावदेकं वाक्यम्, परं तु वाक्यान्तरम् । मरुतां विश्वैर्देवैः सह विशेषणविशेष्यभावस्य समुच्चयस्य चासम्भवात् साकाङ्क्षत्वाच्च परस्मिन् वाक्ये हवामहे इति पूर्वाद् वाक्यात् क्रियापदमनुवक्तव्यम् । **मरुतः** हवामहे । किमर्थम् । **सोमपीतये** । **उग्रा हि** हिशब्दो यस्मादर्थे । यस्मादुग्रा अप्रसह्याः शत्रुभिः । **पृश्निमातरः** पृश्निरिति द्युनाम । द्यौर्माता येषां मरुतां ते पृश्निमातरः । दिवः पुत्रा इत्यर्थः ।। १० ।।

**वेङ्कटमाधव–** वैश्वदेवस्तृच उक्तः । मरुत्सु च विश्वशब्दो दृश्यते । **विश्वान् देवान् मरुतः** च सोमपानाय **हवामहे** । उद्गूर्णाः हि **पृश्निमातरः** 'पृश्नियै वै पयसो मरुतो जाताः' (तु.तै.२,२,११,४) इति ब्राह्मणम् ।। १० ।।

**मुद्गल– मरुतः** मरुत्संज्ञकान् **विश्वान्** सर्वान् **देवान् सोमपीतये हवामहे** सोमपानार्थम् आह्वयामहे । ते च मरुत **उग्राः** शत्रुभिरसह्यबलाः **पृश्निमातरः** पृश्नेर्नानावर्णयुक्ताया भूमेः पुत्राः । हिशब्दः प्रसिद्धार्थः ।। १० ।।

**सायण– मरुतः** मरुत्संज्ञकान् **विश्वान्** सर्वान् **देवान् सोमपीतये हवामहे** सोमपानार्थम् आह्वयामः । ते च मरुतः **उग्राः** शत्रुभिरसह्यबलाः **पृश्निमातरः** पृश्नः नानावर्णयुक्ताया भूमेः पुत्राः । **हि**शब्दः प्रसिद्ध्यर्थः । सा च प्रसिद्धिः 'पृश्नेः पुत्राः ' (ऋ.सं.१-५८-५) इति मन्त्रान्तरादवगन्तव्या ।

पृश्निमातरः । पृश्निः माता येषां ते । पृश्निशब्दः 'घृणिपृश्नि' (उ.सू.४-४९२) इति उणादावाद्युदात्तो निपातितः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। १०,९ ।।

**सिद्धाञ्जनम्–** अथ मारुतस्तृचः । **मरुतः** मरुदाख्यान् **विश्वान् देवान्** इमान् गणान् **सोमपीतये** सोमपानाय **हवामहे** आह्वयामः । ते च मरुतः **उग्राः** प्रचण्डबलाः **पृश्निमातरः** पृश्निः चित्रवर्णा गौः माता येषां ते, पृश्नेः पुत्रा इत्यर्थः, **हि** प्रसिद्ध्यर्थे, मरुतः ऐन्द्रतेजोबलदीपिता धीवृत्तिविभवा अपि प्राधान्येन प्राणशक्त्युद्भवा नाडीबलसमर्धनप्रभावाः, ततो धीक्षेत्रं प्राप्ता इति बोध्यम्, प्रागुपन्यस्तम् । तेषां माता चित्रवर्णा गोः पृश्निशब्दवाच्येति चेदयं सङ्केतार्थः स्पष्टो भवति । प्राणशक्त्याविर्भावविलासक्षेत्रभूता अन्तर्हितधीवृत्तिरश्मिप्रसूः अदितिवदखण्डाकारान्तरिक्ष-स्थाना विविधाविष्कारकलासम्पन्ना सत्त्वमयी शक्तिर्माता मरुतां चित्रवर्णा गौः पृश्निरुच्यते ।। १०,९ ।।

।। इति प्रथमाष्टके द्वितीयाऽध्याये नवमो वर्गः ।।

## ।। अथ दशमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**जयंतामिव तन्यतुर्मरुतामेति धृष्णुया । यच्छुभं याथना नरः ।। ११ ।।**

जयंताम्ऽइव । तन्यतुः । मरुताम् । एति । धृष्णुऽया । यत् । शुभम् । याथन । नरः ।। ११ ।।

## ऋग्भाष्यम्

**......................जयतामिव तद्ध्वनिः ।**
**धैर्याद्याति यदा विष्णुं वायुं वा याथनोत्तमम् ।। ११ ।।**

**ऋग्भाष्यटीका–** **जयतामिव** । हे **नरो** विश्वेदेवाः **यत्** यदा **शुभम्** उत्तमं विष्णुं वायुं वा प्रति **याथन** यूयं याथ । तदा **मरुतां** युष्माकं **तन्यतुः** ध्वनिः । तद्ध्वनिस्तेषां युष्माकं ध्वनिः । सङ्ग्रामे **जयतामिव धृष्णुया** 'ञि धृषा प्रागल्भ्ये' अस्मात् 'त्रसिगृधिधृषिक्षिपेः क्नुः' (पा.सू.३-२-१४०) । ताच्छीलिकः । ततो भावप्रधानात्तृतीयायाः पञ्चम्याः वा सुपां सुलुगित्यादिना यादेशः । धृष्णुत्वेन धैर्यात् एति याति प्रवर्तते ।। ११ ।।

**मन्त्रार्थमञ्जरी–** (हे) **नरः,** विश्वेदेवाः । यत्, यदा शुभम्, उत्तमम्, विष्णुं वायुं वा प्रति । याथन, यूयं याथ थनादेशः । (तदा) मरुताम्, युष्माकम् । तन्यतुः, ध्वनिः । (सङ्ग्रामे) जयतामिव । धृष्णुया, धृष्णुत्वेन, धैर्यात् । एति, प्रवर्तते । 'ञिधृषा प्रागल्भ्ये' इत्यतः 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नुप्रत्यये सिद्धाद्धृष्णुशब्दाद्भावप्रधानात्तृतीयायाः 'सुपां सुलुक्' इत्यादिना यादेशे 'धृष्णुया' इति रूपं ज्ञेयम् ।। ११ ।।

**स्कन्द–** राज्ञां सङ्ग्रामम् **जयताम्** इव **तन्यतुः** गर्जितशब्दो युष्माकम् **मरुताम्** स्वभूत **एति** गच्छति श्रोत्रदेशम् । श्रूयत इत्यर्थः । कीदृशः । **धृष्णुना** प्रथमैकवचनस्यायं याजादेशः । **धृष्णुः** अभिभविता । महान् गम्भीरश्चेत्यर्थः । कदा । उच्यते । **यत्** यदा शुभम् उदकनामैतत् (निघ.१-२) । मेघस्थमुदकं प्रति **याथन** गच्छथ । अथवा शुभशब्द शोभनपर्यायः, क्रियाविशेषणम् । यदा शोभनं गच्छथ, हे **नरः**! मनुष्याकृतयः ।। ११ ।।

**वेङ्कटमाधव–** सैनिकानामिव शब्दः **मरुताम्** शब्दः गच्छति धृष्णुः यदा यूयं कल्याणं गच्छथ नेतारः ।। ११ ।।

**मुद्गल– मरुताम्** देवानाम् **तन्यतुः** शब्दः **धृष्णुया** धार्ष्ट्र्ययुक्तः सन् **एति** गच्छति । केषामिव । **जयताम्** विजययुक्तानां शूराणां भटानाम् इव । हे **नरः!** नेतारो मरुतः! यूयम् **यत्** । यदा **शुभम्** देवयजनम् **याथन** प्राप्नुथ तदा युष्मदीयः शब्दो गच्छतीति पूर्वत्रान्वयः ।।

**सायण– मरुतां** देवानां **तन्यतुः** शब्दः **धृष्णुया** धाष्ट्र्चयुक्तः सन् **एति** गच्छति । केषामिव । **जयतां** विजययुक्तानां शूराणां भटानाम् इव । हे **नरः!** नेतारः मरुतः यूयं **यत्** यदा **शुभं** शोभनं देवयजनं **याथन** प्राप्नुथ । तदा त्वदीयः शब्दो गच्छताति पूर्वत्रान्वयः ।

तन्यतुः । 'तनु विस्तारे'। 'ऋतन्यञ्जि' (उ.मू.४-४४२) इन्यादिना यतुच्प्रत्ययः । धृष्णुया । 'ञि धृषा प्रागल्भ्ये'। 'त्रसिगृधिधृषिक्षिपेः क्नुः' (पा.सू.३-२-१४०) । 'सुपां सुलुक्' इति सोः याजादेशः । चित्वादन्तोदात्तः । याथन । 'तप्तनप्तनथनाश्च' इति थनादेशः । यच्छब्द-योगात् निघाताभावः ।। ११ ।।

**सिद्धाञ्जनम्–** हे **नरः!** नेतारो मरुतः, **यत्** यदा **शुभं** शोभनं दीप्तं वा पदं प्रति **याथन** यूयं प्राप्नुथ (थनादेशः, यातेः लट्, मध्यमपुरुषबहुवचनस्य रूपम्) तदा **मरतां** युष्माकं **तन्यतुः** विस्तारी शब्दः, तनु विस्तारे, यतुच्प्रत्ययः, **जयतामिव** जयिनां शूराणामिव **धृष्णुया** धृष्टः सन् **एति** गच्छति । धृष्णुया 'ञि धृषा प्रागल्भ्ये', क्नुप्रत्ययः, प्रथमैकवचनान्तः, याच् आदेशः । शुभं प्रति मरुतां यात्रा वीरजयघोषवती ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**हस्काराद्विद्युतस्पर्यतो जाता अवन्तु नः । मरुतो मृळयन्तु नः ।। १२ ।।**
हस्कारात् । विऽद्युतः । परि । अतः । जाताः । अवन्तु । नः । मरुतः । मृळयन्तु । नः ।।

## ऋग्भाष्यम्

**दोषत्यागाद्गुणप्राप्तेर्हस्कारो वायुरुच्यते ।**
**विद्युद्विशिष्टज्ञानत्वाद्भारती तत्सुता हि ते ।**

**सर्वे देवाश्च मरुतो रक्षंत्वेतादृशो हरिः ।**
**तत्तदन्तर्गतत्वेन..................।। १२ ।।**

**ऋग्भाष्यटीका– हस्कारात्** । हस्कारशब्दं व्याख्याति । **दोषेति** ।। 'ओ हाक् त्यागे' । अस्मात्कः । त्यजति दोषानिति हः । स्वेन सह करोति गुणानिति स्कारः । अकारलोपः । हश्चासौ स्कारश्च हस्कारः । विद्युच्छब्दार्थमाह । **विद्युदिति** ।। विपूर्वात् द्योततेः क्विप् । ऋचं व्याख्याति । **तत्सुता इति** ।। ये सर्वे देवा **मरुतश्च हस्कारात्** वायोः **विद्युतो** भारत्याश्च **परि** सम्यक् **जाताः** तत्सुता हि ते । **अतः** सम्यग्जातत्वादेव **नोऽवन्तु** रक्षन्तु । **नो**ऽस्मान् **मृळयन्तु** सुखयन्तु च । पुनर्न इति तात्पर्यार्थम् । हरावेतद्घटयति । **एतादृश इति** ।। हरिरपि तत्तन्मरुदाद्यन्तर्गतत्वेन कारणेनैतादृशो भारतीवायुपुत्र उच्यते ।। १२ ।।

**मन्त्रार्थमञ्जरी–** (ये) सर्वे देवाः । मरुतः (च) । हस्कारात्, निर्दोषगुणविशिष्टाद्वयोः । विद्युतः, विशेषेण ज्ञानवत्या भारत्याः । (च) परि, सम्यक् । जाताः, उत्पन्नाः । अतः, सम्यग्जातत्वादेव । (ते) नः, अस्मान् अवन्तु, रक्षन्तु । नः । मृळयन्तु, सुखयन्तु । (च) 'ओहाक् त्यागे' इत्यतः कप्रत्यये जहाति दोषानिति हः, सह करोति गुणान्स्वेनेति स्कारः, कृञः घञ्, सहशब्दस्य स्भावः, हश्चासौ स्कारश्चेति हस्कारः– इति प्रागुक्तार्थे व्युत्पत्तिः । विपूर्वात् 'द्युत दीप्तौ' इत्यतः क्विपि विशेषेण द्योतते जानातीति 'विद्युत्' इति च व्युत्पत्तिः ।।१२।।

**स्कन्द–** आर्तस्य पुंसः ईशशब्दोच्चारणं हस्कारः । तस्माद् **हस्कारात्** । **विद्युतः पर्यतः** परिशब्द उपरिभावे । विद्युत उपर्यस्या **जाताः** जन्मात्र व्यवस्थानमभिप्रेतम् । व्यवस्थिताः विद्युतमधिष्ठायेत्यर्थः । **अवन्तु** वृष्टिप्रदानेन पालयन्तु **नः** अस्मान् । यथा विषादनिमित्तार्ति-प्रतिपत्त्यर्थं हश्शब्दं नोच्चारयामः तथा कुर्वन्तु इत्यर्थः । के । **मरुतः मृळयन्तु** च **नः** अस्मान् ।। १२ ।।

**वेङ्कटमाधव–** अस्मादन्तरिक्षात् **जाताः मरुतः** विद्योतनानन्तरं वृष्ट्यभावजनितात् **हस्कारात्** अस्मान् रक्षन्तु । मरुतः सुखयन्तु अस्मानिति ।। १२ ।।

**मुद्गल– हस्कारात्** दीप्तिकरात् **विद्युतः** विशेषेण दीप्यमानात् । **अतः** अन्तरिक्षात् **परि जाताः** सर्वत उत्पन्नाः **मरुतः नः** अस्मान् **अवन्तु** रक्षन्तु । तथाविधाः मरुतः **नः** अस्मान् **मृळयन्तु** सुखयन्तु ।। १२ ।।

**सायण– हस्कारात्** दीप्तिकरात् **विद्युतः** विशेषेण दीप्यमानात् **अतः** अन्तरिक्षात् **परि जाताः** सर्वत उत्पना **मरुतः नः** अस्मान् **अवन्तु** रक्षन्तु । तथाविधाः मरुतः **नः** अस्मान् **मृळयन्तु** सुखयन्तु ।

हस्कारात् । 'हस हसने' । अत्र तु प्रकाशमाने वर्तते । अस्मात् संपदादिलक्षणः क्विप् । अस्मिन् उपपदे 'डुकृञ् करणे' इत्यस्मात् 'कर्मण्यण्' (पा.सू.३-२-१) इति अण्प्रत्ययः । 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'गतिकारक' इत्यादिना कृदुत्तरपदप्रकृति-स्वरत्वम् । 'अतः कृकमि' (पा.सू.८-३-४६ ) इत्यादिना विसर्जनीयस्य सत्वम् ॥१२॥

**सिद्धाञ्जनम्– हस्कारात्** हसनकारात् दीप्तिकृत इत्यर्थः, हसनमत्र प्रकाशो दीप्तिर्वा भवति (हसतेः सम्पदादिलक्षणः क्विप्, तस्मात् करोतेः कर्मण्यण्) **विद्युतः** विशेषेण द्योतमानात् **अतः** एतस्मात् मध्यमस्थानात् अन्तरिक्षात् **परि** सर्वतः **जाताः** प्रादुर्भूताः **मरुतः** देवाः **नः** अस्मान् **अवन्तु** वर्धयन्तु, ते **नः** अस्मान् **मुळयन्तु** मृडयन्तु सुखयन्तु ॥ १२ ॥

## ऋक्संहिता पदपाठसहिता

**आ पूषञ्चित्रबर्हिषमाघृणे धरुणं दिवः । आजा नष्टं यथा पशुम् ॥ १३ ॥**

आ । पूषन् । चित्रऽबर्हिषम् । आघृणे । धरुणम् । दिवः । आ । अज (आज) । नष्टम् । यथा । पशुम् ॥ १३ ॥

## ऋग्भाष्यम्

**..................पूषा पूर्णत्वतश्च सः ।**
**आघृणिः पूर्णरश्मित्वादाज नश्चित्रबर्हिषम् ।**
**ब्रह्माणं च दिवो देव्या भर्तारं वायुमाज गाम् ।**
**यथागतम्...........................॥ १३ ॥**

**ऋग्भाष्यटीका– आपूषन्** । पौष्णोयं तृचः । पूषाघृणिशब्दौ व्याख्याति । **पूषेति** ॥ आसमन्ताद् घृणयो रश्मयो यस्यासावाघृणिः । ऋचं व्याख्याति । **आजेति** ॥ हे **आघृणे!** पूषन् चित्रं विचित्रं बर्हिः बृहतेर्वृद्ध्यर्थस्येदं रूपम् । नानाविधं पूर्णत्वं यस्यासौ चित्रबर्हिः तं

**चित्रबर्हिषं** ब्रह्माणं त्वं नोऽस्मान्प्रत्याज । अजेरन्तर्णीतण्यर्थस्य लोटि रूपम् । गुरुत्वेनागमय । **दिवो** देव्याः भारत्याः । **धरुणं** धर्तारं भर्तारं वायुं **चाज** । कमिव **नष्टं पशुं** गतं गां **यथा**ऽऽगमयन्ति । यद्वा आजेति लिडन्तम् । नोऽस्मदर्थे भवानाजआदिकाले प्राप्तवानसीति ॥ १३ ॥

**मन्त्रार्थमञ्जरी–** पौष्णोऽयं तृचः । (हे) आघृणे, आ समन्ताद्धृणयो रश्मयो यस्य तस्य सम्बुद्धिः । पूर्णत्वात् पूषन्, पुषेः क(नि)न्, उपधादीर्घत्वम्, विष्णो, पूषदेवते च । चित्रबर्हिषम्, चित्रं विचित्रं नानाविधं बर्हिः पूर्णत्वं यस्य तम्, बृंहतेः वृद्ध्यर्थस्येयसुन् (इसिः) (ब्रह्माणम्), विरिञ्चम् । (त्वम्) (नः), अस्मान्प्रति । आ अज, आजय, 'अज गतौ' अन्तर्णीतणिच्, गुरुत्वेनागमय । दिवः, देव्याः, भारत्याः । धरुणम्, धर्तारं भर्तारं वायुम् । (च) नष्टम् पशुम् यथा, गतं गामिव । आ (अज), आगमय । यद्वा– 'आज' इति लिडन्तम्, (नः) अस्मदर्थे (भवान्) आ आज, अनादिकाले तौ प्राप्तवानस्ति इति ॥ १३ ॥

**स्कन्द–** 'पूष्ण आघृणये तृचः' (बृ.दे.३-९५) । पूष्ण आघृणिगुणकाय तृचः । **आ** इत्युपसर्गः अज इत्याख्यातेन सम्बन्धयितव्यः । हे **पूषन्! चित्रबर्हिषम्** विचित्रं पूज्यं वा बर्हिर्यस्य स भिन्नबर्हिः सोमः सं चित्रबर्हिषम् । **आघृणे!** घृ क्षरणदीप्त्योः । क्षरिता घृणिः दध्नः पूर्णो दतिः स कक्षे रथे या यस्य स आधृणिः पूषा । वक्ष्यति हि– दतेरिव तेऽवृकमस्तु सख्यम्' (ऋ.६-४८-१८) इति । तस्य सम्बोधनम् । अथवा दीप्तिर्घृणि सा आगता यस्य स आघृणिः उपजातदीप्तिः । हे आघृणे **धरुणम्** धारयितारम् **दिवः** तात्स्थ्यात् ताच्छब्द्यं मञ्चाः क्रोशन्तीति यथा । द्युनिवासिनां देवानाम् । सोमलक्षणेनान्नेन देवा धार्यन्ते । अथवा 'वरुणम्' (निघ.१-११) इत्युदकनाम । चित्रबर्हिषं च सोममुदकं दिवः **आ** आ अज अजिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । उपसर्गाभ्यासाच्च तत्सम्बन्धिनः क्रियापदस्याभ्यासः । आज आज । अस्मदर्थं पुनः पुनरागमयेत्यर्थः । कथम् । **नष्टम् यथा पशुम्** । यथा प्रनष्टं पशुमजं गां वा त्वमेवागमयसि पशूनां रक्षितृत्वात्, लौकिको वा पशुपालः तद्वत् ॥ १३ ॥

**वेङ्कटमाधव–** आनय **पूषन्**! सोमं पणिभिरपहृतम् आगतदीप्ते! धारकं द्युलोकस्य । **यथा नष्टम् पशुम्** त्वमानयसि ॥ १३ ॥

**मुद्गल–** हे **पृषन्! चित्रबर्हिषम्** विचित्रैर्दर्भैर्युक्तम् **धरुणम्** यागस्य धारकं सोमम् **दिवः आ** द्युलोकादाहरेति शेषः । पूषा विशेष्यते । **आघृणे!** आगतदीप्तियुक्त! तत्र दृष्टान्तः । हे **अज!** गमनशील! **यथा** लोके **नष्टम् पशुम्** महारण्यादावन्वीक्ष्य कश्चिदाहरति तद्वत् ॥ १३ ॥

**सायण–** हे **पूषन्! चित्रबर्हिषं** विचित्रैर्दर्भैर्युक्तं **धरुणं** यागस्य धारकं सोमं **दिवः आ** द्युलोकात् आहर इति शेषः । पूषा विशेष्यते । **आघृणे** आगतदीप्तियुक्त । तत्र दृष्टान्तः । हे **अज!** गमनशील! **यथा** लोके **नष्टं पशुं** महारण्यादौ अन्वीक्ष्य कश्चिदाहरति तद्वत् ।

आघृणे । 'घृ क्षरणदीप्त्योः' इत्यस्मात् 'घृणिपृश्नि' इति निप्रत्ययो निपातितः । 'ऋवर्णाच्चेति वक्तव्यम्' इति णत्वम् । प्रादिसमासः । आमन्त्रिताद्युदात्तत्वम् । धरुणम् । 'धृञ् धारणे' । अस्मात् ण्यन्ताद्धातोः 'धारेर्णिलुक्च' (दश.पा.५) इति उनन्प्रत्ययः । व्यत्ययेन नित्स्वराभावे प्रत्ययस्वरः । दिवः । 'ऊडिदम्' इत्यादिना षष्ठ्या उदात्तत्वम् । अज । 'अज गतिक्षेपणयोः' ॥ १३ ॥

**सिद्धाञ्जनम्–** अथ पौष्णस्तृचः । पूषाख्यो देव आदित्यानामेकः । सम्पूषन्निति घौरस्य कण्वस्य पौष्णे सूक्ते अस्य व्यापारो विस्पष्टं वक्ष्यत इति नात्र विस्तरः । हे **पूषन् आघृणे** सर्वतो दीप्तिमन्, (घृणिः किरणः प्रसिद्धः, दीप्त्यर्थत्वाद् दीप्तिर्वा) **चित्रबर्हिषं** चित्रं बहुशोभोपलक्षणनानावर्णबर्हिः आसनं यस्य तं, दिवः द्युलोकस्य अत एव तद्वासिनां देवानां **धरुणं** धारयितारं सोमं, अमृतरसः, सोमः देवानां आहारत्वाद् धारकः, **आ आ अज** आप्नुहि आगमय वा, अन्तर्णीतण्यर्थः । उपसर्गाभ्यासात् आख्यातस्याभ्यासः, अज इति गत्यर्थो धातुः । तत्र दृष्टान्तमाह । **यथा नष्टं पशुं** यथा अदर्शनं गतं अजादिकं पशुं अन्वीक्ष्य लब्ध्वा आहरति पशुपालः तथा गूढं सोमं अन्वीक्ष्य आहर पूषन्निति भावः । अनेन सोमाहरणसामर्थ्यं पूष्णः प्रोक्तम् । उत्तरत्र च सोमं रहसि निहितं अधिगम्य साधयतीति वक्ष्यति ॥ १३ ॥

## ऋक्संहिता पदपाठसहिता

**पूषा राजा॑न॒माघृ॑णि॒रप॑गूळ्हं॒ गुहा॑ हि॒तम् । अवि॑न्दच्चि॒त्रब॑र्हिषम् ॥ १४ ॥**

पू॒षा । राजा॑नम् । आघृ॑णिः । अप॑ऽगूळ्हम् । गुहा॑ । हि॒तम् । अवि॑न्दत् । चि॒त्रऽब॑र्हिषम् ॥ १४ ॥

## ऋग्भाष्यम्

**..........जगद्राजमविन्दद्भगवान्सुतम् ।**
**स्वकुक्षिगूढं ब्रह्माणम्..................।। १४ ।।**

**ऋग्भाष्यटीका– पूषा** ।। जगद्राजम् । **आघृणिः पूषा** भगवान् **राजानं** जगद्राजं **गुहाहितं** गुहायां निहितम् । तत एव **अपगूळ्हं** स्वकुक्षिगूढमिति यावत् । **चित्रबर्हिषं** ब्रह्माणं सुतं **अविन्दत्** ।। १४ ।।

**मन्त्रार्थमञ्जरी–** आघृणिः पूषा, प्रागुक्तव्युत्पत्त्या भगवान् । राजानम्, जगद्राजम् । गुहा हितम्, गुहायां निहितम् । तत् एव अपगूह्ळम्, अपगूढम्, स्वकुक्षिगूढमिति यावत् । चित्रबर्हिषम्, प्राग्वत् (ब्रह्माणं सुतम्) अविन्दत्, प्राप्नोत्, 'विद्लृ लाभे' लङ् ।। १४ ।।

**स्कन्द–** अत्रेतिहासमाचक्षते– 'असुराः सोमं राजानं दीयमानमग्रेर्हस्तात् अपहृत्य गुहायां न्यदधुः । तं पर्येषयमाणा अन्ये देवा नाविन्दन् । पूषा त्वविन्दत् । स तं गृहीत्वा दिवमानयत्' इति । तदेतदिहोच्यते– **पूषा राजानम् आघृणिः अपगूळ्हम्** निगूढम् आच्छादितम् **गुहा** गुहायाम् **हितम्** निहितमसुरैः **अविन्दन्** लब्धवान् **चित्रबर्हिषम्** ।। १४ ।।

**वेङ्कटमाधव– पूषा** सोमम् **आघृणिः** असुरैः **अपगूळ्हम्** गुहायां निहितम् **अविन्दत्** । यस्मै 'चित्रं बर्हिः' स्तीर्यते ।। १४ ।।

**मुद्गल– आघृणिः पूषा राजानम्** सोमम् **अविन्दत्** अलभत । कीदृशम् । **अपगूळ्हम्** अपावृतम् **गुहा हितम्** गुहासदृशे दुर्गमे द्युलोके स्थितम् तथा **चित्रबर्हिषम्** ।। १४ ।।

**सायण– आघृणिः पूषा राजानं** सोमम् **अविन्दत्** अलभत । कीदृशम् । **अपगूळ्हम्** अत्यन्तगूढम् । तत्र हेतुः । **गुहा हितं** गुहासदृशे दुर्गमे द्युलोके स्थितं तथा **चित्रबर्हिषम्** ।

अपगूळ्हम् । 'गुहू संवरणे' । 'निष्ठा' इति कर्मणि क्तः । 'हो ढः' (पा.सू.८-२-३१) इति ढत्वम् । 'झषस्तथोर्धोऽधः' (पा.सू.८-२.-४०) इति धकारः । ष्टुत्वढलोपदीर्घाः । समासे 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । गुहा । 'सुपां सुलुक्' इति सप्तम्या लुक् । हितम् । निष्ठायां दधातेर्हिः ।। १४ ।।

**सिद्धाञ्जनम्–** **आघृणिः** दीप्तिमान्, व्याख्यातम् । **पूषा** देवः **अपगूळ्हं** अत्यन्तगूढं, (गुहू संवरणे कर्मणि क्तः) **गुहा** गुहायां रहसि दुष्प्रवेशे स्थाने **हितं** निहितं आवरकैरसुरैः **राजानं** सोमं **अविन्दत्** लब्धवान् । कीदृशम् ? **चित्रबर्हिषम्** व्याख्यातम् ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**उतो स मह्यमिन्दुभिः षड्युक्ताँ अनुसेषिधत् । गोभिर्यवं न चर्कृषत् ।। १५, १० ।।**
उताइति । सः । मह्यम् । इन्दुभिः । षट् । युक्तान् । अनुऽसेसिधत् । गोभिः । यवम् । न । चर्कृषत् ।।

## ऋग्भाष्यम्

**....................मह्यं सोमैश्च तर्पितः ।**
**साधयामास षड्युक्तानीन्द्रियाणि चकार च ।**
**साधनं शक्तिदानं तु गोभिर्वार्भिर्यथा यवम् ।। १५, १० ।।**

**ऋग्भाष्यटीका–** **उतो सः** । मह्यम् । **उतो** अन्यच्च । **सः** पूषेन्दुभिः सौमैस्तर्पित इति शेषः । **मह्यं** मदर्थे । **षट्** इन्द्रियाणि । **युक्तान्** अर्थैः सन्निकृष्टानि । **अनुसेषिधत्** साधयामास । अनुदात्तत्वं छान्दसं । **चर्कृषत्** चकार च । यङ्लुडन्ताल्लेट् । किमिव । **गोभिः** वार्भिर्यवं **न यवं** यथा कुर्वन्ति साधयन्ति च । करणातिरिक्तं साधनं किमित्यत आह । **साधनमिति** ।। साधनं त्वित्यन्वयः ।। १५,१० ।।

**मन्त्रार्थमञ्जरी–** उतो, अन्यच्च । सः, पूषा । इन्दुभिः, सोमैः (तर्पितः) इति शेषः । मह्यम्, मदर्थे । षट्, इन्द्रियाणि । युक्तान्, अर्थैः संनिकृष्टानि । चर्कृषत्, चकार । अनुसेसिधित्, साधयामास च, शक्तियुक्तान्यकरोदिति यावत् । गोभिः वार्भिः । वयम् न, वयमिव, यवं यथा कुर्वन्ति वीर्ययुक्ततया साधयन्ति च तथा इति । 'षिध गत्याम्' 'कृष विलेखने' इत्येतयोर्यकिङ्लु लेटि रूपं ।। १५ ।।

**स्कन्द–** **उतो** इत्युतशब्दस्योत्रा सहैकादेशः । उत उ । उ इत्युञ् चायं नाम्ना वा सह कृतैकादेशः– 'एषो उषाः' (ऋ.१-४६-१), 'सो चिन्नु' (ऋ.१-१९१-१५), 'चतो इतः (ऋ.१०-१५५-२) इति यथा । आख्यातेन वा सह– 'जनिष्टो अपः' (ऋ.१०-९५-१०)

इति यथा । उपसर्गेण वा सह– 'प्रो आरत' (ऋ.१-३९-५), 'उपो रथेषु' (ऋ.१-३९-६) 'अपो सु म्यक्ष' (ऋ.२-२८-६) इति यथा । निपातेन वा सह– 'अथो वयम्' (ऋ.१-१६४-४०), 'नो वयम्' (ऋ १-१९१-१०), 'उतो न्वस्य' (ऋ.८-७२-६), 'मो ष्वन्यत्र' (ऋ.७-५९-५) इति यथा । स सर्वः पदपूरणः अपृथगर्थत्वाच्च कृतैकादेशः । उञ् पदकारेण पूर्वेण पदेनैकीकृत्यैव पठितः । इतिकरणोपादानात्तु प्रगृह्यतां दर्शयता दर्शितो बोद्धव्य इति । सः पूषा मह्यम् मदर्थम् **इन्दुभिः** द्वितीयार्थे तृतीयैषा । इन्दून् सोमान् **षट् युक्तान्** षड्तून् युक्तान् संवत्सरगमने नियुक्तान् । संवत्सरस्य गमयितृनित्यर्थः । अथवा युक्तान् यान् यान् यो यादृशः साधयितव्यः तं तादृशमेव **अनुरोषिधत्** शत्रन्तमेतत् नाख्यातम् अननुदात्तत्वात् । आनुपूर्व्येण साधयन् । **गोभिः यवम् न** गोशब्दोऽत्र बलीवर्देषु वर्तते । यवशब्दो धान्य-मात्रोपलक्षणार्थः । यथा कश्चित् कर्षको बलीवर्दैर्यवादिधान्यं कुर्यात् तद्वत् । चर्कृषत् करोतेर्यङ्लुगन्तस्येदं रूपं न कृषतेः । पुनःपुनः करोतु सोमयागानित्यर्थः ।। १५ ।।

**वेङ्कटमाधव–** अपि च सः पूषा मह्यम् पणिम्य आहृतैः इन्दुभिः षट् ऋतून् यथापूर्वम् युक्तान् अनुक्रमेण रुन्धन् यथा यवान् भूम्यामुप्तान् प्ररोहार्थं षड्गवादिना हलेन कृषन्ति तद्वदनुक्रमेण पुनःपुनर्ऋतून् प्रवर्तयत्वमरणायेति ।। १५ ।।

**मुद्गल– उतो** अपि च **सः पूषा मह्यम्** यजमानाय **इन्दुभिः** यागहेतुभिः सोमैः **युक्तान् षट्** वसन्तादीन् ऋतून् **अनुसेषिधत्** अनुक्रमेण पुनःपुनर्नयन् वर्तत इति शेषः । दृष्टान्तः । **गोभिः** बलीवर्दैः **यवम् न चर्कृषत्** यथा यवमुद्दिश्य भूमिं प्रतिसंवत्सरं पुनःपुनः कृषति तद्वत् ।। १५ ।।

**सायण– उतो** अपि च **सः** पूषा **मह्यं** यजमानाय **इन्दुभिः** यागहेतुभिः सोमैः **युक्तान् षट्** वसन्तादीन् ऋतून् **अनुसेषिधत्** अनुक्रमेण पुनःपुनर्नयन् वर्तते इति शेषः । तत्र दृष्टान्तः । **गोभिः** बलीवर्दैः **यवं न चर्कृषत्** । नशब्द उपमार्थः । यथा यवमुद्दिश्य भूमिं प्रतिसंवत्सरं पुनःपुनः कृषति तद्वत् ।

मह्यम् । 'ङयि च' (पा.सू.६-१-२१२) इत्याद्युदात्तत्वम् । इन्दुभिः । 'उन्दी क्लेदने' । 'उन्देरिच्चादेः' (उ.सू.१-१२) इति उप्रत्ययः, उकारस्य इकारादेशश्च । 'नित्' इति अनुवृत्ते-

राद्युदात्तत्वम् । युक्तान् । 'दीर्घादटि समानपादे' इति संहितायां नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकारः । अनुसेषिधत् । 'षिधु गत्याम्' । 'धातोरेकाचः' (पा.सू.३-१-२२) इति यङ् । 'यङोऽचि च' (पा.सू.२-४-७४) इति तस्य लुक् । प्रत्ययलक्षणेन 'सन्यङोः' (पा.सू.६-१-९) इति द्विर्भावः । हलादिशेषः । 'गुणो यङ्लुकोः' (पा.सू.७-४-८२) इति अभ्यासस्य गुणः । 'इण्कोः' (पा.सू.८-३-५७ ) इति षत्वम् । सनादित्वात् धातुसंज्ञायां लटः शतृ । कर्तरि शप् । 'अदादिवश्च' इति वचनात् तस्य लुक् । 'नाभ्यस्ताच्छतुः' (पा.सू.७-१-७८) इति नुम्प्रतिषेधः । प्रत्ययस्वरे प्राप्ते 'अभ्यस्तानामादिः' (पा.सू.६-१-१८९) इत्याद्युदात्तत्वम् । गोभिः । 'सावेकाचः' इति भिस उदात्तत्वे प्राप्ते 'न गोश्वान्' इति प्रतिषेधः । चर्कृषत् । 'कृष विलेखने' । यङ्लुकि द्विर्भावहलादिशेषचार्त्वानि । 'रुग्रिकौ च लुकि' (पा.सू.७-४-९१) इति अभ्यासस्य रुगागमः । अस्मात् यङ्लुगन्तात् लेटस्तिप् । 'इतश्च लोपः' । 'लेटोऽडाटौ' इति अडागमः । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । लघूपधगुणे प्राप्ते 'नाभ्यस्तस्याचि पिति' (पा.सू.७-३-८७) इति निषेधः । 'तिङ्ङतिङः' इनि निघातः ।। १५,१०।।

**सिद्धाञ्जनम्– उतो** अपि च (उत उ इति उतशब्दस्य उञा सहैकादेशः), **सः पूषा मह्यम्** यजमानाय **इन्दुभिः** (उन्दी क्लेदने, गतम्) सोमैः **युक्तान्** समवेतान् **षट्** षट्सङ्ख्याकान् पृथिव्यादिषु सप्तसु धामसु पृथिवी वर्जयित्वा इतरेषां ऊर्ध्वमवस्थितानां षण्णां विभवान् इह पृथिव्यां मयि यजमाने **अनुसेषिधत्** अनुक्रमेण साधयन् (अनुपूर्वकः गत्यर्थः षिध धातुः, यङ् लुक्, नेदमाख्यातम् शतृप्रत्ययः, नुमागमप्रतिषेधः ) वर्तत इति शेषः । तत्र दृष्टान्तः । न उपमार्थः, यथा कर्षक गोभिः बलीवर्दैः **यवं** यवमुद्दिश्य (यवशब्दः धान्यस्योपलक्षणम्) **चर्कृषत्** कृषति पुनः पुनः, कृषिं करोति, तद्वत् । चर्कृषत्- 'कृष विलोडने', यङ् लुकि, लेट् लडर्थः । अयं पूष्णो विभवः, येन स तामसैर्देवारिभिरपहृत्य रहसि निहितं देवानामन्नभूतममृतं सोममाहृत्य यजमानं पुष्णन् ऊर्ध्वलोकविभवान् सोमरसभरितान् पदे पदे पुनः पुनः सम्पाद्य तं सर्वथा सोमसम्पन्नं विधत्ते ।। १५,१० ।।

।। इति **प्रथमाष्टके द्वितीयाध्याये दशमो वर्गः** ।।

## ।। अथ एकादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् । पृञ्चतीर्मधुना पयः ।। १६ ।।**
अम्बयः । यन्ति । अध्वऽभिः । जामयः । अध्वरिऽयताम् । पृञ्चतीः । मधुना । पयः ।। १६ ।।

## ऋग्भाष्यम्

**अम्बयो मातरो ह्यापः कारणत्वात्सहोदराः ।**
**जगतो जामयो यस्मात्सह ताभिर्विवर्धते ।**
**अध्वरं कुर्वतां क्षीरं सोमं चापि प्रपृञ्चतीः ।**
**सम्पृक्ताः ...................... ।। १६ ।।**

**ऋग्भाष्यटीका– अम्बयः** । एता आप्याः । अन्त्याध्यर्धाग्नेयीत्येके । दर्शनात्तु पयस्वा-नित्यर्धर्च आग्नेय आप्यश्च । संमाग्न इत्यृक् सर्वदेवत्या । **अम्बयः** । अम्बापर्यायोंबिशब्दः । अतोंबयो मातरः । काः आपः । कुतः प्रकरणादिति हिशब्देनाह । कथं मातृत्वमपाम् । जगतः कारणत्वात् । **जामयः** सहोदराश्च । कस्य । जगतः । कथम् । यस्मात्ताभिस्सह विवर्धते । पार्थिवादिभागचतुष्टयात्मकं जगद्वर्धमानमाप्यभागेन सहैव वर्धते यस्मात्तस्मात्सहोदराः । आध्वरीयतामित्यादि व्याख्याति । **अध्वरमिति** ।। यद्यप्यध्वरीयच्छब्दोऽध्वरमिच्छत आह । तथापि तस्यां दशायां सोमादिसम्बन्धानुपपत्तेरिच्छया करणमुपलक्ष्याध्वरं कुर्वतामित्युक्तम् । क्षीर-सोमयोः समुच्चये चशब्दः । अपिशब्दस्त्वपां विशेषणसमुच्चये । अम्बयो जगतो मातरो जामयो भगिन्यश्च **अध्वरीयतां** अध्वरमिच्छतामध्वरं कुर्वतामिति यावत् । **मधुना** सोमेन सह । **पयः** क्षीरं सोमं चेत्यर्थः । **प्रपृञ्चतीः** 'पृची सम्पर्के' । प्रपृञ्चत्यः सम्पृक्ता आपोऽध्व**भिः** मार्गैः **यन्ति** गच्छन्ति । नद्योऽनेनाभिप्रेयन्ते ।। १६ ।।

**मन्त्रार्थमञ्जरी–** एता आप्यः । 'अन्त्या अध्यर्धाग्नेयी' (अनुक्रमणिका) इत्येके, दर्शनात् 'पयस्वान्' इत्यर्धर्च आग्नेय आपश्च, 'सं माग्ने' इत्यृक्सर्वदेवतका । अम्बाशब्दपर्यायोऽत्राम्बि-शब्दः । 'जगतः' इति शेषः । अम्बयः, जगतो मातरः । जामयः, जगतो भगिन्यः । (च)

अध्वरीयताम्, अध्वरमिच्छताम्, अध्वरं कुर्वतामिति यावत् । मधुना, सोमेन सह । पयः, क्षीरम्, सोमं चेत्यर्थः । पृश्चतीः, 'पृची सम्पर्के' पृश्चत्यः, सम्पृक्ताः । (आपः) इत्यग्रेतनम् आकृष्यते । अध्वभिः, मार्गैः । यन्ति, गच्छन्ति, ! 'नद्योऽनेनाभिप्रेयन्ते' इत्युक्तं टीकायाम् । अपां जगन्मातृत्वम्– जगत्कारणत्वात्, जामित्वं तु– पृथिव्यादिभागचतुष्टयात्मकजगतोऽद्भिः सह वर्धमानत्वादिति ज्ञेयम् । अध्वरमात्मन इच्छन्तीति 'सुप आत्मनः क्यच्' इति क्यचिपूर्वस्य 'क्यचि च' इतीत्त्वे ततो लटि शत्रादेशे 'अध्वरीयत्' इति रूपम् । अत्राध्वरेच्छया तत्कृतेर्लक्षणयोक्तेः 'अध्वरं कुर्वताम्' इत्युक्तम्, अन्यथा अपां सोमसम्बन्धोक्तिरयुक्तेति । अत्र जडस्तुतेरयोगादभिमानिनयन्यायात् 'देवीः' इति श्रवणाच्चाब्देवता हरिस्त्रीतनवश्च ग्राह्याः ।।१६।।

**स्कन्द–** 'अर्धाष्टमा अपां ज्ञेयाः' (बृदे.३-९७) । अर्धाष्टमा ऋचः अब्देवत्या ज्ञेयाः । अम्बिशब्दोऽम्बापर्यायः । अम्बा मातृभूता आप **यन्ति** यज्ञं प्रति गच्छन्ति नियतैः **अध्वभिः** मार्गैः । **जामयः** भगिनीस्थानीयाश्च **अध्वरीयताम्** यज्ञकामानाम् **पृश्चतीः** सम्पर्चयन्त्यः स्वावयवभूतेन **मधुना** 'मधु'(निघ.१-१२) इत्युदकनाम । वसतीवर्येकधनाख्येनोदकेन **पयः** सोमलक्षणमुदकम् ।। १६ ।।

**वेङ्कटमाधव–** अत्र शाट्यायनकम् । तस्यैष श्लोकः–

न ता अन्यः प्रतरति नैना विष्णातुमर्हति ।
वहन्त्यस्मै सर्वतस्ता मधु क्षीरं घृतं दधि ।।

'षट्सहस्राण्यम्बय इति । इमा ह वैता अम्बयो नामेत्यादि' (तु.लुशा ९८-२) ।

ता **अम्बयः** मार्गैः गच्छन्ति यज्ञमिच्छतां जामिस्थानीयाः मधुरेण रसेन प्रत्यक्षमुदकं सम्पृश्चत्यः ।। १६ ।।

**मुद्गल– अध्वरीयताम्** अध्वरम् आत्मन इच्छतामस्माकम् **अम्बयः** मातृस्थानीयाः आपः **अध्वभिः** देवयजनमार्गैः **यन्ति** गच्छन्ति । कीदृश्यः आपः । **जामयः** हितकारिण्यः बन्धवः तथा **मधुना** माधुर्यरसेन युक्तम् **पयः पृश्चतीः** गवादिषु योजयन्त्यः ।। १६ ।।

**सायण–** अपोनप्त्रीये एकधनासूपानीतासु स्वयमनुगच्छन् 'अम्बयः ' इति द्वे अनुब्रूयात् ।

तृतीयया 'अपो देवीः' इत्यनया एकधनासु हविर्धानं प्रविष्टासु स्वयमनुप्रविशेत् । तथैव सूत्रितम्– 'अम्बयो यन्त्यध्वभिरिति तिस्र उत्तमयानुप्रपद्येत' (आश्व.श्रौ.५-१) इति ।

**अध्वरीयताम्** अध्वरमात्मन इच्छताम् अस्माकम् **अम्बयः** मातृस्थानीया आपः । तथा च कौषीतकिब्राह्मणे समाम्नायते- 'अम्बयो यन्त्यध्वभिरित्यापो वा अम्बयः' इति । ता आपः **अध्वभिः** देवयजनमार्गैः **यन्ति** गच्छन्ति । कीदृश्य आपः । **जामयः** हितकारिण्यो बन्धवः । तथा **मधुना** माधुर्यरसेन युक्तं **पयः पृञ्चतीः** गवादिषु योजयन्त्यः ।

अम्बयः । 'रबि लबि अबि शब्दे' । एतस्मात् 'अच इः' (उ.सू.४-५७८) इति प्रकरणे बाहुलकात् इः । प्रत्ययस्वरः । अध्वभिः । 'अदेर्ध च' (उ.सू.४-५५५) इति क्वनिप् । पित्वात् प्रत्ययस्यानुदात्तत्वे धातुस्वरः । जामयः । 'जमु अदने' । बाहुलकात् इः । अध्वरीयताम् । अध्वरशब्दात् 'सुप आत्मनः क्यच्' इति क्यच् । 'क्यचि च' इति ईत्वम् । 'अपुत्रादीनामिति वक्तव्यम्' (पा.म.७-४-३५) इति वचनात् 'न च्छन्दस्यपुत्रस्य' इति ईत्वनिषेधाभावः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'कव्यध्वरतनस्य' (पा.सू.७-४-३०) इति अकारलोपोऽपि न भवति । क्यच्प्रत्ययान्तधातोः लटः शतृ । शपः पित्वादनुदात्तत्वम् । शतुश्च लसार्वधातुक-स्वरेण तयोः क्यचा सहैकादेशः । 'एकादेश उदात्तेनोदात्तः' इत्यन्तोदात्तत्वे सति 'शतुरनमो नद्यजादी' इति षष्ठ्या उदात्तत्वम् । पृञ्चतीः । 'पृची संपर्के' । लटः शतृ । 'रुधादिभ्यः श्नम्' । 'श्नसोरल्लोपः' । अनुस्वारपरसवर्णौ । 'उगितश्च' इति ङीप् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घ-त्वम् । 'शतुरनुमः' इति ङीप उदात्तत्वम् ।। १६ ।।

**सिद्धाञ्जनम्–** इतः प्रभृति आपो देवताः आ सूक्तसमाप्तेः, त्रयोविंश्यां पयस्वानग्न इत्यर्धर्चं अन्त्यां च ऋचं वर्जयित्वा । **अध्वरीयताम्** अध्वरं यज्ञं आत्मन इच्छतां अस्माकं **अम्बयः** मातरः मातृस्थानीया आपः (अम्बिशब्दोऽम्बापर्यायः) **अध्वभिः** नियतः मार्गः **यन्ति** गच्छन्ति । तथा **जामयः** भगिनीस्थानीयाश्च आपः यन्तीति सम्बन्धः । किं कुर्वन्त्यः? **मधुना** मधुरेण आनन्दमयेन रसेन **पयः** गव्यं दुग्धं तल्लक्षितं ज्ञानरश्मिसमूहं **पृञ्चतीः** सम्पर्चयन्त्यः (विभक्ति-व्यत्ययः, पृची सम्पर्के, शतरि ङीप्) यजमानं प्रति नियतैर्यजनमार्गैरपृछब्दसङ्केतिता जननी-स्थानीया आनन्दमय्यः सगर्भ्यस्थानीयाः शक्तिवाहिन्यश्च सम्मदरसेन चेतः पूरयन्त्यः आगच्छ-न्तीति भावः ।। १६ ।।

## ऋक्संहिता पदपाठसहिता

**अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् ।। १७ ।।**

अमूः । याः । उप । सूर्ये । याभिः । वा । सूर्यः । सह । ताः नः । हिन्वन्तु । अध्वरम् ।। १७ ।।

## ऋग्भाष्यम्

### याः समीपस्थाः सूर्यस्य सहिता अपि ।। १७ ।।

**ऋग्भाष्यटीका– अमूर्याः । या अमूः** आप **उपसूर्ये** सूर्यसमीपे सूर्यस्य समीपस्थाः । वाशब्दः समुच्चये । **सूर्यः** च **याभिः सह** वर्तते । अन्योन्यसाहित्योक्तेः तात्पर्यं सहिता अपि सूर्येण सहिता एव सदा वर्तन्ते । यद्वा व्याख्यानमेवैतत् । ससूर्योऽपि **ता** अपः प्राप्यैव वर्तते हीति । **ता नो**ऽस्मदीयं **अध्वरं हिन्वन्तु** । हि गतौ वृद्धौ च । गच्छन्तु वर्धयन्तु च ।।१७।।

**मन्त्रार्थमञ्जरी– याः अमूः** (आपः) उप सूर्ये, सूर्यस्योप, व्यत्ययेन सप्तमी, सूर्यस्य समीपस्थाः । वा शब्दः समुच्चये वा सूर्यः, सूर्यश्च । याभिः सह (वर्तते) 'सदा सूर्येण सहिता एव' इत्युभयोक्तितात्पर्यार्थः । ताः, आपः । नः, अस्मदीयम् । अध्वरम् । हिन्वन्तु, 'हि गतौ वृद्धौ च' गच्छन्तु, वर्धयन्तु च ।। १७ ।।

**स्कन्द– अमूः** इमाः **याः** आपः **उप सूर्ये** सूर्यसमीपे । **याभिः वा** वाशब्दः समुच्चये । याभिश्च **सूर्यः सह** याश्च सूर्येणैकस्थानाः । आदित्यमण्डलस्था इत्यर्थः । **ताः नः हिवन्तु** हि गतौ वृद्धौ च । गच्छन्तु वर्धयन्तु वा **अध्वरम्** ।। १७ ।।

**वेङ्कटमाधव– अमूः याः** उप भवन्ति **सूर्ये** । **याभिः** वा **सूर्य सह** भवति । **ताः** अस्माकं यज्ञं गच्छन्तु ।। १७ ।।

**मुद्गल– अमूः** एताः सूर्ये **उप** समीपे **याः** अपस्थिताः आपः । **वा** अथवा **सूर्यः याभिः** अद्भिः **सह** वर्तते । पूर्वत्र अपां प्राधान्यम् उत्तरत्र सूर्यस्येति विशेषः । **ताः** तादृश्यः आपः **नः** अस्मदीयम् **अध्वरम्** यागम् **हिन्वन्तु** प्रीणयन्तु ।। १७ ।।

**सायण– याः अमूः** आपः **सूर्ये उप** समीपेन अवस्थिताः । 'आपः सूर्ये समाहिताः' (तै.आ.१-८-१) इति श्रुत्यन्तरात् । **वा** अथवा **सूर्यः याभिः** अद्भिः **सह** वर्तते । पूर्वत्रापां

प्राधान्यम् उतरत्र सूर्यस्येति विशेषः । **ताः** तादृश्य आपो **नः** अस्मदीयम् **अध्वरं** यागं **हिन्वन्तु** प्रीणयन्तु ।

याभिः । 'सावेकाचः' इति विभक्त्युदात्तस्य 'न गोश्वन्साववर्ण' इति प्रतिषेधः । शेषा तु प्रक्रिया स्पष्टा ॥ १७ ॥

**सिद्धाञ्जनम्– याः अमूः** आपः **सूर्ये** सर्वप्रेरके सवितरि ज्योतिर्मये **उप** समीपेन अवस्थिताः । **याभिः वा** याभिरद्भिश्च (चार्थे वा) **सह** सहितः सूर्यः वर्तते । **ताः** आपः **नः** अस्माकं **अध्वरं** यज्ञं **हिन्वन्तु** वर्धयन्तु (हि गतौ वृद्धौ च)। हिन्वन्तु प्रीणयन्त्विति सायणः । 'स्वर्वतीरपः' इत्यत्र प्रागुक्तमवधेयम् ॥ १७ ॥

## ऋक्संहिता पदपाठसहिता

**अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः । सिन्धुभ्यः कर्त्वं हविः ॥ १८ ॥**
अपः । देवीः उप । ह्वये । यत्र । गावः । पिबन्ति । नः । सिन्धुऽभ्यः । कर्त्वम् । हविः ॥ १८ ॥

## ऋग्भाष्यम्

**ह्वयामि ता याः पिबन्ति गावो नः सर्वथा हविः ।**
**कार्यं नदीभ्यः...................................॥ १८ ॥**

**ऋग्भाष्यटीका– अपः** । ह्वयामि । यत्र द्वितीयार्थे सप्तम्येषा । याः **नो**ऽस्मदीया **गावः पिबन्ति** ता **अपो देवीः** अहं **उप ह्वये** ह्वयामि । कस्मात् । यतो नोऽस्माकं सर्वथा **हविः** सोमादिलक्षणं **सिन्धुभ्यो** नदीभ्यः । तादर्थ्ये चतुर्थ्येषा । तदुद्देशेन पञ्चमी वा । **कर्त्वं** कार्यम् । 'कृत्यार्थे तवैकेन्केन्यत्वनः'(पा.सू.३-४-१४) इति त्वन् ॥ १८ ॥

**मन्त्रार्थमञ्जरी– 'यत्र'** इति द्वितीयार्थे सप्तमी– यत्र, याः । नः, अस्मदीयाः । गावः पिबन्ति । (ताः) अपः देवीः (अहम्) उप ह्वये, आह्वयामि । कुतः ? (यतः) (नः) अस्माकम् । सर्वथा हविः, सोमादिलक्षणम् । सिन्धुभ्यः, नदीभ्यः, तादर्थ्ये चतुर्थ्येषा, पञ्चमी वा, तदुद्देशेन, ताभ्य इति वा । कर्त्वम्, कार्यम्, 'यत्सानोः सानुमारुहद्' इत्यत्रेव कृञः त्वन्प्रत्ययः कृत्यार्थे ॥ १८ ॥

**स्कन्द– अपः देवीः** अहम् **उप ह्वये** । 'यत्र द्वितीयार्थे सप्तम्येषा । याः **गावः पिबन्ति नः** । किं कारणम् । यस्मात् **सिन्धुभ्यः** 'स्यन्दू प्रस्रवणे' इत्यस्यैतद्रूपम् । तादर्थ्ये चतुर्थी । स्यन्दित्रीणामपामर्थाय । **कर्त्वम्** कृत्वार्थेऽयं त्वप्रत्ययः । सर्वेण कर्तव्यम् **हविः** । अथवा सिन्धुभ्य इति पञ्चमी । तच्छ्रुतेश्चादायेति वाक्यशेषः । यस्मात् स्यन्दित्रीभ्यः वसतीवर्येक-धनालक्षणम् एकदेशमादाय कर्तव्यं सोमलक्षणं हविः ॥ १८ ॥

**वेङ्कटमाधव– अपः देवीः उप ह्वये** । यासु **गावः पिबन्ति** अस्माकम् । ताभ्यो हि कर्तव्यमस्माभिः **हविः** ॥ १८ ॥

**मुद्गल– नः** अस्मदीयाः **गावः यत्र** यासु अप्सु **पिबन्ति** पानं कुर्वन्ति ताः **अपः देवीः उप ह्वये** आह्वयामि । **सिन्धुभ्यः** स्यन्दनशीलाभ्यः अद्भ्यः देवताभ्यः **हविः कर्त्वम्** अस्माभिः कर्तव्यम् ॥ १८ ॥

**सायण– नः** अस्मदीयाः **गावः यत्र** यास्वप्सु **पिबन्ति** पानं कुर्वन्ति ताः **अपो देवीः उप ह्वये** आह्वयामि । **सिन्धुभ्यः** स्यन्दनशीलाभ्योऽद्भ्यो देवताभ्यो **हविः कर्त्वं** अस्माभिः कर्तव्यम् ।

अपः । 'ऊडिदम्' इत्यादिना शस उदात्तत्वम् । पिबन्ति । 'पाघ्रा' इत्यादिना पिबादेशः । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरेणाद्युदात्तत्वम् । 'निपातैर्यद्यदि' इत्यादिना निघाताभावः । कर्त्वम् । 'डुकृञ् करणे' । 'कृत्यार्थे तवैकेन्केन्यत्वनः' (पा.सू.३-४-१४) इति कर्मणि त्वन्प्रत्ययः । गुणः । नित्स्वरेणाद्युदात्तत्वम् ॥ १८ ॥

**सिद्धाञ्जनम्– अपः** अस्माभिः प्रतिपादितलक्षणाः शक्तीः सत्त्वमयीः **देवीः** देवताः **उपह्वये** आह्वयामि । यत्र यास्वप्सु **नः गावः** अस्मदीयाः ज्ञानरश्मयः **पिबन्ति** रसमाददते, तेन सत्त्वसम्पन्ना वर्धन्ते च ('ता उपह्वये' इति सम्बन्धः) । **सिन्धुभ्यः** स्यन्दनशीलाभ्यः ताभ्यः सत्त्वमुपादाय **हविः** हवनं अर्पणद्रव्यं **कर्त्वं** कर्तव्यं अस्माभिरिति शेषः । कर्त्वम्– करोतेः त्वन् कृत्यार्थे ॥ १८ ॥

## ऋक्संहिता पदपाठसहिता

**अप्स्व१न्तरमृतमप्सु भेषजमपामुत प्रशस्तये । देवा भवत वाजिनः ।। १९ ।।**

अप्ऽसु । अन्तः । अमृतम् । अप्ऽसु । भेषजम् । अपाम् । उत । प्रऽशस्तये ।। देवाः । भवत । वाजिनः ।। १९ ।।

## ऋग्भाष्यम्

**..............तास्वन्तरदृश्यममृतं स्थितम् ।**
**अपामेव प्रशंसार्थं सहायाः सन्तु नः सुराः ।। १९ ।।**

**ऋग्भाष्यटीका– अप्स्वन्तः** । तास्वप्स्वन्तः । **अमृतं** मरणाभावस्य कारणं द्रव्यं यदुच्यते तत्तासु **अप्सु** तासामपां **अन्तः** मध्ये स्थितम् । कंपसूचितमर्थमाह । **अदृश्यमिति** ।। यद्वा अमृतं तास्वप्सु स्थितम् । कथम् । अन्तरंतर्हितम् अदृश्यम् । तेन नानुपलंभबाधः । भेषजं च रोगनिवर्तकं द्रव्यमप्स्वेव स्थितम् । तासां **अपामुत** अपामेव । **प्रशस्तये** प्रशंसार्थम् । **वाजिनो** अन्नवन्तो **देवाः** सुराः **भवत** सन्तु । पुरुषव्यत्ययः केवलाब्दैवत्यज्ञापनार्थः । नः सहाया इति शेषः । अपां प्रशंसां कुर्वतामस्माकं वाङ्मनसादि प्रेरयंत्विति ।। १९ ।।

**मन्त्रार्थमञ्जरी–** (एकोनविंशी पुरउष्णिगुष्णिग्विशेषश्छन्दः । उष्णिक्छन्दसोऽभिमानिनी तु सौरी) **अमृतम्,** मृतिनिवृत्तिहेतुद्रव्यम् । अप्सु, अपां मध्ये । अन्तः, अन्तर्हितमस्ति । भेषजम्, रोगनिवारकद्रव्यम् । (च) अप्सु, अप्स्वेवास्ति । (तासाम्) अपाम् उत, अब्देवीनामेव । प्रशस्तये, प्रशंसार्थम् । वाजिनः, अन्नवन्तः । देवाः (नः सहायाः) इति शेषः । भवत, भवन्तु, व्यत्ययेन मध्यमपुरुषः केवलाब्दैवत्यज्ञापनार्थः, अपां प्रशंसां कुर्वतामस्माकं वाङ्मनसादिकं प्रेरयन्तु इति ।। १९ ।।

**स्कन्द– अप्सु** अपां मध्ये **अमृतम् अप्सु** एव भेषजम् 'भेषजम्' (निघ.३-६) इति सुखनाम । व्याधेर्वाऽपनोदकं भेषजमुच्यते । एतज्ज्ञात्वा **अपाम् उत प्रशस्तये** उतशब्दः पदपूरणः एवार्थे वा । अपामेव प्रशंसनाय स्तुतये । हे **देवाः**! हविषो दातार ऋत्विजः! **भवत** यूयम् **वाजिनः** अन्नेन तद्वन्तः । अपः स्तोतुं हविरुपकल्पयतेत्यर्थः ।। १९ ।।

**वेङ्कटमाधव–** अपाम् अन्तः **अमृतम्** । अमृतं वा आपस्तस्मादद्भिरवतान्तमभिषिञ्चन्ति

(तै.५,६,२,१-२) इति ब्राह्मणम् । अप्सु एव भेषजम् विविधौषधिषु प्रादुर्भूतम् । अपाम् स्तोत्राय इन्द्रियाणि । बलयुक्तानि भवतः ।। १९ ।।

**मुद्गल– अप्सु** जलेषु **अन्तः** मध्ये **अमृतम्** पीयूषं वर्तते । तस्य अब्विकारत्वात् । तथैव **अप्सु भेषजम्** औषधं वर्तते । क्षुद्रोगनिवर्तकस्य अन्नस्य अप्कार्यत्वात् । **उत** अपि च तादृशीनाम् **अपाम्** देवतानाम् **प्रशस्तये** प्रशंसार्थं हे **देवाः!** ऋत्विगादयः ब्राह्मणाः! **वाजिनः** वेगवन्तः **भवत** । शीघ्रं स्तुतिं कुरतेत्यर्थः ।। १९ ।।

**सायण– अप्सु** जलेषु **अन्तः** मध्ये **अमृतं** पीयूषं वर्तते । तस्य अब्विकारत्वात् । 'अमृतं वा आपः' (तै.सं.५-६-२-१,२) इति श्रुत्यन्तराच्च । तथैव **अप्सु भेषजम्** औषधं वर्तते । क्षुद्रोगनिवर्तकस्य अन्नस्य अप्कार्यत्वात् । **उत** अपि च तादृशीनाम् **अपां** देवतानां **प्रशस्तये** प्रशंसार्थं हे **देवाः!** ऋत्विजादयो ब्राह्मणाः! 'एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः' (तै.सं.१-७-३-१) इति श्रुत्यन्तरात् । **वाजिनः** वेगवन्तः **भवत** । शीघ्रं स्तुतिं कुरुतेत्यर्थः ।

अप्सु । 'ऊडिदम्' इत्यादिना सप्तम्या उदात्तत्वम् । संहितायाम् 'उदात्तस्वरितयोर्यणः स्वरितः' इति स्वरितत्वम् । अमृतम् । 'नञो जरमरमित्रमृताः' (पा.सू.६-२-११६) इत्युत्तर-पदाद्युदात्तत्वम् । प्रशस्तये । 'तादौ च निति' (पा.सू.६-२-५०) इति गतेः प्रकृतिस्वरत्वम् । भवत । 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्यामन्त्रितस्य अविद्यमानवत्वेन पादादित्वात् न निघातः ।। १९ ।।

**सिद्धाञ्जनम्–** प्रथमपादस्य द्वादशाक्षरेण आद्यश्चेत् पुरउष्णिगिति छन्दोविदः । ऋचोऽस्याः पुरउष्णिक् छन्दः । **अप्सु** पूर्वोक्तस्वरूपासु **अन्तः** सारांशभूते मध्ये भागे **अमृतं** मरणरहितं नित्यं सत्त्वं वर्तते । **अप्सु** तथा **भेषजं** सर्वरोगनिवारणोपायभूतं सत्त्वं द्रव्यं वर्तते । **उत** अपि च **अपां** तथाभूतानां दिव्यविभवानां **प्रशस्तये** प्रशंसार्थं हे **देवाः** यूयं **वाजिनः** वाजवन्तः समृद्धिमन्तः भवत । अमृतगर्भाणां सर्वार्तिशमनीनां अपां सेवनाय देवैः समृद्धैः पूर्णैः सर्वैर्भाव्यं, आगन्तव्यम् । तथा प्रशंसाभाजनं आपः, यथा समृद्धैर्देवैः सेवितास्ताः तेषां सन्तृप्तिं जनयेयुः । सेवमानेषु देवेषु पूर्णतायां लोपश्चेत्, अपां महिमा कृत्स्नशो न विदितः स्यादित्याशयः । तस्माद् 'वाजिनो भवत अपां प्रशस्तये' इत्युक्तम् । अत्र सङ्केतभूता एवापो ग्राह्याः । भौतिकस्य

जलस्यापि एतादृशा गुणाः वर्तन्ते, त एवालङ्कारिकभाषया वेदे गीता इति भैषज्यवेदिनामेके प्राहुः । तथैवास्तु मा वा । वयमत्र तटस्थाः । प्रधानार्थस्तु अस्माभिः उक्तप्रकारक इति बोध्यम् ।। १९ ।।

## ऋक्संहिता पदपाठसहिता

**अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ।। २०, ११ ।।**

अप्ऽसु । मे । सोमः । अब्रवीत् । अन्तः । विश्वानि । भेषजा ।। अग्निम् । च । विश्वऽशंभुवम् । आपः । च । विश्वऽभेषजीः ।। २०, ११ ।।

## ऋग्भाष्यम्

### तात्पर्यार्थं पुनर्वाक्यं सुखाधारो हुताशनः ।। २०, ११ ।।

**ऋग्भाष्यटीका– अप्सु मे** । पूर्वस्यामृचि कथितमेवात्र कस्मात्कथ्यते अप्सु विश्वानि भेषजानीत्युक्त्वा पुनरापश्च विश्वभेषजीरिति किमर्थमुच्यत इत्यत आह । **तात्पर्यार्थमिति** ।। प्रमाणोपन्यासाद्यर्थत्वेनाप्यपुनरुक्तिर्द्रष्टव्या । अग्निं च विश्वशम्भुवमित्यस्यार्थमाह । **सुखाधार इति** ।। **सोमो** राजेदं **मेऽब्रवीत्** । किम् **अप्स्वन्तर्विश्वानि** भेषजानि सन्तीति । किञ्च **विश्वशम्भुवं** सम्पूर्णसुखभूमिं **अग्निं च** अप्स्वन्तः स्थितमब्रवीत् । आपश्च **विश्वभेषजीः** विश्वानि भेषजानि यासु ता विश्वभेषजीः । केवलमामकेति ङीप् । यदप्सकलभेषजरूपा एवेत्यब्रवीत् ।। २०,११ ।।

**मन्त्रार्थमञ्जरी–** (ऋ०म०१०।९।६–९) इत्यत्र त्रिशिरसा त्वाष्ट्रेण सिन्धुद्वीपेन वाम्बरीषेण दृष्टस्य एतदृक्चतुष्टयस्य मेधातिथिरपि ऋषिः (तत्र 'आपश्च' इति चरणस्य (केवल) मेधातिथिर्ऋषिः, इति विशेषः) विंश्यनुष्टुप् । सोमः, राजा । मे अप्सु अन्तः विश्वानि । भेषजा, भेषजानि । (सन्तीति) विश्वशम्भुवम्, पूर्णसुखभूमिम् । अग्निम् च, अप्स्वन्तः स्थितम् । अब्रवीत् । आपः च । विश्वभेषजीः, विश्वानि भेषजानि यासु ताः, 'केवलमामकभागधेयपापापरसमानार्थकृतसुमङ्गलभेषजाच्च' इति ङीप्, सकलभेषजरूपा एवेति वार्थः । इति (अब्रवीत्), इत्यन्वयः ।। २० ।।

**स्कन्द– अप्सु** अपां मध्ये सर्वाणि भेषजानीति मह्यम् **सोमः** कथितवान् । न च भेषजान्येव केवलानि । किन्तर्हि । **अग्निम् च** वैद्युताख्यम् । कीदृशम् । **विश्वशम्भुवम्** भवतिरत्र सामर्थ्या-दन्तर्णीतण्यर्थः । सर्वप्राणिनां सुखस्य भावयितारम् उत्पादयितारम् । **आपः च विश्वभेषजीः** स्वयमप्यापः सर्वस्य भेषजभूताः ॥ २० ॥

**वेङ्कटमाधव–** ओषधीशः **सोमः** अपाम् **अन्तः विश्वानि** भेषजानि सन्तीति माम् अब्रवीत्, **अग्निम् च** सर्वस्य सुखस्य भावयितारम् **अप्सु** स्थितम् । स्वरूपेण चोदकानि विश्वभेषजानि उवाच ॥ २० ॥

**मुद्गल– अप्सु** जलेषु **अन्तः** मध्ये **विश्वानि भेषजा** सर्वाण्यौषधानि सन्तीति **मे** मह्यं मन्त्रदर्शिने मुनये **सोमः** देवः **अब्रवीत्** । तथा **विश्वशम्भुवम्** सर्वस्य जगतः सुखकरम् एतन्नामकम् **अग्निम् च** अप्सु वर्तमानं सोमोऽब्रवीत् । **आपः च विश्वभेषजीः** ॥ २० ॥

**सायण–** कारीर्याम् उत्तरस्य आज्यभागस्य 'अप्सु मे' इत्येषा अनुवाक्या । 'वर्षकामेष्टिः' इति खण्डे 'अप्स्वग्ने सधिष्टवाप्सु मे सोमो अब्रवीत्' (आश्व.श्रौ.२-१३) इति सूत्रितम् ।

**अप्सु** जलेषु **अन्तः** मध्ये **विश्वानि भेषजा** सर्वाणि औषधानि सन्तीति **मे** मह्यं मन्त्रदर्शिने मुनये **सोमः** देवः **अब्रवीत्** । तथा **विश्वशंभुवं** सर्वस्य जगतः सुखकरम् एतनामकं च **अग्निं च** अप्सु वर्तमानं सोमोऽब्रवीत् । तथा च तैत्तिरीयाः 'अग्नेस्त्रयो ज्यायांसः' इत्यनुवाके 'सोऽपः प्राविशत्' (तै.सं.२-६.६.१) इति अग्नेः अप्सु प्रवेशमामनन्ति । लतागुल्मवृक्षमूलादीनाम् औषधानां वृष्टिजन्यत्वेन जलवर्तित्वं प्रसिद्धम् । **विश्वभेषजीः** विश्वानि भेषजानि यासु तथाविधाः अपः अपि अब्रवीत् ।

भेषजा । 'सुपां सुलुक्' इति आकारः । विश्वशंभुवम् । भवतेरन्तर्भावितण्यर्थात् क्विप् । व्यत्ययेन पूर्वपदप्रकृतिस्वरत्वम् । यद्वा । विश्वे सर्वेऽपि व्यापाराः सुखकरा यस्य । 'बहुव्रीहौ विश्वं संज्ञायाम्' (पा.सू.६-२-१०६) इति पूर्वपदान्तोदात्तत्वम् । आपः । कर्मणि शसि प्राप्ते व्यत्ययेन जस् । 'अप्तृन्' (पा.सू.६-४-१३) इत्यादिना उपधादीर्घः । विश्वभेषजीः । विश्वशंभुवमितिवत् ॥ २०,११ ॥

**सिद्धाञ्जनम्**– अनुष्टुप्छन्दस्का । ऋषिरन्तर्याजी ब्रवीति– **अप्सु** उक्तलक्षणासु **अन्तः** मध्ये **विश्वानि** सर्वाणि **भेषजा** भेषजानि सर्वारिष्टनिवारणानीत्यर्थः, सन्तीति **मे** मह्यं **सोमः** रसमयो देवः **अब्रवीत्** उपदिष्टवान् । तथा **अग्निं च** देवं च **विश्वशम्भुवं** विश्वेषां भूतानां सुखस्य भावयितारं, अब्रवीदिति सम्बन्धः (विधेयविशेषणम्)। आपश्च उक्ताः शक्तयः **विश्वभेषजीः** सर्वस्यापि स्वयं भेषजभूताः । विश्वशम्भुवम्– भवतेरन्तर्भावितण्यर्थः, ततः क्विप् । विश्वभेषजीः– विश्वानि भेषजानि औषधानि यासु ताः । केवलादिभ्यो नवभ्यः नित्यं ङीप् । द्वितीयाविभक्तिव्यत्ययः । 'आपश्च विश्वभेषज्यः' इति पृथग्वाक्यम् ।। २० ।। ११ ।।

**।। इति प्रथमाष्टके द्वितीयाध्याये एकादशो वर्गः ।।**

## ।। अथ द्वादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक्च सूर्यं दृशे ।। २१ ।।**

आपः । पृणीत । भेषजम् । वरूथम् । तन्वे । मम । ज्योक् । च । सूर्यम् । दृशे ।। २१ ।।

## ऋग्भाष्यम्

**वरूथं गुप्तिरुद्दिष्टा ज्योतिर्विष्णुदृशे तथा ।**
**सूरिप्राप्यो यतो विष्णुः सूर्य इत्यभिधीयते ।**
**पृण दाने ।। २१ ।।**

**ऋग्भाष्यटीका– आपः पृणीत** । अत्र वरूथशब्दार्थमाह । **वरूथमिति** ।। उत्तरार्धं व्याख्याति । **ज्योतिरिति** ।। सूर्यशब्दं विष्णौ निर्वक्ति । **सूरीति** ।। तृतीयान्तसूरिशब्दोपपदाद्यातेः कर्मणि कः । सूरिशब्दात्तृतीयासमर्थात्प्राप्यार्थे वा तद्धितो यः । पृणीतेत्यस्य धातुं पठति । **पृण दान इति** ।। हे **आपो** मह्यं **भेषजं पृणीत** दत्त । **मम तन्वे** शरीराय । षष्ठ्यर्थे चतुर्थी । **वरूथं** गुप्तिं च दत्त । भेषजस्यैव वैतद्विशेषणम् । **सूर्यं** विष्णुं **दृशे** द्रष्टुम् । दृशे विख्ये चेत्यव्ययम् । यद्वा सूर्यमिति षष्ठ्यर्थे दृश इति चतुर्थी । विष्णुदृशे ज्योक् ज्योतिर्ज्ञानं च पृणीत ।।२१।।

**मन्त्रार्थमञ्जरी–** (एकविंशी प्रतिष्ठा गायत्रीविशेषः) **(हे) आपः** (मह्यम्) भेषजम् । पृणीत, 'पृण दाने' (वै०नि०३।२०) दत्त । मम । तन्वे, षष्ठ्यर्थे चतुर्थी, शरीरस्य । वरूथम्, गुप्तिम् । (च) (पृणीत) दत्त । सूर्यम्, सूरिभिः प्राप्यम्, सूरिशब्दात्प्राप्त्यर्थे तद्धितो यत्प्रत्ययः, 'यस्येति च' इतीवर्णलोपः, विष्णुम् । दृशे, द्रष्टुम्, 'दृशे विख्ये च' (इति निपातः, 'कृन्मेजन्तः') इत्यव्ययत्वम्, यद्वा– 'सूर्यम्, सूर्यस्य विष्णोः । दृशे, दर्शनाय' । इति षष्ठी चतुर्थ्यौ ज्ञेये । ज्योक् च, (ज्योक्शब्दो) ज्योतिःपर्यायः, ज्ञानं च । (पृणीत) दत्त इति ।। २१ ।।

**स्कन्द–** हे **आपः! पृणीत** 'पृ पालनपूरणयोः' । पालयतात्मान्तर्गतम् भेषजम् । कीदृशम् । **वरूथम्** वरणीयम् । किमर्थम् । **तन्वे** तादर्थ्ये एषा चतुर्थी । शरीरस्यार्थाय । कस्य । मम मच्छरीरं भेषजयितुमित्यर्थः । अथवा सम्प्रदानचतुर्थी श्रुतेर्दानार्थ एव पृणातिः 'पृणीयादि-न्नाधमानाय' (ऋ.१०-११७-५) इति यथा । दत्त भेषजं शरीराय मे । न च केवलम् । किन्तर्हि । **ज्योक् च सूर्यम् दृशे** ज्योगिति निपातश्चिरवचनः । चिरं सूर्यं द्रष्टुं पृणीत । किम् । सामर्थ्याच्चक्षुः । तेन हि सूर्यश्चिरं दृश्यते । अथवा सूर्यमिति पृणातेरेव कर्म न दृशेः । सूर्यं च पृणीत चिरं द्रष्टुमिति । एतदुक्तं भवति– शरीरभेषजं च मे दत्त । अविकलेन्द्रियतां च चिरं सूर्यस्य सन्दर्शनायेति ।। २१ ।।

**वेङ्कटमाधव– आपः** । प्रयच्छत भेषजम् उपद्रवाणाम् वा रक्षाभूतम् मम शरीरस्य । चिरं च सूर्यम् मां द्रष्टुं कुरुत ।। २१ ।।

**मुद्गल–** हे **आपः! मम तन्वे** शरीरार्थम् **वरूथम्** रोगनिवारकम् **भेषजम्** औषधम् **पृणीत** पूरयत । किञ्च **ज्योक् च** चिरम् **सूर्यम् दृशे** द्रष्टुं नीरोगा वयं शक्ता भवामेति शेषः ।।२१।।

**सायण–** हे **आपः! मम तन्वे** शरीरार्थं **वरूथम्** रोगनिवारकं **भेषजम्** औषधं **पृणीत** पूरयत । किञ्च **ज्योक् च** चिरं **सूर्यं दृशे** द्रष्टुं नीरोगा वयं शक्नुवाम इति शेषः । पृणीत । 'पृ पालनपूरणयोः' । लोण्मध्यमबहुवचनं थ । तस्य 'तस्थस्थमिपाम्' इति तादेशः । 'त्र्यादिभ्यः श्ना' । 'प्वादीनां ह्रस्वः' इति ह्रस्वः । 'ई हल्यघोः' इति ईत्वम् । 'ऋवर्णाच्च' इति णत्वम् । 'सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति तिङः स्वरः शिष्यते । आपः इत्यस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' इति अविद्यमानवत्त्वे पादादित्वात् निघाताभावः । वरूथम् ।

'वृञ् वरणे' । 'जॄवृञ्भ्यामूथन्' (उ.सू.२-१६३) । नित्वादाद्युदात्तः । तन्वे । 'ङिति ह्रस्वश्च' (पा.सू.१-४-६) इति नदीसंज्ञा पाक्षिकी इति आडागमाभावः । 'उदात्तयणो हल्पूर्वात्' इति विभक्त्युदात्तत्वे प्राप्ते व्यत्ययेन 'उदात्तस्वरितयोः' इति स्वरितत्वम् । दृशे । 'दृशे विख्ये च' (पा.सू.३-४-११) इति तुमर्थे निपात्यते ।। २१ ।।

**सिद्धाञ्जनम्–** हे **आपः** देव्यः, **मम तन्वे** शरीरार्थं **वरूथम्** परिधिभूतं परितः कवचवद् वृत्वा रक्षकमित्यर्थः **भेषजं** सर्वारिष्टनिवारकं **पृणीत** पूरयत । अपि च **ज्योक्** चिरं **सूर्यं** परं ज्योतिः **दृशे च** द्रष्टुं च भेषजं पृणीतेति सम्बन्धः । नेह लौकिकं; भेषजं शरीररक्षार्थमपि विवक्षितम् । भैषज्ये औषधसेवायाः प्राधान्यात्, उपचारमात्रं प्रार्थना । अथ च चिरं सूर्यदर्शनाय बलप्रदं भेषजं, न लौकिकं भवति । दिव्यवैभवं आप्यं भेषजमन्तर्यामिनो लभ्यमत्रोक्तमिति स्पष्टम् ।। २१ ।।

## ऋक्संहिता पदपाठसहिता

**इदमापः प्र वहत यत्किं च दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ।। २२ ।।**

इदम् । आपः । प्र । वहत । यत् । किम् । च । दुःऽइतम् । मयि । यत् । वा । अहम् । अभिऽदुद्रोह । यत् । वा । शेपे । उत । अनृतम् ।। २२ ।।

## ऋग्भाष्यम्

**अखिलं पापमापः प्रवहतापि नः ।**
**हिंसाजं शेपजं चैव तथैवानृतसम्भवम् ।। २२ ।।**

**ऋग्भाष्यटीका– इदमापः** । अखिलम् । हे **आपो यत्किञ्च मयि दुरितमिदं** नोऽस्माकमखिलमपि पापं **प्रवहत** अपनयत । किं तत् । **अहं यदभिदुद्रोह वा** हिंसाजमित्यर्थः । यद्वा **शेपे** शेपशब्दोऽत्र शेफः शब्दपर्यायः । निमित्तसप्तम्येषा । शेफजं च । **उतानृतम्** अनृतसम्भवञ्च । तत्सर्वं प्रवहतैव । वा शब्दावुतशब्दश्च समुच्चये ।। २२ ।।

**मन्त्रार्थमञ्जरी–** तिस्रोऽनुष्टुभः । (हे) **आपः** । यत् किम् च मयि दुरितम् इदम्, अस्माकमखिलमपि पापम् । प्रवहत, अपनयत । किं तत्? अहम् । यत् वा अभिदुद्रोह,

प्राणिहिंसामकार्षम्, तज्जन्यं वा । यत् वा शेपे, शेफशब्दपर्यायोऽत्र शेपशब्दः, निमित्तसप्तमी, शेपनिमित्तम्, शिश्नजम् । उत अनृतम्, अनृतसम्भवम् । (च) तत्सर्वम् 'प्र वहत' इति ॥ २२ ॥

**स्कन्द–** हे **आपः! प्र वहत** प्रकर्षेण अन्यत्र प्रापयत । अपनयतेत्यर्थः । किम् । **यत् किम् च दुरितम्** कायिकम् **मयि** । **यत् वा अहम् अभिदुद्रोह** अद्रोग्धव्याय मनसा द्रुग्धवान् । यच्च मानसमित्यर्थः । **यत् वा शेपे** 'शप आक्रोशे' । आक्रुष्टवानहम् । यच्च वाचिकमित्यर्थः । **उत अनृतम्** असत्यजनितम् । यच्चानृतवचननिमित्तमित्यर्थः ॥ २२ ॥

**वेङ्कटमाधव–** इदम् पापम् आपः! अपनयत यत् किम् च मयि अस्ति । यत् वा अहम् अद्रोग्धव्यान् पित्रादीन् **आभिदुद्रोह** । यत् वा शप्तवानस्मि अनृतम् । अनृतेऽर्थे शपथं कृतवानित्यर्थः ॥ २२ ॥

**मुद्गल–** हे **आपः! मयि** यजमाने **यत् किम् च दुरितम्** अज्ञानात् निष्पन्नम्, वा अथवा **अहम्** यजमानः **अभिदुद्रोह** सर्वतो बुद्धिपूर्वकं द्रोहं कृतवानस्मि वा अथवा **शेपे** साधुजनं शप्तवानस्मीति **यत्** अस्ति **उत** अपि च **अनृतम्** उक्तवानिति **यत्** अस्ति तत् **इदम्** सर्वम् अपराधजातम् **प्र वहत** मत्तोऽपनीय प्रवाहेण अन्यतो नयत ॥ २२ ॥

**सायण–** पशौ मार्जने 'इदमापः प्र वहत' इत्येषा विनियुक्ता । 'हुतायां वपायाम्' इति खण्डे सूत्रितम्– 'इदमापः प्र वहत' (आश्व.श्रौ.३-५) इति । एषैव अवभृथेष्टौ स्नाने विनियुक्ता । 'पत्नीसंयाजैश्चरित्वा' इति खण्डे 'इदमापः प्र वहन' 'सुमित्र्या न आप ओषधयः सन्तु' (आश्व.श्रौ.६-१३) इति सूत्रितम् ।

**मयि** यजमाने **यत् किं च दुरितम्** अज्ञानात् निष्पन्नं वा अथवा **अहं** यजमानः **अभिदुद्रोह** सर्वतो बुद्धिपूर्वकं द्रोहं कृतवानस्मि वा अथवा **शेपे** साधुजनं शप्तवानस्मीति यत् अस्ति **उत** अपि च **अनृतम्** उक्तवान् इति **यत्** अस्ति तत् इदं सर्वमपराधजातं **प्र वहत** मत्तोऽपनीय प्रवाहेणान्यतो नयत ।

मयि । मपर्यन्तस्य 'त्वमावेकवचने' इति मादेशे कृते 'अतो गुणे' इति पररूपे च सति 'योऽचि' इति दकारस्य यकारादेशः । एकादेशस्वरेण मकारात् परस्य अकारस्योदात्तत्वम् ।

दुद्रोह । 'द्रुह जिघांसायाम्' । णलि गुणे द्विर्वचनह्रस्वहलादिशेषाः । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । यद्वृत्तयोगात् निघाताभावः । शेपे । 'शप आक्रोशे' । लिटि व्यत्ययेन तङ् । उत्तमैकवचनम् इट् । टेः एत्वम् । 'अत एकहल्मध्ये' (पा.सू.६-४-१२०) इति एत्वाभ्यास-लोपौ । प्रत्ययस्वरेणान्तोदात्तत्वम् । पूर्ववत् निघाताभावः ।। २२ ।।

**सिद्धाञ्जनम्**– अनुष्टुप् छन्दः । हे **आपः** देव्यः, **मयि यत् किं च दुरितं** यत् किमपि पापं (ममाविदितमेव स्थितं, मया कृतं वा अज्ञानात्) वर्तते । **वा** अथवा **यत् अहं अभिदुद्रोह** सर्वतो द्रोहं कृतवान् जिघांसितवान् वा अहमिति यत् । **यत् वा शेपे** अथवा शप्तवान् आक्रुष्टवान् वेति यत्, **उत अनृतं** अथवा असत्यमुक्तवान्वः इति यत्, इदं तदिदं सर्वं **प्र वहत** प्रकर्षेण नयत, क्षालयत युष्माकं प्रवाहेण सर्वविधं दुरितमस्मदीयमिति यजमानस्यर्षेः प्रार्थना ।। २२ ।।

## ऋक्संहिता पदपाठसहिता

**आपो॑ अ॒द्यान्व॑चारिषं॒ रसे॑न॒ सम॑गस्महि । पय॑स्वानग्न॒ आग॑हि॒ तं मा॒ संसृ॑ज॒ वर्च॑सा ।। २३ ।।**

आपः॑ । अ॒द्य । अनु॑ । अ॒चा॒रि॒षम् । रसे॑न । सम् । अ॒ग॒स्म॒हि॒ । पय॑स्वान् । अ॒ग्ने॒ । आ । ग॒हि॒ । तम् । मा॒ । सम् । सृ॒ज॒ । वर्च॑सा ।। २३ ।।

## ऋग्भाष्यम्

### रसेन सङ्गताश्चस्मो यस्मादनुचरा हि वः ।। २३ ।।

**ऋग्भाष्यटीका**– आपः । रसेन । हे **आपो**ऽद्य वयं यस्माद्वोऽन्व**चारिषम्** । एकवचनं बहुवचनार्थे । वोऽनुचरा अभूम तस्मात् **रसेन** सुखेन **समगस्महि** संगताः स्मः । हे **अग्ने** अग्निं च विश्वशम्भुवमित्युक्तः । **पयस्वान्** अद्भिः सहित **आगहि** अस्मानागच्छ । आगत्य च तम् एवं स्तुवन्तम् । **मा** माम् । **वर्चसा** तेजसा । **संसृज** संयोजय ।। २३ ।।

**मन्त्रार्थमञ्जरी**– (हे) आपः अद्य । (वयं यस्मात्) (वः) अनु अचारिषम्, एकवचनं बहुवचनार्थे, युष्मदनुचरा अभूम । (हि) यस्मात्, रसेन, सुखेन । सम् अगस्महि, सङ्गताः स्मः । (तस्मात्) (हे) अग्ने । अ॒ग्निं च॑ वि॒श्वशं॑भुवम्, इत्युक्तः (त्वम्) पयस्वान्, अद्भिः

सहितः । आ गहि, अस्मानागच्छ । आगत्य च तम्, एवं स्तुवन्तम् । मा, माम् । वर्चसा, तेजसा । सम् सृज, संयोजय ।। २३ ।।

**स्कन्द– आपः** इति द्वितीयार्थे प्रथमा । अपः **अद्य अनु अचारिषम्** चरतिर्गत्यर्थः । गतवानहम् । यदपां माहात्म्यं तत् प्रकाशितमित्यर्थः । अतः 'यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति' (या.१३-१३) इति स्मरणात् ताद्भाव्यप्रतिपत्तेः अपाम् **रसेन सम् अगस्महि** सङ्गता वयम् । 'अध्यर्धान्त्याग्निदेवता' (बृदे.३-९७) । सूक्तस्य ऋषेर्वा अन्त्या अध्यर्धाग्निदेवता । **पयस्वान्** हविर्लक्षणेनान्नेन तद्वान् । मयोपकल्पितहविष्कः सन्नित्यर्थः । अथवा यन्मह्यं दास्यतेऽन्नं तद्वान् । तद् गृहीत्वेत्यर्थः । हे **अग्ने! आ गहि** आगच्छः । आगत्य च योऽहं तुभ्यं हविषो दाता स्तोता वा **तम् मा** माम् **सम् सृज** सम्बन्धय **वर्चसा** दीप्त्यान्नेन वा । वर्चो मह्यं देहीत्यर्थः ।। २३ ।।

**वेङ्कटमाधव– उदकानि अद्य अन्वचारिषम्** अपाम् **रसेन** च सङ्गताः । उक्ता एकवचनबहुवचनयोः सङ्गतिः । रसवान् **अग्ने!** मत्समीपम् आगच्छ । **तम्** मां त्वम् **वर्चसा सम् सृज** अप्सु स्थित! इति ।। २३ ।।

**मुद्गल– अद्य** अस्मिन् दिने अवभृथार्थम् **आपः अन्वचारिषम्** जलानि अनुप्रविष्टोऽस्मि । प्रविश्य च **रसेन** जलसारेण **सम् अगस्महि** सङ्गताः स्मः । हे **अग्ने! पयस्वान्** जले वर्तमानत्वेन पयोयुक्तस्त्वम् **आ गहि** अस्मिन् कर्मणि आगच्छः । **तम् मा** तादृशं स्नातं माम् **वर्चसा** तेजसा **सम् सृच** सयोजय ।। २३ ।।

**सायण–** पशौ आहवनीयोपस्थाने 'आपो अद्यान्वचारिषम्' इत्येषा । 'मनोतायै संप्रेषित' इति खण्डे सूत्रितम्– 'एत्योपतिष्ठन्त आपो अद्यान्वचारिषम्' (आश्व.श्रौ.३-६) इति ।

**अद्य** अस्मिन् दिने अवभृथार्थम् **आपः अन्वचारिषं** जलान्यनुप्रविष्टोऽस्मि । प्रविश्य च **रसेन** जलसारेण **समगस्महि** सङ्गताः स्मः । हे **अग्ने पयस्वान्** जले वर्तमानत्वेन पयोयुक्तः त्वम् **आगहि** । अस्मिन् कर्मण्यागच्छ । **तं मा** तादृशं स्नातं मां **वर्चसा** तेजसा **सं सृज** संयोजय ।

आपः । कर्मणि शसि प्राप्त व्यत्ययेन जस् । अचारिषम् । चर गत्यर्थः । लुङि च्लेः सिन् । 'आर्धधातुकस्येड्वलादेः' (पा.सू.७-२-३५) इति इट् । 'नेटि' (पा.सू.७-२-४) इति वृद्धिप्रतिषेधे प्रा तदपवादतया 'अतो र्लान्तस्य' (पा.सू.७-२-२) इति उपधाया वृद्धिः । अगस्महि । 'समो गम्यृच्छि' (पा.सू.१-३-२९) इति आत्मनेपदम् । च्लेः सिच् । 'मन्त्रे घस' इत्यादिना च्लेर्लुगभावश्छान्दसः । 'एकाच उपदेशेऽनुदात्तात्' (पा.सू.७-२-१०) इति इट्प्रतिषेधः । 'वा गमः' (पा.सू.१-२-१३) इति सिचः कित्त्वात् 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । गहि । लोटि गमेः सिपो हिः । अपित्त्वेन ङित्त्वात् 'अनुदात्तोपदेशः' इत्यादिना अनुनासिकलोपः । 'अतो हेः' इति लुक् न भवति, 'असिद्धवदत्राभात्' इति मलोपस्यासिद्धत्वात् ।। २३ ।।

**सिद्धाञ्जनम्–** अनुष्टुप् छन्दः । आप एव देवता अर्धर्चस्य पूर्वस्य, उत्तरस्य त्वग्निः । **आपः** अपः (द्वितीयाविभक्तिव्यत्ययः) **अद्य** इदानीं **अन्वचारिषं** अनुसृत्य अविच्छेदेन वा प्राप्तवानस्मि (चरतिर्गत्यर्थः) 'यदपां माहात्म्यं तत् प्रकाशितमित्यर्थः' इति स्कन्दस्वामी । 'यां या देवतां निराह तस्यां तस्यां ताद्भाव्यमनुभवतीति स्मरणात् ताद्भाव्यप्रतिपत्तेः' इत्युदाहृतवान् व्याख्याता । साध्वेतत् । एवं प्रतिपत्तेः किं फलम् ? आह । **रसेन** आप्येन सारेण **समगस्महि** समगस्महि सङ्गताः स्मः (सम्पूर्वको गमिः, आत्मनेपदं, लुङ्, च्लेर्लुगभावादिः अनुनासिक-लोपश्छान्दमः)। अथ हे **अग्ने पयस्वान्** गोसमृद्धः प्राज्ञरश्मिभूयिष्टः त्वं **आगहि** आगच्छ, आगत्य च **तं मा** तादृशं मां **वर्चसा** तेजसा **संसृज** संयोजय । आप्यमारतादात्म्यानुभविनो मम त्वत्कर्तृकतेजस्संसर्जनसम्पत्तयेऽधिकारो भवति, भगवन्नग्ने! ।। २३ ।।

## ऋक्संहिता पदपाठसहिता

**सं मा॑ग्ने॒ वर्च॑सा सृज॒ सं प्र॒जया॒ समायु॑षा । वि॒द्युर्मे॑ अस्य दे॒वा इन्द्रो॑ विद्यात्स॒ह ऋषि॑भिः ।। २४,१२,२३,९ ।।**

सम् । मा॒ । अ॒ग्ने॒ । वर्च॑सा । सृ॒ज॒ । सम् । प्र॒ऽजया॑ । सम् । आयु॑षा । वि॒द्युः । मे॒ । अ॒स्य॒ । दे॒वाः । इन्द्रः॑ । वि॒द्यात् । स॒ह । ऋषि॑ऽभिः ।। २४,१२,२३,९ ।।

## ऋग्भाष्यम्

**कुर्युर्मामपि विद्वांसं मदर्थं सर्वदा सुराः ।**
**एतं मामिति वार्थः स्यादनुजानन्तु वोदितम् ।। २४,१२,४,५ ।।**

**ऋग्भाष्यटीका– संमाग्ने** । हे **अग्ने मा** माम् । **वर्चसा संसृज** संयोजय । **प्रजया** च संसृज । **आयुषा** च संसृज । उत्तरार्धं व्याख्याति । **कुर्युरिति** ।। अनेन विद्युरित्यन्तर्णीतण्यर्थस्य रूपम् । अस्य मे इति द्वितीयार्थे षष्ठ्यावित्युक्तं भवति । **देवाः** अग्न्याद्याः । **अस्य मे** एतं माम् । **विद्युः** विद्वांसमपि कुर्युः । ऋषिभिः सहेन्द्रश्च मां **विद्यात्** वेदयेत् । प्रकारान्तरेण व्याख्याति । **मदर्थमिति** ।। अनेन ये देवाः सर्वं विद्युः यश्चेन्द्रः सर्वं विद्यात् ते सर्वे सह ऋषिभिः सुरा अस्य मे सन्तु सर्वदा मदर्थं सन्तु । ममोपकारकाः संत्वित्युक्तं भवति । प्रकारान्तरेण व्याचष्टे । **एतमिति** ।। अनेन षष्ठ्यौ द्वितीयार्थे विद्युरिति तु यथाश्रुतमेवेत्युक्तं भवति । देवा अग्न्याद्या अस्य मे एतं मां कृपापात्रं विद्युर्जानीयुः । ज्ञात्वा च कृपां कुर्युरिति यावत् । **इन्द्रः** च **सह ऋषिभिः** विद्यात् जानीयात् । प्रकारान्तरेण व्याख्याति । **अनुजानंत्विति** ।। अनुमोदंतामित्यर्थः ।। अत्र देवा अस्य मे उदितं विद्युरिति योज्यम् ।। २४,१२,४,५ ।।

**मन्त्रार्थमञ्जरी– (हे) अग्ने** । मा, माम् । वर्चसा । सम् सृज, संयोजय । प्रजया (च) सम् (सृज) आयुषा (च) सम् (सृज) । देवाः, अग्न्याद्याः । अस्य मे, एनं माम्, व्यत्ययात् । विद्युः, वेदयेयुः, विद्वांसमपि कुर्युः, विदेः अन्तर्णीतण्यर्थस्य लिङि रूपम् । ऋषिभिः सह इन्द्रः (च) (अस्य मे), एनं माम् । विद्यात्, वेदयेत् । यद्वा (ये) देवाः (सर्वम्) विद्युः (यश्च) इन्द्रः (सर्वम्) विद्यात् (ते, स च) ऋषिभिः सह अस्य । मे सन्तु, सर्वदा ममोपकारकाः सन्तु । अथ वा– देवाः, अग्न्याद्याः । अस्य मे, एनं माम् (कृपापात्रम्) । विद्युः, जानीयुः, ज्ञात्वा च कृपां कुर्युरिति यावत् । इन्द्रः (च) सह ऋषिभिः विद्यात्, कृपापात्रं जानीयात्, (ज्ञात्वा च कृपां कुर्यादिति यावत्) यद्वा देवाः अस्य मे (उदितम्) विद्युः, अनुमोदन्ताम् । इन्द्रः (च) सह ऋषिभिः । विद्यात्, अनुमोदताम् इति ।। २४ ।।

**स्कन्द–** सम् इत्युपसर्गः सृज इत्याख्यातेन सम्बन्धयितव्यः । **मा** हे **अग्ने!** वर्चसा **सम् सृज** । **प्रजया सम्** सृत । **आयुषा** जीवितमायुरुच्यते । भवत्प्रसादाद् **देवा विद्युः** जानीयुः ।

ज्ञानेन चास्य करणं लक्ष्यते । कुर्युः इत्यर्थः । लोकेऽपि हि यो ह्यर्थनया कारयितुमिष्यते स उच्यते इदं जानीहीति । कस्य विद्युः । **मे** मम । किम् । **अस्य** 'संमाग्ने वर्चसा सृज' इत्येवमादेः कामस्यायमन्वादेशः । अनुक्तत्वात् द्वितीयार्थे चात्र षष्ठी । एवं कामम् । के देवाः । मरुदादयः । न च केवलाः । किन्तर्हि । **इन्द्रः** अपि **विशात् सह ऋषिभिः** देवसामान्येऽन्तर्भूतस्यापीन्द्रस्यात्र पृथगुपादानं प्राधान्यख्यापनार्थम् । 'ब्राह्मणा आयाताः उपाध्यायदेवदत्तोऽप्यायातः' इति यथा । तथा भगवतोऽग्नेः प्रसादाद् विद्युः देवा इन्द्रश्चेत्येवमग्नेः प्राधान्यादाग्नेयत्वस्याविरोधः । केचित्तु देवानामिन्द्रस्य च स्वप्राधान्याद् वैश्वदेवीमेवैतामृचं मन्यन्ते । एवं ह्याह– 'सं मेति तिस्रो वैश्वदेवी प्राजापत्याऽऽग्नेयी च' इति ॥ २४ ॥

**वेङ्कटमाधव– सम् सृज** माम् **अग्ने** । वर्चः प्रभृतिभिः । तम् माम् देवादयश्च जानीयुः ॥

**मुद्गल–** हे **अग्ने! सम् वर्चसा सम् प्रजया सम् आयुषा मा सृज** वर्चःप्रजाऽऽयुर्भिः मां संयोजय । **देवाः** सोमपातारः **अस्य मे** यजमानस्य **विद्युः** अनुष्ठानं जानीयुः । किञ्च **इन्द्रः** च **सह ऋषिभिः** ऋषिगणैः सह ममानुष्ठानम् विद्यात् जानीयात् ॥ २४ ॥

**सायण–** हे **अग्ने!** वर्चःप्रजायुर्भिः मां संयोजय । **देवाः** सोमपातारः **अस्य मे** यजमानस्य **विद्युः** अनुष्ठानं जानीयुः । किंच **इन्द्रः** च ऋषिगणैः **सह** ममानुष्ठानं **विद्यात्** जानीयात् ।

विद्युः । 'विद ज्ञाने' । लिङि 'झेर्जुस्' (पा सू.३-४-१०८) । यासुट् । 'लिङः सलोपः' इति सकारलोपः । 'उस्यपदान्तान्' (पा.सू.६-१-९६) इति पररूपत्वम् । यासुट उदात्तत्वेन एकादेश उकारोऽपि उदात्तः । अस्य । 'इदमोऽन्वादेशे' इति अशनुदात्तः । विभक्तिरपि सुस्वेन अनुदात्ता । सह ऋषिभिः इत्यत्र 'ऋत्यकः' (पा.सू.६-१-१२८) इति प्रकृतिभावः ॥ २४,१२,५ ॥

**सिद्धाञ्जनम्–** हे **अग्ने! मा** मां **वर्चसा** तेजसा **संसृज** संयोजय, **प्रजया** सन्तत्या **संसृज**, **आयुषा** जीवितेन **संसृज** । वर्चः दिव्यं तेजः, प्रजा अन्तर्यागविद्यासन्ततिः, आयुः देवार्थजीवितं चेति ग्राह्यम् । अस्य **मे** मम यजमानस्य दशां ईप्सितां अनुग्राह्यां प्रार्थितां सम्पदं वा देवाः सामान्येन सर्वे विद्युः जानीयुः । अस्मदपेक्षितस्य ज्ञातारो भवन्तु देवाः । ज्ञातारः अनुग्रहीतार एव भवन्तीत्याशयः । देवा इति सामान्येनोक्त्वा 'इन्द्रो विद्यात् सह ऋषिभिः' इत्युक्तम् । इदं

च वैशिष्ट्यप्रतिपादनार्थम् । ऋषयस्तु मानुष्यस्योद्धारायेन्द्रस्य सहकारिणो मनुष्या एव देवभावं प्राप्ताः मानुष्याभिमानिनो देवर्षयो वा । ब्राह्मणा आगताः, वसिष्ठोऽप्यागत इतिवत् ।। २४ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये द्वादशो वर्गः ।।

।। इति प्रथमे मण्डले पञ्चमोऽनुवाकः ।।

## ।। अथ त्रयोदशो वर्गः ।।

(सूक्तम् २४)

## ऋक्संहिता पदपाठसहिता

(१५ आजीगर्तिः शुनःशेप सः कृत्रिमो वैश्वामित्रो देवरातः ऋषिः । १ कः (प्रजापतिः); २ अग्निः, ३-५ सविता, ५भोगो वा, ६-१५ वरुणः देवता । १,२,६-१५ त्रिष्टुप्, ३-५ गायत्री छन्दः)

**कस्य॑ नूनं क॑तमस्या॒मृता॑नां मना॑महे॒ चारु॑ दे॒वस्य॒ नाम॑ । को नो॑ म॒ह्या अदि॑तये॒ पुन॑र्दात्पि॒तरं॑ च दृ॒शेयं॑ मा॒तरं॑ च ।। १ ।।**

कस्य॑ । नू॒नम् । क॒तमस्य॑ । अ॒मृता॑नाम् । मना॑महे । चारु॑ । दे॒वस्य॑ । नाम॑ । कः । नः॒ । म॒ह्यै । अदि॑तये । पुन॑ः । दा॒त् । पि॒तर॑म् । च॒ । दृ॒शेय॑म् । मा॒तर॑म् । च॒ ।। १ ।।

## ऋग्भाष्यम्

**शुनःशेपो ददर्शात उत्तरं परमृक्शतम् ।**
**यूपादात्मविमोक्षाय स्तुवन्देवान्पृथक्पृथक् ।**
**त्र्यूनं शतमिहैवान्यच्चतुर्थे पञ्चमेऽपि च ।**
**मण्डले ब्रह्मणोक्तस्तु क्रमोत्रापि ह्यृचां भवेत् ।।**

**कर्तुः परानन्दतनोरिदानीं मनामहे चारु विष्णोः सुराणाम् ।**
**नामेशश्चेन्दिन्दिरायै पुनर्दाद्दृशेयं तां मातरं तं च देवम् ।**
**समुक्तानाममृतानामजेशमुख्यानां चाभ्यधिको यत्सुखादौ ।**
**तेनोक्तोऽसौ कतमोऽखण्डितत्वात्स चादितिर्महती तन्मही च ।**
**देशानंत्यात्तन्महत्त्वं गुणैस्तु कालाचोक्तं तस्य चाखण्डितत्वम् ।**

**स एव माता च पिता च देवस्तस्मिन्सदा संस्थितास्ततपुनर्दात् ।**
**अत्ति विश्वं तेन चैवादितिस्स श्रीवा ब्रह्मा प्रोक्त एवं क एव ।**
**गुणाश्च तस्याभ्यधिकाः सदैव जीवेभ्यस्तत्सोऽपि तद्वाक्ययोग्यः ।**
**ददात्वसौ विष्णवे चेंदिरायै प्राप्तानस्मानपि तौ सर्वगत्वात् ।**
**विशेषदेशप्राप्तितस्तस्य चाप्तिर्वैकुण्ठादिर्लोक उक्तो हरेश्च ।। १ ।।**

**ऋग्भाष्यटीका**– व्याख्याता मेधातिथिदृष्टा ऋचः । व्याचिख्यासितानामृषिमाह ।। **शुनःशेप इति** ।। परम् उत्तमम् । यद्वाऽत उत्तरं त्र्यूनं शतं परं त्र्यं चेत्यृक् शतम् । यूपादित्यादिना हरिश्चन्द्रो ह वैधस इति ब्राह्मणोक्तां कथां स्मारयति । तच्च उदुत्तमं वरुणपाशमित्यादेः सुबोधत्वाय । एवं सति त्वमग्ने प्रथम इत्यादीनामपि शुनःशेपदृष्टत्वं प्रसक्तमित्यत उक्तमत उत्तरं परमिति । तद्विवृणोति । **त्र्यूनमिति** ।। इह कस्य नूनमित्याद्यायामानुपूर्व्यां त्र्यूनमेव शतमस्ति अन्यत्रयं चतुर्थे पञ्चमेऽपि च मण्डलेऽस्ति । अतो न त्वमग्ने प्रथम इत्यादीनां शुनःशेपदृष्टत्वम् । नापि तस्य शतर्चित्वहानिः । ननु कस्मादेवं कल्प्यते शुनःशेप इदानीं त्र्यूनमेव शतं दृष्टवानित्यस्तु । शतर्चित्वं तु सामीप्याद्भविष्यतीत्यत आह । **ब्राह्मणोक्तस्त्विति** ।। ब्राह्मणे खल्वेकस्मिन्नेव काले देशेऽवस्थायां च शुनःशेपस्यान्यूनऋक्शतदर्शनं सप्रजापतिमेवेत्यादिनोक्तम् । स ब्राह्मणोक्तो ह्यृचां क्रमोऽत्राप्यनुसर्तव्यो भवेत् । अन्यथा तद्विरोधः स्यात् । अथवा अत्रापि त्र्यूने शतेपि । ब्राह्मणोक्त एव क्रमो भवेन्न तु यथा श्रुतः । तथाहि । यच्चिद्धि सत्यसोमपा इत्यादिकाभिरिन्द्रेऽश्विनो रुषसि च स्तुतायां विमुक्तपाशं शुनःशेपमधिकृत्य ब्राह्मणम् । तमृत्विज ऊचुस्त्वमेव नोऽस्याह्नः संस्थामृचेत्यादि । तत्र च यत्र ग्रावेत्यादीनां स्फुटं परत्वमवगम्यत इति । **कस्य नूनम्** । पञ्चदशार्चमिदं सूक्तम् । प्रजापतेरियमृक् । कर्तुरित्यादिना विष्णौ तावद्योजयति । ईशश्चेत् अत्र विवक्षितः तदैवं योज्यमिति शेषः । वयं कस्य करोतेर्डः । कर्तुः । **अमृतानां** सुराणां मध्ये **कतमस्य** सुखतमस्य परानन्दतनोर्देवस्य विष्णोः । **चारु** भद्रं **नाम** । **नूनं** इदानीम् । **मनामहे** । अत्रायं धातुः सामर्थ्यादुच्चारणाद्यर्थे वर्तते । **स को नो**ऽस्मान् **मह्यै अदितये** इन्दिरायै **पुनर्दात्** दद्यात् ।

ततश्च **पितरं** तं देवं **मातरं** तां देवीं च **दृशेयं** पश्येयम् । अमृतानां कतम इत्येतत्प्रकारान्तरेण व्याख्याति । **स इति** ।। अमृतानामित्यनुवादेन मुक्तानामिति व्याख्यानम् । मुक्तानां

सकाशादिति शेषः । सुखादावित्यनेन कशब्दोऽन्येषामपि गुणानामुपलक्षणार्थ इत्याचष्टे । प्राङ्मह्या अदितय इतीन्दिराविषयं व्याख्यातम् । इदानीं परमेश्वरविषयं च भवतीत्याशयेन निर्वक्ति । **अखण्डितत्वादिति** ।। 'दो अवखण्डने' । अस्मात्कर्मणि क्तिन् । ततो नञ् समासः । यस्मान्महती तत् तस्मान्मही च स्त्रीरूपः स इत्यर्थः । महत्त्वमखण्डितत्वं तत्त्वं चैकमेव । अतः पुनरुक्तिं परिहरति । **देशानन्त्यादिति** ।। अखण्डितत्वं त्विति सम्बन्धः । द्वितीयश्चोवधारणे । पितरं मातरं चेति व्यधिकरणं प्राग्व्याख्यातम् । इदानीं द्वयमपि परमेश्वरविषयं चेत्याह । **स एवेति** ।। पुनःशब्दस्य तात्पर्यमाह । **तस्मिन्निति** ।। यस्मात्सदा तस्मिंस्थिताः तत् तस्मात्पुनर्दादित्युक्तमित्यर्थः । अदितिशब्दं विष्णौ प्रकारान्तरेण व्याख्याति । **अत्तीति** ।। अदेः कर्तरि क्तिन् । जग्ध्यादेशाभाव इडागमश्च सर्वं वा अत्तीति श्रुतेरनुसरणीय इत्येवशब्देनाचष्टे । मह्या अदितय इतीन्दिराविषयमुक्तं तत्केन निर्वचनेनेत्यत आह । **श्रीर्वेति** ।। वाशब्दश्चशब्दार्थे । श्रीश्चानेनैव निर्वचनेन मही चादितिश्चोक्तेत्यर्थः । विष्णावृचं व्याख्याय प्रजापतावपि व्याख्याति । **ब्रह्मेति** ।। ब्रह्माप्येवं कर्तृत्वादिना क इत्यादिशब्दैः प्रोक्तः । रूढश्चासौ शब्दस्तस्मिन्नित्याह । **क एवेति** ।। नन्वमृतानां कतमस्येत्येतद् ब्रह्मणि न युज्यते । विष्णुरमास्वसमानेभ्योऽधिकत्वाभावादित्यत आह । **गुणाश्चेति** ।। **जीवेभ्यः** स्वसमानव्यतिरिक्तेभ्यः **तत्** तस्मात् । उत्तरार्धं ब्रह्मणि योजयति । **ददात्विति** ।। पुनः शब्दतात्पर्यार्थमाह । **प्राप्तानिति** ।। तयोः सर्वगतत्वात्तौ प्राप्तानप्यस्मान्पुनर्ददातु । कथं तर्हि प्रार्थनमित्यत आह । **विशेषेति** ।। चतुर्थ्यर्थे तसिः । तस्य सर्वगतस्य चाप्तिः प्रार्थ्यत इति शेषः । कोऽसौ विशेषदेश इत्यत आह । **वैकुण्ठादिरिति** ।। उक्तो विशेषदेशत्वेन । हरेश्च सर्वगतस्यापि हरेर्व्यक्तिस्थानत्वादित्यर्थः ।। १ ।।

**मन्त्रार्थमञ्जरी–** 'कस्यं नूनम्' इत्यारभ्य 'त्वमग्ने प्रथमो' इत्यतः प्रागुक्तत्रयन्यूनस्य ऋक्शतस्य शुनःशेपऋषिः । तस्य शतर्चित्वप्रसिद्धावपि ऋक्त्रयस्य चतुर्थे पञ्चमे च मण्डले सत्त्वान्न तद्विरोधः । शुनःशेपकथा ब्राह्मणे (प०७ अ०३) व्यक्ता । तत्र 'कस्यं' इत्यादि पञ्चदशर्चं वर्गत्रयात्मकं चतुर्विंशं सूक्तम् । एतत्तु प्रायस्त्रिष्टुपछन्दस्कम् । त्रिष्टुब्देवता चेन्द्राणी । तत्र प्रजापतिदेवताकेयम् ऋक् ।

(वयम्) **कस्य,** करोतेः डः, कर्तुः । अमृतानाम्, सुराणां च मध्ये । कतमस्य, सुखतमस्य । अमृतानाम्, मुक्तानां ब्रह्मादीनां सकाशात् । कतमस्य (सुखतमस्य) इति वा । देवस्य, विष्णोः

चारु, भद्रम्, अर्थानुसन्धानपूर्वकमावृत्तिकरणे मोक्षप्रदमिति यावत् । नाम । नूनम्, इदानीम् । मनामहे, 'म्ना अभ्यासे' पौनः पुन्येनोच्चारयामः इत्यर्थः । (सः) कः, कर्ता । नः, अस्मान् । मह्यै, देशते महत्यै । अदितये, 'ॐ अत्ता चराचरग्रहणात् ॐ' (१।२।९) इत्यत्रोक्तदिशा 'सर्वं वा अत्ति' (बृ०उ०३।२।५) इति श्रुतिसिद्धसर्वात्तृत्वहेतुना वा कालतो गुणतश्चाखण्डितत्व-हेतुना वा 'अदिति' इत्युक्तायै विष्णुस्त्रीतनवे, श्रीदेव्यै वा । पुनः दात्, दद्यात्, सर्वदा सर्वगते हरौ देव्यां वा स्थितानस्मान्वैकुण्ठादिस्थरूपविशेषं प्रापयेदिति पुनःशब्दः, दाणः लिङर्थे लुङ्, अडभावः । ततश्च पितरम्, देवम् च । मातरं च, विष्णुस्त्रीतनुं च, स एव मुख्यतो माता लोकस्य, श्रीदेवीं वा । दृशेयम्, पश्येयम्, पश्यादेशाभावश्छान्दसः । अदितिपदस्याद्येऽर्थे 'अद भक्षणे' इत्यतः क्तिनीडागमे (च) रूपम्, द्वितीये तु'दो अवखण्डने' (इत्यतः) क्तिनि 'आदे च उपदेशे' इत्यात्त्व इडागमे ('द्यति' इत्यादिनेकारेऽन्तादेशे) आतो लोपे च नञ्समासे रूपम् । विरिञ्चपक्षे– कस्य, प्रजापतेरित्यर्थः । अमृतानां कतमत्वं (सुखतमत्वं) स्वाधमदेवतापेक्षया ज्ञेयम् । अन्यत्सर्वं प्राग्वत् ।। १ ।।

**स्कन्द–** 'कस्य नूनम् शुनःशेपः आजीगर्तिः' । 'कस्य नूनम्' इत्यादि शुनश्शेपो नामाजीगर्तपुत्रोऽपश्यत् । 'कस्य नूनम् तु काय्याद्या' (बृ.दे.३-९८) । 'कस्य नूनम्' इतीयमृषेः सूक्तस्याद्या कायिका प्रजापतिदेवत्या । अत्र ब्राह्मणपठितमितिहासं संक्षिप्याचक्षते– 'हरिश्चन्द्रो नाम राजा अपुत्रः पुत्रार्थी नारदोपदेशाद् वरुणम् राजानम् उपससार । पुत्रो मे जायताम् तेन त्वा यक्ष्य इति । स रोहितः सन्नाहं प्राप । प्राप्तसन्नाहं पितोवाच । अयं वरुणस्त्वामनेनौप-याजिकेन मह्यमदात् । हन्त! त्वयाऽहमिमं यजा इति । स नेत्युक्त्वा धनुरादायारण्यं जगाम । अथ प्रतिज्ञातयागाकरणाद्धरिश्चन्द्रं वरुणो जग्राह । तस्य वरुणगृहीतस्य जलोदरं बभूव । तद् रोहितः शुश्राव । सोऽरण्यात् पितुः समीपं आजिगमिषन् अजीगर्तनामानं बुभुक्षापरीतं ददर्श । तस्यर्षेः त्रयः पुत्रा बभूवुः । ज्येष्टकनिष्ठौ शुनःपुच्छशुनोलाङ्गूलौ मन्त्रदृशौ । शुनश्शेपस्तु मध्यमः अमन्त्रदृक् । तमजीगर्तं रोहित उवाच । अहं ते शतं गवां ददामि । अहमेषामेकेनात्मानं निष्क्रीणा इति । स बुभुक्षापरीतत्वाच्छोकाच्चात्मप्रादुर्भावं शुनशेपमन्यं मन्यमानं शुनःशेषं विचिक्रिये । एवं हि पौराणिकाः स्मरन्ति–

'परितोषाद् भयाच्छोकात् सुखदुःखाच्च पञ्चधा ।
ऋषीणां तारकान्येन लक्षणेन यदृच्छया ।।
मन्त्राः प्रादुर्भवन्त्यादौ पूर्वमन्वन्तरस्य ह' । इति ।

तं क्रितमादाय पितृसकाशं गत्वा रोहितः पितरमुवाच । अनेनाहमात्मानं निष्क्रीणा इति । अथैनमादाय हरिश्चन्द्रो वरुणमुवाच । अनेन त्वा यजा इति । तथेति वरुणः प्रतिपेदे । तस्मिन् यज्ञे विश्वामित्रजमदग्निवसिष्ठायास्या होताऽध्वर्युर्ब्रह्मोद्गाता बभूवुः । यूपे शुनश्शेपस्य नियोक्ता विशसिता च न कश्चित् भवितुमियेष । अथ अजीगर्त उवाच– तेन शतेन गवामहमेवैनं नियुञ्जे विशसामि चेति । तथेति प्रतिपन्ने नियुज्य विशसितुमसिं निश्यन् शुनश्शेपमुपजगाम । अथ शुनःशेपो मेने माममानुषमिवेमे विशसिष्यन्ति । हन्ताहं देवना उपधावामीति । स प्रजापतिमेव प्रथमं देवतानामुपससार– 'कस्य नूनं कतमस्यामृतानाम्' इत्येतयर्चेति । **कस्य** प्रजापतेः **नूनम्** इति पदपूरणः । कीदृशस्य । **कतमस्य** सर्वप्राणिनां सुखतमस्य । क । **अमृतानाम्** निर्धारण एषा षष्ठी । देवानां मध्ये । **मनामहे** यद्यप्ययं याञ्चाकर्मसु पठितः, तथापीह याञ्चाया असम्भवान्मन्यतेरर्चतिकर्मण इदं रूपम् । मन्यामहे स्तुमः । **चारु** शोभनम् **देवस्य नाम** स्तुत्या चात्र नामवत एव स्तुतिर्लक्ष्यते । व्रजापतिं देवं स्तुम इत्यर्थः । स्तुतश्च सन् **कः नः** अस्मभ्यम् **मह्या अदितये** अदितिशब्दोऽदीनवचनः । महते अदीनत्वाय । **पुनः दान्** ददातु । किम् । सामर्थ्यादायुः । अथवा अदितये इति द्वितीयार्थे चतुर्थी । महददीनत्वं पुनर्ददातु, येन क्रीतोऽहं तद्वशवर्तितां व्यावर्तये । पुनरप्यदीनं मां करोत्वित्यर्थः । अथवा 'अदितिः' (निघ.१-११) इति वाङ्नाम । महतीं वाचं पुनर्ददातु, येनान्या अन्या अपि देवताः स्तुम इत्यर्थः । किञ्च प्रजापतेरेव प्रसादात् **पितरम् च दृशेमम् मातरम् च** । जीवितमनेनाशास्यते । जीवन् मातापितरौ शक्नोति द्रष्टुम् ।। १ ।।

**वेङ्कटमाधव–** अथ शौनश्शेपम् । कः कतम् इति प्रजापतिं पृच्छति । इदानीं देवानां मध्ये **कस्य** शोभनम् **नाम** वयमुच्चारयामः । स प्रजापतिः मुमूर्षूनस्मान् पुनरपि महत्यै पृथिव्यै ददातु । ततोऽहं मातापितरौ पश्येयम् । अनया गतोत्तरेति ।। १ ।।

**मुद्गल–** षष्टेऽनुवाके सप्त सूक्तानि । 'यस्य नूनम्' इति पञ्चदशर्चं प्रथमं सूक्तम् । अजीगर्तपुत्रस्य शुनःशेपस्य आर्षं त्रैष्टुभम् । 'अभि त्वा देव' इति तृचो गायत्रः । आद्या

प्रजापतिदेवता । 'अग्नेर्वयम्' इत्यस्य अग्निः । 'अभि त्वा देव' इत्यस्य तृचस्य सविता । 'भगभक्तस्य' इत्येषा भगदेवताका वा । शेषाः वारुण्यः । अनयर्चा शुनःशेपो यूपबद्धः कं देवम् उपधावानीति विचिकित्सति । वयं शुनःशेपनामकाः **असृतानाम्** देवानां मध्ये **कतमस्य** किंजातीयस्य **कस्य देवस्य चारु** शोभनम् **नाम नूनम् मनागहे** उच्चारयामः । **कः देवः** प्रजापतिः मां मुमूर्षुम् **पुनः** अपि **मह्यै** महत्यै **अदितये** पृथिव्यै **दात्** दद्यात् । तेन दानेन अहममृतः सन् **पितरम् च मातरम् च दृशेयम्** पश्येयम् ॥ १ ॥

**सायण–** प्रथममण्डलस्य षष्ठे अनुवाके सप्त सूक्तानि । तत्र 'कस्य नूनम्' इति पञ्चदशर्चं प्रथमं सूक्तम् । अजीगर्तपुत्रस्य शुनःशेपस्य आर्षं त्रैष्टुभम् । 'अभि त्वा देव' इति तृचो गायत्रः । आद्याया अनिरुक्तत्वात् प्रजापतिर्देवता । 'अग्नेर्वयम्' इत्यस्य अग्निः । 'अभि त्वा देव' इत्यस्य तृचस्य सविता । 'भगभक्तस्य' इत्येषा भगदेवताका वा । शेषाः वारुण्यः । तथा च अनुक्रान्तं– 'कस्य पञ्चोनाजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातो वारुणं तु त्रैष्टुभमादौ काय्याग्नेय्यौ सावित्रस्तृचो गायत्रोऽस्यान्त्या भागी वा' इति । राजसूये अभिषेचनीयेऽहनि मरुत्वतीये परिसमाप्ते सति एतदादिकं सूक्तसप्तकम् अभिषिक्तस्य पुत्रादिभिः परिवृतस्य राज्ञः पुरस्तात् होत्राख्यातव्यम् । तथा च सूत्रेऽभिहितम्– 'संस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽ-भिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शौनःशेपमाचक्षीत' (आश्व.श्रौ.९-३) इति । ब्राह्मणं च भवति– 'तदेतत्परऋक्शतगाथं शौनःशेपमाख्यानं तद्धोता राज्ञेऽभिषिक्तायाचष्टे हिरण्यकशिपावासीन आचष्टे हिरण्यकशिपावासीनः प्रतिगृणाति' (ऐ.ब्रा.७-१८) इति ।

'कस्य' इत्यनयर्चा शुनःशेपो यूपे बाद्धः कांदिशीकः कं देवम् उपधावानि इति विचिकित्सति । तथा च आम्नायते– 'हन्ताहं देवता उपधावामीति स प्रजापतिमेव प्रथमं देवतानामुपससार' (ऐ.ब्रा.७-१६) इति । वयं शुनःशेपनामकाः **अमृतानां** देवतानां मध्ये **कतमस्य** किंजातीयस्य **कस्य देवस्य चारु** शोभनं **नाम मनामहे** उच्चारयामः । **कः** देवो मां मुमूर्षुं **पुनः** अपि **मह्यै** महत्यै **अदितये** पृथिव्यै **दात्** दद्यात् । तेन दानेन अहममृतः सन् **पितरं मातरं च दृशेयं** पश्येयम् । 'को वै नाम प्रजापतिः' (ऐ.ब्रा.३-२१) इति श्रुतेः कस्य इति शब्दसामान्यात् अनया प्रजापतिरेव उपसृतः इति गम्यते ।

कतमस्य । किंशब्दात् 'वा बहूनां जातिपरिप्रश्ने डतमच्' (पा.सू.५-३-९३) । 'चितः' इत्यन्तोदात्तत्वम् । अमृतानाम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । मनामहे । 'मन ज्ञाने'। व्यत्ययेन शप् । पादादित्वादनिघातः। मह्यै । 'उदात्तयणो हल्पूर्वात्' इति विभक्तरुदात्तत्वम् । दात् । 'गातिस्था' (पा.सू.२-४-७७ ) इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडागमाभावः । दृशेयम् । 'दृशिर् प्रेक्षणे' । आशीर्लिङि मिपः अम् । 'दृशेरग्वक्तव्यः' (पा.म.३-१.८६.२) इति अक्प्रत्ययः शपोऽपवादः । कित्त्वात् लघूपधगुणाभावः । 'लिङ्याशिष्यङ्' (पा.सू.३-१-८६) इति अङि हि सति 'ऋदृशोऽङि गुणः' (पा.सू.७-४-१६) इति गुणः स्यात् । यासुट् । सलोपः । 'अतो येयः' । 'आद्गुणः' । यासुटः स्वरेण एकार उदात्तः । मातरं च इत्यत्र चशब्दात् दृशेयम् इति अनुषज्यते । अतः तदपेक्षयैषा तिङ्विभक्तिः प्रथमा इति 'चवायोगे प्रथमा' इति न निहन्यते ।। १ ।।

**सिद्धाञ्जनम्–** अथ षष्ठेऽनुवाके सप्त सूक्तानि शुनःशेपस्य आजीगतः । तत्राद्यं कस्येत्यादिकं पञ्चदशर्चम् । आद्ययोर्द्वयोः त्रिष्टुप्छन्दः । अभि त्वेत्यादेः सवितुस्तृचस्य गायत्री । शिष्टानां त्रिष्टुबेव । आद्याया अनिरुक्तत्वात् प्रजापतिरेव देवतेत्याहुः । द्वितीया आग्नेयी, ततस्तृचः सावित्रः । शिष्टा वारुण्यः ।।

**अमृतानाम्** देवानां मध्ये **कतमस्य** किंविधस्य (किंशब्दात् बहूनां जातिपरिप्रश्ने डतमच्) **कस्य देवस्य चारु** शोभनं **नाम** नमनसाधनं अभिधानं मन्त्रात्मकं स्तोत्रं वा **मनामहे** उच्चारयामः (मन्यतिरर्चतिकर्मा, मनने, ज्ञाने, ध्याने वा । अत्र शप् छान्दसः । सामर्थ्यादुच्चारणमुक्तम्) **नूनम्** विचिकित्सायाम् । **कः** को देवः नः अस्मान् **मह्यै** महत्यै **अदितये** अखण्डात्मने विश्वप्रसूत्यै देवानामपि मात्रे **पुनः** पुनरपि **दात्** दद्यात् (छन्दसि लिङो लुङः अडभावः) येन **पितरं च मातरं च दृशेयं** पश्येयम् । द्यौः पिता, पृथिवी माता ।

ऋषिः शुनःशेपः पाशबद्धमात्मानमवबुद्ध्य विमोचनाय कं देवमाह्वयामि नाम्ना, यो मामदितये पुनर्दातुं प्रभवेत्, येन दानेन माता-पितरौ च पश्येयम् इति ब्रवीति । अखण्डात्मभुवो विश्व-प्रसूतेर्जातोऽहं तस्मात् तस्यै पुनर्दानं न्याय्यं इति गम्यते पुनरिति श्रवणात् । शुद्धसत्त्वचेतःप्रधाना चितिः पितृस्थानीया द्यौः, जडजगद्व्यापृतजागरितस्थाना चितिः मातृस्थानीया पृथिवी । अनयोरुभयोः सहदर्शनं सहजसम्बन्धित्वं ज्ञानं वा सिद्ध्येत् अखण्डस्वरूपाया अदितेर्विश्वमातुः पुनर्लाभात् ।। १ ।।

**नीतिमञ्जरी**– पितरौ वन्द्यौ इत्याह–

**पितरौ हि सदा वन्द्यौ न त्यजेदपराधिनौ ।**
**पित्रा बद्धः शुनःशेपो ययाचे पितृदर्शनम् ।। ११ ।।**

पितरौ मातापितरौ । पितामात्रेत्येकशेषः (पा.सू.१-२-७० )। अपराधिनौ कृतापराधावपि न त्यजेत् । हि यस्मात् सदा सर्वदा वन्द्यौ वन्दनीयौ । शुनःशेपदृष्टान्तेन दृढयति । यथा शुनःशेपः पित्रा अजीगर्त्तेन गवां शतं गृहीत्वा विक्रीतः, गवां शतं गृहीत्वा यूपे बद्धः, गवां शतं गृहीत्वा विशसनाय शासो गृहीतः, तथापि पितृदर्शनपूर्वकं देवान्मोक्षणं ययाचे कस्येत्यादिभिर्ऋग्भिः (ऋ.१-२४) ।

तत्र ऋक्–

कस्यं नूनं कंतमस्यामृतांनां मनांमहे चारुं देवस्यं नामं । को नौं मह्या अदिंतये पुनर्दात्पितरं च दृशेयं मातरंच ।। १ ।।

इमं षष्ठमनुवाकं यूपे बद्धः शुनःशेपो बन्धमोक्षार्थं ददर्श । तस्य 'कस्येति' प्रथमं सूक्तं वारुणं त्रैष्टुभं पञ्चदशार्चम् । आदौ काय्याग्नेय्यौ ।

तत्रानुक्रमणी– 'कस्य पञ्चोनाजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातो वारुणं तु त्रैष्टुभमादौ काय्याग्नेय्यौ सावित्रस्तृचो गायत्रोऽस्यान्त्या भागी वा' । इति ।

ऋग्विधानोक्तविनियोगः । शुनःशेपमृषिं बद्धः स निरुद्धोऽथवा जपेद् । इति । तथा सूत्रम्-शुनःशेपं प्रथमम् । यथा शुनःशेप आजीगर्त्तिः यूपे नियुक्तो मुमुचे प्रथमे च सूक्ते निगदेदिति ।

शुनःशेपः पित्रा यूपे बद्ध इत्यर्थे कथा 'हरिश्चन्द्रो ह वैधस' (ऐ.ब्रा.७-३) इत्यध्यायार्थोक्ता अनुक्रमणी भाष्यकारेणोक्ता–

**तत्रेतिहासः श्रुत्युक्तः सम्यगेव प्रवर्ण्यते ।**
**हरिश्चन्द्रो ह वैधस इत्यादिब्राह्मणेरितः ।**
**राजसूये क्रतावेष शौनःशेप इति श्रुतः ।। १ ।।**

शतभार्यो हरिश्चन्द्र ऐक्ष्वाकः पुत्रकाम्यया ।
नारदोक्ताद्धि पुत्रार्थे वरुणात् सुतमाप्तवान् ।। २ ।।

जाते पुत्रे ह्यनेन त्वां यक्ष्येऽहमिति चोक्तवान् ।
वरुणस्तनये जाते निर्दशे जातदन्तके ।। ३ ।।

च्युतदन्ते पुनर्जातदन्ते वर्म्मचरे तथा ।
मेध्यस्थे तदवस्थोऽसाविति राज्ञा प्रतारितः ।। ४ ।।

निर्बध्य स नृपं प्रोचे पुत्रेणाद्यैव मा यज ।
इत्युक्तो वरुणेनोचे स्वपुत्रं रोहितं नृपः ।। ५ ।।

एनं यक्ष्ये त्वयाद्येति नेति सोऽप्यद्रवद्वनम् ।
वनस्थो रोहितः श्रुत्वा नृपं जातमहोदरम् ।। ६ ।।

दिदृक्षुः पञ्चवर्षेषु विप्ररूपेन्द्रवारितः ।
षष्ठेऽजीगर्तनामानं त्रिपुत्रं बाधितं क्षुधा ।। ७ ।।

आसाद्यास्य शुनःशेपं मध्यमं जगृहे सुतम् ।
गवां शतेन पितरं पुरःस्थं दृष्टवान् सुतः ।। ८ ।।

मया कार्यमनेन त्वं कुरु तातेऽति चाब्रवीत् ।
वरुणोऽपि नृपेणोक्तः शुनःशेपपशुं क्रतुम् ।। ९ ।।

राजसूयं सोऽनुमेने तेनायष्ट च भूमिपः ।
तदाभिषेचनीयेऽह्नि शुनःशेपनियोजने ।। १० ।।

अन्याभावाद्गोशतार्थी त्वजीगर्तो युयोज तम् ।
पुनर्विशसनं कर्तुं पिता जग्राह गोशतम् ।। ११ ।।

यूपे बद्धः शुनःशपो जिघांसुं पितरं ततः ।
दृष्ट्वा चाहाहमेवान्या उपधावामि देवताः ।। १२ ।।

अस्तौत्कर्मादावाग्निं च सवितारं भगं तथा ।
वरुणं पुनरग्निं विश्वान्देवानथो खलु ।
इन्द्रं च पूर्वव्यापारसम्प्राप्तस्तुतिसुप्रियम् ।
हिरण्मयरथस्यापि स्वस्मै दातारमेव च ।। १५ ।।

अश्विना उषसं चापि तृचाभ्यामन्ततस्तदा ।
अतिप्रीतियुतैर्देवैस्तैर्यूपान्मोचितस्तदा ।। १५ ।।

ऋत्विग्गणैः प्रार्थितोऽसावञ्जःसवमकारयत् ।
गतरोगो हरिश्चन्द्र यत्र ग्रावे (अ०१.२.८)ति सूक्ततः ।। १८ ।।

अञ्जःसवो राजसूये प्रयोगः पञ्चिष्टिदिव्यादिविहीन एकः ।
यतोऽञ्जसाभिष्टुवतेऽत्र साम्ना यच्चाञ्जसा देवनास्तं लभन्ते ।। १४ ।।

स पित्रा प्रार्थितस्त्यक्त्वा तातं गाधिसुतं गतः ।
पुत्रत्वेन गृहीतश्च विश्वामित्रेण धीमता ।। १८ ।।

देवरात इति प्रोक्तो देवैर्दत्तो यतः स्वयम् ।
दत्तपुत्रविधेर्योगाद्वैश्वामित्रः स कृत्रिमः ।। १९ ।।

आर्षानुक्रमेण चोक्तं कस्य नूनं शुनःशेपः ।
आजीगर्तिः कृत्रिमस्तु वैश्वामित्रो देवरातः ।। २० ।।

इति कृत्रिमपुत्रत्वं देवराततत्वमेव च ।
अजीगर्तसुतत्वं च वैश्वामित्रत्वमेव च ।। २१ ।।

शुनःशेपमहर्षेस्तु सम्यगत्र प्रवर्णितम् ।
बन्धक्षयकरी पाशमोचनीया कथेरिता ।। २२ ।।

राजसूयेऽभिषेचनीयेऽहनि एषोऽनुवाक आख्यातव्यः । तथाहाश्वलायनसूत्रे–

'संस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्य-परिवृताय राज्ञे शौनःशेपमाचक्षीत' इति (आ.श्रौ.सू.उत्तरपट्के ३-३) ।

ब्राह्मणम्– 'एवैतच्छौनःशेपमाख्यानं नहास्मिन्नल्पं च नैनः परिशिष्यते' (ऐ.ब्रा.७-१८) । इति ।

शुनःशेपो यूपे बद्धः प्रजापतिं त्रिष्टमां स्तौति । तथाऽम्नातम् स प्रजापतिमेव प्रथममिति (ऐ.ब्रा.७-१६) ।

अयमर्थः । **वयं** शुनःशेपनामकाः **अमृतानां** देवानां मध्ये **कतमस्य** किंजातीयस्य **देवस्य चारु** मनोहरं **नाम मनामहे** उच्चारयामः । **को** देवः **नः** अस्मान् मुमूर्षून् **मह्यै** महत्यै अदितये पृथिव्यै **पुनर्दात्** दद्यात् । अदितिः इळेति तन्नामसु पाठात् (निघण्टु.१-१) तेन दानेनाहममृतः सन् **पितरं मातरं च दृशेयं** पश्येयम् । मनामहे इति पादादित्वान्निघाताभावः । दृशेयमिति मातरं चेत्यत्र 'च' शब्दाद् दृशेयमित्यनुषज्यते अतस्तदपेक्षया एषा तिङ्विभक्तिः प्रथमा 'चवायोगे प्रथमे' (पा.सू.८-१-५९) इति न निहन्यते । पुनार्दादिति वारपुनः पुनरिति रेफः ।

(ऋ.प्रा.१-११७)

## ऋक्संहिता पदपाठसहिता

**अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारुदेवस्य नाम । स नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ।। २ ।।**

अग्नेः । वयम् । प्रथमस्य । अमृतानाम् । मनामहे । चारु । देवस्य । नाम ।। सः । नः । मह्यै । अदिदये । पुनः । दात् । पितरम् । च । दृशेयम् । मातरम् । च ।। २ ।।

## ऋग्भाष्यम्

**तस्यैवान्यद्रूपमग्न्याख्यमुक्तं यो यज्ञेशो हूयते जामदग्न्यः ।**
**स देवानां प्रथमो नाम तस्य स्मृतं सार्थं सर्वकामप्रदं स्यात् ।। २ ।।**

**ऋग्भाष्यटीका– अग्नेर्वयम्** । अग्नेयीयम् । तस्याः स्पष्टत्वादभिधेयमाह । **तस्यैवेति** ।। उक्तम् अस्यामृचि । कथं तर्हि प्रजापतिरुवाच । अग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति । सोऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चेति ब्राह्मणमित्यतः स एवाग्न्याख्या उक्त इत्यनुक्त्वा तस्यैवान्यद्रूपमित्युक्तम् । किं तद्रूपमित्यत आह । **य इति** ।। यज्ञेशो हूयत इत्यनेनाग्न्यादिशब्दानां

प्रवृत्तिनिमित्तमुक्तम् । अमृतानां प्रथमस्येति व्याचष्टे । **स इति** ।। नन्वत्र पूर्वत्र च नाम मनामह इति हेतुः को नः स न इति फलं प्रार्थ्यते । तद्युक्तम् । नामस्मरणादिमात्रस्य वैकुण्ठादि-प्राप्तिसाधनत्वस्य प्रमाणविरुद्धत्वादित्यत आह । **नामेति** ।। यद्वा चारुत्वस्योपपादनमेतत् ।। २ ।।

**मन्त्रार्थमञ्जरी–** इयम् आग्नेयी । **'अग्नेः'** इति प्रसिद्धोऽग्निस्तदन्तर्गतस्ततोऽतिरिक्तो वा परशुरामाख्यविष्णुरूपविशेषश्च ग्राह्यः । पूर्वत्रेव स्पष्टार्था ।। २ ।।

**स्कन्द–** 'तं प्रजापतिरुवाच– 'अग्निर्वै देवानां नेदिष्टस्तमेवोपधावेति । सोऽग्निमुपससारः अग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा' (ऐ.ब्रा.७-१६) । 'अग्नेर्ऋक्' (बृ.दे.३-९८) । अग्नि-देवतेयमृक् । **अग्नेः वयम् प्रथमस्य** उत्कृष्टस्य **अमृतानाम्** मध्ये । **मनामहे** इत्याद्युक्तम् । अत्र च तुल्यार्थत्वात् पुनरध्ययने पदकाराभिप्रायः पर्येष्यः ।। २ ।।

**वेङ्कटमाधव–** (१,२४,१ व्याख्या द्र.)

**मुद्गल–** इत्थं प्रथमयर्चा विचिकित्साद्वारा प्रजापतिं स्तुत्वा प्रजापतेः सकाशात् तं देवमग्निं निश्चित्य अनया तुष्टाव । पूर्ववत् योजना । **दात्** ददातु, **दृशेयम्** पश्यानि इत्येवमाशीःपरत्वेन पदद्वयं योज्यम् ।। २ ।।

**सायण–** इत्थं प्रथमया ऋचा विचिकित्सां कृत्वा प्रजापतेः सकाशात् तं देवम् अग्निं निश्चित्य अनया तुष्टाव । तथा च श्रूयते– तं प्रजापतिरुवाचाग्निर्वै देवानां नेदिष्टम्तमेवोपधावेति सोऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा' (ऐ.ब्रा.७-१६) इति । पूर्ववत् योजना । **दात्** ददातु **दृशेयं** पश्यानि इत्येवम् आशीःपरत्वेन पदद्वयं योज्यम् ।। २ ।।

**सिद्धाञ्जनम्–** अमृतानां प्रथमस्य अग्नेरित्यादि योजनीयम् । अन्यत् प्राग्वत् । अग्निरेव प्रथमोऽस्मासु जायते । ततोऽन्येषां देवानां प्रादुर्भावः । गुरूपदेशादादेशाद्वा, प्रजापतेर्वाऽनुग्रहात् अग्निरुपगम्य इति ज्ञानं लब्धवानृषिः स्वेप्सितसिद्धये ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**अभि त्वा देव सवितरीशानं वार्याणाम् । सदावन्भागमीमहे ।। ३ ।।**

अभि । त्वा । देव । सवितः । ईशानम् । वार्याणाम् । सदा । अवन् । भागम् । ईमहे ।। ३ ।।

## ऋग्भाष्यम्

**सवितेत्यपरं रूपं जगत्कारणमीशितुः ।**
**वित्तानामीश्वरं तं तुवार्यं हि वरणीयतः ।**
**वित्तं रक्षन्नवन्नित्यमात्मानं भागमेम्यहम् ।**
**त्वामैश्वर्यादि समितिम्..................।। ३ ।।**

**ऋग्भाष्यटीका– अभि त्वा** ।। सावित्रोऽयन्तृचः । तत्र कः सविता विष्णुरेव मुख्यतः । कथं तर्हि तमग्निरुवाच सविता वै प्रसवानामीशे तमेवोपधावेति स सवितारमुपससाराभित्वा देव सवितरित्यनेन तृचेनेति ब्राह्मणमित्यत आह । **सवितेति** ।। जगत्कारणमिति सवितृशब्द प्रवृत्तिनिमित्तम् । वार्याणामीशानमित्यस्यार्थमाह । **वित्तानामिति** ।। वित्तं कथं वार्यशब्दमित्यत आह । **वार्यं हीति** ।। वरणीयत्वतः । अवद्यपण्येत्युपाधेरविवक्षितत्वादृहलोर्ण्यदिति भवत्येवेति हेरर्थः । शिष्टं व्याख्याति । **रक्षन्निति** ।। हे **सवितर्देव! सदा** नित्यम् । **अवन्** रक्षन् । कम् । अभ्यर्हितत्वादात्मानम् । अहं **वार्याणां** वित्तानाम् । **ईशानं** स्वामिनम् । **भागं** भग ऐश्वर्यादिगुणाः । तेषां समूहो भागम् । ऐश्वर्यादिसमिति रूपम् । **त्वा** त्वाम् **अभीमहे** । अवन्नित्येकवचनादेतदप्येकवचनार्थे । एमि आत्मानं रक्षितुं त्वां शरणं गच्छामि । यद्यप्यवन्नित्येतत्सम्बुद्ध्यन्तं व्याख्यातुं शक्यते । तथापि साक्षात्प्रयोजनोक्तिलाभाय वचनव्यत्यासेन व्याख्यातम् । लक्षणहेत्वोः क्रियाया इति स्मरणात् ।। ३ ।।

**मन्त्रार्थमञ्जरी–** सावित्रोऽयं तृचो गायत्रीछन्दस्कः । (गायत्री) देवता तूक्तैव 'अग्निमीळे' इत्यत्र । (हे) सवितः, 'हिरण्यपाणिमूतये' इत्यत्रोक्तनिरुक्त्या विष्णो, प्रसिद्धसवितश्च । देव । सदा, नित्यम् । अवन्, 'लक्षणहेत्वोः क्रियायाः' इति हेतौ शत्रन्तम्, रक्षितुम्, अभ्यर्हितत्वात् 'आत्मानम्' इत्यन्वेति । (अहम्) वार्याणाम्, वरणीयानाम्, 'अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु' इत्युक्तोपाधेरिहाविवक्षितत्वात् 'ऋहलोर्ण्यत्' इति वृत्रः ण्यत्, वित्तानाम् । ईशानम्, स्वामिनम् ।

भागम्, 'ऐश्वर्यस्य समग्रस्य' इत्यादेरैश्वर्यादिगुणाभगस्तत्समूहरूपम्, देवता(न्तर)पक्षे स्वार्थेऽण्, भगरूपेशसम्बन्धिनमिति वार्थः । त्वा, त्वाम् । अभि ईमहे, 'अवन्' इत्येकवचनात् 'अभिएमि' इत्येकवचनार्थे बहुवचनम्, 'आत्मरक्षाकामस्त्वां शरणं गच्छामि' इत्यर्थः ।। ३ ।।

**स्कन्द–** 'तमग्निरुवाच सविता वै प्रसवानामीशे । तमेवोपधावेति । स सवितारमुपससार अभि त्वा देव सवितः इति तृचेन (ऐ.ब्रा.७-१६) । 'सवितुस्तृचः' (बृ.दे.३-९८) । सावित्रोऽयं तृचः । **अभि** इत्युपसर्गोऽन्त्येन ईमहे इत्याख्यातेन सम्बन्धयितव्यः । **त्वा** त्वां हे **देव**! सवितः! **ईशानम्** ईश्वरम् **वार्याणाम्** वरुणीयानाम् । हे **सदावन्** ! मरुणादिभ्यः प्राणिनां सर्वदा रक्षितः! **भागम्** अंशम् **ईमहे** अभियाचामहे । कस्य भागम् । सामर्थ्यादायुषः । आयुर्वचन एव वा भागशब्दः । तद्धि सर्वप्राणिनो भजन्ते ।। ३ ।।

**वेङ्कटमाधव– अभि** याचामहे **देव**! सवितः! त्वां धनानाम् ईश्वरं नरपशोरात्मीयम् **भागम् सदा** रक्षितः ।। ३ ।।

**मुद्गल–** अथ अग्निना प्रेरितः सन् सवितारम् 'अभि त्वा' इति तृचेन प्रार्थयते । हे **सदावन्**! सर्वदा रक्षक! हे **सवितः** देव! **वार्याणाम्** वरणीयानां धनानाम् **ईशानम्** स्वामिनम् **त्वा** त्वां प्रति **भागम्** भजनीयं धनम् **अभि** सर्वतः **ईमहे** याचामहे ।। ३ ।।

**सायण–** प्रथमे छन्दोमे वैश्वदेवशास्त्रे 'अभि त्वा देव सवितः' इति सावित्रस्तृचः सूक्तस्थानीयः । 'अथ छन्दोमाः' इति खण्डे 'अभि त्वा देव सवितः प्रेतां यज्ञस्य शंभुवा' (आश्व.श्रौ.८-९) इति सूत्रितम् । 'अभि त्वा' इत्येषा अग्निमन्थनेऽपि विनियुक्ता । 'प्रातवैश्वदेव्याम्' इति खण्ड 'अभि त्वा देव सवितर्मही द्यौः पृथिवी च नः' (आश्व.श्रौ.२-१६) इति सूत्रितम् । श्रूयते च– 'अभि त्वा देव सवितरिति सावित्रीमन्वाह' (ऐ.ब्रा.१-१६) इति । तथा प्रवर्ग्येऽपि एषैव विनियुक्ता । 'अथोत्तरम्' इति खण्डे 'अभि त्वा देव सवितः समी वत्सं न मातृभिः' (आश्व.श्रौ.४-७) इति सूत्रितम् । तथा ग्रावस्तोत्रेऽपि । 'एतस्मिन् काले ग्रावस्तुत्' इति खण्डे 'मध्यमस्वरेणेदं सवनमभि त्वा देव सवितः' (आश्व. श्रौ.५-१२) इति सूत्रितम् ।

अथ अग्निना प्रेरितः सन् सवितारम् 'अभि त्वा' इत्यनेन तृचेन प्रार्थयते । तथैव श्रूयते– तमग्निरुवाच सविता वै प्रसवानामीशे तमेवोपधावेति स सवितारमुपससाराभि त्वा देव सवितरित्येतेन तृचेन' (ऐ.ब्रा.७-१६) इति ।

हे **सदावन्** सदा सर्वदा रक्षक! हे **सवितः! देव वार्याणां** वरणीयानां धनानाम् **ईशानं** स्वामिनं त्वां प्रति **भागं** भजनीयं धनम् **अभि** सर्वतः **ईमहे** याचामहे ।

ईशानम् । 'ईश ऐश्वर्ये' । लटः शानच् । 'तास्यनुदात्तेत्' इति लसार्वधातुकानुदात्तत्वे धातुस्वरः । वार्याणाम् । 'वृङ् संभक्तौ' । 'ऋहलोर्ण्यत्' । 'ईडवन्द' इत्यादिनाद्युदात्तत्वम् । अवन् । आमन्त्रितनिघातः । भागम् । 'कर्षात्वतः' इति घनोऽन्तः उदात्तः ।। ३ ।।

**सिद्धाञ्जनम्–** अथाग्नेः प्रसादात् सवितारं स्तोतव्यं तृचेनोपतिष्ठते । हे **सदा अवन्** सर्वदा रक्षितः (अवतेः शतृ) **सवितः देव, वार्याणां** वरणीयानां वराणां **ईशानं** ईश्वरं **त्वा** त्वां प्रति **भागं** अंशं अस्मदुचितं अस्मद्योग्यं वा दिव्यमंशमित्यर्थः । **अभि ईमहे** सर्वतः याचामहे ।।

'देवभक्तं दधानाः' 'व्यशेम देवहितं यदायुः' इत्येवंजातीयका दिव्यभागप्रार्थना चिरन्तनी वैदिकीति बोध्यम् । स च भागः न केवलं आयुरारोग्यैश्वर्यादिरूपः । यद्यप्यायुरादीनि दातुं प्रभवत्येव, तथाऽपि स दिव्यो भागो वस्तुत देवहस्तगतः भवति । तस्मिन् अनधिकारिभिरपकैर्वा प्रेप्सिते, स निन्दायाः निरोधस्य वा आस्पदं भवति, अन्यथा स स्तुत्यः काम्यः, न कुतोऽपि तं द्वेषः स्प्रष्टुं प्रभवति, इत्युत्तरयर्चा विशदं भवति ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**यश्चिद्धि ते इत्था भगः शशमानः पुरा निदः । अद्वेषो हस्तयोर्दधे ।। ४ ।।**

यः । चित् । हि । ते । इत्था । भगः । शशमानः । पुरा । निदः ।। अद्वेषः । हस्तयोः । दधे ।।

## ऋग्भाष्यम्

**..................योऽपि ते परमो भगः ।**
**इत्थं भूतोऽविकारित्वाच्छशमानः सुखाधिकः ।**
**नेदीयसो ब्रह्मणोऽपि पूर्वो द्वेषादिवर्जितः ।**

**हस्तयोस्तं दधे देव तव रूपमनामयम् ।**
**निदो दवीय इति तु विरुद्धार्थद्वयाभिधौ ।**
**दूरसामीप्यवचनावुभावपि महोदधौ ।**
**यदान्यस्सविता देवस्तव स्वामी भगो हरिः ।**
**अद्वेषो विष्णुरित्युक्तेस्तमहं हस्तयोर्दधे ।। ४ ।।**

**ऋग्भाष्यटीका– यश्चित्** । योऽपि । हे देव विष्णो । **इत्था** अविकारित्वादित्थंभूतः । इदानींतनप्रकार एव सर्वदा **शशमानः** । शशब्दः सुखवाची । द्विर्वचनमतिशयार्थे । अधिकं सुखं शशं तन्मन्यतेऽनुभवतीति शशमानः । सुखाधिक इति यावत् । **निदो** नेदीयसः परस्मात् ब्रह्मणो हिरण्यगर्भादपि । **पुरा** पूर्वः । **अद्वेषः** उपलक्षणमेतत् । द्वेषादिदोषवर्जितः । एवं भूतो **यश्चित्** योऽपि ते **भगः** परमैश्वर्यादिरूपो विग्रहस्तवानामयं रूपं तमहं **हस्तयोर्दधे** पुत्र इव पितरम् । निद इत्यव्ययं क्वचित्सामीप्ये व्याख्यातं निदस्तस्य समीपगा इति । अत्र तु दूरत्वे । तत्कथमेतदित्यत आह । **निद इति** ।। यथाऽऽराच्छब्दो विरुद्धार्थद्वयवाची तथैतावपि प्रत्येकं विरुद्धार्थद्वयस्याभिधायकौ । मूलविभुजादित्वात्कः । तदिदमुक्तमुभावपीति । विरुद्धार्थ द्वयाभिधायित्वस्यैव विवरणं दूरसामीप्यवचनाविति । दूरेति भावप्रधानम् । महोदधौ नाम महोदधि-नामके ग्रन्थे । कथितमेतदिति शेषः । एवं विष्णावृचं व्याख्याय देवतान्तरे व्याख्याति । **यदेति** ।। अत्र विवक्षितस्तदैवं योजनेति शेषः । हे **सवितर्देव! यश्चित्** योऽपि **ते** तव स्वामी **इत्था शशमानो निदः पुरा भग** ऐश्वर्यादिरूपो**ऽद्वेषो** हरिस्तमहं **हस्तयोर्दध** इति । कुत एषां विशेषणानां विष्णुविषयत्वमित्यत आह । **अद्वेष इति** ।। ग्रन्थान्तरेऽद्वेषो विष्णुरित्यद्वेषत्वस्य विष्णुलिङ्ग-त्वोक्तेः । निर्विकारत्वादेरपि विष्णुलिङ्गत्वे वचनान्युदाहर्तव्यानि ।। ४ ।।

**मन्त्रार्थमञ्जरी– (हे देव)** विष्णो । इत्था, इत्थम्, अविकारित्वादित्थम्भूतः, इदानीन्तन-प्रकार एव सदेति यावत् । शशमानः, शं सुखम्, द्विर्वचनमतिशयार्थे, शशं मन्यतेऽनुभवतीति शशमानः सुखाधिकः । निदः, अव्ययमेतत्, नेदीयसः परकालीनाच्चतुर्मुखादपि । पुरा, पूर्वः । अद्वेषः, उपलक्षणम्– द्वेषादिदोषवर्जितः । यः चित्, एवं भूतो योऽपि । ते भगः, परमैश्वर्यादिरूपो विग्रहः । (तमहं पुत्र इव पितरम्) हस्तयोः । दधे, 'डुधाञ् धारणे' लट् धारयामि । हि, एव । 'निदः' इत्यस्य 'उत ब्रुवन्तु नो निदो' इत्यत्र 'निदस्तस्य समीपगाः' इति सपीप-

स्थार्थस्योक्तावपि (ऋग्भाष्ये) इह दूरस्थार्थत्वमविरुद्धम्, अर्थद्वयवाचित्वात्तस्य, इति ज्ञेयम् । देवतान्तरे तु (हे सवितः) देवः । इत्था । यः चित्, योऽपि । ते, तव । (स्वामी) शशमानः निदः पुरा । भगः, ऐश्वर्यादिरूपः । अद्वेषः, हरिः । (तमहम्) हस्तयोः दधे हि । इति योजना । अन्यथा, पूर्वयोजनेव 'ते भगः, त्वदीयो भगः' इत्यादियोजनायाम् 'ॐ सुखविशिष्टाभिधानादेव च ॐ' (१।२।१५) 'ॐ भूमा सम्प्रसादादध्युपदेशात् ॐ' (१।३।८) इत्यादौ विष्णुलिङ्गतया निर्णीतशशमानत्वरूपनिरतिशयसुखत्वोक्तिविरोधः, तथा 'ॐ दहर उत्तरेभ्यः ॐ' (१।३।१४) इत्यत्रापहतपाप्मत्वादेर्हेतूकरणेन 'ॐ सर्वधर्मोपपत्तेश्च ॐ' (२।१।३८) इत्यादौ श्रुतोपपत्त्यादिना च विष्णुधर्मतया निर्णीताद्वेषादित्वरूपनिर्दोषत्वलिङ्गविरोधश्च स्यादिति ज्ञेयम् ।। ४ ।।

**स्कन्द–** यः कतमो भागः । उच्यते– 'यश्चिद्धि' इति । यच्छब्दो हस्तयोर्दधे इत्याख्यातेन सम्बन्धयितव्यः । चिद्धिशब्दौ पदपूरणौ । **यः हस्तयोः दधे** निहितः । कस्य । **ते** तव । यस्त्वदायत्त इत्यर्थः । कीदृशः । **इत्था** सत्यनामैतत् (निघ.३-१०) । सत्यं विसंवादवर्जितः । **भगः** भतनीयः **शशमानः** अर्चतिकर्माऽयम् । (निघ.३-१४) व्यत्ययेन चात्र कर्मणि कर्तृप्रत्ययः । स्तुत्य इत्यर्थः । **अद्वेषः** अविद्यमानो द्वेषो यस्मिन् सोऽद्वेषः । नहि कश्चिद् आयुस्तदंशं वा द्वेष्टि । कदा पुनरायुर्भागमायुरेव वा अभियाचामहे । उच्यते । **पुरा निदः** अत्यन्तनिन्दितात् तिर्वक्पशुसदृशान्मरणात् पुरा । यावत् तिर्यक्पशुवदत्यन्तकुत्सितं विशस्यमाना न म्रियामह इत्यर्थः । अथवा निन्दतिरत्र सामर्थ्याद् विशसनार्थः । पुरा विशसनात् विशसितुर्वा यावन्न विशस्यामह इत्यर्थः । अथवा एवमन्यथास्या ऋचः पूर्वानपेक्षैवार्थयोजना । इत्थाशब्दोऽमुत्रे-त्यस्यार्थे । 'भगः' (निघ.२-१०) इति धननामाऽयम् । यः ते इत्था भगः अमुत्र स्वर्गे धनम् । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तत् शशमानः स्तुवन् अहं पुरा निदः मन्निन्दितुः पूर्वम् अद्वैषः द्वेषवर्जितः आत्मनः हस्तयोः दधे धारयेयम् । मह्यं दद्या इत्यर्थः । यद्वृत्तेनासम्बन्धाच्छान्दसत्वा-न्निघाताभाव इति व्याख्येयम् ।। ४ ।।

**वेङ्कटमाधव– यः** एयविध **भगः** सर्वैः एव स्तूयमानः द्वेष्टृवर्जितः निन्दितुर्मनुष्यात् पूर्वमेव स्तोतुर्हस्तयोः इत्थम् निदधे । उत्तरत्र सम्बन्धः ।। ४ ।।

**मुद्गल–** हे सवितः! **यः भगः** भजनीयो धनविशेषः **ते** तव **हस्तयोर्दधे** धृतोऽभूत् । **तं** धनविशेषम् ईमहे इति पूर्वत्रान्वयः । **चित्** पूजार्थे । **हि** प्रसिद्धौ । धनस्य पूज्यत्वं सर्वत्र

प्रसिद्धम् । **इत्था शशमानः** अनेन प्रकारेण स्तूयमानः । स्वकीये धने वैरिभिः अपहृते सति वैरिगृहीतं धनं सर्वो लोको निन्दति द्वेष्टि च अतो धने स्तुतिर्न नियतेत्याशङ्क्याह– **निदः पुरा अद्वेषः** निन्दायाः पूर्वं स्वकीयत्वेन व्यवस्थिते सति तदानीं द्वेषरहितः । तस्मात् स्वकीयत्वाभिप्रायेण स्तूयमानत्वमुक्तमित्यर्थः ॥ ४ ॥

**सायण–** हे सवितः! **यः भगः** भजनीयो धनविशेषः **ते** तव **हस्तयोर्दधे** धृतोऽभूत् तं धनविशेषम् ईमहे इति पूर्वत्रान्वयः । चिच्छन्दः पूजार्थे । हिशब्दः प्रसिद्धौ । धनस्य पूज्यत्वं सर्वत्र प्रसिद्धम् । तामेव पूज्यत्वप्रसिद्धिं विशदयति । **इत्था शशमानः** अनेन प्रकारेण शस्यमानः स्तूयमानः । धनस्तुतिप्रकारं च सर्वे जानन्ति । ननु स्वकीये धने वैरिभिः अपहृते सति वैरिगृहीतं धनं सर्वो लोको निन्दति द्वेष्टि च । अतो धनस्तुतिः न नियता इत्याशङ्क्याह– **निदः पुरा अद्वेषः** निन्दायाः पूर्वं स्वकीयत्वेन व्यवस्थिते सति तदानीं द्वेषरहितः । तस्मात् स्वकीयत्वाभिप्रायेण स्तूयमानत्वमुक्तमित्यर्थः ।

इत्था । प्रकारवचने 'इदमस्थमुः' (पा.सू.५-३-२४ )। 'सुपां सुलुक्' इति व्यत्ययेन विभक्तः डादेशः । टिलोपे उदात्तनिवृत्तिस्वरेण आकार उदात्तः । शशमानः । 'शश प्लुतगतौ' । इह तु स्तुत्यर्थः । 'ताच्छील्यवयोवचन' (पा.सू.३-२-१२९) इति ताच्छीलिकश्चानश् । कर्तरि शप् । 'चितः' इत्यन्तोदात्तत्वम् । निदः । 'णिदि कुत्सायाम्'। संपदादिलक्षणः क्विप् । 'सावेकाचः' इति पञ्चम्या उदात्तत्वम् । अद्वेषः । न विद्यते द्वेषोऽस्य इति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । दधे । कर्मणि लिट् । तस्य आर्धधातुकत्वेन 'अभ्यस्तानामादिः' इत्याद्युदात्तो न भवति । प्रत्ययस्वर एव शिष्यते । यद्वृत्तयोगात् निघाताभावः ॥ ४ ॥

**सिद्धाञ्जनम्– चित् हि** शब्दौ पादपूरणौ । हे सवितः, **यः भगः** भजनीयः भागः **अद्वेषः** अविद्यमानो द्वेषो यस्मिन् सः, तथाभूतः **निदः** निन्दायाः **पुरा** पूर्वं (उत ब्रुवन्तु नो निद इत्यत्र व्याख्यातम्) **इत्था** विसंवादवर्जितं (सत्यनामैतत्) **शशमानः** शस्यमानः, स्तूयमानः (कर्मणि कर्तृ प्रत्ययः) **ते** तव **हस्तयोः** करयोः **दधे** निहितः, तं 'भागमीमहे' इति पूर्वयर्चा सम्बन्धः, यच्छब्दश्रुतेस्तच्छब्दाध्याहारः । प्रागेव भागो वर्णितः । अयं भावः– अयुक्तैरपरिपक्वैरर्थ्यमानो लभ्यमानो वा स दिव्यो भागः असूयुभिः अन्यशुभद्वेषिभिः मानुषैरमानुषैवा, दूषयितुं शक्यः, तथाविधाया निन्दायाः प्राक् 'निदः पुरा' तादृशीं निन्दाभुवमतीत्य वर्तमानः अत एव द्वेषातीतः विसंवादवर्जं स्तूयमानः सवितुर्हस्तयोर्निहितः । तं भागं प्रार्थयामहे इति ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**भर्गभक्तस्य ते वयमुदशेम तवावसा । मूर्धानं राय आरभे ।। ९, १३ ।।**

भर्गऽभक्तस्य । ते । वयम् । उत् । अशेम । तव । अवसा । मूर्धानम् । रायः । आऽरभे ।।

## ऋग्भाष्यम्

**विष्णुभक्तस्य ते रायो मूर्धानं राय उत्तमम् ।**
**तवावसाऽऽरभे विद्यामुच्चैरश्नामि तत्फलम् ।**
**ऐश्वर्यादिगुणा यस्य भगो भक्तं परात्मनः ।**
**तस्य ते वित्तमश्नामि तव रक्षाबलाद्धरे ।। ९, १३ ।।**

**ऋग्भाष्यटीका– भगभक्तस्य** । विष्णुभक्तस्य । हे सवितर्वयन्तवाऽवसारक्षणेनाऽऽ**रभे** आरभामहे । विद्यां त्वदीयामिति शेषः । तत्फलं च **भगभक्तस्य** भग ऐश्वर्यादिरूपो विष्णुः । तद्भक्तस्य तत्सेवकस्य **ते** सम्बन्धिनं **रायो मूर्धानम्** । मूर्धशब्दो गौण्या वृत्त्योत्तममाह । राय उत्तमं प्रसिद्धाद्वित्तादुत्तमम् । वित्तं सुखमुदशेम उच्चैरश्नामि अश्नीमः । एवं देवतान्तरे व्याख्याय विष्णौ व्याख्याति । **ऐश्वर्यादीति** ।। हे हरे तवावऽसा तव रक्षाबलाद्वयमारभे । त्वदीयां विद्यामारभामहे । ततश्च भगभक्तस्य भग ऐश्वर्यादिगुणाः भक्तमन्नं भोग्यं यस्य परमात्मनः स तथोक्तः । तस्य ते रायो मूर्धानं प्रसिद्धाद्वित्तादुत्तमं मोक्षाख्यं **उदशेम** उच्चैरश्नामि । अश्नीमः ।। ९,१३ ।।

**मन्त्रार्थमञ्जरी–** (हे सवितः) हरे । तव । अवसा, रक्षणेन, त्वद्रक्षाबलेन । वयम् । आरभे, त्वदीयां विद्यामारभामहे । ततश्च– भगभक्तस्य, भग ऐश्वर्यादिर्भक्तमन्नं भोग्यं यस्य तस्य । ते । रायः, प्रसिद्धवित्तात् । मूर्धानम्, मूर्धन्शब्दोऽत्र गौण्या वृत्त्योत्तमपरः, उत्तमं वित्तं मोक्षाख्यं सुखम् । उत् अशेम, उच्चैरश्नीमः, 'अश भोजने' लिङ्, व्यत्ययेन शविकरणम् । देवतान्तरे तु (हे सवितः) वयम् तव अवसा । आरभे, त्वदीयां विद्यामारभामहे । ततश्च भगभक्तस्य, ऐश्वर्यादिरूपविष्णोर्भक्तस्य । ते, त्वत्सम्बन्धिनम् । रायः मूर्धानम्, सुप्रसिद्धवित्तादुत्तमं सुखम् । उत् अशेम इति । अत्रार्थद्वये विद्यारम्भस्य 'रायः, मूर्धानम्, उत्, अशेम' इत्यस्य च फलिफल-भावो ज्ञेयः ।। ९ ।।

**स्कन्द–** **भगभक्तस्य** भगो देवः तेनापि सेवितस्य भजनीयेन वा हविषा स्तोत्रेण वा सर्वं मनुष्यैः सेवितस्य । तव स्वभूता **वयम् उत् अशेम** अतोऽप्यूर्ध्वं प्राप्नुयाम । किम् । आयुः । **अवसा** हेतुना त्वया अतो मरणाद् रक्षिताः सन्त इत्यर्थः । न च केवलमायुः । किं तर्हि **मूर्धानम् राय** धनस्य यच्छिरोभूतम् । उत्कृष्टं च धनम् इत्यर्थः । उपभोगान् वा आरब्धुम् उपभोक्तुं यष्टुं वेत्यर्थः । यत् त्वस्या ऋचः 'भगभक्तस्य भागो वा' (बृ.दे.३-९८) इति भगदेवत्यत्वं शौनकेनोक्तं तद् भगस्योपसर्जनत्ववचनत्वात् । भगशब्दस्य 'स सवितारमुपससार अभि त्वा देव सवितरित्येतेन तृचेन' (ऐ.ब्रा.७-१६) इति ब्राह्मणेऽप्रत्यक्षत्वाद् येनाभिप्रायेणोक्तं स पर्येष्यः ॥ ५ ॥

**वेङ्कटमाधव–** तेन भाग्येन सभक्तस्य तव वयम् रक्षणेन उद्व्याप्नुमः धनस्य परमं पदम् आरब्धुम् ॥ ५ ॥

**मुद्गल–** हे सवितः! **ते** त्वदीया **वयम्** शुनशेपनामानः **भगभक्तस्य** धनेन संयुक्तस्य **तव अवसा** रक्षणेन **उदशेम** उत्कर्षेण व्याप्नुमः । किं कर्तुम् । **रायः** धनस्य **मूर्धानम्** उत्कर्षम् **आरभे** प्रारब्धुम् । धनिकत्वप्रसिद्ध्या व्याप्ता भूयास्मेत्यर्थः ॥ ५ ॥

**सायण–** हे सवितः! **ते** त्वदीयाः **वयं** शुनःशेपनामानः **भगभक्तस्य** धनेन संयुक्तस्य **तवावसा** रक्षणेन **उदशेम** उत्कर्षेण व्याप्नुमः । किं कर्तुम् । **रायः** धनस्य **मूर्धानम्** उत्कर्षम् **आरभे** प्रारब्धुम् । धनिकत्वप्रसिद्ध्या व्याप्ता भूयामेत्यर्थः ॥

भगशब्दो पृषादित्वादाद्युदात्तः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । अशेम । 'अशू व्याप्तौ' । लिङि व्यत्ययेन परस्मैपदम् । शप् । रायः । 'ऊडिदम्' इति षष्ठ्या उदात्तत्वम् । आरभे । 'कृत्यार्थे तवैकेन्' इति तुमर्थे केन्प्रत्ययः । नित्स्वरेणाद्युदात्तत्वम् ॥ ५,१३ ॥

**सिद्धाञ्जनम्–** हे सवितः! **ते** त्वदीयाः **वयं** ऋषयः, मादृशा वेति शुनःशेपस्यर्षेरुक्तिः । **तव** त्वत्कर्तृकेन **अवसा** अस्मदीयसंवर्धनेन **उदशेम** ऊर्ध्वं प्राप्नुयाम (अशू व्याप्तौ, व्यत्ययेन शप्) त्वया संवर्धिताः सन्तः ऊर्ध्वं गच्छेम । किमर्थम् ? **भगभक्तस्य** भगेन देवेन भगात्मनाऽवस्थितेन त्वया सवित्रा भक्तस्य सेवितस्य **रायः** धनस्य (इदं सावित्रं धनं दिव्यं अवधेयम्) **मूर्धानं** उत्तमं पदं उत्कर्षमित्यर्थः, **आरभे** आरब्धं, उपभोक्तुम् (तुमुन्नर्थे केन्प्रत्ययः) ॥ ५,१३ ॥

॥ इति प्रथमाष्टके द्वितीयाध्याये त्रयोदशो वर्गः ॥

## ।। अथ चतुर्दशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**नहि ते क्षत्रं नसहो न मन्युं वयश्चनामी पतयन्त आपुः ।**
**नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रमिनन्त्यभ्वम् ।। ६ ।।**

नहि । ते । क्षत्रम् । न । सहः । न । मन्युम् । वयः । च न अमी इति । पतयन्तः । आपुः ।
न । इमाः । आपः । अनिमिषम् । चरन्तीः । न । ये । वातस्य । प्रमिनन्ति । अभ्वम् ।। ६ ।।

## ऋग्भाष्यम्

**क्षतात्त्राणं ते बलं संविदं च पूर्णं नापुर्मुक्तिगा ये विशिष्टाः ।**
**अपि स्वयं संसृतेरुत्पतन्तः पतयन्तोऽन्यांच्छिष्यभक्तानुदाराः ।**
**सदा शुभान्याचरन्तोऽपि देवा अब्देवता आप इति श्रुतिर्यत् ।**
**गङ्गाद्या वा वायुदेवस्य विष्णोरुत्पत्तिं ये जानते देवसङ्घाः ।**
**वयः सुपर्णा इति वाऽपि..................................।। ६ ।।**

**ऋग्भाष्यटीका– न हिते** । इतःपरा एकत्रिंशद्वरुणदेवताः । क्षतात्त्राणम् । हे वरुण! । ते क्षत्रं प्रजानां क्षताद्धानेस्त्राणम् । **वयश्चन** विशब्दो विशिष्टवाची । चनशब्दोऽप्यर्थः । विशिष्टा अपि । **अमी** परोक्षाः ये मुक्तिगास्तेपि **नापुर्हि** । तथा **ते सहो** बलं च **नापुः** । **मन्युं** 'मनु अवबोधने' । संविदं च **नापुः** । क्रोधस्य गुणत्वाभावात् । त्वदीयक्षत्रादिसदृशक्षत्रादिमन्तो मुक्ता अपि न सम्भवन्तीत्यर्थः । प्रमाणबाधपरिहारार्थमुक्तं पूर्णमिति । किञ्च ये **पतयन्तः** स्वार्थे णिच् । स्वयं संसृतेरुत्पतन्तो जीवन्मुक्तास्तेऽपि नापुः । यद्वा हेतुमति णिच् । अन्यान् शिष्यभक्तान् संसृतेरुत्पतयन्त उद्गमयंतो ये उदारा आचार्यास्तेऽपि नापुः । किञ्च । **अनिमिषं** सदा **चरन्तीः** शुभान्याचरन्तः । **इमा आपः** इमे प्रसिद्धा देवा अपि **नापुः** । अपृशब्दस्य सर्वदेववाचित्वं कुत इत्यत आह । **आप इति** ।। यद्यस्मादापो वै सर्वा देवता इति श्रुतिरस्ति तस्मादुक्तं युक्तमिति । अपृशब्दः सर्वदेवतावाचित्वेन व्याख्यातः । तद्विशेषवाचित्वेनापि द्वेधा व्याख्याति । अब्देवता अबभिमानिदेवताः गङ्गाद्या नद्यो वा आप इत्युक्ताः । किञ्च । **ये**

देवसङ्घाः **वातस्य** वायुदेवस्य विष्णोः पश्चम्येषा । **अभ्वम्** उत्पत्तिपर्यायोऽयम् उत्पत्तिम् । **प्रमिनन्ति** जानते । तेऽपि महाज्ञानानापुः । वायुदेवस्येत्यनुवादेन विष्णोरिति व्याख्यानं वा । उत्पत्तिं प्रादुर्भावम् । वय इत्यनुवादेन सुपर्णा इत्यपि वेति व्याख्यानान्तरम् ॥ ६ ॥

**मन्त्रार्थमञ्जरी–** एतदारभ्यैकत्रिंशन्मन्त्रा वरुणदेवताकाः । अग्रेतनं वरुणपदमत्राप्यन्वेति । (हे वरुण) 'मित्रं हुवे'इत्यत्रोक्तनिरुक्त्या हे विष्णो । ते । क्षत्रम्, प्रजानां क्षताद्धानेस्त्राणं रक्षणम्, त्रायतेः क उपपदान्तलोपश्च । वयः चन, विशब्दो विशिष्टवाची, चनशब्दोऽप्यर्थः । अमी, परोक्षाः विशिष्टा अपि, मुक्ता अपीति वा, 'विः पक्षिपरमात्मनोः' इत्युक्तेः सुपर्णा अपीति वार्थः । न हि आपुः । (ते) सहः, बलम् (च) न (आपुः) मन्युम्, ज्ञानम् (च) न (आपुः), 'मनु अवबोधने' इति धातोर्यु(च्)प्रत्ययः, क्रोधस्यागुणत्वात् । किं च, पतयन्तः, स्वार्थे णिच्, संसृतेरुत्पतन्तो जीवन्मुक्ताः, भक्तान्संसृतेः पतयन्तः, उद्गमयन्त आचार्या अपीति हेतुमण्णिज्वा । (न आपुः) किं च, अनिमिषम्, सदा । चरन्तीः, शुभानाचन्तरः । इमाः, प्रसिद्धाः । आपः, सर्वे देवाः, 'आपो वै सर्वा देवताः' इति श्रुतेः, अभिमानिनयन्यायेनाबभिमानिनो वा, गङ्गाद्या नद्यो वा । ते क्षत्रादिकम् न (आपुः) किं च, ये, देवसङ्घाः । वातस्य, मुख्यवायोः । अभ्वम्, उत्पत्तिपर्यायोऽयम्, विष्णोः सकाशादुत्पत्तिम्, । यद्वा वातस्य, विष्णोः । अभ्वम्, प्रादुर्भावम् । प्रमिनन्ति, जानन्ति (तेऽपि) महाज्ञानाः । न (आपुः) ॥ ६ ॥

**स्कन्द–** तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि । तमेवोपधावेति । स वरुणं राजानमुपससार अत उतराभिरेकत्रिंशता (ऐ.ब्रा.७-१६) । 'परं शेषश्च वारुणः' (बृ.दे.३-९८) । परं सूक्तमेकविंशकम्, अस्य शेषो दशर्चः । एतदुभयमपि वरुणदेवतम् । वरुणश्चात्रोक्त-स्थान आदित्यः । **न हि ते क्षत्रम्** धनं बलं वा सेनालक्षणम् । नापि **सहः** शारीरं बलम् । नापि **मन्युम्** क्रोधम् । वयः चन पक्षिणः । चन अप्यर्थे । पक्षिणोऽपि अमी पतयन्तः गच्छन्तः आपुः प्राप्नुवन्ति अतिमहत्त्वात् । **न इमाः** नापि इमाः **आपः अनिमिषम्** सततम् **चरन्तीः** गच्छन्त्यः । **न** अपि **ये वातस्य प्रमिनन्ति** 'मीङ् हिंसायाम्' । हिंसन्ति । **अभ्वम्** अभ्वमिति महन्नाम (निघ.३-३) महत्त्वम् । कस्य । सामर्थ्याद् गतेः । वातादपि ये शीघ्रगतिकरा इत्यर्थः । के ते । मरुतो वान्ये वा केचिन्मनआदयः ॥ ६ ॥

**वेङ्कटमाधव– नहि** तव वरुणः! **बलम्** अभिभवसामर्थ्यं शत्रूणामभिमननं च महता वेगेन **पतयन्तः** श्येनादयः अपि **आपुः । न** च **इमाः आपः** सततं चरन्त्यः । **न** च **ये** पर्वतादयः **वातस्य** अपि महत्तां प्रहिंसन्ति ।। ६ ।।

**मुद्गल–** अथ सवित्रा प्रेरितः शुनःशेपः एतदादिसूक्तशेषेण उत्तरेण च सूक्तेन वरुणं तुष्टाव । हे वरुण! **पतयन्तः** प्रौढे वियति उत्पतन्तः **अमी** दृश्यमानाः **वयः चन** श्येनादयः पक्षिणोऽपि **ते क्षत्रम्** त्वदीयं शरीरबलम् **न हि आपुः** नैव प्राप्ताः । त्वत्सदृशं शरीरबलं पक्षिणामपि नास्तीत्यर्थः । तथा **सहः** त्वदीयं पराक्रमम् अपि न प्रापुः । तथा **मन्युम्** त्वदीयं कोपमपि न प्रापुः । त्वयि क्रुद्धे सति सोढुमशक्ता इत्यर्थः । **अनिमिषम्** सर्वदा **चरन्तीः** प्रवाहरूपेण गच्छन्त्यः **इमाः आपः** त्वदीयं बलम् न प्रापुः । **वातस्य** वायोः ये गतिविशेषाः त्वदीयम् **अम्वम्** वेगम् न **प्रमिनन्ति** न हिंसन्ति । अतिक्रमं कर्तुं न शक्ता इत्यर्थः । तेऽपि न प्रापुरिति पूर्वत्रान्वयः ।। ६ ।।

**सायण–** अथ सवित्रा प्रेरितः शुनःशेपः एतदादिसूक्तशेषेण उत्तरेण च सूक्तेन वरुणं तुष्टाव । तथा च श्रयते– 'तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि तमेवोपधावेति स वरुणं राजानमुपससारात उत्तराभिरेकत्रिंशता' (ऐ.ब्रा.७-१६) इति । हे **वरुण! पतयन्तः प्रौढे** वियत्युत्पतन्तः **अमी** दृश्यमानाः **वयश्चन** श्येनादयः पक्षिणोऽपि **ते क्षत्रं** त्वदीयं शरीरबलं **नहि आपुः** नैव प्राप्ताः । त्वत्सदृशं शरीरबलं पक्षिणामपि नास्तीत्यर्थः । तथा **सहः** त्वदीयं पराक्रमं तव सामर्थ्यमपि न प्रापुः । तथा **मन्युं** त्वदीयं कोपमपि न प्रापुः । त्वयि क्रुद्धे सति सोढुमशक्ता इत्यर्थः । **अनिमिषं** सर्वदा **चरन्तीः** प्रवाहरूपेण गच्छन्त्यः **आपः** त्वदीयं बलं न प्रापुः । **वातस्य** वायोः ये गतिविशेषाः त्वदीयम् **अभ्वं** वेगं न **प्रमिनन्ति** न हिंसन्ति । अतिक्रमं कर्तुं न शक्ता इत्यर्थः । तेऽपि न प्रापुरिति पूर्वत्रान्वयः ।

पतयन्तः । 'पत गतौ' । चुरादिरदन्तः । लटः शतृ । शप् । गुणायादेशौ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिचः स्वरः । आपुः । 'आप्लृ व्याप्तौ' । लिट्युसि द्विर्भावहलादिशेषौ । 'अत आदेः' (पा.सू.७-४-७०) इति आत्वम् । अत्र न सहो न मन्युम् इत्यादिभिः आपुः इत्यस्य संबन्धात् तदपेक्षया प्राथम्यात् 'चादिलोपे विभाषा' इति प्रथमा तिङिभक्तिर्न निहन्यते । चरन्तीः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । प्रमिनन्ति । 'मीञ् हिंसायाम्' । 'त्र्यादिभ्यः

श्रा'। 'श्राभ्यस्तयोरातः' इति आकारलोपः । 'मीनातेर्निगमे' (पा.सू.७-३-८१) इति ह्रस्वत्वम् । प्रत्ययस्वरः । 'तिङि चोदात्तवति' (पा.सू.८-१-७१) इति गतिरनुदात्तः । यद्वृत्तयोगादनिघातः ॥ ६ ॥

**सिद्धाञ्जनम्–** अथास्मिन् सूक्ते षष्ठीमृचमाह । इतः परं वारुण्यः आ सूक्तसमाप्तेः । सवितुः सर्वप्रेरकस्य प्रसादाद् वरुणं स्तौति । अनभिगम्यं वरुणस्य बलात्मकं महत्त्वं वर्णयति । हे देव वरुण! **अमी** इतो जगति दृश्यमानाः **पतयन्तः** आकाशे उत्पतन्तः (चुरादिरदन्तः, शतृ) **वयश्चन** पक्षिणोऽपि ते तव **क्षत्रं** पराक्रमवलं **नहि आपुः** नैवोपगच्छन्ति । तथा **सहः** सहनबलं **न आपुः**, **मन्युं** क्रोधवेगं वा न आपुः । **अनिमिषं** सन्ततं **चरन्तीः** गच्छन्त्यः प्रवहन्त्यः **इमाः आपः** नद्यः न आपुरिति सम्बन्धः । ये ये च **वातस्य** सदागतेर्वायोः वेगविशेषाः प्रचण्डा भवन्ति, तेऽपि तव **अभ्वं** बलप्रचुरं महत्त्वं (अभ्वं महन्नाम) न **प्रमिनन्ति** न प्रबाधन्ते (मीञ् हिंसायाम्, श्नाविकरणी धातुः)। वेगेन बलेन वा ये प्रथिता लोके तानतिशेते तव प्रबलो महिमा ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः । नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ॥ ७ ॥**

अबुध्ने । राजा । वरुणः । वनस्य । ऊर्ध्वम् । स्तूपम् । ददते । पूतऽदक्षः ॥ नीचीनाः । स्थुः । उपरि । बुध्नः । एषाम् । अस्मेइति । अन्तः । निऽहिताः । केतवः । स्युरिति स्युः ॥ ७ ॥

## ऋग्भाष्यम्

**......................अबुध्ने प्रकाशतः सम्भजतः स्वमुच्चैः ।**
**स्तूपं स्थानं ददते पूतदक्षो नीचस्था अप्यूर्ध्वगास्तेन तस्थुः ।**
**नीचाश्रये मुक्तिगा मानुषाद्यास्तेषां बुध्नो नीचलोकः सुरेभ्यः ।**
**नीचा गुणा अप्रकाशोऽथवैषां नीचोच्चत्वं क्रमशश्चाविरिंचात् ।**
**अस्माकमंतर्निहितानि नित्यं ज्ञानानि भूयासुरता(तोऽ)धिकानि ।**
**भवंत्यर्हा भवितुं वा भविष्याः स्युर्द्विग्रहे प्रार्थनैवाधिकार्थे ॥ ७ ॥**

**ऋग्भाष्यटीका– अबुध्ने राजा** । अबुध्ने प्रकाशतः । **पूतदक्षो वरुणो राजा अबुध्ने** बुध अवगमने क्विप् । तत्प्रतिषेधो बुध्नम् । नञः परनिपातादि छान्दसम् । तस्यापि प्रतिषेधोऽबुध्नं तृतीयार्थे सप्तमी । प्रकाशतो ज्ञानेन ज्ञानपूर्वम् । **वनस्य** 'वन षण सम्भक्तौ' पचाद्यच् । स्वं सम्भजतः स्वात्मानं सेवमानाय **ऊर्ध्वं** उच्चैः । **स्तूपं** स्थानमुत्तमं स्थानं **ददते** । 'दद दाने' । किञ्च ये **नीचीनाः** नीचस्थाः पुरुषास्तेऽपि तेन वरुणेन सेवितेन निमित्तेन **उपरि** ऊर्ध्वगाः स्वर्गगाः **स्थुः** तस्थुः । यद्वा ये नीचीनाः नीचा मानुषाद्यास्तेऽपि उपरि स्थुः मुक्तिगा बभूवुरिति व्याख्यानान्तरम् । अर्थद्वये कथं ते नीचीनाः । तत्राद्ये ये(ए)षां तेषां स्वर्गं गमिष्यतां बुध्नोऽधोभागः सुरेभ्यो नीचलोको ह्यावासः । द्वितीये तु बुध्नशब्दोऽधस्तनत्वमाह । **एषां** मानुषादीनां **बुध्नः** सुरेभ्योऽधस्तनप्रकारो गुणा नीचाः । अथवैषां मानुषादीनां बुध्न उक्तप्रकारेणाप्रकाशोऽज्ञानमस्ति । न तु देवानां तस्मात्ते नीचाः । तृतीयपादं प्रकारान्तरेण व्याख्याति । **नीचोच्चत्वमिति** ।। अस्य वरुणस्याज्ञया य एव जीवाः किञ्चिदपेक्षया नीचीनास्त एव किंचिदपेक्षयोपरि स्थुः । किं निरवधिकमेतत् । न । एषां जीवानां बुध्नो मूलभूतः कश्चिदस्ति विरिंच इति । तस्येदं तात्पर्यम् । विरिञ्चादा यत्क्रमशो जीवानां नीचोच्चत्वं तच्च वरुणेनेति । तस्य वरुणस्य प्रसादात् **अस्मे** अस्माकम् । शे आदेशः । **अन्तः** हृदये **केतवो निहिताः स्युः** ज्ञानानि नित्यं निहितानि भूयासुः । ज्ञानिनो वयं भूयास्म । ननु संत्येव ज्ञानानि तत्कथं तत्प्रार्थना । अतो विद्यमानेभ्योऽप्यधिकानीति । तर्ह्ययोग्यप्रार्थनया प्रत्यवायो भवेदित्यतोऽभिप्रायमाह । **भवन्तीति** ।। ये केतवो भविष्या आगामिनोऽस्माकं भवितुमर्हा भवन्ति वासंत्येव ते स्युरित्यनेन ये केतवोऽस्मेऽस्माकं अंतर्निहितानि गूढाः सन्ति ते स्युः व्यक्ता इति योजनान्तरं सूचितं भवति । अतोऽधिकानीति यद्व्याख्यानं तत्कथं लभ्यमित्यत आह । **द्विर्ग्रह इति** ।। पदकारेणात्र स्युरिति स्युरिति योद्विर्ग्रहः क्रियते तेन द्विर्ग्रहि द्विर्ग्रहिण द्विरुच्चारणेन प्रार्थनैवाधिकार्थेऽधिकार्थद्योतनाय भवतीति ।। ७ ।।

**मन्त्रार्थमञ्जरी–** पूतदक्षः, वरुणः राजा, व्याख्यातपदानि । अबुध्ने, 'बुध अवगमने' क्विप्, तत्प्रतिषेधो बुध्नमज्ञानम्, नञः परनिपातादिश्छान्दसः, तस्यापि प्रतिषेधोऽबुध्नम्, तृतीयार्थे सप्तमी, ज्ञानेन ज्ञानपूर्वम् । वनस्य, वनाय, व्यत्ययात्, 'वन सम्भक्तौ' पचाद्यच्, स्वात्मानं सेवमानाय । ऊर्ध्वम्, उच्चैः । स्तूपम्, स्थानम् । ददते, 'दद दाने' ददाति । किं च, (ये)

नीचीनाः, नीचस्थानस्थाः पुरुषाः । (तेऽपि) (तेन), वरुणेन सेवितेन हेतुना । उपरि, ऊर्ध्वगाः, स्वर्गगाः । स्थुः, तस्थुः, स्थातेः (तिष्ठतेः) लुङ्यभावश्छान्दसः । यद्वा (ये) नीचीनाः नीचा मनुष्याद्याः । (तेऽपि) उपरि स्थुः, मुक्तिगा बभूवुः । अर्थद्वयेऽपि कथं ते नीचीनाः ? इत्यत उक्तम्– 'बुध्न एषाम्' इति । आद्येऽर्थे– एषाम्, स्वर्गं गमिष्यताम् । बुध्नः, अधोभागो नीचलोको ह्यावासः । द्वितीये तु बुध्नशब्दोऽधस्तनत्वपरः । एषाम्, मानुषादीनाम् । बुध्नः, सुरेभ्योऽधस्तनप्रकारः, गुणा नीचा इति वा । एषाम्, मानुषादीनाम् । बुध्नः, अज्ञानमस्ति, न तु देवानाम्, अतस्ते नीचीना इति वार्थः । (अस्य) वरुणस्य (आज्ञाया य एव जीवाः) किञ्चिदपेक्षया नीचीनाः । (त एव) किञ्चिदपेक्षया उपरि । स्थुः, अस्थुः, नीचोच्चभावेन स्थिता इति यावत् । तत्किं निरवधिकम् ? इत्यत उक्तम् 'बुध्न एषाम्' इति । एषाम्, तारतम्येन स्थितानां जीवानाम् । बुध्नः, मूलभूतः कश्चिदस्ति विरिञ्चः । इति वा तृतीयपादस्यार्थः । (तस्य) वरुणस्य । (प्रसादात्) अस्मे अस्माकम्, 'सुपां सुलुक्' इत्यादिना सुपः 'शे' इत्यादेशः, शकारस्येत्संज्ञया लोपे 'शेषे लोपः' इति 'अद्' इत्यस्य लोपे 'अस्मे' इति रूपम् । अन्तः, हृदये । केतवः, 'केतुं कृण्वन्' इत्यत्रोक्तदिशा ज्ञानानि । निहिताः, नित्यं निहितानि । स्युः, ज्ञानिनो वयं भूयास्म । अत्र 'स्युः' इत्यस्य पदकाले 'स्युरिति स्युः' इति द्विरुच्चारणं यावत्स्वयोग्यं तावतोऽपि ज्ञानस्याभिव्यक्त्यर्थं प्रार्थनाद्योतनार्थम् ।। ७ ।।

**स्कन्द–** बुध्नोऽधोभागः । स इतरयोर्भागयोराश्रयः । बुध्नत्वाश्रयत्वयोः सम्बन्धाद् बुध्नशब्देनात्राश्रयो लक्ष्यते । **अबुध्ने** अनाश्रये अनालम्बनेऽन्तरिक्षे **राजा** दीप्त ईश्वरो वा **वरुणः वनस्य ऊर्ध्वम् स्तूपम् ददते** 'वनम्' (निघ.१-६) इति रश्मिनाम । बहुवचनस्य स्थाने एकवचनम् । स्तूपशब्दः सङ्घातवचनः । 'विश्वे देवाः पुष्करे त्वाददन्त' (ऋ ७-३३-११), 'ददते मणिम्' (या.२-२) इत्यादिप्रयोगदर्शनाद् ददतिर्धारयतिकर्मा । रश्मीनां सङ्घातमूर्ध्वं धारयतीत्यर्थः । कीदृशः । **पूतदक्षः** शुद्धबलः । न चोर्ध्वमेव । किं तर्हि । **नीचीनाः** अधोमुखाः स्युः तिष्ठन्त्यनेन रश्मयः । **उपरि बुध्नः** आश्रयो मण्डलाख्यः एषाम् । अनाश्रयेऽप्यन्तरिक्षे आदित्यमण्डलस्योर्ध्वमधस्ताच्च रश्मीन् धारयतीत्यर्थः । परः पादोऽन्यार्थः । तत्सम्बन्धार्थं यत्तच्छब्दो योग्यार्थसम्बन्धावध्याहर्तव्यौ । य इदं करोति तस्य प्रसादेन **अस्मे** अस्माकम् **अन्तः** मध्ये मनसि **निहिताः केतवः** प्रज्ञाः **स्युः** । जीवनमनेन प्रकारेणाशास्यते । जीवतो ह्यन्तःप्रज्ञा

भवन्ति न मृतस्य । अथवा केतवोऽत्र प्रज्ञानात्मका रश्मयः प्रादुर्भवन्ति । तेन इदमादित्य-रश्मिदर्शनद्वारेण चिरजीवित्वमाशास्यते ।। ७ ।।

**वेङ्कटमाधव–** अमूलेऽनालम्बनेऽन्तरिक्षे **वरुणः राजा** तेजस उदकस्य वा सङ्घातम् **ऊर्ध्वम्** धारयति शुद्धबलः । ते च रश्मयो नीचीनाग्राः तिष्ठन्ति । तेषाम् **एषाम्** मूलम् **उपरि** भवति । अस्माकम् अन्तः अमृतानां निहितानि भवन्तु प्रज्ञानानि ।। ७ ।।

**मुद्गल– पूतदक्षः** शुद्धबलः **वरुणः राजा अबुध्ने** मूलरहितेऽन्तरिक्षे तिष्ठन् **वनस्य** वननीयस्य तेजसः **स्तूपम्** सङ्घम् **ऊर्ध्वम्** उपरिदेशे **ददते** धारयति । **नीचीनाः स्थुः** ऊर्ध्वदेशे वर्तमानस्य रश्मय इत्यध्याहार्यम् । ते ह्यधोमुखास्तिष्ठन्ति । **एषाम्** रश्मीनाम् **बुध्नः** मूलम् **उपरि** तिष्ठतीति शेषः । तथा सति **केतवः** प्रज्ञापकाः प्राणाः **अस्मे** अस्मासु **अन्तः निहिताः** स्थापिताः स्युः । मरणं न भविष्यतीत्यर्थः ।। ७ ।।

**सायण– पूतदक्षः** शुद्धबलः **वरुणः राजा अबुध्ने** मूलरहिते अन्तरिक्षे तिष्ठन् **वनस्य** वननीयस्य तेजसः **स्तूपं** संघम् **ऊर्ध्वम्** उपरिदेशे **ददते** धारयति । **नीचीनाः स्थुः** । ऊर्ध्वदेशे वर्तमानस्य वरुणस्य रश्मय इत्यध्याहार्यम् । ते ह्यधोमुखास्तिष्ठन्ति । **एषां** रश्मीनां **बुध्नः** मूलम् **उपरि** तिष्ठतीति शेषः । तथा सति **केतवः** प्रज्ञापकाः प्राणाः **अस्मे** अस्मासु **अन्तर्निहिताः** स्थापिताः स्युः । मरणं न भविष्यतीत्यर्थः ।

अबुध्ने । न विद्यते बुध्नः मूलम् अस्य इति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । स्तूपम् । 'स्त्यै शब्दसंघातयोः'। 'रत्यः संप्रसारणमूच्च' इति पप्रत्ययः; नत्संनियोगेन यकारस्य संप्रसारणं परपूर्वत्वे उकारादेशश्च । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । ददते । भौवादिकः । नीचीनाः । निपूर्वान् अञ्चतेः 'ऋत्विक्' इत्यादिना क्विन् । 'अनिदिनाम्' इति नलोपः । न्यच्शब्दात्स्वार्थे 'विभाषाञ्चेरदिक्स्त्रियाम्' (पा.सू.५-४-८) इति स्वः । 'आयन्' इत्यादिना तस्य ईनादेशः । 'आयनादिषूपदेशिवद्वचनं स्वरसिध्यर्थम्' (पा.सू.७.१-२-१) इति वचनात् ईकार उदात्तः । 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । स्थुः । 'गातिस्था' (पा.सू.२-४-७७) इत्यादिना सिचो लुक् । 'आतः' (पा.सू.३-४-११०) इति झेः जुसादेशः । 'उस्यपदान्तात्' (पा.सू.६-१-९६) इति पररूपत्वम् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति

अडागमाभावः । अस्मे । 'सुपां सुलुक्' इति सप्तम्याः शेआदेशः । निहिताः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । स्यु अस्तेर्लिङि 'श्नसोरल्लोपः' ॥ ७ ॥

**सिद्धाञ्जनम्– अबुध्ने** अविद्यमानः बुध्नः मूलं यस्य तस्मिन् निरालम्बने आकाशे **राजा** राजमानः प्रभुः **पूतदक्षः** पवित्रधीकोशलवलः **वरुणः** देवः **वनस्य** वननीयस्य सम्भजनीयस्य जीवनतेजसः **स्तूपं** सङ्घातं **ऊर्ध्वं** उपरिदेशे **ददते** धारयते । तथा ऊर्ध्वं स्थितस्य वनस्तूपस्यांशवः **नीचीनाः** अधोमुखाः **स्युः** तिष्ठन्ति । एषां अंशूनां **बुध्नः** मूलं, आश्रयः **उपरि** वर्तते । तस्मादेते **केतवः** प्रज्ञानरश्मयः ऊर्ध्वमूला अधोमुखाः अस्मानभिप्रसरन्तः **अस्मे** अस्मासु **अन्तः** अन्तरे **निहिताः** प्रतिष्ठापिताः स्युः भवन्तीत्यर्थः, भूयासुरित्याशास्ते वा मन्त्रदृक् । ददते– जुहोत्यादिः छन्दसि भौवादिकः । नीचीनाः– निपूर्वादञ्चतेः क्विन्, ईनादेशः । स्थुः– लुङ् अडागमाभावः छन्दसि, लडर्थे । अस्मे– सप्तम्याः शे आदेशः । वनशब्दः धात्वर्थानुसारेण रूढ्या च, वननीये सुखे, वृक्षजलतेजःप्रभृतिषु वर्तमानः प्रकरणानुसारेण व्याख्येयः । स्तूपः सङ्घातः इति असंदिग्धम् । सामर्थ्यात् तेजसः सङ्घातो ग्राह्यः । स चोर्ध्वमूलः सर्वं वृत्वा स्वयमूर्ध्वं स्थितेन वरुणेन ऋतज्योतिरात्मना आदित्येन धार्यते । एवंलक्षणो 'वनस्तूपः' चिन्मयो भवति, यस्मात् प्रज्ञामयाः 'केतवः' प्रसरन्ति । तानि जीवनानि तेजांसि, अत एव अधोमुखानि पृथिवीं पार्थिवानस्मांश्चानुलक्ष्यायान्ति । अतश्च अन्तरस्मासु धीयन्ते ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।**
**अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥ ८ ॥**

उरुम् । हि । राजा । वरुणः । चकार ॥ सूर्याय । पन्थाम् । अनुऽएतवै । ऊँइति ॥ अपदे । पादा । प्रतिऽधातवे । अकः । उत । अपऽवक्ता । हृदयऽविधः । चित् ॥ ८ ॥

## ऋग्भाष्यम्

**उरुं राजा रंजनाद्राजनाद्वा सूर्याय पंथानमसौ चकार ।**
**स्वाज्ञानुसारेण सदैव गत्यै पादावपादाय च गन्तवेऽकरोत् ।**
**अज्ञाय विज्ञानमकः स गन्तुमात्मानमित्यर्थ इहांजसोक्तः ।**
**बुद्धेर्धातुः शङ्करस्यापि दोषान्वक्ता ज्ञानाच्छिक्षकत्वाच्च विष्णुः ॥ ८ ॥**

**ऋग्भाष्यटीका– उरुं हि** । उरुं राजा । रंजनात् अनुरागजननात् । राजनात् दीपनाद्वा राजा । 'रंज रागे' । 'राजृ दीप्तौ' असौ **राजा** । **अन्वेतवै** स्वाज्ञानुसारेण गत्यै । उशब्द एवार्थे । तस्याध्याहृतेन सदाशब्देन सम्बन्धः कृतः । **सूर्याय** सूर्यस्य । **उरुं** विस्तीर्णम् । **पन्थां** पन्थानम् । **चकार** सूर्यसंचाराय मूर्तान्तरप्रतिघातरहितमन्तरिक्षं चकार । किञ्च । **अपदे** अपदाय पुरुषाय **प्रतिधातवे** 'धावु गति शुद्ध्योः' । गन्तवे गन्तुम् । **पादा** पादौ । **अकः** अकरोत् । विकरणलोपात् । यद्वा अपदे पदगतौ गत्यर्थाः ज्ञानार्थाः । सम्पदादित्वात्क्विप् । न विद्यते पद्यस्य तस्मै अज्ञाय । पादौ घञन्तः विज्ञानं ज्ञानं चेति शेषः । स वरुणः प्रतिधातवे आत्मानं प्रति गन्तुमक इत्येषोऽर्थ इह पादेऽजसा मुख्यया वृत्त्योक्तः । माहात्म्यातिशयस्य सूचकत्वात् । **उत** किञ्च वरुणो विष्णुः **हृदयविधः** हृदयं बुद्धिस्तां विशेषेण धत्त इति विध् विच् । आकारलोपः । तस्य बुद्धेर्धातुः शङ्कस्य **चिदपि अपवक्ता** दोषान्वक्ता । कथं ज्ञानात्सूक्ष्मविज्ञानवत्त्वात् । शिक्षकत्वाच्च । शिक्षको हि त्वयेदमवद्यमाचरितमिति दोषं वक्ति । अनेन विज्ञानं शिक्षकत्वं चाभिप्रेतम् । न दौर्जन्यमित्यभिप्रायः ॥ ८ ॥

**मन्त्रार्थमञ्जरी– राजा,** दीप्यमानः । वरुणः । अन्वेतवै, स्वाज्ञानुसारणै गत्यै, इणः तवैप्रत्ययः । उ, एव । (सदा) इति शेषः, सदैव गमनायेत्यर्थः । सूर्याय, सूर्यस्य । उरुम्, विस्तीर्णम् । पन्थाम्, पन्थानम् । चकार, सूर्यसञ्चाराय मूर्तान्तरप्रतिघातरहितमन्तरिक्षं चकार । हि । किं च, अपदे, पादहीनाय पुरुषाय । प्रतिधातवे, 'धावु गतिशुद्धोः' तवे(ङ्) प्रत्ययः, गन्तुम् । पादा, पादौ । अकः, अकरोत्, कृञः लङि विकरणलोपः । अपदे, गत्यर्थस्य पदेः सम्पदादित्वाद्भावे क्विप्, अज्ञाय । पादा, पादौ, पदेः घञ्, ज्ञानविज्ञाने । प्रतिधातवे, परमात्मानं गन्तुम् । अकः । इति वार्थः । उत, किं च । हृदयविधः, हृदयं बुद्धिः, तां विशेषेण धत्त इति धात्रः विच्, आकारलोपः । चित्, अपि, बुद्धिधारकस्यापि शङ्करस्य । अपवक्ता, दोषान्वक्ता, तदीयदोषाञ्ज्ञात्वा शिक्षयतीत्यभिप्रायः ॥ ८ ॥

**स्कन्द– उरुम्** विस्तीर्णम् हिशब्दस्तु पदपूरणः । **राजा वरुणः चकारः** । कस्मै । **सूर्याय** मण्डलमत्र सूर्यशब्देनोच्यते । तदर्थम् । किम् । **पन्थाम्** पन्थानम् । क्व । सामर्थ्यादन्तरिक्षे । किमर्थम् । **अन्वेतवै** आनुपूर्व्येण गन्तुम् । सूर्यं आनुपूर्व्येणाऽऽयास्यतीत्येवमन्तरिक्षे विस्तीर्णं पन्थानं कृतवानित्यर्थः । **अपदे पदं** यत्र निधातुं न शक्यते अप्रतिष्ठत्वात् तदपदमन्तरिक्षं

तत्र । **पादा** आत्मीयौ पादौ **प्रतिधातवे** प्रतीत्येव नीत्येतस्य स्थाने । निधातुम् । **अकः** करोति । अप्रतिष्ठेऽप्यन्तरिक्षे पदं निधत्त इत्यर्थः । **उत** अपि **च** **अपवक्ता** अपवदिता । कस्य । **हृदयाविधः चित्** पुरुषवचनायोग्यव्यवहारसमाचरणादिनिर्हृदयं यो विध्यति पीडयति स हृदयावित् तस्य । चिच्छब्दः पदपूरणः । अथवैवमन्यथाऽस्य पदस्याऽर्थयोजना । अपेत्य वक्ता अपवक्ता । वक्तुं समर्थेभ्यः पृथग्भूय एक एव वक्तेत्यर्थः । कस्य । सामर्थ्याद् यावत्किञ्चिद् दुर्वचस्तस्य सर्वस्य । हृदयाविधः चित् चिच्छब्दोऽप्यर्थे । षष्ठीनिर्देशाच्च सकाशादिति वाक्यशेषः । हृदयं हृदयेन वा यो विध्यति सम्यग् जानाति । विध सम्यग्ज्ञाने । स हृदयावित् तस्यापि सकाशात् ॥ ८ ॥

**वेङ्कटमाधव–** विस्तीर्णम् **हि राजा वरुणः चकार** सूर्यस्य गमनार्थं पन्थानम् । ततोऽयम् अनालम्बनेऽन्तरिक्षे कृतवान् सूर्यस्य पदानि प्रतिधातुं पन्थानम् । सोऽयम् **हृदयाविधः** शत्रोः **अपवक्ता** अस्तु पराभवत्वयमिति वदतु ॥ ८ ॥

**मुद्गल– वरुणः राजा सूर्याय** सूर्यस्य **पन्थाम्** मार्गम् **चकार** । **हि** प्रसिद्धौ । उत्तरायणदक्षिणायनमार्गस्य विस्तारः प्रसिद्धः । किमर्थमेव कृतवानिति तदुच्यते । **अन्वेतवै उ** अनुक्रमेण उदयास्तं गन्तुमेव । तथा **अपदे** पादरहितेऽन्तरिक्षे **पादा प्रतिधातवे** पादौ प्रक्षेप्तुम् **अकः** मार्गं कृतवान् । पूर्वत्र रथस्य मार्गः, अत्र पादयोरिति विशेषः । **उत** अपि **च** **हृदयाविधः चित्** शत्रोरपि **अपवक्ता** निराकर्ता भवतु ॥ ८ ॥

**सायण– वरुणः राजा सूर्याय** सूर्यस्य **पन्थां** मार्गम् **उरुं** विस्तीर्णं **चकार** । **हि**शब्दः प्रसिद्धौ । उत्तरायणदक्षिणायनमार्गस्य विस्तारः प्रसिद्धः । किमर्थमेवं कृतवान् इति तदुच्यते । **अन्वेतवै उ** अनुक्रमेण उदयास्तमयौ गन्तुमेव । तथा **अपदे** पादरहिते अन्तरिक्षे **पादा प्रतिधातवे** पादौ प्रक्षेप्तुम् **अकः** मार्गं कृतवान् । पूर्वत्र रथस्य मार्गः, अत्र पादयोरिति विशेषः । यद्वा । अपदे यूपे बद्धेन मया गन्तुमशक्ये भूप्रदेशे पादौ प्रक्षेप्तुम् उपायं बन्धविमोचनरूपं करोत्विन्यर्थः । **उत** अपि **च** **हृदयाविधश्चित्** अस्मदीयवेधकस्य शत्रोरपि **अपवक्ता** अपवदिता निराकर्ता भवतु ।

चकार । लित्स्वरेण आकार उदात्तः । 'हि च' इति निघातप्रतिषेधः । पन्थाम् । 'पथिमथ्यृभुक्षामात्' (पा.सू.७-१-८५) इति द्वितीयायामपि व्यत्ययेन आत्वम् । पथिन्शब्दस्य 'पतेस्थ च' (उ.सू.४-४-५२) इति प्रत्ययान्तत्वेन अन्तोदात्तत्वे प्राप्ते 'पथिमथोः सर्वनामस्थाने' (पा.सू.६-१-१९९) इत्याद्युदात्तत्वम् । अन्वेतवै । अनुपूर्वात् एतेः 'तुमर्थे सेसेन्' इति तवैप्रत्ययः । 'तवै चान्तश्च युगपत्' (पा.सू.६-२-५१) इति आद्यन्तयोरुदात्तत्वम् । पादा । 'सुपां सुलक्' इति आकारः । प्रतिधातवे । दधातेः 'तुमर्थ' इति सूत्रेणैव तवेन्प्रत्ययः । 'तादौ च निति' (पा.सू.६-२-५०) इति गतेः प्रकृतिस्वरत्वम् । अकः । करोतेः 'छन्दसि लुङ्लङ्लिटः' इति लोडर्थे लुङ् । तस्य तिप् । 'मन्त्रे घस' (पा.सू.२-४-८०) इत्यादिना च्लेर्लुक् । गुणो रपरत्वम् । 'हल्ङ्याभ्यः' (पा.सू.६-१-६०) इति तिपो लोपः । अडागमः । हृदयाविधः । 'हृञ् हरणे' । 'वृह्रोः पुग्दुकौ च (उ.सू.४-५४०) इति कयन् । 'व्यध ताडने' । क्विप् । 'नहिवृति' (पा.सू.६-३-११६) इत्यादिना पूर्वपदस्य दीर्घत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ८ ॥

**सिद्धाञ्जनम्–** यद्यप्येक एव ऋतज्योतिरात्मा सौरः पुरुषो भगवानादित्य इति प्रसिद्धः, तथाऽपि तस्य गुणविशेषाविष्कारकविभवबहुलः सूर्यमित्रवरुणभगादिमूर्तिभेदः कार्यभेदायत्तो ग्राह्यः । एवं वरुणः सूर्यायाध्वानं करोतीत्यादावुपपत्तिर्लक्ष्या । **हि** प्रसिद्धौ । **राजा** प्रभुः **वरुणः** सर्व वृत्वा स्थितो देवः **सूर्याय** सर्वप्रेरकाय सवित्रे **अन्वेतवै उ** अनुक्रमेण गन्तुमेव **उरुं** विततं **पन्थां** पन्थानम् (छान्दसम्) **चकार** करोति(लटो लिट्)। **अपदे** पदरहिते, दुष्प्रवेशे स्थाने इत्यर्थः **पादा** पादौ **प्रतिधातवे** निधातुं **अकः** करोति मार्गमिति शेषः । (अन्वेतवै, प्रतिधातवे, इत्यत्र तुमन्नर्थे तवै-तवेन् प्रत्ययौ । अकः– छन्दसि लडर्थे लङ्, अन्यत्सर्वं छान्दसम्) **उत** अपि च **हृदयविधश्चित्** हृदयं विध्यतीति हृदयवित् तस्यापि **अपवक्ता** अपवदिता स वरुणः । इदमुक्तं भवति । मनुष्यस्यान्तरात्मनिवासस्थानं हृदयम्, तदपि येन पाप्मना तेजःप्रतिबन्धकेन तमोबलेन शत्रुणा विद्धं भवति, तस्यापि चिन्मयसूर्यरश्मिप्रसारनिरोधकस्य तेजःशत्रोर्निराकरणं करोति परमपावनः पूतदक्षत्वादिविशिष्टो वरुणः । न केवलं विश्वप्रेरकस्य सूर्यस्य तामसे मानुषदेशे प्रवेशाय यथाक्रमं गतिं साधयति बृहतो मार्गस्य करणेनेति सङ्क्षेपः ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।**
**बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ।। ९ ।।**
शतम् । ते । राजन् । भिषजः । सहस्रम् । उर्वी । गभीरा । सुऽमतिः । ते । अस्तु । बाधस्व । दूरे । निःऽऋतिम् । पराचैः । कृतम् । चित् । एनः । प्र । मुमुग्धि । अस्मत् ।। ९ ।।

## ऋग्भाष्यम्

**जगद्रक्षासाधनान्यप्यनन्तान्यनन्तधा सन्ति पुनस्तवेश ।**
**अगाधरूपा महती शुभा च मतिर्मम त्वद्विषये सदाऽस्तु । ऋतं ज्ञानं**
**प्रतिरूपत्वहेतोर्निर्ऋत्याख्यां दुर्मतिं दूर एव ।**
**बाधस्व दुर्ज्ञानिजनं निरस्य स्वर्गात्पराकृत्य च शश्वदेव ।**
**कृतं च पापं प्रमुमुग्धि मत्तः.................................।। ९ ।।**

**ऋग्भाष्यटीका–** **शतं ते** । जगद्रक्षा । हे **राजन्!** ईश । **ते** तव । **शतं** अनन्तानि **सहस्रं** पुनरपि प्रत्येकमनन्तधाभूतानि । **भिषजो** रक्षकत्वगुणयोगाज्जगद्रक्षासाधनानि सन्ति । अतो मम **उर्वी** महती । **गभीरा** अगाधरूपा । **सुमतिः** शुभामतिस्ते तव त्वद्विषयेति यावत् । सदा **अस्तु** । किञ्च । **निर्ऋतिम्** ऋगतौ । निर्निषेधे । ऋतिर्ऋतं ज्ञानं तत्प्रतिरूपत्वहेतोर्निर्ऋत्याख्यां दुर्मतिं दूर एव **बाधस्व** । 'बाधृ लोडने' । कथम् । **पराचैः** पराकृत्य दुर्ज्ञानिजनं स्वर्गादिस्थानाच्छश्वदेव निरस्य नरके क्षिप्त्वा चेत्यर्थः । किञ्च । **कृतं** मयेति शेषः । **एनश्चित्** पापं च **अस्मत्** मत्तः । **प्रमुमुग्धि** प्रमोचय ।। ९ ।।

**मन्त्रार्थमञ्जरी–** (हे) **राजन्,** ईश । ते, तव । शतम्, अनन्तानि । सहस्रम् ।, पुनः प्रत्येकमनन्तधाभूतानि । भिषजः, रक्षकत्वगुणयोगाज्जगद्रक्षासाधनानि । (सन्ति) अतो मम उर्वी, महती । गभीरा, अगाधरूपा । सुमतिः, शोभनमतिः । ते, त्वद्विषय इति यावत् । सदा अस्तु किं च, निर्ऋतिम्, 'ऋ गतौ' निर्निषेधे, निर्गता ऋतिर्ज्ञानं यस्मादिति ज्ञानप्रतिरूपत्वहेतोर्निर्ऋत्याख्यां दुर्मतिम् । दूरे (एव) पराचैः, पराकृत्य, दुर्ज्ञानिजनं नरके क्षिप्त्वेति यावत् । बाधस्व, 'बाधृ(वि)लोडने' विलोडय । किं च, मया कृतम् । एनः चित्, पापं च । अस्मत्, मत्तः । प्र मुमुग्धि, मोचय, व्यत्ययेन श्लुविकरणम्, लोट् अन्तर्णीतणिच्च ।।९।।

**स्कन्द– शतम् ते** तव हे राजन्! वरुण! **भिषजः** भिषग् वैद्य उच्यते । आर्तानां जीवनोपायैः सम्बन्धो भिषक्शब्देनोपलक्ष्यते । अस्मदादीनाम् आर्तानां जीवनोपाया इत्यर्थः । न शतमेव केवलम् । किं तर्हि । **सहस्रम्** च । अत्यन्तबहव इत्यर्थः । अतो ब्रवीमि **उर्वी** विस्तीर्णा **गभीरा** अन्यैर्दुरवगाहा **सुमतिः** शोभनानुग्रहात्मिका बुद्धिः **ते** तव अस्मासु **अस्तु** । अनुग्राहकोऽस्माकं भवेत्यर्थः । **बाधस्व दूरे** दूरं गमयेत्यर्थः । किम् । **निर्ऋतिम्** मृत्युदेवताम् । **पराचैः** परागमनैः । पराङ्मुखम् इत्यर्थः । किञ्च **कृतम्** अप्यस्माभिः **एनः प्र मुमुग्धि** प्रपूर्वो मुञ्चतिरपनये । अपनय । **अस्मत्** अस्मतः ।। ९ ।।

**वेङ्कटमाधव– शतम् ते** राजन्! भैषज्यानि **सहस्रम् च** । विस्तीर्णा गम्भीरा मद्विषया **सुमतिः तव अस्तु** । स त्वम् अस्मत्तः कृच्छ्रम् **दूरे** पराङ्मुखम् **बाधस्व** । **कृतम्** च पापं प्रमोचयेति ।। ९ ।।

**मुद्गल– हे राजन्!** वरुण! **ते** तव **शतम् सहस्रम् भिषजः** बन्धनिवारकाणि शतसहस्र-सङ्ख्याकानि औषधानि वैद्या वा सन्ति । **ते** तव **सुमतिः** अस्मदनुग्रहबुद्धिः **उर्वी** विस्तीर्णा **गभीरा** गाम्भीर्योपिता स्थिरा **अस्तु** । निर्ऋतिम् अस्मदनिष्टकारिणी पापदेवताम् **पराचैः** । पराङ्मुखां कृत्वा **दूरे** अस्मत्तो व्यवहिते देशे स्थापयित्वा ताम् **बाधस्व** । **कृतम् चित्** अस्माभिरनुष्ठितमपि **एनः** पापम् **अस्मत् प्र मुमुग्धि** प्रकर्षेण मुक्तं नष्टं कुरु ।। ९ ।।

**सायण–** हे **राजन्!** वरुण! **ते** तव **शतं भिषजः** बन्धनिवारकाणि शतसंख्याकानि औषधानि वैद्या वा सन्ति । **ते** तव **सुमतिः** अस्मदनुग्रहबुद्धिः **उर्वी** विस्तीर्णा **गभीरा** गाम्भीर्योपेता स्थिरा **अस्तु** । **निर्ऋतिम्** अस्मदनिष्टकारिर्णीं निर्ऋतिं पापदेवतां **पराचैः** पराङ्मुखां कृत्वा **दूरे** अस्मत्तो व्यवहिते देशे स्थापयित्वा तां **बाधस्व** । **कृतं चित्** अस्माभिरनुष्ठितमपि **एनः** पापम् **अस्मत् प्र मुमुग्धि** प्रकर्षेण मुक्तं नष्टं कुरु ।

सुमतिः । 'तादौ च' इति पूर्वपदप्रकृतिस्वत्वे प्राप्ते 'मन्क्तिन्' इत्यादिनोत्तरपदान्तोदात्तत्वम् । संहितायां विसर्जनीयसकारस्य 'युष्मत्ततक्षुःष्वन्तःपादम्' (पा.सू.८-३-१०३) इति षत्वम् । बाधस्व । 'बाधृ विलोडने' । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । नितिम् । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । मुमुग्धि । 'मुच्लृ

मोक्षणे' । 'बहुलं छन्दसि' इति श्लुः । 'हुझल्भ्यो हेर्धिः' (पा.सू.६-४-१०१)। तस्य अपित्त्वेन ङित्त्वाद्गुणाभावः । 'चोः कुः' (पा.सू.८-२-३०) इति कुत्वम् ।। ९ ।।

**सिद्धाञ्जनम्**– हे **राजन्!** स्वामिन् वरुण भगवन्, **ते** तव **भिषजः** वैद्याः (तैः आर्तानामार्तिनिवारणोपाया वरुणदेववशंवदा लक्षिताः) **शतं** बहवो भवन्ति, **सहस्रं** सन्ति, अत्यन्तं बहव इत्यर्थः । तस्मादस्मद्विषये **ते** तव **सुमतिः** शोभना अनुग्रहबुद्धिः **उर्वी** विस्तीर्णा **गभीरा** गम्भीरा च **अस्तु** भवतु । **निर्ऋतिं** पापदेवतां मृत्युदेवतां वा **पराचैः** परागमनैः पराङ्मुखां कृत्वेत्यर्थः, **दूरे बाधस्व** दूरीकृत्य अपनय । **कृतं** अस्माभिः कृतं एनःचित् पापमपि **अस्मत्** अस्मत्तः **प्रमुमुग्धि** प्रकर्षेण मुक्तं कुरु ।

मुमुग्धि– 'मुच्छृ मोक्षणे', बहुलं छन्दसीति श्लुः, हेधिः, छान्दसमन्यच्च । निर्ऋतिः समष्टिगता जगद्व्यापारवर्तिनी मृत्युदेवता सर्वपापमूलभूता, एनस्तु बुद्धिपूर्वकं अविदितं वा कृतं सत्यधर्मविरुद्धं कायिकं मानसिकं वाचिकं वा कर्म । उभयापनोदनं वरुणानुग्रहसाध्यम् । स हि सर्वथा पारिशुद्ध्यं विधातुं प्रभुः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः । अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ।। १०,१४ ।।**

अमीइति । ये । ऋक्षाः । निऽहितासः । उच्चा । नक्तम् । ददृश्रे । कुह । चित् । दिवा । ईयुः ।। अदब्धानि । वरुणस्य । व्रतानि । विऽचाकशत् । चन्द्रमाः । नक्तम् । एति ।। १०,१४ ।।

## ऋग्भाष्यम्

**........................ऋक्षाण्यमी निहितानि त्वयोच्चैः ।**
**दृश्यानि रात्रौ न दिवा त्वयैवेत्यादीनि कर्माण्यनिरोधितानि ।**
**पश्यन्परानंदतनोस्त्वैव चन्द्रो नित्यं दृश्यमानस्त्वयैव ।**
**सम्प्रेरितो याति परे च देवा एवं त्वदाज्ञाकरणाः सदैव ।। १०,१४ ।।**

**ऋग्भाष्यटीका**– अमी ये । ऋक्षाण्यमी । येऽमी ऋक्षाः यान्यमूनि ऋक्षाणि नक्षत्राणि ।

तानि **उच्चा** उच्चैरंतरिक्षे **निहितासो** निहितानि त्वयैवेति शेषः । यच्च तानि **नक्तं** रात्रौ **ददृश्रे** ददृशिरे इरयोरे दृश्यानि । **दिवा कुहचित्** कदाचिदेव **ईयुः** प्रतीयुः प्रतीयन्ते । यच्च दिवा सर्वदा न प्रतीयन्ते कदाचिदेव प्रतीयन्ते तदपि त्वयैव । **वरुणस्य** परानन्दतनोर्विष्णोस्तवैव **व्रतानि** इत्यादीन्युक्तानि कर्माणि **अदब्धानि** अनिरोधितानि अप्रतिहतानि । किञ्च । **चन्द्रमाः** चन्द्रो **विचाकशत्** 'चकाशृ दीप्तौ' दीप्तिश्च दर्शनं पश्यन् समस्तमिति शेषः । **नक्तम्** उपलक्षणमेतत् । नित्यं **एति** याति तच्च त्वयैव । वरुणस्यादब्धानि व्रतानि विचाकशदित्येक-वाक्यतया वा योज्यम् । विचाकशदित्यस्यार्थान्तरं **दृश्यमान इति** ।। चन्द्रमा नक्तं विचाकशत् दीप्यमानो दृश्यमान एति तदपि त्वयैवेति योजनान्तरं सूचयति । **सम्प्रेरित इति** ।। यो विचाकशत् चन्द्रमाः स त्वयैव सम्प्रेरितो नक्तमेति । उपलक्षणमेतदित्यभिप्रायेणाह । **परे चेति** ।। त्वदाज्ञायाः करणाः । कृत्यल्युटो बहुलमिति कर्तरि ल्युट् । व्यधिकरणो वा बहुव्रीहिः ।। १०,१४ ।।

**मन्त्रार्थमञ्जरी–** (हे वरुण) ये अमी ऋक्षाः, यान्यमूनृक्षाणि, नक्षत्राणि । (तानि) उच्चा, उच्चैः, अन्तरिक्षे । निहितासः, निहितानि । (त्वयैव) इति शेषः । यच्च (तानि) नक्तम्, रात्रौ । ददृश्रे, ददृशिरे, 'इरयो रे' दृश्यानि । दिवा । कुह चित्, कदाचिदेव ईयुः, प्रतीयुः प्रतीयन्ते । रात्रौ सदा प्रतीयन्ते, दिवा तु कदाचिदेव इति । एतदपि (त्वयैव) इति भावः । वरुणस्य, परानन्दतनोर्विष्णोस्तवैव । व्रतानि, नक्षत्रस्थापनाद्युक्तकर्माणि । अदब्धानि, अप्रतिहतानि । किं च, चन्द्रमाः, चन्द्रः । विचाकशत्, 'चकाशृ(सृ)दीप्तौ' (काशृ दीप्तौ) दीप्तिश्च दर्शनम् ।, समस्तं पश्यन्निति वा, वरुणस्य अदब्धानि व्रतानि पश्यन्निति वा, विचाकशत् दीप्यमानः सन्निति वा । नक्तम् । एति, याति । तदपि (त्वयैव) इति । उपलक्षणम् चन्द्रादयः सर्वेऽपि त्वदाज्ञया त्वत्प्रेरिताः सन्त एव स्वस्वव्यापारान्कुर्वन्तीति ।। १० ।।

**स्कन्द– अमी ये ऋक्षाः** ऋक्ष इति नक्षत्रनाम (तु.या.३-२०) । अमूनि यानि नक्षत्राणि **निहितासः** निहितानि **उच्चा** उच्चैर्द्युलोके **नक्तम्** रात्रौ **ददृश्रे** दृश्यन्ते । **कुह चित्** कुहशब्दः केत्यस्य पर्यायः । चिच्छब्दोऽप्यर्थे । क्वापि । **दिवा** अहनि **ईयुः** गच्छन्ति । दिवा ह्येतानि न दृश्यन्ते । अतो न जानीमः । क्वापि गच्छन्तीति । अथवा कुह चिद् दिवेत्येते समानाधि-करणे । ईयुरित्यपि शुद्धोऽप्येतिः सामर्थ्यादाङ्पूर्वार्थे । क्वचिदहन्यागच्छन्ति । क्वचिदेवाहनि दृश्यन्ते, न सर्वत्रेत्यर्थः । यत्रैव ह्यहनि समस्तं राहुणा ग्रस्यते तत्रैव नक्षत्राणि दृश्यन्ते नान्यत्र ।

यान्यमूनीत्युद्देशात् प्रतिनिर्देशार्थ एतच्छब्दोऽत्राध्याहर्तव्यः । एतानि **अदब्धानि** अहिंसितानि **वरुणस्य व्रतानि** कर्माणि । वरुण एव तान्येतानि करोतीत्यर्थः । कथम् । वरुणो हि दिवा स्वभासा नक्षत्राणां भासः छादयति न रात्रौ, ततो रात्रौ दृश्यन्ते न दिवा । न चैतान्येव केवलानि । किं तर्हि । योऽप्ययम् **विचाकशत्** काशृ दीप्तौ । विविधं दीप्यमानः **चन्द्रमाः नक्तम् एति** एषोऽपि वरुणस्यैव कर्म । एतमपि वरुण एव एवं करोतीत्यर्थः । तदीयो ह्येको रश्मिः सुषुम्णाख्यश्चन्द्रमसं प्रति दीप्यते । तेनायं विचाकशत् चन्द्रमा नक्तमेति । अथवा 'अमी ये ऋक्षाः' इति यच्छब्दो यदुवचनान्तो व्यत्ययेन पुंल्लिङ्गश्च । तथा दर्शनादिभिः क्रियाभिः सम्बध्यते न ऋक्षैः । कुत एतत् । यच्छब्दस्योद्देशार्थत्वादुद्दिष्टस्य चावश्यं प्रतिनिर्दिष्टत्वात्तेषाश्चा-प्रतिनिर्देशात् प्रतिनिर्देशकल्पनायामपि चैषामेकवाक्यत्वप्रत्ययसम्भवात्, 'अदब्धानि वरुणस्य व्रतानि' इति च कर्मणामुपादानात् क्रियोद्देशार्थत्वेन बहुवचनं पुंल्लिङ्गता च । एवं योजना– यन्नक्षप्राणि नक्तं दृश्यन्ते, यच्च दिवापि गच्छन्ति, यच्च विचाकशच्चन्द्रमा नक्तमेति, एतानि त्रीण्यपि अदब्धानि वरुणस्य व्रतानीति ॥ १० ॥

**वेङ्कटमाधव–** नक्षत्राणि रात्रौ दृश्यन्ते क्व तानि **दिवा** गच्छन्ति । तथा दीप्यमानः चन्द्रः रात्रौ गच्छति । भवति च दिवा तिरोहितः । तानीमानि शत्रुभिरहिंसितानि **वरुणस्य व्रतानि** इति ॥ १० ॥

**मुद्गल– अमी** रात्रावस्माभिर्दृश्यमानाः **ऋक्षाः** सप्त ऋषयः **उच्चा** उच्चैरुपरिप्रदेशे **निहितासः** स्थापिताः **ये** सन्ति ते ऋक्षा **नक्तम्** रात्रौ **ददृश्रे** सर्वैरपि दृश्यन्ते । **दिवा** अहनि **कुह चित्** ईयुः क्वापि गच्छेयुः । न दृश्यन्त इत्यर्थः । **वरुणस्य** राज्ञः **व्रतानि** कर्माणि नक्षत्रदर्शनादिरूपाणि **अदब्धानि** केनाप्यहिंसितानि । किञ्च वरुणस्याज्ञयैव **चन्द्रमाः नक्तम्** रात्रौ **विचाकशत्** विशेषेण दीप्यमानः **एती** गच्छति ॥ १० ॥

**सायण– अमी** रात्रावस्माभिर्दृश्यमानाः **ऋक्षाः** सप्त ऋषयः । तथा च वाजसनेयिन आमनन्ति 'ऋक्षा इति ह स्म वै पुरा सप्त ऋषीनाचक्षते' इति । यद्वा । ऋक्षाः सर्वेऽपि नक्षत्रविशेषाः । 'ऋक्षाः स्तुभिरिति नक्षत्राणाम्' (निरु.३-२०) इति यास्केन उक्तत्वात् । **उच्चा** उच्चैः उपरि द्युप्रदेशे **निहितासः** स्थापिताः **ये** सन्ति ते ऋक्षाः **नक्तं** रात्री ददृश्रे सर्वैरपि दृश्यन्ते ।

**दिवा** अहनि **कुहचित् ईयुः** क्वापि गच्छेयुः । न दृश्यन्ते इत्यर्थः । **वरुणस्य** राज्ञः **व्रतानि** कर्माणि नक्षत्रदर्शनादिरूपाणि **अदब्धानि** केनापि अहिंसितानि । किंच वरुणस्य आज्ञयैव **चन्द्रमाः नक्तं** रात्रौ **विचाकशत्** विशेषेण दीप्यमानः **एति** गच्छति ।

निहितासः । 'आज्जसेरसुक्' । थाथादिस्वरेणोत्तरपदान्तोदात्तत्वे प्राप्ते (पा.सू.६-२-१४४) 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । ददृश्रे । दृशेर्लिटि 'इरयो रे' (पा.सू.६-४-७६) इति रेआदेशः । व्यत्ययेनाद्युदात्तत्वम् । यद्वृत्तयोगादनिघातः । कुह । 'वा ह च रछन्दसि' (पा.सू.५-३-१३) इति किंशब्दादुत्तरस्य त्रलो हादेशः । 'कु तिहोः' (पा.सू.७-२-१०४) इति किंशब्दस्य कुआदेशः । स्थानिवद्भावात् लित्स्वरेणाद्युदात्तत्वम् । विचाकशत् । कशेर्दीप्त्यर्थात् यङ्लुगन्तात् शतृप्रत्ययः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । समासे कृत्स्वरः । यद्वा । काशतेर्वा व्यत्ययेन उपधाह्रस्वत्वम् । चन्द्रमाः । 'चन्द्रे माङो डित्' (उ.सू.४-६६७) इति असिप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ।।१०,१४।।

**सिद्धाञ्जनम्–** यद्यप्यध्यात्मं देवानां कर्माण्येव ऋषेः प्राधान्येन लक्ष्याणि भवन्ति, तथाऽपि जगद्व्यापारे देवानामधिकारोऽविचाल्यः, यमन्तरेण ब्रह्माण्डस्थितेरसम्भवः स्यादिति मन्त्रदृशा-माशयः । अस्यामृचि सत्यधर्माध्यक्षो भगवान् वरुणः न केवलं नः पावनत्वविधाता, किंतु ऋतानुरोधेन विश्वधारकाणि कर्माणि निवहतीति स्तौति स्तुत्यं देवमृषिः । **ये अमी** प्रत्यक्षं दृश्यमानाः **ऋक्षाः** नक्षत्राणि **उच्चा** निहितासः उच्चैः निहिताः ऊर्ध्वं स्थापिता **नक्तं** रात्रौ **ददृश्रे** दृश्यन्ते (दृशेर्लिटि रे आदेशः, कर्मणि लडर्थे) ते **कुहचित्** कुत्र वा **दिवा** दिनवेलायां **ईयुः** गच्छन्ति (लटो लिट्) **वरुणस्य व्रतानि** कर्माणि **अदब्धानि** अबाधितानि अप्रतिहतान्य-व्यभिचारीणीत्यर्थः । अत एव **चन्द्रमाः** चन्द्रः **विचाकशत्** विशेषेण प्रकाशमानः सन् **नक्तं** रात्रौ **एति** गच्छति प्रयातीत्यर्थः । वरुणस्याध्यक्ष्यात् विश्वस्मिन् जगति दिने सूर्यप्रकाशे नक्षत्राणामदर्शनं, रात्रौ चन्द्रस्य प्रकाशः, उच्चा स्थितिर्नक्षत्राणामित्यादि सम्भवति । अतो नियतिकृतनियमाः सर्वेऽपि वरुणमूर्तेरादित्यस्य ऋतज्योतिषो विलासाः ।। १०,१४ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये चतुर्दशो वर्गः ।।

## ।। अथ पञ्चदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**तत्त्वा॑यामि॒ ब्रह्म॑णा॒ वन्द॑मान॒स्तदा शा॑स्ते॒ यज॑मानो ह॒विर्भिः॑ ।। अहे॑ळमानो वरुणे॒ह बो॒ध्युरु॑शंस॒ मा न॒ आयुः॒ प्र मो॑षीः ।। ११ ।।**

तत् । त्वा॒ । या॒मि॒ । ब्रह्म॑णा । वन्द॑मानः । तत् । आ । शा॒स्ते॒ । यज॑मानः । ह॒विःऽभिः॑ ।। अहे॑ळमानः । व॒रु॒ण॒ । इ॒ह । बो॒धि॒ । उरु॑ऽशंस । मा । नः॒ । आयुः॑ । प्र । मो॒षीः॒ ।। ११ ।।

## ऋग्भाष्यम्

**एवंगुणो यत्त्वमतो व्रजामि सदा शरण्यं शरणं वेदवाचा ।**
**नमन्नन्यो यजमानो हविर्भिस्तदाशास्ते त्वद्गतिं देवदेव ।**
**अनिन्दन्नस्मान्नरमात्रबुद्ध्या सम्बोधयोच्चैः स्तुतमास्मदायुः ।**
**छेत्सीः..........................................।। ११ ।।**

**ऋग्भाष्यटीका–** **तत्त्वायामि** । तदिति परामर्शस्य विषयं दर्शयन्व्याख्याति । **एवं गुण इति** ।। यद्यस्मात्त्वमेवं गुणस्तदतः । शरण्यं **त्वा** त्वां **यामि** सदा शरणं व्रजामि । कथम् । **ब्रह्मणा** वेदवाचा । **वन्दमानो** नमन्स्तुवन्नभिवादयंश्चेत्यर्थः । किञ्च । **यजमानः** उपलक्षणमेतत् । मत्तोऽन्यो विद्वान् । **हविभिः** हविःप्रदानादिभिः । **तदेव आशास्ते** वाञ्छति । किं तत् । यामीत्युक्तधात्वर्थपरामर्शोऽयमित्याह । **त्वदिति** ।। त्वद्गतिं त्वच्छरणप्राप्तिम् । हे वरुण! देवदेव इह अस्मासु । **अहेळमानो**ऽवज्ञामकुर्वन् । नरमात्रमिति बुद्ध्यास्मांछरणं प्राप्ताननिन्दन्निति यावत् । **बोधि** सम्बोधय । हे शुनःशेप! श्रान्तोऽसीति । हे **उरुशंस!** उरुभिः पुरुषैः शंस्यत इति उच्चैः स्तुत । **न आयुः** अस्मदायुः । **मा प्रमोषीः** मा छेत्सीः न छिन्द्याः ।। ११ ।।

**मन्त्रार्थमञ्जरी–** (हे) वरुण (यस्मात्त्वमेवङ्गुणः) तत्, तस्मात् । त्वा, त्वाम् । ब्रह्मणा, वेदवाचा । वन्दमानः, नमन्स्तुवँश्च । यामि (शरणम्) इति शेषः ।। किं च, यजमानः उपलक्षण-मेतत्– मदन्यो विद्वान् । हविर्भिः हविःप्रदानादिभिः । तत् (एव) आशास्ते, त्वच्छरणगमनमेव वाञ्छति । (हे) (वरुण) इह, अस्मासु । अहेळमानः, अवज्ञामकुर्वन् । (त्वम्) 'नरमात्रम्'

इत्यस्माच्छरणं प्राप्तानिन्दन्निति यावत् । बोधि, सम्बोधय, बुध्यतेः लुङ्, 'दीपजन' इति चिण्, 'चिणो लुक्' इति तलोपः, अडभावः, 'हे शुनःशेप! श्रान्तोऽसि' इत्येवमादिवचनं कुरु । (हे) उरुशंस, उरुभिः पुरुषैः शंस्यत इत्युच्चैः स्तुत । नः आयुः, अस्मदायुः । मा प्र मोषीः, न च्छिन्धाः ।। ११ ।।

**स्कन्द– तत् त्वा यामि** याश्चाकर्माऽयम् । याचे । **ब्रह्मणा** अनेन ऋग्लक्षणेन **वन्दमानः** स्तुवन् । किं पुनस्तत् । सामर्थ्यादायुः । **तत् आ शास्ते** प्रार्थयते अयं जलोदरगृहीतो हरिश्चन्द्राख्यो **यजमानः हविर्भिः** अन्नैः । एतज्ज्ञात्वा **अहेळमानः** अक्रुध्यन् हे **वरुण! इह** कर्मणि अवस्थायां वा वर्तमानयोरावयोः **बोधि** बुध्यस्व । शृणु याश्चामित्यर्थः । श्रुत्वा च हे **उरुशंस** । 'उरु' (निघ.३,१) इति बहुनाम । शंसा स्तुतिः । बहुस्तुत! **मा नः** 'अस्मदो द्वयोश्च' (पा.१-२-५९) इत्येवमेतद् बहुवचनम् । आवयोः **आयुः** जीवितम् **प्र मोषीः** । जीवय आवामित्यर्थः ।। ११ ।।

**वेङ्कटमाधव– तत्** त्वाम् अहम् याचामि स्तोत्रेण **वन्दमानः** । **तत्** एव । **च आ शास्ते** अयं च हरिश्चन्द्रः **यजमानः हविर्भिः** । तत् त्वम् अकुध्यन् **वरुण! इह** बुध्यस्व । तदाह– बहुस्तोत्र! **मा** अस्माकम् **आयुः प्र मोषीः** इति ।। ११ ।।

**मुद्गल–** हे **वरुण!** मुमूर्षुः अहम् **त्वा** त्वाम् प्रति तत् आयुः **यामि** याचे । **ब्रह्मणा वन्दमानः** वेदस्तुत्या मानयन् सर्वत्र **यजमानः** अपि **हविर्भिः तत्** आयुः **आ शास्ते** प्रार्थयते । त्वं **च इह** कर्मणि **अहेळमानः** अनादमकुर्वन् तत् **बोधि** अस्मदपेक्षितं बुध्यस्व । हे **उरुशंस** । बहुभिः स्तुत्य! **नः** अस्मदीयम् **आयुः मा प्र मोषीः** प्रमुषितं मा कुरु ।। ११ ।।

**सायण–** एकादशिनस्य वारुणस्य पशोर्वपापुरोडाशयोः 'तत्त्वा यामि' इति द्वे ऋचौ याज्ये । सूत्रितं च– 'तत्त्वा यामि ब्रह्मणा वन्दमान इति द्वे अस्तभ्नाद्द्याम्' (आश्व.श्रौ.३-७) इति । वरुणप्रघासेषु वारुणस्य हविषो याज्या 'तत्त्वा यामि' इत्येषा 'पञ्चम्यां पौर्णमास्याम्' इत्यत्र सूत्रितम्– 'इमं मे वरुण श्रुधि तत्त्वा यामि ब्रह्मणा वन्दमानः'(आश्व.श्रौ.२.१७) इति ।

हे **वरुण!** मुमूर्षुरहं त्वां प्रति तत् आयुः **यामि** याचे । कीदृशः । **ब्रह्मणा** प्रौढेन स्तोत्रेण **वन्दमानः** स्तुवन् । सर्वत्र **यजमानः** अपि **हविर्भिः** एतत् आयुः **आ शास्ते** प्रार्थयते ।

त्वं च ह कर्मणि **अहेळमानः** अनादरमकुर्वन् **बोधि** अस्मदपेक्षितं बुध्यस्व । हे **उरुशंस** बहुभिः स्तुत्य **न** अस्मदीयम् **आयुः मा प्र मोषीः** प्रमुषितं मा कुरु ।

सप्तदशसंख्याकेषु याञ्चाकर्मसु 'ईमहे यामि' (नि.३-१९-१) इति पठितम् । चाशब्दलोप छान्दसः । अहेळमानः । 'हेड्ट अनादरे' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे शपश्च पित्वा-दनुदात्तत्वे सति धातुस्वरः शिष्यते । ततो नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । बोधि । 'बुध अवगमने' । लोटः सेर्हिः । 'बहलं छन्दसि' इति विकरणस्य लुक् । 'वा छन्दसि' (पा.सू. ३-५-८) इति अपित्त्वाभावेन ङित्वाभावात् लघुपधगुणः । 'हझल्भ्यो हेर्धिः' इति हेर्धिरादेशः । धातोरन्त्यलोपश्छान्दसः । मोषीः । 'मुष स्तेये' । लोडर्थे छान्दसो लुङ् । 'वदव्रज' (पा.सू.७-२-३) इति प्राप्ताया वृद्धेः 'नेटि' (पा.सू.७-२-४) इति प्रतिषेधे सति लघूपधगुणः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः ।। ११ ।।

**सिद्धाञ्जनम्–** हे **उरुशंस** बृहत्स्तोत्र, (उरुः विस्तृतिवाचकः, शंसः स्तोत्रवाची) **वरुण, त्वा** त्वाम् **ब्रह्मणा** मन्त्रेण **वन्दमानः** स्तुवन् **तत्** तच्छब्दवाच्यं परं **यामि** याचे, (यामि याञ्चाकर्मा इति स्कन्दस्वामी)। **तत्** तदेव परं पदं **यजमानः** अन्तर्याजी **हविर्भिः** हव्यैरर्पणीय-द्रव्यैः, **आशास्ते** प्रार्थयते । इह अस्मदीये कर्मणि **अहेळमानः** त्वमस्मासु अनादरमकुर्वन् (हेड़ृ अनादरे) आदरं कुर्वन्नित्यर्थः । **बोधि** बुध्यस्व अस्मदर्थनामिति शेषः (बुध अवगमने, लोटः सेर्हिः, अन्यदपि छान्दसम्) **नः** अस्माकं **आयुः** जीवितकालपरिमाणं **मा प्र मोषीः** प्रमुषितं मा कृथाः, युक्तस्य आयुषः ह्रासो मा भूदित्यर्थः (मुष स्तेये, लोडर्थे लुङ्)। इदमवधेयम् । प्राणापहार एव आयुषः प्रमोषः पावनं देवार्थ आयुः न मुषितं, किन्तु सुरक्षितं पूर्णमेव भवति । अत्र 'तत्' आयुरिति व्याख्यातारः पूर्वे । 'तदिन्नक्तं' इत्यादि वक्ष्यते । तदपेक्षया परं पदमिति उपपन्नतरम् ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आ वि चष्टे । शुनःशेपो यमह्वद्गृभीतः सो अस्मान्राजा वरुणो मुमोक्तु ।। १२ ।।**

तत् । इत् । नक्तम् । तत् । दिवा । मह्यम् । आहुः । तत् । अयम् । केतः । हृदः । आ । वि । चष्टे । शुनःशेपः । यम् । अह्वत् । गृभीतः । सः । अस्मान् । राजा । वरुणः । मुमोक्तु ।।१२।।

## ऋग्भाष्यम्

**............नक्तं दिवसे चैतदेव ।**
**स्तोत्रं त्वदीयं प्राहुरार्याः सुकार्यम् ।**
**मह्यं केतो ज्ञानरूपो हृदिस्थो नारायणो वक्त्ययं तेऽन्यरूपम् ।**
**पश्यत्यपीशो यं समह्वद्गृहीतः स नोऽदेवो मोचयत्त्वग्र्यदुःखात् ॥ १२ ॥**

**ऋग्भाष्यटीका– तदित्** । नक्तं दिवसे च । **नक्तं** रात्रौ । **मह्यं तदित्** तदेव । एतदेव ब्रह्मणा वन्दमान इति प्रकृतं त्वदीयं स्तोत्रं प्राहुराचार्याः । सुकार्यमिति शेषः । **दिवा** दिवसे च । तदेव कार्यं **आहुः** । किञ्च । **हृदो** हृदिस्थः । अणि वृद्ध्यभावश्छान्दसः । प्रत्ययान्तरं वा ल्यब्लोपनिमित्ता पञ्चमी वा । हृदधिष्ठायेति तस्य तात्पर्यार्थो हृदिस्थः । **केतः** ज्ञानरूपः । तेऽन्यरूपमयं नारायणः । तदेव कार्यं **आ विचष्टे** सम्यग्वक्ति । पश्यत्यपि उभयत्रापि प्रयोगात् । एवं स्तुवन् **गृभीतो** गृहीतः । शुनःशेपो **यं अह्वत्** समाह्वयत् समाह्वयति । **स राजा** ईशो **वरुणो** देवो नोऽ**स्मान् मुमोक्तु** मोचयतु । अग्र्यदुःखात्सांप्रतमुपस्थितात् संसारदुःखाद्वेति शेषः ॥ १२ ॥

**मन्त्रार्थमञ्जरी–** (हे वरुण) नक्तम्, रात्रौ । मह्यम् । तत् इत्, तदेव, 'ब्रह्मणा वन्दमानस्' इति प्रकृतं त्वदीयस्तोत्रमेव । (कार्यम्) इति शेषः । आहुः (आचार्याः) इति योज्यम् । दिवा, दिवसे (च) तत् (एव कार्यम्) (आहुः) किं च, हृदः, हार्दः, हृदि स्थित इति यावत्, अणि वृद्ध्यभावश्छान्दसः, अप्रत्ययो वा, ल्यब्लोपनिमित्ता पञ्चमी हृदधिष्ठायेति (वा) हृदिस्थ इति फलितोऽर्थः । केतः, ज्ञानरूपः । अयम्, तव रूपान्तरभूतो नारायणः । तत् (एव कार्यम्) आ वि चष्टे, सम्यग्वक्ति, पश्यत्यपि, चक्षिङः उभयत्रापि प्रयोगात् । एवं स्तुवन् गृभीतः, 'हृग्रहोर्भश्छन्दसि (हस्य)' इति गृहीतः, यूपे बद्धः । शुनः शेपः यम् । अह्वत्, आह्वयति, ह्वयतेः लडर्थे लुङ्, 'लिपि सिचि ह्वश्च' इति च्लेरङ्, आतो लोपः । आह्वानेन प्रसन्नः सः राजा वरुणः (देवः) अस्मान् । मुमोक्तु, मोचयतु, 'सांप्रतमुपस्थितान्मृत्युरूपादग्र्यदुःखाद्वा' इति योज्यम्, 'मुच्लृ मोक्षणे' श्लुविकरणं छान्दसम् ॥ १२ ॥

**स्कन्द– तत् इत् नक्तम्** इच्छब्द एवार्थे । तदेव नक्तम् । **तत्** एव **दिवा** । सततमित्यर्थः ।

**मह्यम् आहुः** कथयन्ति । के । सामर्थ्यात् सुहृदः ऋषयो ब्राह्मणा वा प्राणाधिदेवता वा । **तत् एव अयम् केतः** प्रज्ञानम् । **हृदः** हृदयस्य सम्बन्धो **आ वि चष्टे** आभिमुख्येन कथयति । हृदयेनाप्यहं तदेव जानामीत्यर्थः । किं पुनस्तत् । सामर्थ्याद् वरुणः आर्तानामार्तिहर इत्येतत् । यत एवमतो ब्रवीमि– **शुनःशेपः यम् अह्वत्** अतीतकल्पशुनःशेपापेक्षया वाऽयं प्रथमपुरुष-प्रयोगः । आत्मन एव वा परोक्षरूपेण प्रथमपुरुषेणाभिधानम् । अतीतकल्पे यः शुनःशेपः आसीत् अहमेव वा सः **गृभीतः** गृहीतः । **सः अस्मान् राजा वरुणः मुमोक्तु** अतो यूपात् ॥ १२ ॥

**वेङ्कटमाधव– तत्** एव **नक्तम् तत् दिवा मह्यम्** सर्वे कथयन्ति वरुणस्त्वां मोक्तुमीष्ट इति । **तत्** एव हृदयस्य च प्रज्ञा सह्यम् **वि चष्टे** ममापि तथा बुद्धिर्भवति । यूपे **बद्धः शुनःशेपः यम्** देवम् आहूतवान् **सः राजा वरुणः अस्मान् मुमोक्तु** ॥ १२ ॥

**मुद्गल– तदित्** तदेव वरुणविषयं स्तोत्रम् **नक्तम्** रात्रौ **मह्यम्** शुनःशेपाय **आहुः** कर्तव्यत्वेन अभिज्ञाः कथयन्ति । तथा **दिवा** अपि **तत्** एवाहुः । **हृदः** मदीयमनसो निष्पन्नः **अयम् केतः** प्रज्ञाविशेषोऽपि **तत्** एव कर्तव्यत्वेन **आ वि चष्टे** सर्वतो विशेषेण प्रकाशयति । **गृभीतः** गृहीतो यूपे **बद्धः शुनःशेपः** एतन्नामको जनः यम् वरुणम् **अह्वत्** आहूतवान्, **सः** च **वरुणः राजा अस्मान्** शुनःशेपान् **मुमोक्तु** बन्धनात् मुक्तं करोतु ॥ १२ ॥

**सायण– तदित्** तदेव वरुणविषयं स्तोत्रं **नक्तं** रात्रौ **मह्यं** शुनःशेपाय **आहुः** कर्तव्यत्वेनाभिज्ञाः कथयन्ति । तथा **दिवा** अपि **तत्** एव आहुः । **हृदः** मदीयमनसो निष्पन्नः **अयं केतः** प्रज्ञाविशेषोऽपि **तत्** एव कर्तव्यत्वेन **आ वि चष्टे** सर्वतो विशेषेण प्रकाशयति । **गृभीतः** गृहीतः यूपे बद्धः शुनःशेपः एतनामको जनः **यं** वरुणम् **अह्वत्** आहूतवान् **सः वरुणः राजा अस्मान्** शुनःशेपान् **मुमोक्तु** बन्धात् मुक्तं करोतु ।

मह्यम् । 'ङयि च' इत्याद्युदात्तत्वम् । आहुः । 'ब्रुवः पञ्चानाम्' (पा.सू.३-४-८४) इति ब्रूञो लटि झेः उसादेशः, धातोः आहादेशश्च । हृदः । 'पद्दन् । (पा.सू.६-१-६३) इत्यादिना हृदयशब्दस्य हृदादेशः । 'ऊडिदंपदादि' इति पञ्चम्या उदात्तत्वम् । शुनःशेपः । शुन इव शेपो यस्य इति समासे 'शुनःशेपपुच्छलाङ्गूलेषु संज्ञायां षष्ठ्या अलुग्वक्तव्यः' (पा.सू.६-

३-२१-४) इति अलुक् । पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'उभे वनस्पत्यादिषु' (पा.सू.६-२-१४०) इति पूर्वोत्तरपदयोः युगपत् प्रकृतिस्वरत्वम् । अह्वत् । ह्वेनो लुङि 'लिपिसिचिह्वश्च' (पा.सू.३-१-५३) इति च्लेः अङादेशः । 'आतो लोप इटि च' (पा.सू.६-४-६४) इति आकारलोपः । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । गृभीतः । 'हृग्रहोर्भः' इति भत्वम् । सो अस्मान् । 'प्रकृत्यान्तःपादम्' इति प्रकृतिभावः । मुमोक्तु । 'बहुलं छन्दसि' इति विकरणस्य श्लुः ॥

**सिद्धाञ्जनम्– तदित्** तदेव **नक्तम्** रात्रिः **तत् दिवा** दिनमपि भवति, अहोरात्रं सन्ततं तदेव भवतीत्यर्थः । अथवा सन्ततं तदेव **मह्यं आहुः** ऋषयः कथयन्ति, आचार्यो म उपदिष्टवान् । न केवलमन्यैः कथितेन तृप्तोऽस्मि, ममापि साक्षाद् ज्ञानं तद्विषयकं वर्तत इत्याह । **हृदः** हृदयान्निष्पन्नः **अयं** प्रत्यक्षसिद्धस्य इदमा निर्देशः **केतः** प्रज्ञानविशेषः **तत्** तदेव **आविचष्टे** सर्वतो विशेषेण प्रकाशयति । **गृभीतः** गृहीतः बद्धः बन्धनस्य इति यावत् **शुनःशेपः** आत्मन एव परोक्षरूपेण प्रथमपुरुषेणाभिधानम् **यं अह्वत्** आहूतवान् (ह्वेञो लुङि, च्लेरङादेशः, आकारलोपश्च) **सः** (संहितायां प्रकृत्यान्तःपादमिति प्रकृतिभावः) **राजा वरुणः अस्मान् मुमोक्तु** बन्धात् मुक्तान् करोतु । (बहुलं छन्दसीति विकरणस्य श्लुः) ॥ १२ ॥

## ऋक्संहिता पदपाठसहिता

**शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः । अवैनं राजा वरुणः ससृज्याद्विद्वाँ अदब्धो वि मुमोक्तु पाशान् ॥ १३ ॥**

शुनःशेपः । हि । अह्वत् । गृभीतः । त्रिषु । आदित्यम् । द्रुऽपदेषु । बद्धः । अव । एनम् । राजा । वरुणः । ससृज्यात् । विद्वान् । अदब्धः । वि । मुमोक्तु । पाशान् ॥ १३ ॥

## ऋग्भाष्यम्

**शुनःशेपो ह्यह्वद्गृहीतः स्थानत्रये विक्रयाद्यैः सुबद्धः ।**
**द्रुतं प्राप्तानि द्रुपदानि विक्रयो यूपे बन्धः संज्ञपनोद्यमश्च ।**
**आदित्योऽसावादिसंस्थः परेशो वारीशान्तः संस्थितः स्तूयतेऽत्र ।**
**शुनःशेपो यमित्यादिकेन वारीशोऽपि ह्यृषिणा स्तूयमानः ।**
**गुणास्त्रयो द्रुपदानीति चोक्ता द्रवत्ययं जीवसङ्घो हि यत्र ।**
**करोत्वेनमवसृष्टं सृतेः स प्रसन्नोऽस्मान्कर्मपाशान्मुमोक्तु ॥ १३ ॥**

**ऋग्भाष्यटीका– शुनःशेपोह्यह्वत्** । अत्र प्रथमपादो निगदेनैव व्याख्यात इति दर्शयन् गृभीतपदं व्याख्याति । **शुनःशेप इति** ।। हृग्रहोर्भश्छन्दसि । **त्रिषु द्रुपदेषु बद्ध** इत्येतत् द्वेधा व्याख्याति । स्थानत्रये सुबद्धः विक्रयाद्यैः सुबद्ध इति । स्थानत्रयं यूपस्य द्रोर्वृक्षस्य यूपस्य पदानि स्थानानि तेष्विति प्रथमोऽर्थः स्यात् । द्वितीये तु के विक्रयाद्याः कथं च द्रुपदानीत्यत आह । **द्रुतमिति** ।। संज्ञपनमालम्भः । आदित्यशब्दं विष्णौ योजयति । **आदित्य इति** ।। अव्ययात्त्यबित्यत्र योगविभागादादिशब्दात्त्यप् । पूर्वन्यायेनात्र सूक्ते सर्वत्र वरुणोऽप्युच्यत इति शङ्कां निवारयति । **परेश इति** ।। न तु वारीश इत्यर्थः । किं सर्वथापि नेत्यत आह । **शुनःशेप इति** । यत्र वरुणः सम्भवति तत्र सोऽपि ग्राह्यः । न हि ते क्षत्रमित्यादौ तदसम्भवाद्विष्णु-रेवेत्याशयः । द्रुपदशब्दस्यार्थान्तरमाह । **गुणा इति** ।। यत्र येषु गुणेषु । तृतीयपादतात्पर्यमाह । **करोत्विति** ।। चतुर्थस्यार्थमाह । **प्रसन्न इति** ।। त्रिषु पदेषु यूपस्थानेषु बद्धः । यद्वा द्रुतं पद्यन्त इति द्रुपदानि विक्रयादीनि तेषु । तृतीयार्थे सप्तमी । तैर्बद्धः । यद्वा जीवानां द्रवस्य संसरणस्य पदानि द्रुपदानि सत्वरजस्तमांसि तैर्बद्धः । **शुनःशेपः** यं **आदित्यं अह्वत्** आह्वयति । **स वरुणो राजा एनं** शुनःशेपम् **अव सृज्यात्** अवसृजेत् । संसृतेरवसृष्टं करोतु । विकरणस्य श्लुः । कथम् । **विद्वान्** अस्मदाह्वानं जानन् ततश्च प्रसन्नः । **अदब्धो**ऽप्रतिबद्धः । **पाशान्विमुमोक्तु** । अस्मान्कर्मपाशाद्विमुमोक्तु । अत्रापि बहुलं छन्दसीति श्लुः ।। १३ ।।

**मन्त्रार्थमञ्जरी–** (गृभीतः) त्रिषु । द्रुपदेषु, द्रोर्वृक्षस्य यूपस्य पदेषु स्थानेषु । बद्धः । द्रुतं पद्यन्त इति द्रुपदेषु, विक्रययूपबन्धनालम्भनरूपेषु, तृतीयार्थे सप्तमी, तैर्वा, जीवानां द्रवणस्य संसरणस्य पदानि निमित्तानि द्रुपदानि सत्त्वरजस्तमांसि, तेषु तैर्वा । बद्धः शुनःशेपः (यम्) आदित्यम्, आदौ स्थितत्वहेतुनादित्यनामानं वरुणम्, 'अव्ययात्त्यप्' इत्यत्र योगविभागेनादि-शब्दात्त्यप् । अह्वत्, आह्वयति । हि (सः) वरुणः राजा । एनम्, शुनःशेपम् । अव ससृज्यात्, अवसृजेत्, प्रागुक्तरूपबन्धादवसृष्टं करोतु, 'सृज विसर्गे' श्लुविकरणं छान्दसम् । कथम् ? विद्वान्, अस्मदाह्वानं जानन्, ततश्च प्रसन्नः । अदब्धः, अप्रतिबद्धः । पाशान् । वि मुमोक्तु, अत्रापि 'बहुलं छन्दसि' इति श्लुः, मोचयतु । अत्र सूक्ते यास्वृक्ष्वन्यत्रानवकाशविष्णुलिङ्गादीनि सन्ति, ता ऋचो वरुणान्तर्यामिपरतयैव नेयाः ।। १३ ।।

**स्कन्द– शुनःशेपः हि** हिशब्दो यस्मादर्थे । यस्माच्छुनःशेपः **अह्वत् गृभीतः आदित्यम्**

अदितेः पुत्रं **त्रिषु द्रुपदेषु बद्धः** द्रुशब्दो दारुमयत्वाद् यूपे वर्तते । पदशब्दः स्थानपथनः । त्रिषु यूपप्रदेशेषु बद्धः । अधःप्रदेशे पादयोर्बद्धः, मध्ये कट्याम्, उपरि शिरसि इत्यर्थः । यद्यपि चैकस्मिन् यूपप्रदेशे पशोः शिरस्येव बन्धनं विहितं नान्यत्र । तथापि पुरुषपशोरर्थात् कट्यां पादयोश्चास्ति बन्धनम् । न हि शिरोमात्रबन्धनेन पुरुषो विशसितुं निश्चलः शक्यो धारयितुम् । यस्मादिति वचनात् तच्छब्दोऽध्याहर्तव्यः । तस्मात् आर्तानुकम्पित्वात् **एनम्** शुनःशेपम् **राजा वरुणः अव ससृज्यात्** अवसर्गो नामाभ्यनुज्ञा । 'जीवत्वयं मा स्मैनं मारयत' इत्येव-मनुजानीयादित्यर्थः । अनुज्ञाय च **विद्वान्** जानन् अस्माकमार्ततां भक्ततां वा **अदब्धः** अहिंसितः **वि मुमोक्तु पाशान्** एतान् यैर्वयं बद्धाः ।। १३ ।।

**वेङ्कटमाधव– शुनःशेपः हि** अयम् देवम् आहूतवान् गृहीतः **त्रिषु** यूपस्य स्थानेषु **बद्धः** अदितेः पुत्रम् । तम् **वरुणः** अवसृजतु । **विद्वान्** अहिंसितः **पाशान् वि मुमोक्तु** । पाशविमोचनं फलमवसर्गस्य ।। १३ ।।

**मुद्गल– गृभीतः** बन्धनाय गृहीतः **त्रिषु** त्रिसंख्याकेषु **द्रुपदेषु** द्रोः काष्ठस्य यूपस्य पदेषु प्रदेशविशेषेषु **बद्धः शुनःशेपः आदित्यम्** अदितेः पुत्रं यं वरुणम् **अह्वत्** आहूतवान् हि यस्मादेवम्, तस्मात् सः **वरुणः राजा एनम्** शुनःशेपम् **अव ससृज्यात्** । अवसृष्टं बन्धनात् विमुक्तं करोत्वित्यर्थः । विमोकप्रकारः एव स्पष्टीक्रियते– **विद्वान्** विमोकप्रकाराभिज्ञः **अदब्धः** केनाप्यहिंसितः वरुणः **पाशान्** बन्धनरज्जुविशेषान् **वि मुमोक्तु** विच्छिद्यैनं मुक्तं करोतु ।। १३ ।।

**सायण– गृभीतः** बन्धनाय गृहीतः त्रिसंख्याकेषु **द्रुपदेषु** द्रोः काष्टस्य यूपस्य पदेषु प्रदेशविशेषेषु **बद्धः शुनःशेपः आदित्यम्** अदितेः पुत्रं यं वरुणम् **अह्वत्** आहूतवान् **हि** यस्मादेवं तस्मात् सः **वरुणः राजा एनं** शुनःशेपम् **अव ससृज्यात्** अवसृष्टं बन्धनात् विमुक्तं करोतु । विमोकप्रकार एव स्पष्टीक्रियते । **विद्वान्** विमोकप्रकाराभिज्ञः **अदब्धः** केनाप्यहिंसितः वरुणः **पाशान्** बन्धनरज्जुविशेषान् **वि मुमोक्तु** विच्छिद्यैनं मुक्तं करोतु ।

त्रिषु । 'षट्त्रिचतुर्भ्यो हलादिः' (पा.सू.६-१-१७९) इति विभक्तेरुदात्तत्वम् । संहितायां 'उदात्तस्वरितयोर्यणः' इति परः आकारः स्वर्यते । ससृज्यात् । 'सृज विसर्गे' । प्रार्थनायां

लिङ् । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । विद्वान् । 'विद ज्ञाने' । 'विदेः शतुर्वसुः' (पा.सू.७-१-३६)। 'उगिदचाम्' इति नुम् । हल्ङ्यादिसंयोगान्तलोपौ । संहितायां 'दीर्घादटि समानपादे' इति नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकारः । अदब्धः । 'दम्भु दम्भे' । निष्ठायाम् 'अनिदिताम्' इति नलोपे 'झषस्तथोर्धोऽधः' (पा.सू.८-२-४०) इति धत्वम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ १३ ॥

**सिद्धाञ्जनम्– गृभीतः** गृहीतः (बन्धनार्थं) त्रिषु विसह्यत्याकेषु त्रिवृत्कृतेषु **द्रुपदेषु** द्रोः वृक्षस्य पदेषु स्थानेषु **बद्धः शुनःशेपः** ऋषिः **आदित्यं** वरुणं **अह्वत्** आहूतवान्, **हि** यस्मादेवं तस्मात् **विद्वान्** विमोचनोपायज्ञः **राजा** स्वामी **अदब्धः** अप्रतिहतशक्तिश्च **वरुणः एनं** शुनःशेपं **अव ससृज्यात्** अवसृष्टं विमुक्तं करोतु (सृज विसर्गे, प्रार्थनायां लिङ, श्लः, विकरणव्यत्ययः) विसर्जनप्रकारमाह, **पाशान्** बन्धनरज्जुविशेषान् **विमुमोक्तु** विच्छिद्य मुञ्चतु, पाशेषु विच्छिद्य मुक्तेषु पुरुषस्य बद्धस्य विमोक्षणं सम्पद्यते । द्रुपदेषु द्रुः पृथिवीरुहः तेन पार्थिवः सर्वोऽपि सजीवः पिण्डो लक्ष्यते । स चान्नशब्दवाच्यः, तत्र परिणामवशाद्बहूनि सूक्ष्मसाराणि क्रियासाधनानि ज्ञानोपकरणानि च निष्पद्यन्ते । तेषां तत्त्वानुसारेण त्रिधा चतुर्धा पञ्चधा वा विभागः क्रियते । प्रायशस्त्रिवृत्करणं प्रत्यक्षानुभवमूलके व्यवहारे सिद्धम् । तच्च अन्नप्राणमनसंज्ञकं वेद्यम् । इमान्येव त्रीणि द्रुपदानि भवन्ति । एषु त्रिषु शरीरे प्राणे मनसि च स्थानेषु स्वरूपभूतः सुखमयरश्मिः गृहीतः बद्धश्च । ततो मुक्तियाचते वरुणदेवमृषिः । यद्यपि शुनःशेप इति ऋषेर्नाम भवति, तयाऽपि तस्य अर्थो बोध्यः । शुन इति सुखनाम, शेपो रश्मिः । ईदृशं ऋषिनाम सार्थकं अन्यत्र व्याख्यातमवधेयम् ॥ १३ ॥

## ऋक्संहिता पदपाठसहिता

**अव॑ ते॒ हेळो॑ वरुण॒ नमो॑भि॒रव॑ य॒ज्ञेभि॑रीमहे ह॒विर्भिः॑ ।**
**क्षय॑न्न॒स्मभ्य॑मसुर प्रचेता॒ राज॒न्नेनां॑सि शिश्रथः कृ॒तानि॑ ॥ १४ ॥**

अव॑ । ते॒ । हेळः॑ । व॒रु॒ण॒ । नमः॑ऽभिः । अव॑ । य॒ज्ञेभिः॑ । ई॒म॒हे॒ । ह॒विःऽभिः॑ । क्षय॑न् । अ॒स्मभ्य॑म् । अ॒सु॒र॒ । प्र॒चे॒तः॒ । राज॑न् । एनां॑सि । शि॒श्र॒थः॒ । कृ॒तानि॑ ॥ १४ ॥

## ऋग्भाष्यम्

**निंदां च तेऽवाग्गतेर्हेतुभूतामवगच्छामः सेयमित्यप्ययोग्याम् ।**
**नमस्कारैस्त्वद्गतैस्त्वन्मखैश्च हविर्युक्तैस्त्वत्प्रसादात्स च त्वम् ।**
**क्षितिरस्मभ्यं प्राणरन्ताऽखिलज्ञो वियोजयास्मत्कृतान्याश्वघानि ।। १४ ।।**

**ऋग्भाष्यटीका– अव ते** । निन्दां च । अत्र क्रियापदस्यैकत्वाद्वावप्यवशब्दौ नोपसर्गौ युक्तावित्याशयेनाद्यस्यावमवाचितां विवक्षन् व्याख्याति । हे **वरुण!** वयं **ते नमोभिः** त्वद्गतैस्त्वद्विषयैर्नमस्कारैः । **हविर्भिर्यज्ञेभिः** हविर्युक्तैस्त्वन्मखैश्च । त्वन्नमस्कारत्वन्मख समुत्पन्नात्त्वत्प्रसादादिति यावत् । **ते हेळो** हेळनं निन्दां च । **अव** अवमाम् अवाग्गतेर्हेतुभूताम् । **अवेमहे** अवगच्छामः । ननु मुमुक्षोर्भगवन्निन्दा ज्ञातुमयोग्या । सत्यम् । उपादेयत्वेनायोग्यामपि सानिन्देयमवाग्गतिहेतुभूतेत्यवगच्छामः । हे **राजन्!** एवमस्माभिरवगतः स च त्वं **अस्मभ्यं क्षयन्** क्षितिराश्रयो भवन् । अस्मत् **कृतानि एनांसि** अघानि । **शिश्रथः** अशिश्रथः । छान्दसश्श्रङ् । निश्चितत्वाल्लोडर्थे लुङ् । आशु वियोजय । **असुरशब्दार्थः प्राणरन्तेति** ।। असवः प्राणाः तेषु तैर्वा रमत इत्यसुरः । **प्रचेतशब्दार्थोऽखिलज्ञ इति** ।। प्रकृष्टमखिलविषयं चेतो ज्ञानं यस्येति । यद्यप्यत्रेमौशब्दौ सम्बुद्ध्यन्तौ तथापि प्रातिपदिकार्थमात्रमत्रोक्तमिति ज्ञातव्यम् ।। १४ ।।

**मन्त्रार्थमञ्जरी–** (हे) वरुण (वयम्) ते नमोभिः, त्वद्विषयैर्नमस्कारैः । हविर्भिः यज्ञेभिः, हविर्युक्तैस्त्वद्विषयैर्यज्ञैः । (च) त्वन्नमस्कारत्वन्मखसमुत्पन्नत्वत्प्रसादादिति यावत् । (ते) हेळः, हेलनम्, निन्दाम् । अव, अवमाम्, अवाग्गतिहेतुभूताम् । अव ईमहे, अवगच्छामः । (हे) राजन् । असुर, असुषु प्राणेष्वसुभिः प्राणैर्वा रममाण, रमेर्डः । प्रचेतः, प्रकृष्टज्ञान । एवमस्माभिरवगतः । त्वम् अस्मभ्यम् । क्षयन्, आश्रयो भवन् । अस्मत्कृतानि । एनांसि, पापानि । शिश्रथः, अशिश्रथः, 'श्रथु वियोगे' आशु वियोजय, निश्चितत्वाल्लोडर्थे लुङ् च्लेश्चङ् छान्दसः, द्विर्वचनम्, श्रथेर्वा चुरादेर्लुङ् ।। १४ ।।

**स्कन्द– अव** इत्युपसर्गः **ईमहे** इत्याख्यातेन सम्बध्यते । अवपूर्व ईमह इत्ययमपनयने वर्तते । अवेमहे अपनयामः । **ते** तव **हेळः** क्रोधम् । हे **वरुण! नमोभिः** नमस्कारैः

स्तुतिभिः । न च केवलैर्नमोभिः । किं तर्हि । **अव यज्ञेभिः** ईमहे सोमयागैश्चापनयामः । **हविर्भिः** चरुपुरोडाशादिभिः । अपनीतक्रोधश्च त्वम् **क्षयन्** क्षि निवासगत्योः इत्यस्यायं व्यत्ययेन । निवसन् इहागच्छन् वा **अस्मभ्यम्** अस्मदर्थम् । हे **असुर!** असवः प्राणाः तद्वन्! **प्रचेतः!** प्रकृष्टज्ञान! **राजन्!** दीप्त! ईश्वरः । वा **एनांसि** पापानि **शिश्रथः** श्लथय मन्दविपाकानि कुरु । **कृतानि** यान्यस्माभिः । एतदुक्तं भवति– यैः पूर्वकृतैरपुण्यैर्बन्धनं मरणं च प्रापिता वयं तान्यतोऽपि तावत् परं मन्दविपाकानि कुरु, येन पुनरीदृशं दुःखं न प्राप्नुमः । एनांसीति पाशा एव वाऽभिप्रेताः । तानस्मत्पित्रा कृतान् शिश्रथः । मुञ्चेत्यर्थः ।। १४ ।।

**वेङ्कटमाधव– अव** अवगच्छत्विति याचामहे । विनाशयामः तव **वरुण** । नमस्कारैः क्रोधम् । एवं यज्ञैः **हविर्भिः** च । निवसन् अस्मदर्थं बलवन्! प्राज्ञ! **राजन्! कृतानि** पापानि विनाशय ।। १४ ।।

**मुद्गल–** हे **वरुण! ते** तव **हेळः** क्रोधम् **नमोभिः** नमस्कारैः **अव ईमहे** अवनयामः । तथा **यज्ञेभिः** यज्ञैः साङ्गानुष्ठानेन पूज्यैः **हविर्भिः अव** ईमहे वरुणं परितोष्य क्रोधमपनयामः । हे **असुर!** अनिष्टशेषणशील! प्रचेतः! प्रकर्षेण प्रज्ञायुक्त! राजन्! दीप्यमान वरुण! **अस्मभ्यम्** अस्मदर्थम् **क्षयन्** अस्मिन् कर्मणि निवसन् **कृतानि** अस्माभिरनुष्ठितानि **एनांसि** पापानि **शिश्रथः** श्रथितानि शिथिलानि कुरु ।। १४ ।।

**सायण–** अवभृथे 'अव ते हेळ' इति द्वे ऋचौ वारुणस्य हविषो याज्यानुवाक्ये । 'पत्नीसंयाजैश्चरित्वा' इति खण्डे सूत्रितम्– 'अव ते हेळो वरुण नमोभिरिति द्वे' (आश्व.श्रौ.६-१३) इति ।।

हे **वरुण ते** तव **हेळः** क्रोधं **नमोभिः** नमस्कारैः **अव ईमहे** अवनयामः । तथा यज्ञैः साङ्गानुठानेन पूज्यैः हविर्भिः **अव** ईमहे वरुणं परितोष्य क्रोधमपनयामः । हे **असुर** अनिष्टक्षेपण-शील **प्रचेतः** प्रकर्षेण प्रज्ञायुक्त **राजन्** दीप्यमान वरुण **अस्मभ्यम्** अस्मदर्थं क्षयन् अस्मिन् कर्मणि निवसन् **कृतानि** अस्माभिरनुष्ठिनानि **एनांसि** पापानि **शिश्रथः** श्रथितानि शिथिलानि कुरु ।

हेळः । असुनो नित्वादाद्युदात्तत्वम् । यज्ञेभिः । 'बहुलं छन्दसि' इति ऐसभावः । ईमहे । 'ईङ् गतौ' । विकरणस्य लुक् । क्षयन् । 'क्षि निवासगत्योः' । लटः शतृ । व्यत्ययेन शप् ।

आमन्त्रिताद्युदात्तत्वम् । असुर । 'असेरुरन्' (उ.सू.१-४२)। आमन्त्रितनिपातः । शिश्रथः । 'श्रथ दौर्बल्ये' । चुरादिः अदन्तः । छान्दसे लुङि 'णिश्रिद्रुस्रुभ्यः' (पा.सू.३-१-४८) इति च्लेः चङ् । द्विर्भावहलादिशेषौ । अग्लोपित्वात् सन्वद्भावाभावेऽपि (पा.सू.७-४-९३) 'बहुलं छन्दसि' (पा.सू.७-४-७०) इति अभ्यासस्य इत्वम् । पूर्ववत् अडभावः ।। १४ ।।

**सिद्धाञ्जनम्–** हे **वरुण** भगवन् **ते** तव **हेळः** अनादरं अस्मान् प्रति उपेक्षामित्यर्थः (हेड़ृ अनादरे, तस्मादसुन्) क्रोधमिति योग्यार्थं मन्यते सायणः । **नमोभिः** नमस्करणैः **अवेमहे** अवनयामः (ईङ गतौ विकरणस्य लुक्) । **यज्ञेभिः** यज्ञैः **हविर्भिः** हव्यैः सोमाभिषवैरन्यैर्हव्यैश्च **अवेमहे** अवनयामः । **क्षयन्** अस्मासु निवसन् (क्षि-निवासे, शतृ) हे **प्रचेतः** प्रकृष्टज्ञान, **असुर** बलवन् (असवः प्राणाः, मत्वर्थे रः) **राजन् अस्मभ्यं** अस्मदर्थं **एनांसि** पापानि **शिश्रथः** श्लथय, शिथिलीकुरु, कानि? **कृतानि** अस्माभिः चरितानि । शिश्रथः– 'श्रथ दौर्बल्ये' चुरादिरदन्तः, छान्दसो लुङः, द्विर्भावः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ।। १५,१५,२४ ।।**

उत् । उत्ऽतमम् । वरुण । पाशम् । अस्मत् । अव । अधमम् । वि । मध्यमम् । श्रथय । अथ । वयम् । आदित्य । व्रते । तव । अनागसः । अदितये । स्याम ।। १५,१५,२४ ।।

## ऋग्भाष्यम्

**पुण्यं पापं मिश्रमित्येव पाशान्यथायोग्यं श्रथयान्येषु दत्वा ।**
**त्वन्निष्ठया तेन वयं त्वदीयलक्ष्म्याः पुत्राः स्याम मुक्ताः सृतेश्च ।**
**एषा विष्णोः केवलाऽप्येवमन्या अयोग्या या अन्यदेवेषु सम्यक् ।**
**वाक्यैर्विशिष्टैरपवादहीनैर्ज्ञेया गुणा अन्यदेवेषु चैव ।**
**पतिः सोमो वरुणस्याप्यथाग्नेः पतिः सूर्यस्तावुभौ तुल्यवीर्यौ ।**
**सूर्याचन्द्रमसोः पतिरिन्द्रोऽस्य रुद्रः पतिर्ब्रह्मा पतिरस्यापि विष्णुः ।**
**पतिर्मुक्तेर्वासुदेवोऽथ दृष्टेर्ब्रह्मा विद्यायाः शर्व इन्द्रः क्रियायाः ।**

**क्रियांशानामधिपा अन्यदेवास्तथाफलानामपि मुक्तिमार्गे ।**
**यथायोग्यं स्वेन्द्रियप्रेरकाश्च ततः पूज्या देवता मुक्तिकामैः ।**
**इति श्रुतेस्तारतम्यं गुणानां ज्ञात्वा योज्याः श्रुतयस्तत्र तत्र ।। १५,१५,५ ।।**

**ऋग्भाष्यटीका–** उदुत्तमम् । अत्रोत्तमाधममध्यमान्पाशान्व्याख्याति । **पुण्यमिति** ।। उत् अववीत्युपसर्गार्थानाह । **यथायोग्यमन्येषु दत्वेति** ।। हे **वरुण! उत्तमं पाशं** पुण्यं **अस्मदुच्छ्रथाय** अस्मत्सुहृद्भ्यो दत्वास्मत्तो वियोजय । **अधमं पाशं** पापं **अवश्रथाय** द्विषद्भ्यो दत्वास्मद्वियोजय । **मध्यमं पाशं** मिश्रं पुण्येन मिश्रं पापं **विश्रथाय** उदासीनेभ्यो दत्वा वियोजय । एवशब्देनास्य मुख्यार्थतामाह । **अथ** तेन वियोजनेन । हे **आदित्य! तव व्रते** त्वत्कर्मणि त्वन्निष्ठयेति यावत् । **अनागसो** निर्दोषाः । सृतेश्च मुक्ता **वयं तवादितये** अदितेस्त्वदीयलक्ष्म्याः **स्याम** पुत्रा इति शेषः । परेश इत्यादिनोक्तं विवृणोति । **एषेति** ।। केवला प्रतिपाद्यान्तररहिता । एतदप्युक्तार्थत्व एव ज्ञातव्यम् । अर्थान्तरयोजनायान्तु देवतान्तरमपि न विरुध्यते । अयोग्यत्वं कथं ज्ञातव्यमित्यत आह । **वाक्यैरिति** ।। विशिष्टैरित्यस्यैव विवरणम् । **अपवादहीनैरिति** ।। तान्येवोपलक्षणयोदाहरति । **पतिरिति** ।। अत्र सोमो वरुणस्य पतिरित्युक्त्या विचाकशच्चन्द्रमानक्तमेतीति वरुणेऽयोग्यमिति लभ्यते । तावुभौ सूर्याचन्द्रमसौ । तुल्यवीर्यावित्यनेन उरुं हि राजेति वरुणे न योग्यमिति ज्ञायते । अस्येन्द्रस्य रुद्रः पतिरित्यनेनोतापवक्तेत्यस्य वरुणेऽयोग्यता प्रतीयते । अस्यापि विष्णुरिति विष्णोः सर्वोत्तमत्वोक्त्या न हि ते क्षत्रमित्येतद्वरुणे न योग्यमिति निश्चीयते । पतिर्मुक्तेर्वासुदेव इत्यनेनोर्ध्वं स्तूपमित्यादेरन्यत्रायोग्यताऽवधार्यते । दृष्टेर्ब्रह्मेत्यनेनास्मे अन्तरित्यादेर्वरुणेऽसम्भावितत्वं दृश्यते एवमन्यदप्यूह्यम् । मुक्तिमार्गे स्वेन्द्रियप्रेरका इत्यन्वयः । गुणानां देवतासम्बन्धिनाम् । तत्र तत्र देवतासु ।। १५, १५ ।।

**मन्त्रार्थमञ्जरी–** (हे) वरुण । उत्तमम् पाशम् पुण्यरूपम् । अस्मत् उत् (श्रथय) सुहृद्भ्यो दत्त्वास्मत्तो वियोजय । अधमम् (पाशम्) पापरूपम् । अव (श्रथय), द्वेषिभ्यो दत्त्वास्मत्तो वियोजय । मध्यमम् (पाशम्) मिश्रं पुण्यं मिश्रं पापं च । विश्रथय, उदासीनेभ्यो दत्त्वास्मत्तो वियोजय । अथ, तेन वियोजनेन । (हे) आदित्य, सर्वादौ विद्यमान । तव व्रते, त्वत्कर्मणि, त्वन्निष्ठयेति यावत् । अनागसः, निर्दोषाः, सृतेश्च मुक्ताः । वयम् । (तव) अदितये, अदितेः, त्वदीयलक्ष्म्याः । स्याम (पुत्राः) इति शेषः ।। १५ ।।

**स्कन्द–** **उत्** इत्युपसर्गः **श्रथाय** इत्याख्यातेन सम्बन्धयितव्यः । उच्छ्रथाय ऊर्ध्वम् श्रथयः । **उत्तमम् वरुण! पाशम् अस्मत्** अस्मत्तः । **अव अधमम्** अधममपि श्रथय । **वि मध्यमम्** श्रथाय मध्यमं श्रथय । तत्रापि स्थितं विमुञ्चेत्यर्थः । **अथ** पाशत्रयविमोक्षानन्तरम् **वयम्** हे **आदित्य!** अदितेः पुत्र! **व्रते** यागकर्मणि **तव** स्वभूते । त्वद्देवत्ये याग इत्यर्थः । **अनागसः** अपगतपापाः **अदितये** 'अदितिः' (निघ.१-११) इति वाङ्नाम । तादर्थ्ये चतुर्थी । स्तुतिलक्षणवागर्थम् **स्याम** भवेम । त्वद्देवत्ये यागे त्वां स्तुयामेत्यर्थः ।। १५ ।।

**वेङ्कटमाधव–** **उत्तमम् वरुण! पाशम्** उत् श्लथय अस्मत्तः **मध्यमम् वि** श्लथय, अवमम् । अत ऊर्ध्वम् अदितेः पुत्र! त्वत्स्वामिके समन्ध्याबन्धनादिके **व्रते** प्रमादरहिताः अस्यै पृथिव्यै **स्याम** अमृताः सन्तः ।। १५ ।।

**मुद्गल–** हे **वरुण! उत्तमम्** उत्कृष्टं शिरसि बद्धम् **पाशम् अस्मत्** अस्मत्तः **उत् श्रथाय** उत्कृष्य शिथिलीकुरु । **अधमम्** विकृष्टं पादेऽवस्थितं पाशम् **अव** श्रथाय अधस्तादवकृष्य शिथिलं कुरु । **मध्यमम्** नाभिप्रदेशं गतं पाशम् वि श्रथाय वियुज्य शिथिलीकुरु । **अथ** अनन्तरम् हे **आदित्य!** अदितेः पुत्र! वरुण! **वयम्** शुनःशेपाः **तव व्रते** त्वदीये कर्मणि **अदितये** खण्डनराहित्याय **अनागसः** अपराधरहिताः **स्याम** भवेम ।। १५ ।।

**सायण–** हे **वरुण! उत्तमम्** उत्कृष्टं शिरसि बद्धं **पाशम् अस्मत्** अस्मत्तः **उत् श्रथाय** उत्कृष्य शिथिलं कुरु । **अधमं** निकृष्टं पादेऽवस्थितं पाशम् **अव** श्रथाय अधस्तादवकृष्य शिथिलीकुरु । **मध्यमं** नाभिप्रदेशगतं पाशं **वि श्रथाय** वियुज्य शिथिलीकुरु । **अथ** अनन्तरं हे **आदित्य** अदितेः पुत्र वरुण **वयं** शुनःशेपाः **तव व्रते** त्वदीये कर्मणि **अदितये** खण्डनराहित्याय **अनागसः** अपराधरहिताः **स्याम** भवेम ।

उत्तमम् । तमयः पित्त्वादनुदात्तत्वेन आद्यदात्तत्वे प्राप्ते 'उत्तमशश्वत्तमौ सर्वत्र' (पा.सू.६-१-१६०) इति उञ्छादिषु पाठादन्तोदात्तत्वम् । अधमम् । 'अवद्यावमाधमार्वरेफाः कुत्सिते' (उ.सू.५.७३२) इति अवतेः अमच्; वस्य धः । श्रथाय । 'श्रथ दौर्बल्ये' । संहितायां छान्दसो दीर्घः । तव । 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् । अनागसः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । 'नञ्सुभ्याम्' इति तु व्यत्ययेन प्रवर्तते । यद्वा । आगसृशब्दात् 'अस्मायामेधा' (पा.सू.५-

२-१२१) इति मत्वर्थीयो विनिः । तस्य 'विन्मतोर्लुक्' (पा.सू.५-३-६५) इति लुक् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।। १५,१५ ।।

**सिद्धाञ्जनम्**– हे **वरुण, उत्तमं** उत्कृष्टं, ऊर्ध्वस्थानगतं **पाशं** बन्धनं **अस्मत्** अस्मत्तः **उत् श्रथाय** उत्कृष्य श्लथय । **अधमं** नीचः बन्धनं **अवश्रथाय** अवकृष्य शिथिलीकुरु । तथा **मध्यमं** मध्यमस्थानगतं बन्धनं च **विश्रथाय** वियुज्य शिथिलय । **अथ** अनन्तरं हे **आदित्य** अदितिपुत्र **वयं** शुनःशेपाः मनुष्यतां गताः मुखमयज्ञानरश्मयः **तव व्रते** त्वदीये दिव्ये कर्मणि **अनागसः** अनपराधाः निष्पापाः सन्तः **अदितये** अखण्डात्मक्षेत्रभूतायाः देवानां मातुरर्थाय **स्याम** भवेम ।

इदं च पाशबन्धविमोचनं उपनिषदुपदिष्ट-सर्वग्रन्थि-विप्रमोक्षणोद्घाटितरहस्यं स्यात् । ग्रन्थयश्च अविद्याग्रन्थयः स्थूलादिशरीरत्रयवृत्तय इति साधनपराणां वेदान्तिनां अभिमतम् । पाशबन्धत्रयं तान्त्रिकयोगप्रसिद्धब्रह्मविष्णुरुद्रनामाङ्कितग्रन्थिबन्धत्रयेण संवदतीत्यसंशयम् । अत्र वस्तुतस्तु मनःप्राणशरीरात्मके त्रिके क्रतस्य ज्योतिषः प्रवेशप्रतिबन्धकं प्रसारनिरोधकं च भवति बन्धनत्रितय-मिदमवगन्तव्यम् । अस्य विप्रमोक्षो वरुणदेवानुग्रहसाध्यो भवति ।। १५ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये पञ्चदशो वर्गः ।।

## ।। अथ षोडशो वर्गः ।।

(सूक्तम् २५)

## ऋक्संहिता पदपाठसहिता

(२१ आजीगर्तिं शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातः ऋषिः । वरुणो देवता । गायत्री छन्दः)

**यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि ।। १ ।।**

यत् । चित् । हि । ते । विशः । यथा । प्र । देव । वरुण । व्रतम् । मिनीमसि । द्यविऽद्यवि ।।

## ऋग्भाष्यम्

**दिवसे दिवसे देव कुर्मो यदपि ते व्रतम् ।**
**यथैव सुजनाः............................।। १ ।।**

**ऋग्भाष्यटीका– यच्चित्** । एकविंशत्यृचमिदं सूक्तम् । दिवसे । हे **वरुण! देव! विशः** प्रजाः । सुजना यथा तथैव वयं **यच्चित्** यदपि **ते व्रतं** सेवात्मकं तत्सर्वम् । **द्यविद्यवि** दिवसे दिवसे । **प्रमिनीमसि** । वैदिको धातुः । कुर्मः ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'यच्चिद्धि' इत्याद्येकविंशत्यृचं वर्गचतुष्टयात्मकं गायत्रीछन्दस्कं पञ्चविंशं सूक्तम् । देवता तु 'वरुणः' इत्युक्तमेव । हे वरुण देव । विशः, प्रजाः सुजनाः । यथा हि (तथैव वयम्) यत् चित्, यदपि । ते । व्रतम्, सेवात्मकम् । (तत्सर्वम्) द्यविद्यवि, दिवसे-दिवसे । प्रमिनीमसि, वैदिको धातुः (वै० नि० २।१४, १९) कुर्म इत्यर्थः ।। १ ।।

**स्कन्द– यत्** इति निपातो यदिशब्दस्यार्थे । **चित्** शब्दोऽप्यर्थे । **हि**शब्दः पदपूरणः । यद्यपि **ते** तव **विशः यथा** यथैवान्ये मनुष्याः तद्वद् वयमपि हे **देव! वरुण! व्रतम्** यागकर्म **प्र मिनीमसि** मीञ् हिंसायाम् । प्रकर्षेण हिंस्मः । **द्यविद्यवि** अहन्यहनि । का पुनर्यागकर्मणो हिंसा । प्रमादेनाकरणम् । यद्यप्यन्यमनुष्यवत् अहन्यहनि प्रमादेन यागं न कुर्म इत्यर्थः । यद्यपिति वचनात् तथापीत्यध्याहार्यम् । उत्तरयर्चैकवाक्यता । तथापि मा न इत्यादि । अथवा यच्चिद्धि त इति यच्छब्दो लुप्तविभक्तिः यस्माच्छब्दस्य येशब्दस्य वार्थे । चिद्धिशब्दौ द्वावपि पदपूरणौ । प्र मिनीमसि इत्यपि माङ् माने इत्यस्य रूपम् । यस्माद् ये च वयं तवान्यमनुष्यवत् कर्म सायंप्रातरुपस्थानं यागकर्म वा प्र मिनीमसि प्रकर्षेण मिमीमहे । कुर्म इत्यर्थः । कदा । अहन्यहनि । तस्मात् तान् वा ।। १ ।।

**वेङ्कटमाधव– यत्** वयं तव अन्यमनुष्यवत् असत्यस्तेयादिकरणात् **व्रतम्** अन्वहम् हिंसामस्ततस्त्वां स्तुम इति । सूक्तोपक्रमेषु क्रियापदमनेकत्र न दृष्टमिति ।। १ ।।

**मुद्गल–** 'यच्चित्' इत्येकविंशर्चं द्वितीयं सूक्तम् । 'शुनःशेप ऋषिः । गायत्रम् । वारुणम् ।

हे **वरुण देव!** लोके **यथा विशः** प्रजाः कदाचित् प्रमादं कुर्वन्ति तथा वयमपि **ते** तव सम्बन्धि यच्चिद्धि यदेव किञ्चित् **व्रतम्** कर्म **द्यविद्यवि** प्रतिदिनम् **प्र मिनीमसि** प्रमादेन हिंसितवन्तः । तदपि व्रतं प्रमादपरिहारेण साङ्गं कुर्विति शेषः ।। १ ।।

**सायण–** 'यच्चित्' इति एकविंशत्यृचं द्वितीयं सूक्तम् । तथा चानुक्रान्तम्-'यच्चित्सैका'

इति । 'ऋषिश्चान्यस्मात्' इति परिभाषया शुनःशेप एव ऋषिः । 'आदौ गायत्रम्' इति परिभाषितत्वात् गायत्रीछन्दः । 'वारुणं तु' इति पूर्वोक्तत्वात् तुह्यादिपरिभाषया (अनु.१२.३) वरुणो देवता । विनियोग उक्तः शौनःशेपाख्याने । विशेषविनियोगस्तु– अभिप्लवषडहे इदं सूक्तं होत्रकशस्त्रे स्तोमनिमित्तमावापार्थम् । 'अभिप्लवपृष्ठ्याहानि' इति खण्डे तथैव सूत्रितम्– 'यच्चिद्धि ते विश इति वारुणमेतस्य तृचमावपेत मैत्रावरुणः' (आश्व.श्रौ.७-५) इति ।

हे **वरुण यथा** लोके **विशः** प्रजाः कदाचित् प्रमादं कुर्वन्ति तथा वयमपि **ते** तव संबन्धि **यच्चिद्धि** यदेव किञ्चित् **व्रतं** कर्म **द्यविद्यवि** प्रतिदिनं **प्र मिनीमसि** प्रमादेन हिंसितवन्तः । तदपि व्रतं प्रमादपरिहारेण साङ्गं कुरु इति शेषः ।

यथा । लित्स्वरेण आद्युदात्तत्वे प्राप्ते 'यथेति पादान्ते' (फि.सू.८५ ) इति सर्वानुदात्तत्वम् । मिनीमसि । 'मीञ् हिंसायाम्' । 'इदन्तो मसि' । 'क्र्यादिभ्यः श्ना' । 'मीनातेर्निगमे' (पा.सू.७-३-८१) इति ह्रस्वत्वम् । 'ई हल्यघोः' (पा.सू.६-४-११३) इति ईकारः । 'सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वचनात् तिङ एव स्वरः शिष्यते । यद्वृत्तयोगात् निघाताभावः ॥ १ ॥

**सिद्धाञ्जनम्–** अथ षष्ठेऽनुवाके शुनःशेपस्य यच्चिदित्येकविंशर्चं द्वितीयं सूक्तं गायत्रीच्छन्दस्कं वारुणम् । तत्र प्रथमामृचमाह ।

हे **देव, वरुण, विशो यथा** मनुष्या इव, जनसामान्यमिव **यच्चित् हि** यदपि किञ्चित् **ते** तव **व्रतम्** कर्म ऋतपथप्रवृत्तं दिव्यधर्मानुरुद्धं त्वदीयं कर्मेत्यर्थः । **द्यविद्यवि** अहरहः **प्र मिनीमसि** प्रमादेन हिंस्मः, उल्लङ्घनमेव हिंसा, उल्लङ्घितं भवत्यस्माभिः (मीञ् हिंसायां, श्ना मसो मसिः छन्दसि) तदपि क्षन्तव्यमिति शेषः । सा च विवक्षा उत्तरयर्चा स्पष्टा भवति ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**मा नो॑ व॒धाय॑ ह॒त्नवे॑ जिही॒ळा॒नस्य॑ रीरधः । मा हृ॑णा॒नस्य॑ म॒न्यवे॑ ॥ २ ॥**

मा । नः॒ । व॒धाय॑ । ह॒त्नवे॑ । जि॒ही॒ळा॒नस्य॑ । री॒र॒धः॒ । मा । हृ॒णा॒नस्य॑ । म॒न्यवे॑ ॥ २ ॥

## ऋग्भाष्यम्

**..............मा नो हन्तुं साधय निघ्नते ।**
**जिहीळानस्त्यजन्धर्मं हरतो मा च मन्यवे ।। २ ।।**

**ऋग्भाष्यटीका– मा नो वधाय** । मा नो हन्तुम् । हे वरुण! **नो**ऽस्मान् **वधाय** हन्तुं हननाय । **हत्नवे** हन्तीति हत्नुस्तस्मै । निघ्नते पुरुषाय । षष्ठ्यर्थे चतुर्थी । जिहीळानस्त्यजन् धर्ममिति शेषः । तस्य **जिहीळानस्य** । अनेकार्थत्वाद्धातूनां हिळतिस्त्यागार्थे । दीर्घश्छान्दसः । जहातेर्वा छान्दसमेतद्रूपम् । **मा रीरधः** मा साधय तस्य वशान्माकार्षीः । किञ्च । **हृणानस्य** हरतः पुरुषस्य । **मन्यवे** कोपाय च । मा रीरधः व्यत्ययेन हरतिः श्नाविकरणः । धात्वन्तरं वा हृणातिः ।। २ ।।

**मन्त्रार्थमञ्जरी–** (हे वरुण) नः, अस्मान् । वधाय, हननाय । हत्नवे, हन्तीति हत्नुः, हन्तेः क्नुः, 'हनस्त च' इति नकारस्य तकारः (कृहनिभ्यां क्नुः' इति क्नुः, क्त्वा-दनुनासिकलोपः) षष्ठ्यर्थे चतुर्थी, निघ्नतः पुरुषस्य । जिहीळानस्य (धर्मम्) इति शेषः, धर्मं त्यजतः, 'ओहाक् त्यागे' इत्यस्य च्छान्दसं रूपम् । मा रीरधः, न साधय, तद्वशान्मा कार्षीः । किं च, हृणानस्य, हरतः, अपहरतः पुरुषस्य । मन्यवे, कोपाय (च) मा (रीरधः) 'राध, साध संसिद्धौ' लुङि णिचि चङ्युपधाह्रस्वः । हृञः व्यत्ययेन श्नाविकरणस्य शानजन्तस्य रूपम् ।। २ ।।

**स्कन्द– मा नः** अस्मान् **वधाय हन्त्रवे** वधस्ताडनम् । हत्नुः हननं मारणम् । ताढनाय मारणाय वा । **जिहीळानस्य** हेळ इति क्रुध्यतिकर्मा (निघ.२-१२) । भूते वायं लिट् । पूर्वं क्रुद्धस्य । **रीरधः** रध्यतिर्वशगमने । वशं नैषीः । यस्ताडयति मारयति तस्य पूर्वं क्रुद्धस्य माऽस्मान् वश्यान् कार्षीरित्यर्थः । **मा हृणानस्य** 'हृणिः' (निघ २-१३) इति क्रोधनामसु पाठात् हृणिरिति क्रोधार्थोऽपीत्यवगम्यते । व्यत्ययेन वा श्नाविकरणः । धात्वन्तरं वा हृञ् । वर्तमाने लट् । तदानीमेव क्रुध्यतः । **मन्यवे** क्रोधाय । योऽपि साम्प्रतमेव क्रोद्धुमिच्छति । तस्यापि क्रोधार्थं माऽस्मान् वश्यान् कार्षीरित्यर्थः ।। २ ।।

**वेङ्कटमाधव– मा** अस्मान् आयुधाय हन्त्रे क्रुद्धस्य स्वभूताय वशं नय । मा च **हृणानस्य मन्यवे** । हिंसापरो हृणानः ।। २ ।।

**मुद्गल–** हे वरुण! **जिहीळानस्य** अनादरं कृतवतः **हत्नवे** हन्तुः पापहननशीलस्य तव सम्बन्धिने त्वत्कर्तृकाय **वधाय नः** अस्मान् **मा रीरधः** संसिद्धान् विषयभूतान् मा कुरुः । **हृणानस्य** हृणीयमानस्य क्रुद्धस्य तव **मन्यवे** क्रोधाय मा अस्मान् रीरधः ।। २ ।।

**सायण–** हे वरुण! **जिहीळानम्य** अनादरं कृतवतः **हत्नवे** हन्तुः पापिहननशीलस्य तव संबन्धिने त्वत्कर्तृकाय **वधाय नः** अस्मान् **मा रीरधः** संसिद्धान् विषयभूतान् मा कुरु । **हृणानस्य** हृणीयमानम्य क्रुद्धस्य तव **मन्यवे** क्रोधाय मा अस्मान् रीरधः ।

वधाय । 'हनश्च वधः' (पा.सू.३-३-७६) इति अदन्तो वधशब्दः । उञ्छादिषु पाठादन्तोदात्तः । हत्नवे । 'हन हिंसागत्योः' । 'कृहनिभ्यां क्नुः' (उ.सू.३-३१०) इति क्नुप्रत्ययः, धातोर्नकारस्य तकारः । जिहीळानस्य । 'हेडृ अनादरे' । अस्मात् लिटः कानच् । द्विर्भावहलादिशेषहृस्वचुत्वजश्त्वानि । एकारस्य ईकारादेशश्च्छान्दसः । 'चितः' इत्यन्तोदात्तत्वम् । रीरधः । 'राध साध संसिद्धौ' । चङि णिलोपे उपधाहृस्वत्वम् । द्विवचनहलादिशेषहृस्वत्वसन्वद्भावेत्वाभ्यासदीर्घाः । 'न माङ्योगे' इति अडभावः । हृणानस्य । 'हृणीङ् लज्जायाम्' । अस्मात् शानचि पृषोदरादित्वात् अभिमतरूपसिद्धिः ।। २ ।।

**सिद्धाञ्जनम्– जिहीळानस्य** अनादरं कुर्वतः (कृतवत इति सायणीयम्) **हत्नवे** हन्तुः षष्ठ्यर्थे चतुर्थी, तव कर्तरि षष्ठी, **वधाय** हिंसाय **नः** अस्मान् **मा रीरधः** न साधय । **हृणानस्य** क्रुध्यतस्तव **मन्यवे** कोपाय 'न मा रीरधः' इति सम्बन्धः । पूर्वोक्तरीत्या यैः दैव्यव्रतोल्लङ्घनं क्रियते तेष्वनादरं कुरुते वरुणः । स वारुणोऽनादरः तेषां विनष्टये भवति । तादृशानादरस्य विषयभूतान् मा नः कार्षीरिति याचते । सोऽनादरः क्रोधे पर्यवसन्नो भवति । तस्मात् क्रुध्यतस्तव क्रोधस्य पात्रं मा भूमेति प्रार्थयते । जिहीळानस्य– 'हेडृ अनादरे' लिटः कानच्, द्विर्भावः, एकारस्य ईकारादिश्छान्दसः । हत्नवे– 'कृहनिभ्यां क्नुः', कृत्नुमित्यत्र गतम् । रीरधः– 'राध साध संसिद्धौ, लुङ्, माङ्योगात् अडभावः । हृणानस्य– 'हृणिः क्रोधकर्मा, शानच् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**वि मृळीकार्य ते मनो रथीरश्वं न संदितम् । गीर्भिर्वरुण सीमहि ।। ३ ।।**

वि मृळीकार्य । ते । मनः । रथीः । अश्वम् । न । सम्ऽदितम् । गीःऽभिः । वरुण । सीमहि ।।

### ऋग्भाष्यम्

**मनस्त्वयि निबध्नीमो गीर्भिरश्वं वियोजितम् ।**
**बध्नाति सारथिर्यद्वन्मृळीको रक्षकोऽधिकम् ।**
**त्वन्मनोऽस्मासु वा गीर्भी रक्षणाय विसीमहि ।। ३ ।।**

**ऋग्भाष्यटीका– वि मृळीकाय** ।। मनस्त्वयि । हे **वरुण!** वयं **मनो**ऽस्मदीयम् । **गीर्भिः** वेदवाग्भिः तच्छ्रवणादिना । **मृळीकाय ते** मृळीके त्वयि । **विसीमहि** 'षिञ् बन्धने' । निबध्नीमः । त्वद्विषयं कुर्मः । तत्र दृष्टान्तः **रथीः** सारथिः । **सन्दितं** सम्यक् खण्डितं वियोजितरथाद्वियुक्तं **अश्वं न** अश्वं यद्वद्रथे बध्नाति रश्मिभिस्तथा । मृळीकायेति वरुणविशेषणं व्याख्याति । **मृळीक इति** ।। मृळसुखने । अस्मात्कर्तरी कक् । अनेकार्था हि धातव इति रक्षणार्थत्वम् । वीत्यस्यार्थो**ऽधिकमिति** । प्रकारान्तरेण व्याख्याति । **त्वन्मन इति** ।। हे वरुण ते मनः त्वन्मनः । कृपारूपां त्वन्मनोवृत्तिं **गीर्भिः** स्तुतिरूपाभिः । मृळीकाय भावे प्रत्ययः रक्षणाय । विसीमहि निबध्नीमः । अस्मास्विति शेषः । दृष्टान्तः पूर्ववत् ।। ३ ।।

**मन्त्रार्थमञ्जरी–** (हे) वरुण (वयम्) मनः अस्मदीयम् । गीर्भिः, वेदवाग्भिः, त्वच्छ्रवणादिना । मृळीकाय ते, मृळी (डी) के रक्षके त्वयि, मृडतेः ईकक् (कीकच्) वि सीमहि, 'णिञ् बन्धने' निबध्नीमः, त्वद्विषयं कुर्मः । रथीः सारथिः । सन्दितम्, सम्यक्खण्डितम्, रथाद्वियुक्तम् । अश्वम् न, अश्वं यथारथे बध्नाति तथा । 'त्वयि मनो (नि) बध्नीमः' इति पूर्वेणान्वयः ।। यद्वा (हे) वरुण । ते मनः, त्वदीयं मनः, कृपारूपां त्वन्मनोवृत्तिम् । गीर्भिः, स्तुतिरूपाभिः । मृळीकाय, भावेऽर्थः ईकक् (कीकच्) मृळ (ड) नाय रक्षणाय, अनेकार्थत्वाद्धातूनां सुखनार्थोऽपीह रक्षणार्थः । वि सीमहि, निबध्नीमः । (अस्मासु) इति शेषः । दृष्टान्तः पूर्ववत् ।। ३ ।।

**स्कन्द– वि** इत्युपसर्गः **सीमहि** इत्याख्यातेन सम्बन्धयितव्यः । **मृळीकाय** सुखाय

जीवितलक्षणायात्मनः **ते** तव स्वभूतम् **मनः** हविर्भूतो मयायं भक्षयितव्य इत्येवं रूपं यदस्मास्वाबद्धचित्तं तत् । **रथीः अश्वम् न सन्दितम्** दितिरत्र बन्धनार्थः 'शुनश्चिच्छेपं निदितम्' (ऋ.५-२-७) इति यथा । यथा रथीः सारथिरश्वं रथे बद्धमेवं वयम् **गीर्भिः** स्तुतिभिः हे **वरुण! वि सीमहि** । विपूर्वस्य स्यतेरिदं रूपम् । स्यतिश्चोपसृष्टो विमोचने वर्तते । विमुञ्चामः । अथवा 'षिञ् बन्धने' इत्यस्येतद्रूपम् । विगतबन्धं कुर्मः । अपनयाम इत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** सुखार्थं सारथिः बद्धम् इव **अश्वम्** तव क्रुद्धम् **मनः** स्तुतिभिः विमोचयाम इति ।। ३ ।।

**मुद्गल–** हे **वरुण! मृळीकाय** अस्मत्सुखाय **ते** तव **मनः गीर्भिः** स्तुतिभिः **वि सीमहि** विशेषेण बध्नीमः । प्रसादयाम इत्यर्थः । दृष्टान्तः । रथीः रथस्य स्वामी **संदितम्** सम्यक् खण्डितं दूरगमनेन श्रान्तम् **अश्वम् न** अश्वमिव । यथा स्वामी श्रान्तमश्वं यवसप्रदानादिना प्रसादयति तद्वत् ।। ३ ।।

**सायण–** हे **वरुण! मुळीकाय** अस्मत्सुखाय **ते** तव **मनः गीर्भिः** स्तुतिभिः **वि सीमहि** विशेषण बध्नीमः । प्रसादयाम इत्यर्थः । तत्र दृष्टान्तः । **रथीः** रथस्वामी **संदितं** सम्यक् खण्डितं दूरगमनेन श्रान्तम् **अश्वं न** अश्वमिव । यथा स्वामी श्रान्तमश्वं ग्रासप्रदानादिना प्रसादयति तद्वत् ।

रथीः । मत्वर्थीय ईकारः । संदितम् । 'दो अवखण्डने' । 'निष्ठा' इति क्तः । 'द्यतिस्यतिमास्थाम्' (पा.सू.७-४-४०) इति इकारान्तादेशः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । गीर्भिः । 'सावेकाच' इति भिस उदात्तत्वम् । सीमहि । 'षिवु तन्तुसन्ताने' । व्यत्ययेनात्मनेपदम्। 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'वलि लोपः' (पा.सू.६-१-६६) । यद्वा । 'षिञ् बन्धने' इत्यस्मात् विकरणस्य लुक् । दीर्घश्छान्दसः ।। ३ ।।

**सिद्धाञ्जनम्–** हे **वरुण! मृळीकाय** सुखाय अपराधक्षमात्मकसुखहेतव इत्यर्थः, मृडधातोः ईकक् । **ते** तव **मनः** मानसं **गीर्भिः** स्तुतिभिरस्मदीयाभिः **वि सीमहि** विशेषण बध्नीमः, षीञ् बन्धने, ईकारश्छान्दसः, आत्मनेपदव्यत्ययश्च । तत्र दृष्टान्तमाह– **रथीः** रथस्वामी, मत्वर्थीयः

ईकारः । **संदितं** सन्नद्धं **अश्वं न** तुरगमिव । (सम्पूर्वकः दो अवखण्डने, उपसर्गवशात् सम्यग्बन्धनार्थो धातुः)। यथा सारथिः सन्नद्धमश्वं रथे युक्तं करोति, तथा वयं स्तुतिभिः तव चित्तं बध्नीम इति भावः । भक्तिपाशबद्धो भगवान् प्रसीदतीत्याशयश्चिरन्तनोऽत्र लक्षणीयः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**परा॒ हि मे॒ विम॑न्यवः॒ पत॑न्ति॒ वस्य॑इष्टये । वयो॒ न व॑स॒तीरुप॑ ।। ४ ।।**

परा॑ । हि । मे॒ । विऽम॑न्यवः । पत॑न्ति । वस्यः॑ऽइष्टये । वयः॑ । न । व॒स॒तीः । उप॑ ।। ४ ।।

## ऋग्भाष्यम्

**पराक्पतंति प्रज्ञा मे विविधाः शुभलब्धये ।**
**पक्षिणो वसतीर्यद्वद्धा न त्वां प्राप्नुवंति च ।। ४ ।।**

**ऋग्भाष्यटीका– परा हि** । पराक् । **मे** मम । विविधाः अनेकविषयत्वात् । **मन्यवः** प्रज्ञाः बुद्धिवृत्तयो **वस्य इष्टये** वस्यःशब्दः शुभपर्यायः । इष्टिः प्राप्तिः 'इषु गतौ' । शुभलब्धये । **परा** पराक् । त्वत्पराङ्मुखतया **पतन्ति** गच्छन्ति । **हि** हा कष्टम् । किमिव । **वयः** पक्षिणो वसतीरुप **न** नीडानि प्रति यद्वत् । वैषयिकसुखलाभार्थं मदीया बुद्धयो विषयानेव धावन्ति धिङ् मामिति तात्पर्यम् । यद्वाऽऽत्यन्तिकसुखसाधनता हीनेष्वपि विषयेष्वात्यन्तिकसुखलाभाय पतन्तीति भ्रान्तोऽस्मीति । प्रकारान्तरेण व्याख्याति । **न त्वामिति** ।। पक्षिण इत्याद्यप्यत्रानुवर्तते । नेत्यावर्तनीयम् । ततश्च **वसतीः उप** वसतीः प्रति वयो न पक्षिणो यद्वदिति व्यतिरेकदृष्टान्तः । तथा मे मन्यवः प्रज्ञाः वस्य इष्टये मोक्षादिशुभलब्धये परा दूरतस्त्वां न विपतन्ति न प्राप्नुवन्ति । हा कष्टमिति च योज्यम् ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (हे वरुण) मे, मम । विमन्यवः, विविधा अनेकविषयकत्वान्मन्यवो बुद्धिवृत्तयः । वस्य इष्टये, वस्यसः शुभस्येष्टये, 'इषगतौ' प्राप्तये । परा, पराक्, त्वद्विमुखतया । पतन्ति, गच्छन्ति । हि, हा कष्टम् । किमिव ? वयः, विशब्दोऽयम्, पक्षिणः । वसतीः उप न, नीडानि प्रतीव । इति वैषयिकसुखलाभार्थं मदीया बुद्धयो विषयानेव धावन्ति, यथा दूरे डयमानाः

पक्षिणः पक्षौ संकुच्य स्वनीडानि प्रति पतन्ति, एवम् । अतो धिङ्नाम् इति तात्पर्यम् । यद्वा वयः, पक्षिणः । वसतीः उप न, नीडानि प्रतीव, व्यतिरेकदृष्टान्तोऽयम् । तथा मे । विमन्यवः, विविधाः प्रज्ञाः । वस्य इष्टये, मोक्षादिरूपशुभलब्धये । परा, दूरतः । (नः) पतन्ति, त्वां न पतन्ति, न शब्दस्यावृत्त्यात्राप्यन्वयः, न शक्नु (प्राप्नु) वन्ति । हि, हा कष्टम् इति ।। ४ ।।

**स्कन्द–** **परा** वि इत्युपसर्गौ **पतन्ति** इत्याख्यातेन सम्बन्धयितव्यौ । हिशब्दः पदपूरणः । **मे** मम **मन्यवः** 'मन्यते, छन्त्सत्' (निघ.२-६) इति कान्तिकर्मसु पाठात् मन्यतिरत्र कान्तिकर्मा । मननानि मन्यवः कामाः वि परा पतन्ति विविधं त्वां प्रति प्राप्नुवन्ति । **वस्यइष्टये** इष गतौ । शुद्धोऽपि चात्र सामर्थ्यात् सोपसर्गार्थो द्रष्टव्यः । वसुनोऽधिगत्यै त्वतो धनं लब्धुमित्यर्थः । कथं पुनः परापतन्ति । उच्यते । **वयः न** पक्षिण इव! **वसती उप** उपशब्द प्रतिशब्दस्यार्थे । स्वानि निवासस्थानानि प्रति ।। ४ ।।

**वेङ्कटमाधव–** मम विविधा इच्छाबुद्धय श्रेयस इच्छार्थं वरुणं राजानं प्रति **परा पतन्ति** । यथा पक्षिणः आवासस्थानान्यनुभूतानि **उप** गच्छन्ति ।। ४ ।।

**मुद्गल–** हे वरुण! **मे** मम शुनःशेपस्य **विमन्यवः** क्रोधरहिताः बुद्धयः **वस्यइष्टये** वसीयसः अतिशयेन वसुमतो जीवनस्य प्राप्तये **परा पतन्ति** पराङ्मुखाः पुनरावृत्तिरहिताः प्रसरन्ति । हिशब्दो अस्मिन्नर्थे सर्वजनप्रसिद्धिमाह । परापतने दृष्टान्तः– **वयः न** पक्षिणो यथा **वसतीः** निवास-स्थानानि **उप** सामीप्येन प्राप्नुवन्ति तद्वत् ।। ४ ।।

**सायण–** हे वरुण! **मे** मम शुनःशेपस्य **विमन्यवः** क्रोधरहिताः बुद्धयः **वस्यइष्टये** वसीयसः अतिशयेन वसुमतो जीवनस्य प्राप्तये **परा पतन्ति** पराङ्मुखाः पुनरावृत्तिरहिताः प्रसरन्ति । हिशब्दः अस्तिन्नर्थे सर्वजनप्रसिद्धिमाह । परापतने दृष्टान्तः । **वयो न** । पक्षिणो यथा **वसतीः** निवास-स्थानानि **उप** सामीप्येन प्राप्नुवन्ति तद्वत् ।

पतन्ति । पादादित्वात् निघाताभावः । वस्यइष्टये । वसुमच्छब्दात् 'विन्मतोर्लुक्' इति मतुपो लुकि टिलोपे ईयसुनो यकारलोपश्चान्दसः । वसतीः । 'शतुरनुमः' इति ङीष उदात्तत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** हे वरुणेति सम्बोधनं मन्यन्ते पूर्वे, आत्मगतं वेदमुक्तं स्यात् । **मे** मम **विमन्यवः** विविधानि मननानि, सर्वाश्च मतिवृत्तय इत्यर्थः, **परा पतन्ति** अतिदूरमूर्ध्वं प्रसरन्ति **हि** पादपूरणः । किमर्थम्? **वस्यइष्टये** वसुनो धनस्य प्राप्तये (वसुमतः प्राप्तये वसुशब्दाद्विन्मतुपो लुकि टि-लोपे ईयसुनो पकारलोपश्छान्दसः) धनं च दिव्यं उत्तमं बोध्यम् । तत्र दृष्टान्तमाह– **वयः** पक्षिणः **वसतीः उप न** स्वावासस्थानानि प्रति यथा पतन्ति तथा मम मतिवृत्तयः दूरमुत्पतन्ति दिव्यवसुभूतं वारुणं धाम प्राप्तुमिति भावः । मन्यवः पक्षिण इवोत्पतन्तीति न केवलमलङ्कारार्थेयमुपमा । धीवृत्तीनां खेचरत्वं योगचक्षुर्गम्यमित्यत्र योगिनोऽधुनातनाश्च साक्षिणो भवन्ति ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**कदा क्षत्रश्रियं नरमा वरुणं करामहे । मृळीकायोरुचक्षसम् ।। ५,१६ ।।**

कदा । क्षत्रऽश्रियम् । नरम् । आ । वरुणम् । करामहे । मृळीकाय । उरुऽचक्षसम् ।। ५, १६ ।।

## ऋग्भाष्यम्

**अतोऽखिलक्षत्रपतिमाह्वयामः कदा वयम् ।**
**अविनाशिनं रक्षणाय महादर्शनमञ्जसा ।। ५,१६ ।।**

**ऋग्भाष्यटीका– कदा** । पूर्वसङ्गतत्वेन व्याख्याति । **अत इति** ।। यतोऽस्मद्बुद्धयो विषयानेव धावन्ति न वरुणमतस्तं प्रति गन्तुमित्यर्थः । (वयं) **कदा मृळीकाय** रक्षणाय अस्मदीयस्य मनस इति शेषः । **क्षत्रश्रियं** क्षत्रं क्षत्रियाः धनं बलं वा तच्छ्रयतीयं सा क्षत्रश्रीः तम् । अखिलक्षत्रपतिं **नरं** नरिष्यतीत्यविनाशिनम् । **उरुचक्षसम्** उरु चक्षो दर्शनं यस्यासावुरुचक्षास्तं महादर्शनं वरुणम् । **आ कारामहे** अञ्जसाह्वयामः ।। ५,१६ ।।

**मन्त्रार्थमञ्जरी–** यतोऽस्मद्बुद्धयो विषयानेव धावन्ति, न वरुणम्, अतस्तं प्रति गन्तुमित्यर्थः । (वयम्) कदा मृळीकाय, रक्षणाय । (अस्मदीयस्य मनसः) इति शेषः । क्षत्रश्रियम्, क्षत्रं क्षत्रियजातं धनं बलं वा यं श्रयति स क्षत्रश्रीस्तम्, अखिलक्षत्रपतिम् । नरम्, न रिष्यतीत्यविनाशिनम् । उरुचक्षसम्, उरु महच्चक्षो दर्शनं यस्य तं महादर्शनम् । वरुणम् । आ करामहे, अञ्जसाह्वयामः, कृञः शब्विकरणं छान्दसम् ।। ५ ।।

**स्कन्द– कदा** कस्यां वेलायाम् **क्षत्रश्रियम्** क्षत्रं बलं धनं वा श्रयति क्षत्रश्रीर्बलवान् धनवान् वा तं क्षत्रश्रियम् । **नरम्** मनुष्याकारम् **वरुणम् आ करामहे** अर्वागात्माभिमुखं करिष्याम इत्यर्थः । **मृळीकाय** सुखाय जीवितलक्षणायात्मनः । कीदृशम् । **उरुचश्चसम्** बहूनां द्रष्टारं बहुदर्शनं वा । विमोचनविडम्बनात् परिदेवनैषा ।। ५ ।।

**वेङ्कटमाधव–** बलं यः श्रयति **कदा** तम् नेतारम् **वरुणम्** अभिमुखं कुर्मः सुखार्थं बहूनां द्रष्टारम् ।। ५ ।।

**मुद्गल– मृळीकाय** अस्मत्सुखाय **वरुणं कदा** कस्मिन् कर्मण्यागतं करवाम । कीदृशम् । **क्षत्रश्रियम्** बलसेवितम् **नरम्** नेतारम् **उरुचक्षसम्** बहूनां द्रष्टारम् ।। ५ ।।

**सायण– मुळीकाय** अस्मत्सुखाय **वरुणं कदा** कस्मिन् काले **आ करामहे** अस्मिन् कर्मणि आगतं करवाम । कीदृशम् । **क्षत्रश्रियम्** बलसेविनं **नरम्** नेतारं **उरुचक्षसम्** बहूनां द्रष्टारम् ।

क्षत्रश्रियम् । क्षत्राणि श्रयतीति क्षत्रश्रीः । 'क्विब्वचि' (पा.३-२-१७८.२) इत्यादिना क्विप् दीर्घश्च । कृदुत्तरपदप्रकृतिस्वरत्वम् । नरम् । 'ऋदोरप्' इति अबन्तः आद्युदात्तः । करामहे । करोतेः व्यत्ययेन शप् । उरुचक्षसम् । 'चक्षेर्बहुलं शिच्च' (उ.सू.४-६७२) इत्यसुन् । शिद्वद्भावात् ख्याञादेशाभावः ।। ५,१६ ।।

**सिद्धाञ्जनम्– मळीकाय** अपराधक्षमासम्पादनेन सुखाय कदा कस्यां वेलायां **उरुचक्षसं** क्षत्रं बलं श्रयति क्षत्रश्रीः तं नरं नेतारं देव **उरुचक्षसं** विततं यथा तथा द्रष्टारं **वरुणं आ करामहे** अस्मदभिमुखं करिष्यामः? करोतेः व्यत्ययेन शप् ।। ५,१६ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये षोडशो वर्गः ।।

## ।। अथ सप्तदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**तदित्समानमाशाते वेनन्ता न प्र युच्छतः । धृतव्रताय दाशुषे ।। ६ ।।**

तत् । इत् । समानम् । आशातेइति । वेनन्ता । न । प्र । युच्छतः । धृतऽव्रताय । दाशुषे ।।६।।

## ऋग्भाष्यम्

**तत्प्रसादाद् ब्रह्मवायू सममेवावगच्छतः ।**
**वेनन्तौ हि विजानन्तौ तौ हि ज्ञानिवरौ मतौ ।**
**यथाज्ञानं प्रयोगं च दाशुषे कुरुतो न तौ ।**
**अश्विनौ वरुणश्चेत्स्यात् ............ ।। ६ ।।**

**ऋग्भाष्यटीका–** **तदित्** । तत्प्रसादात् । **तत्** तस्माद्वरुणात्तत्प्रसादादिति यावत् । **समानमित्** सममेवाशाते । 'अशू व्याप्तौ' गत्यर्थाः ज्ञानार्थाः अवगच्छतः । कौ । ब्रह्मवायू । कुत एतत् । **वेनन्ताविति** विशेषणसामर्थ्यादित्याशयवान्व्याचष्टे । **वेनन्ताविति** ।। अनेनापि कथं ब्रह्मवायू निश्चीयेते इत्यत आह । **तौ हीति** ।। कथं भूतौ यौ तौ धृतं व्रतं येनासौ धृतव्रतस्तस्मै **धृतव्रताय** । **दाशुषे** यजमानाय । **न प्रयुच्छतो** न प्रयच्छतः । न कुरुतः । किं यथार्थज्ञानं प्रयोगं च कर्मणः योग्यतातिरेकेणेति शेषः । यद्वा 'युच्छ प्रमादे' । यौ तौ धृतव्रताय दाशुषे यथार्थज्ञानं प्रयोगं च न प्रयुच्छतो न कुरुतो विभ्रष्टमिति शेषः । एवं विष्णुपक्षे आशाते इत्यस्याः क्रियायाः कर्तारौ ब्रह्मवायू कथितौ । प्रसिद्धवरुणपक्षे तयोरसम्भवात्कावित्यत आह । **अश्विनाविति** ।। अत्र वरुणशब्देन प्रसिद्धवरुणो विवक्षितः स्याच्चेत्तदाश्विनौ आशाते इत्यस्याः क्रियायाः कर्तारौ ज्ञातव्याविति शेषः ।। ६ ।।

**मन्त्रार्थमञ्जरी–** तत्, तस्मात्, वरुणप्रसादादिति यावत् । वेनन्ता, वेनन्तौ, जानन्तौ, ब्रह्मवायू । (वरुणम्) समानम् इत्, समानमेव । आशाते, 'अशू व्याप्तौ' (धा०१२६५) व्याप्तेर्गतिपर्यायत्वाज्ज्ञानार्थोऽयमत्र धातुः, अवगच्छतः ।। (यौ) वेनन्तौ । धृतव्रताय, धृतं व्रतं येन तस्मै । दाशुषे, यजमानाय । यथार्थज्ञानं कर्मप्रयोगं च न प्र युच्छतः, न प्रयच्छतः,

योग्यतातिरेकेण न कुरुतः, यद्वा– 'युछ प्रमादे' भ्रष्टं न कुरुतः इत्यर्थः। प्रसिद्धवरुणपक्षे– वेनन्ता, वेनन्तौ, अश्विनौ ज्ञेयौ ॥ ६ ॥

**स्कन्द–** इत् शब्दः पदपूरणः। **तत् समानम्** साधारणं वा। सहभूतौ **आशाते** व्याप्नुतो भक्षयतो वा। कौ। द्विवचननिर्देशात् साहचर्याच्च मित्रावरुणौ। **वेनन्ता** कामयमानौ। किं पुनस्तत्। सामर्थ्याद् यद् यजमानः केवलाय हि वरुणाय मित्राय वा हविर्ददाति। **न प्र युच्छतः** युच्छ प्रमादे। न प्रमाद्यतः अवश्यमाशाते इत्यर्थः। किमर्थम्। धृतव्रताय धृतमपरित्यक्तं स्वकर्म येन स धृतव्रतः तस्मै **दाशुषे** यजमानाय। यजमानस्योपकर्तुमित्यर्थः। अथवा एवमन्यथाऽस्या ऋचो योजना– आशाते इति लोडर्थे लट्। तत् समानमश्नुवातां कामयमानौ। आत्मन एवेदं परोक्षरूपेण प्रथमपुरुषेणाभिधानं द्रष्टव्यम्। आवां शुनःशेपहरिश्चन्द्रावश्नवावहा इत्यर्थः। किं तत्। सामर्थ्यादायुः। किं कारणम्। यतो न प्रयुच्छतः। इदमपि पूर्ववत् प्रथमपुरुषेणात्मन एवाभिधानम्। यतो यागे स्तुतौ न प्रमाद्याव इत्यर्थः। किमर्थम्। धृतव्रताय दाशुषे स्वकर्मणामपरित्यक्तृत्वात् घृतव्रतो वरुणः। स एव दाश्वान् स्तोतृभ्यः कामानां दातृत्वात्। तदर्थो वरुणार्थो यो यागः या स्तुतिर्वा तत्र यतो न प्रमाद्याव इत्यर्थः ॥ ६ ॥

**वेङ्कटमाधव–** तदानीमेव सह आगच्छतो मित्रावरुणौ कामयमानौ। न च प्रमाद्यतः धृतकर्मणे यजमानाय कर्मपौष्कल्यार्थमिति ॥ ६ ॥

**मुद्गल– धृतव्रताय** अनुष्ठितकर्मणे। **दाशुषे** हविर्दत्तवते यजमानाय **वेनन्ता** कामयमानौ मित्रावरुणाविति शेषः। तावुभौ **समानम्** साधारणम् **तदित्** अस्माभिर्दत्तं तदेव हविः **आशाते** अश्नुवाते। **न प्रयुच्छतः** कदाचिदपि प्रमादं न कुरुतः ॥ ६ ॥

**सायण– धृतव्रताय** अनुष्ठितकर्मणे **दाशुषे** हविर्दत्तवते यजमानाय **वेनन्ता** कामयमानौ मित्रावरुणाविति शेषः। तावुभौ **समानं** साधारणं **तदित्** अस्माभिर्दत्तं तदेव हविः **आशाते** अश्नुवाते। **न प्र युच्छतः** कदाचिदपि प्रमादं न कुरुतः।

आशाते। अश्नोतेर्लिटि द्विर्भावहलादिशेषौ। 'अत आदेः' (पा.सू.७-४-७) इति आत्वम्। 'अनित्यमागमशासनम्' इति वचनात् 'अश्नोतेश्च' (पा.सू.७-४-७२) इति नुडभावः। वेनन्ता। वेनतिः कान्तिकर्मा। 'सुपां सुलुक्' इति आकारः। प्र युच्छतः। 'युच्छ प्रमादे'।

दाशुषे । 'दाशृ दाने' इत्यस्मात् 'दाश्वान् साह्वान्' इति कसुप्रत्ययो निपातितः । 'वसोः सम्प्रसारणम्' इति संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् ।। ६ ।।

**सिद्धाञ्जनम्– धृतव्रताय** घृतं धिया देहेन प्राणेन च धारितं व्रतं दैव्यं कर्म येन तस्मै, **दाशुषे** स्वीयं देवेभ्यो यथाभागं दत्तवते यजमानाय तस्य प्राप्तव्यलाभायेत्यर्थः, **वेनन्ता** वेनन्तौ कामयमानौ (वेनतिः कान्तिकर्मा) मित्रावरुणौ **तत् इत्** तच्छब्दवाच्यं ऋतं ज्योतिरेव **समानं** साधारणम् तुल्यं वा **आशाते** व्याप्नुतः (अशु व्याप्तौ, लिट्, छान्दसः प्रयोगः)। **न प्रयुच्छतः** न माद्यतः प्रमादं न कुरुतः (युच्छ प्रमादे)। उक्तलक्षणं यजमानं घृतव्रतं न कदाऽप्युपेक्षेते, प्रत्युत तदर्थं तत्पदलब्धिं कामयेते, तच्च व्याप्नुत इत्युक्तं भवति । तच्छब्दवाच्यमुत्तमं सत्यं ज्योतिः तत्र तत्र क्वचित् स्पष्टं क्वचिदस्पष्टं वा संहितायामस्यां द्रष्टव्यम् । अन्यत्रेदं भूमिकायां मन्त्रोदाहरणपूर्वकं विचारितमस्माभिः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**वेदा यो वीनां पदमन्तरिक्षेण पततांम् । वेदं नावः समुद्रियः ।। ७ ।।**

वेदं । यः । वीनाम् । पदम् । अन्तरिक्षेण । पतंताम् । वेदं । नावः । समुद्रियः ।। ७ ।।

## ऋग्भाष्यम्

**.......................आकाशे पक्षिणां पदम् ।**
**वेत्त्यसौ सूक्ष्मविज्ञानात्तथा नावो जलेऽब्धिगः ।**
**मुक्तानां च स्थितिं वेद ज्ञानस्य च गतिं पराम् ।**
**क्षीराब्धिशयनो विष्णुः...............................।। ७ ।।**

**ऋग्भाष्यटीका–** वेदा यः । आकाशे । योऽसौ वरुणो **अन्तरिक्षेण** सप्तम्यर्थे तृतीया । आकाशे । विवक्षाभेदेनाधिकरणस्यैव करणत्वमिति वा । **पततां** गच्छताम् । **वीनां** पक्षिणाम् । **पदं वेद** वेत्ति । कथमेतत् । सूक्ष्मविज्ञानात् । तथा यः **समुद्रियः** समुद्राश्राद्धन् । अब्धिगः जले **नावः** पदं वेद तदिति पूर्वेण सम्बन्धः । ऋचं प्रकारान्तरेण व्याख्याति । **मुक्तानां चेति** ।। यः समुद्रियः समुद्रे भवः क्षीराब्धिशयनो विष्णुरन्तरीक्ष्यत इत्यन्तरिक्षं परं ब्रह्म तेन । पततां

तत्प्रसादात्संसारादुत्पतताम् । वीनां विशिष्टानां मुक्तानाम् । पदं स्थितिं वेद । नयतीति नौर्ज्ञानम् । तस्य ज्ञानस्य च पदं पराङ्गतिं मुख्यं विषयं स्वस्वरूपं वेद ।। ७ ।।

**मन्त्रार्थमञ्जरी–** यः, असौ वरुणः । अन्तरिक्षेण, सप्तम्यर्थे तृतीया, आकाशे । पतताम् वीनाम्, गच्छतां पक्षिणाम् । पदम् । वेद, वेत्ति– सूक्ष्मज्ञानात् । तथा (यः) समुद्रियः, 'समुद्राभ्राद्धः', अब्धिगः । जले– नावः, प्लवस्य । (पदम्) वेद । 'तत्' इति पूर्वेण अन्वयः । यद्वा यः । समुद्रियः, समुद्रे भवः, क्षीराब्धिगः । (वरुणः) वरानन्दो विष्णुः । अन्तरिक्षेण, अन्तरीक्ष्यत इत्यन्तरीक्षेण परब्रह्मणा, ईक्षतेः कर्मण्यकारप्रत्ययः, धात्वादेर्ह्रस्वता, अन्तरिक्षप्रसादेनेति यावत् । पतताम्, संसृतेरुत्पताम् । वीनाम् । विशिष्टानाम्, मुक्तानाम् । पदम्, स्थितिम् । वेद । नयत्युन्नयतीति नौर्ज्ञानम्, तस्य नावः । (पदम्), मुख्यविषयं स्वस्वरूपम् । (च) वेद । 'तत्' इत्यन्वयः ।। ७ ।।

**स्कन्द–** यः कीदृशो वरुणः उच्यते– 'वेदा यो वीनाम्' इति । **वेद** जानाति **यः** वरुणः **वीताम्** पक्षिणाम् **पदम् अन्तरिक्षेण पतताम्** गच्छताम् । दुर्ज्ञानं हि पांसुवर्जितेनान्तरिक्षेण गच्छतां पदम् । न च वीनामेव केवलम् । किं तर्हि । **वेद नावः** पदमपि **समुद्रियः** समुद्रियाया समुद्रे भवायाः । समुद्रेण गच्छन्त्या इत्यर्थः । एतदपि दुर्ज्ञानमेव ।। ७ ।।

**वेङ्कटमाधव–** प्रजानाति **यः अन्तरिक्षेण** गच्छतां पक्षिणाम् आवासस्थानं यत्र सायं वसन्ति । **वेद च नावः** समुद्रेण गच्छन्तीः । मनुष्यास्तु पततः पश्यन्ति विसृज्यमानाश्च नावः । न तु तेषामावासम्, न च विसर्गस्थानमिति ।। ७ ।।

**मुद्गल– अन्तरिक्षेण पतताम्** आकाशमार्गेण गच्छताम् **वीनाम्** पक्षिणाम् । **पदम् यः** वरुणः वेद । तथा **समुद्रियः** समुद्रेऽवस्थितो वरुणः **नावः** जले गच्छन्त्याः पदम् **वेद** जानाति । सोऽस्मान् बन्धनात् मोचयतु इति शेषः ।। ७ ।।

**सायण– अन्तरिक्षेण पतताम्** आकाशमार्गेण गच्छतां **वीनां** पक्षिणां **पदं यः** वरुणः **वेद** । तथा **समुद्रियः** समुद्रेऽवस्थितः वरुणः **नावः** जले गच्छन्त्याः पदं **वेद** जानाति सोऽस्मान् बन्धनान्मोचयस्विति शेषः ।

वेद । 'विद ज्ञाने' । 'विदो लटो वा' (पा.सू.३-४-८३) इति तिपो णल् । लित्स्वरेणा-द्युदात्तत्वम् । 'व्द्यचोऽतस्तिङः' इति संहितायां दीर्घः । वीनाम् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । पतताम् । शपः पित्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वरः । नावः । 'सावेकाचः' इति षष्ठ्या उदात्तत्वम् । समुद्रियः । भवार्थे 'समुद्राभ्राद्धः' (पा.सू.४-४-११८) इति घप्रत्ययः ।। ७ ।।

**सिद्धाञ्जनम्– अन्तरिक्षेण** आकाशमार्गेण पतताम् गच्छताम् **वीनाम्** पक्षिणाम् पदम् स्थानं **यः** वरुणः **वेद** जानाति, **समुद्रियः** समुद्रेऽवस्थितः यो वरुणः **नावः** प्लवस्य पदं **वेद** जानाति, स निषसादेति पुरस्तात् सम्बन्धः, अथवा 'स बन्धवान् मोचयत्वस्मानिति शेषः' इति पूर्वव्याख्या वा भवतु । यद्यदस्माकमविदितं दुर्बोधं वा भवति तत्सर्वं वरुणस्य सुविदितमिति विवक्षा । तर्हि वीनां पदं नीडं विदितमेव सामान्यजनस्थापि, तथा नावो गन्तव्यं स्थानं नाविकस्य चेति स्थिते, कथं दुर्विदं ईदृशं पदं वरुणो वेदेत्याह ? मतिवृत्तयः प्राक् पक्षिभिरुपमिताः स्मार्याः । विषयानुपादानेन विषयिणः कथनमिह ज्ञेयम् । विभिः मतयो लक्षिताः । सर्वासां वृत्तीनां गन्तव्यं परमं पदं दुर्विदं नः, वरुणस्य तु विदितम् । एवं नावा जीवयात्रा लक्ष्यते । अपरिमिताखण्डसत्त्वः समुद्रः, तत्रस्थो भगवान् वरुणः सर्वं जानाति ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**वेदं मासो धृतव्रतो द्वादश प्रजावतः । वेदा य उपजायते ।। ८ ।।**

वेदं । मासः । धृतऽव्रतः । द्वादश । प्रजाऽवतः । वेदं । यः । उपऽजायते ।। ८ ।।

## ऋग्भाष्यम्

**...........................कालं कालोद्भवैः सह ।**
**य आत्मनः समीपे च जायते तं च पद्मजम् ।**
**मुक्तं वा..........................................।। ८ ।।**

**ऋग्भाष्यटीका– वेद मासः** । कालम् । धृतं व्रतं कर्म येनासौ **धृतव्रतो** वरुणः । **प्रजावतः** प्रजायन्त इति प्रजाः कार्याणि । तद्युक्तान् **द्वादश मासो** मासान् **वेद** । मासशब्दपर्यायो

मासूशब्दः । तत्तत्कालोद्भवैः कार्यैः सह सकलं कालं च वेदेति यावत् । यश्चोपाऽऽत्मनः समीप एव जायते न तु व्यवधानेन तं पद्मजं च वेद । अव्यवधानेन जन्मप्रदर्शनाय पद्मजमित्युक्तम् । यद्वा **य** आत्मन **उप** समीपे **जायते** प्रवर्तते सामीप्यादिमान् भवति तं मुक्तं वेद । जातावेकवचनम् ॥ ८ ॥

**मन्त्रार्थमञ्जरी–** धृतं व्रतं सर्वं कर्म येनासौ धृतव्रतः वरुणः । प्रजावतः, प्रकर्षेण जायन्त इति प्रजाः कार्याणि, तद्वतः कार्ययुक्तान् । द्वादश । मासः, मासान् । वेद, मासशब्दपर्यायोऽत्र मासूशब्दः, तत्तत्कालोद्भवैः कार्यैः सह सकलं कालं च वेदेति यावत् । यः (च) उपजायते, उपात्मनः समीपे– अव्यवधानेन जायते । (तम्), पद्मजम् । (च) वेद । यद्वा उपजायते, आत्मनः उप समीपे जायते वर्तते सामीप्यादिमान्भवति मुक्तः, जातावेकवचनम् । (तान्) वेद । इति ॥ ८ ॥

**स्कन्द–** यश्च **वेद सामः** मासान् **घृतव्रतः** अपरित्यक्तस्वकर्मा **द्वादशः** । कीदृशान् । **प्रजावतः** प्रतननवतः । उत्पत्तिमत इत्यर्थः । अथवा प्रजासहितान् । प्रजा अपि वेदेत्यर्थः । न च द्वादशैव केवलान् । किं तर्हि । वेद **यः** योऽयम् **उपजायते** अधिकमासस्त्रयोदशः तमपि ॥ ८ ॥

**वेङ्कटमाधव– वद द्वादश** मासान् धृतसन्ध्यावन्दनादिकर्मा स्वेस्वे काले प्रजायमानानृतुलिङ्गैः । त्रयोदशमुपजायमानमधिमासं च वेति ॥ ८ ॥

**मुद्गल– धृतव्रतः** स्वीकृतकर्मविशेषः यथोक्तमहिमोपेतो वरुणः **प्रजावतः** तदा तदोत्पद्यमान-प्रजायुक्तान् **द्वादश मासः** चैत्रादीन् फाल्गुनान्तान् **वेद** जानाति । **यः** त्रयोदशोऽधिकमास **उपजायते** सवत्सरसमीपे स्वयमेव उत्पद्यते तमपि वेद ॥ ८ ॥

**सायण– धृतव्रतः** स्वीकृतकर्मविशेषो यथोक्तमहिमोपेतो वरुणः **प्रजावतः** तदा तदोत्पद्यमान-प्रजायुक्तान् **द्वादश मासः** चैत्रादीन् फाल्गुनान्तान् **वेद** जानाति । **यः** त्रयोदशोऽधिकमासः **उपजायते** संवत्सरसमीपे स्वयमेवोत्पद्यते तमपि वेद । वाक्यशेषः पूर्ववत् ।

मासः । 'पद्न्' (पा.सू.६-१-६३) इत्यादिना मासशब्दस्य मास् इति आदेशः । 'ऊडिदम्'

इत्यादिना शस उदात्तत्वम् । द्वादश । द्वौ च दश च इति द्वन्द्वः । 'द्व्यष्टनः संख्यायाम्' (पा.सू. ६-३-४७) इति आत्वम् । 'संख्या (पा.सू.६-२-३५) इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वम् । प्रजावतः । 'जनी प्रादुर्भावे'। प्रपूर्वात् जनसनखनक्रमगमो विट्प्रत्ययः (पा.सू.३-२-६७)। 'विड्वनोः' (पा.सू.६-४-४१) इति आत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । प्रजा एषां सन्तीति 'तदस्यास्त्यस्मिन्निति मतुप्' (पा.सू.५-२-९४) । 'मादुपधायाः' (पा.सू.८-२-९) इति मतुपो वत्वम् । उपजायते । जनेः कर्मकर्तरि लट् । कर्मवद्भावात् आत्मनेपदं यक् (पा.सू.३-१-८७) । 'जनादीनामुपदेश एवात्वं वक्तव्यम्' (पा.सू.६-१-१९५.३) इति वचनात् 'अचः कर्तृयकि' (पा.सू.६-१-१९५ ) इत्याद्युदात्तत्वम् । 'तिङि चोदात्तवति' (पा.सू.८-१-७१) इति उपसर्गस्य निघातः । न च 'तिङ्ङतिङः' इति निघातः, 'यद्वनित्यम्' इति प्रतिषेधात् ॥ ८ ॥

**सिद्धाञ्जनम्**– यश्च देवः **घृतव्रतः** स्वकर्मणो धर्ता स्वीयकर्मसु ध्रुव इत्यर्थः, **प्रजावतः** उत्पत्तिमतः, जनी प्रादुर्भावे, प्रपूर्वकः, **द्वादश** द्वौ च दश चेति द्वन्द्वसमासः, **मासः** मासान्, मासशब्दस्य मासादेशः, **वेद** जानाति । यश्च **यः मासः, उपजायते** अधिको जायते तमपि **वेद** जानाति । वाक्यशेषः पूर्ववत् । अधिमासः रविमासाद् अधिको मासश्चान्द्र एकः, 'यस्त्रयोदशोऽधिकमास उपजायते संवत्सरसमीपे' इति सायणीयम् । अत्र सौरमानापेक्षया चान्द्रस्याधिमासस्य प्रसक्तिदैवज्ञसमालोचनास्पदं भवति । अत्रापि न केवलं कालज्ञानं वरुणस्योक्तम्, तत्तु मानुषस्यापि देवविदो भवति । किं तर्हि विवक्षितम् ? कालनियमानुसारेण बहिरन्तर्वा अध्यण्डमधिपिण्डं च सर्वो व्यवहारः सम्पद्यते, तादृशकालगतिरहस्यं सर्वनियामकस्य धृतव्रतस्य वरुणस्येति मन्त्रसारांशः ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः । वेदा ये अध्यासते ॥ ९ ॥**

वेद । वातस्य । वर्तनिम् । उरोः । ऋष्वस्य । बृहतः । वेद । ये । अधिऽआसते ॥ ९ ॥

## ऋग्भाष्यम्

**.........वर्तनां वायोर्महतोऽतिप्रकाशिनः ।**

**बृहतो ज्ञानिनश्चैव बृहतो महतोऽपि वा ।**
**अधिकानि पदान्येव देवा अध्यासतेऽपि तान् ।। ९ ।।**

**ऋग्भाष्यटीका– वेद वातस्य** । वर्तनाम् । अत्रोरोर्बृहत इति पर्यायौ । पौनरुक्त्यपरिहारार्थ-मुरोरिति तावद्व्याख्याति । **महत इति** ।। परिमाणादिगुणैः । बृहत इत्येतदृष्वस्येत्येतद्विशेषणतया व्याख्याति । **अतिप्रकाशिन इति** ।। ऋष्वशब्दो बलवत्प्रकाशस्यापि वाचकः । ब्राह्मप्रकाश-वचनत्वमुक्तं ज्ञानप्रकाशमादायापि बृहतः ऋष्वस्येति विशेषणविशेष्यभावेन व्याख्याति । **बृहत इति** ।। एवशब्दोऽस्यार्थस्य मुख्यत्वं द्योतयति । यद्वा बृहत इत्येतदुरोरित्येतस्यैव विशेषण-मित्याह । **बृहत इति** ।। उरोरित्युक्ते ह्युपचारेणापि महत्त्वं शङ्क्येत । तन्माशङ्क्षीति बृहत इत्यनेनोरुत्वं विशेष्यत इत्यर्थः । ततश्च **उरोर्ऋष्वस्य बृहतो वातस्य** । **वर्तनिं** वर्तनां प्रवृत्तिं **वेद** । **ये** देवा **अधि** अधिकान्येव पदानि **अध्यासते**ऽधितिष्ठन्ति तानपि वेदेति । अत्राधीत्येतदावृत्त्या योजितमिति ज्ञातव्यम् ।। ९ ।।

**मन्त्रार्थमञ्जरी–** (वरुणः) उरोः परिमाणादिगुणैर्महतः । 'बृहतः, ऋष्वस्य' इति विशेषण-विशेष्यभावः, बृहत्प्रकाशवतः, ऋष्वशब्दो बलस्येव प्रकाशस्यापि वाचकः, अर्शआदित्वादच्, बृहज्ज्ञानिन इति वा, ज्ञानस्यान्तरप्रकाशत्वात् । वातस्य, वायोः । वर्तनिम्, प्रवृत्तिम् । वेद । ये, देवाः । अध्यासते, अधिकान्येव पदान्यध्यासतेऽधितिष्ठन्ति, 'अधि' इत्यस्यावृत्तिः । (तानपि) वेद ।। ९ ।।

**स्कन्द– वेद वातस्य वर्तनिम्** गमनमागमनम् । कीदृशस्य । **उरोः** विस्तीर्णस्य **ऋष्वस्य** महन्नामैतत् (तु.निघ.३-३) । महतः बलवत् इत्यर्थः । **बृहतः** एतदपि महन्नामैव (निघ.३-३) । वेगेन सम्बन्धेन त्वपुनरुक्ति कर्तव्यम् । महतः । वेगेन शीघ्रस्येत्यर्थः । यश्च **वेद ये अधि** सर्वस्योपरि द्युलोके **आसते** देवाः तान् । य एतानि वेद तस्मै वरुणाय 'न प्रयुच्छतः । धृतव्रताय दाशुषे' (ऋ.१-२५-६) इत्येवं यच्छब्दस्य पूर्वयैकवाक्यता । यच्छब्दश्रुतेस्तच्छब्द-मध्याहृत्योत्तरयैकवाक्यता वा योग्या । य एतानि वेद सः ।। ९ ।।

**वेङ्कटमाधव– वेद** वायोः आवासस्थानं विस्तीर्णस्य दर्शनीयस्य महतः । वेद च नक्षत्राणि यानि दिवि **अध्यासते** ।। ९ ।।

**मुद्गल–** **उरोः** विस्तीर्णस्य **ऋष्वस्य** दर्शनीयस्य **बृहतः** गुणैरधिकस्य **वातस्य** वायोः **वर्तनिम्** मार्गम् **वेद** वरुणो जानाति । ये देवाः **अध्यासते** उपरि तिष्ठन्ति तानपि **वेद** जानाति ।। ९ ।।

**सायण–** **उरोः** विस्तीर्णस्य **ऋष्वस्य** दर्शनीयस्य **बृहतः** गुणैरधिकस्य **वातस्य** वायोः **वर्तनिं** मार्गं **वेद** वरुणो जानाति । **ये** देवाः **अध्यासते** उपरि तिष्ठन्ति तानपि **वेद** जानाति ।

वातस्य । 'असिहसि' इत्यादिना तन्प्रत्ययान्तो वातशब्दो नित्त्वादाद्युदात्तः । वर्तनिम् । वर्ततेऽनेनेति । 'वर्तनिः स्तोत्रे' (पा.सू.६-१-१६०.ग.) इति स्तोत्रवाचकस्य वर्तनिशब्दस्य अन्तोदात्तत्वसिद्ध्यर्थं उञ्छादिषु पाठात् अस्य प्रत्ययस्वरेण मध्योदात्तत्वे प्राप्ते व्यत्यये-नान्तोदात्तत्वम् । बृहतः । 'बृहन्महतोरुपसङ्ख्यानम्' इति ङस उदात्तत्वम् । अध्यासते । लसार्वधातुकानुदात्तत्वे सति धातुस्वरः ।। ९ ।।

**सिद्धाञ्जनम्–** **उरोः** विस्तृतस्य **ऋष्वस्य** उत्कृष्टस्य **बृहतः** महतः, प्रभावतः प्रमाणतोऽपि विपुलस्येत्यर्थः, **वातस्य** वायोः जगत्प्राणस्य **वर्तनिम्** मार्गं यो **वेद** जानाति, **ये** देवाः **अधि** उपरि आसते आसीना भवन्ति, तानपि यो वरुणो वेद जानाति, वाक्यशेषः पूर्ववत् । ऋष्वस्य दर्शनीयस्येति सायणः, महत इति स्कन्दस्वामी । ऋष्वऽवीरः, ऋष्वऽओजाः इत्यादौ महत्त्वार्थं उपपन्नतरो लक्ष्यते । तस्माद् ऋष्व उत्कृष्ट इति व्याख्यातम् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**नि षसाद धृतव्रतो वरुणः पस्त्या३स्वा । साम्राज्याय सुक्रतुः ।। १०, १७ ।।**

नि । षसाद । धृतऽव्रतः । वरुणः । पस्त्यासु । आ । साम्ऽराज्याय । सुऽक्रतुः ।। १०, १७ ।।

## ऋग्भाष्यम्

**साम्राज्याय स पस्त्यासु निषसाद प्रजासु च ।**
**सुज्ञानः................................।। १०, १७ ।।**

ऋग्भाष्यटीका– **निषसाद** । साम्राज्याय । सुक्रतुः सुज्ञानः । धृतव्रतः सः **वरुणः** ।

**साम्राज्याय** सकलपरिपालनाय । **पस्त्यासु** प्रजासु । **निषसाद** अधिष्ठितवान् । चशब्दात् गृहेष्विति च समुच्चिनोति ।। १०, १७ ।।

**मन्त्रार्थमञ्जरी–** सुक्रतुः, सुज्ञानः । धृतव्रतः वरुणः । साम्राज्याय, सकलपरिपालनाय । पस्त्यासु, प्रजासु गृहेषु च । आ नि ष (स) साद, प्रजा गृहाश्चाधिष्ठितवान् ।। १० ।।

**स्कन्द–** **नि षसाद** निषीदति **धृतव्रतः वरुणः** । क्व । **पस्त्यासु** 'पस्त्यम्' (निघ.३-४) इति गृहनाम । कुटीत्वाभिप्रायमेतत् लोकपालत्वात् सर्वेषु गृहेषु वा । आकारस्तु पदपूरणः । किमर्थम् । **साम्राज्याय** सर्वयज्ञस्याधिपत्याय । कीदृशः । **सुक्रतुः** सुकर्मा सुप्रज्ञो वा ।।१०।।

**वेङ्कटमाधव–** स निषीदति धृतकर्मा वरुणः गृहभूतासु नदीषु साम्राज्यं कुर्वन् सुप्रज्ञः ।। १० ।।

**मुद्गल–** **धृतव्रतः** पूर्वोक्तः **वरुणः पस्त्यासु** दैवीषु प्रजासु **आ नि षसाद** आगत्य निषण्णवान् । किमर्थम् । प्रजानाम् **साम्राज्याय** साम्राज्यसिद्ध्यर्थम् । **सुक्रतुः** शोभनकर्मा ।। १० ।।

**सायण–** **धृतव्रतः** पूर्वोक्तः **वरुणः पस्त्यासु** दैवीषु प्रजासु **आ नि षसाद** आगत्य निषण्णवान् । किमर्थम् । प्रजानां साम्राज्यसिद्ध्यर्थं **सुक्रतुः** शोभनकर्मा ।

नि षसाद । 'सदिरपतेः' (पा.सू.८-३-६६) इति षत्वम् । साम्राज्याय । सम्राजो भावः साम्राज्यम् । 'गुणवचनब्राह्मणादिभ्यः' (पा.सू.५-१-१२४) इति ष्यञ् । 'नित्यादिनित्यम्' इत्याद्युदात्तत्वम् । सुक्रतुः । 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् ।। १०,१७ ।।

**सिद्धाञ्जनम्–** **धृतव्रतः** दैव्यस्य कर्मणो धर्ता **वरुणः** देवः **पस्त्यासु** दैवीषु वासभूमिषु (पस्त्यमिति गृहनाम, प्रजास्विति सा०) **आ** सर्वतः व्याप्य निषसाद निषण्णो भवति । किमर्थम्? **साम्राज्याय** सम्राजो भावः तस्मै सम्राट्त्वनिर्वाहायेत्यर्थः । कीदृशः? **सुक्रतुः** सुकर्मा सुप्रज्ञो वा, विश्वसाम्राज्यनिर्वाहाय साधु प्राज्ञं दृढमिच्छाबलमपेक्षितम् । तदिदं विशेषणम् ।। १०,१७ ।।

**।। इति प्रथमाष्टके द्वितीयाध्याये सप्तदशो वर्गः ।।**

## ।। अथ अष्टादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति । कृतानि या च कर्त्वा ।। ११ ।।**

अतः । विश्वानि । अद्भुता । चिकित्वान् । अभि । पश्यति । कृतानि । या । च । कर्त्वा ।।११।।

## ऋग्भाष्यम्

**.........तत्र सन्विश्वान्यद्भुतानि च पश्यति ।**
**कर्ता चिकित्वान्स कृतकर्तव्यानि च पश्यति ।। ११ ।।**

**ऋग्भाष्यटीका– अतो विश्वानि** । तत्र सन् । अतः सप्तम्यर्थे तस् । अत्र तत्र प्रजासु गृहेषु सन्वर्तमानः । **चिकित्वान्** कर्ता 'कित निवास' इत्ययं करणेऽपि वर्तते । स वरुणो **विश्वानि** च सर्वाण्यपि **अद्भुतानि** आश्चर्याणि **अभि पश्यति** । किञ्च । **या** यानि वस्तूनि **कृतानि** । यानि च कर्त्वा कर्तव्यानि । कृत्यार्थ इति त्वन् । तानि कृतकर्तव्यानि च पश्यति ।। ११ ।।

**मन्त्रार्थमञ्जरी–** अतः, सप्तम्यर्थे तसिः, अत्र, प्रजासु गृहेषु वा वर्तमानः । चिकित्वान्, कर्ता, 'कित निवासे' इत्ययं 'कित करणे' इत्यप्यस्ति, लिट् क्वसुः । (सः) वरुणः । विश्वानि (च) सर्वाण्यपि । अद्भुता । अद्भुतानि, आश्चर्याणि । **अभिपश्यति** । किं च, या, यानि, वस्तूनि । कृतानि । (या) यानि । च । कर्त्वा, कर्तव्यानि, कृञः 'कृत्यार्थे' इत्यादिना त्वन् । (तानि) च (अभि) पश्यति ।। ११ ।।

**स्कन्द– अतः** इति पञ्चमीनिर्देशादागत्येति शेषः । अतो द्युलोकादागत्य । अथवा अत इति सप्तम्यर्थे पञ्चमी । अत्र पृथिव्याम् । **विश्वानि** सर्वाणि **अद्भुता** महान्ति शुभान्यशुभानि वा कर्माणि **चिकित्वान्** ज्ञाता वरुणः लोकपालत्वात् **अभि पश्यति** यस्य प्राणिनो यान्यशुभानि शुभानि वा कर्माणि तस्य लोकपालत्वात् प्रत्यवेक्षत इति **कृतानि** यानि **या** च **कर्त्वा** यानि कर्तव्यानि । य इदं करोति ।। ११ ।।

**वेङ्कटमाधव–** अस्माद् वरुणादेवजातीयकानि **विश्वानि** आश्चर्याणि प्राज्ञः **अभि पश्यति**, यान्यनेन कृतानि यानि च कर्तव्यानि ।। ११ ।।

**मुद्गल– अतः** अस्मात् वरुणात् **विश्वानि अद्भुता** सर्वाणि आश्चर्याणि **चिकित्वान्** प्रज्ञावान् **अभि पश्यति** सर्वतोऽवलोकयति । **या कृतानि** यानि आश्चर्याणि पूर्वं वरुणेन सम्पादितानि । चकारात् अस्यानि यान्याश्चर्याणि **कर्त्वा** इतः परं कर्तव्यानि । तानि सर्वाण्यभिपश्यतीति पूर्वत्रान्वयः ।। ११ ।।

**सायण– अतः** अस्मान् वरुणात् **विश्वानि अद्भुता** सर्वाण्याश्चर्याणि **चिकित्वान्** प्रज्ञावान् **अभि पश्यति** सर्वतोऽवलोकयति **या कृतानि** यान्याश्चर्याणि पूर्वं वरुणेन संपादितानि । चकारात् अन्यानि यान्याश्चर्याणि **कर्त्वा** इतः परं कर्तव्यानि तानि सर्वाण्यभिपश्यतीति पूर्वत्रान्वयः ।

अद्भुता । 'शेश्छन्दसि बहुलम्' (पा.सू.६-१-७०) इति शेर्लोपः । प्रत्ययलक्षणेन 'नपुंसकस्य झलचः' (पा.सू.७-१-७२) इति नुम् । नलोपः । चिकित्वान् । 'कित ज्ञाने' । लिटः कसुः । अभ्यासहलादिशेषचुत्वानि । 'वस्वेकाजाद्धसाम्' इति नियमात् इडभावः । रुत्वानुनासिकावुक्तौ संहितायाम् । पश्यति । 'पाघ्रा' इत्यादिना दृशेः पश्यादेशः । कर्त्वा । 'कृत्यार्थे तवैकेन्केन्यत्वनः' (पा.सू.३.४.१४) इति करोतेः त्वन् । नित्त्वादाद्युदात्तत्वम् । पूर्ववत् शेर्लोपः ।। ११ ।।

**सिद्धाञ्जनम्– अतः** यत्र ऊर्ध्वं 'पस्त्यासु' निषण्णः साम्राज्याय, तत इत्यर्थः । चिकित्वान् ज्ञानवान् वरुणः कर्ता अध्याहार्यः । विश्वानि सर्वाणि **अद्भुता** आश्चर्याणि **अभि पश्यति** सर्वतोऽवलोकयति । यानि **कृतानि** भूतानि अद्भुतानि **या च** यानि च **कर्त्वा** कर्तव्यानि भावोनि अद्भुतानि तानि सर्वाण्यभिपश्यति । कर्त्वाकरोतेः कृत्यार्थे त्वन् । चिकित्वान्- 'कित ज्ञाने, लिटः क्वसुन् । सायणस्त्वेवं मन्यते– 'अतः' वरुणात् 'चिकित्वान्' प्रज्ञावान् अद्भुतान्यभिपश्यतीति । अव चिकित्वान् कोऽपि प्राज्ञः किल ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**स नो॑ वि॒श्वाहा॑ सु॒क्रतु॑रादि॒त्यः सु॒पथा॑ करत् । प्र ण॒ आयूं॑षि तारिषत् ।। १२ ।।**

सः । नः॒ । वि॒श्वाहा॑ । सु॒ऽक्रतुः॑ । आ॒दि॒त्यः । सु॒ऽपथा॑ । क॒र॒त् ।। प्र । नः॒ । आयूं॑षि । ता॒रि॒ष॒त् ।।

## ऋग्भाष्यम्

**विश्वान्यहानि नो देवः सुपथानि करोत्वसौ ।**
**ददात्वायूंषि नो नित्यं मुक्तौ वा..........।। १२ ।।**

**ऋग्भाष्यटीका– स नः** । विश्वानि । **सोऽसौ सुक्रतुरादित्यो** देवो **विश्वाहा** विश्वानि सर्वाण्यहानि दिनानि । **नोऽ**स्माकम् । **सुपथा** सुपथानि । निर्विघ्नानीति यावत् । **करत्** करोतु । नोस्माकमायूंषि तारिषत् । तरतिर्दानार्थः । लेट् । ददातु । इदं प्रार्थनं मुक्तौ मुख्यमन्यदा तूपचार इत्याह । **नित्यं मुक्तौ वेति** ।। १२ ।।

**मन्त्रार्थमञ्जरी–** सः, असौ । सुक्रतुः आदित्यः (देवः) । विश्वाहा, विश्वानि–सर्वाण्यहा–अहानि । नः, अस्माकम् । सुपथा, सुपथानि, निर्विघ्नानीति यावत् । करत्, करोतु, लोडर्थे लङ्, शब्विकरणम्, अडभावः । नः, अस्माकम् । आयूंषि । प्र तारिषत्, तरतिः दानार्थः, लेट्, अडागमसिप्प्रत्ययौ, इट् (सिपो णित्त्वेन) धातोर्वृद्धिः, ददातु ।। १२ ।।

**स्कन्द– सः नः** अस्यान् **विश्वाहा** निपातोऽयं सर्वेष्वहःस्वित्यस्मिन्नर्थे वर्तते । सर्वदा । **सुक्रतुः** सुप्रज्ञः सुकर्मा वा **आदित्यः सुपथा करन्** करोतिः क्रियासामान्यवचनः । सामर्थ्यादत्र नयने वर्तते । शोभनेन पथा नयतु । सर्वदाऽभिप्रेतेषु तं तं पन्थानमुपदिशतु येन प्रवृत्ता वयमभिप्रेतानि प्राप्नुमित्यर्थः । किञ्च **प्र नः आयूंषि तारिषत्** प्रपूर्वस्तरतिर्वर्धने । वर्धयतु नः अस्माकमायूंषि ।। १२ ।।

**वेङ्कटमाधव– सः** अस्मान् सर्वदा **सुक्रतुः आदित्यः** शोभनेन पथा कृणोतु । अस्माकम् । आयुंषि च प्र तारयतु ।। १२ ।।

**मुद्गल– सुक्रतुः** शोभनप्रज्ञः **सः आदित्यः** वरुणः **विश्वाहा** सर्वेषु अहस्सु **नः** अस्मान् **सुपथा** शोभनमार्गेण सहितान् **करत्** करोतु । किञ्च **नः** अस्माकम् **आयूंषि प्र तारिषत्** प्रवर्धयतु ।। १२ ।।

**सायण– सुक्रतुः** शोभनप्रज्ञः **सः आदित्यः** वरुणः **विश्वाहा** सर्वेष्वहस्सु **नः** अस्मान् **सुपथा** शोभनमार्गेण सहितान् **करत्** करोतु । किं च **नः** अस्माकम् **आयूंषि प्र तारिषत्** प्रवर्धयतु ।

सुपथा । 'स्वती पूजायाम्' (पा.म.२-२-१८-४) इति समासे 'न पूजनात्' (पा.सू.५-४-६९) इति समासान्तप्रतिषेधः । अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । 'क्रत्वादयश्च' (पा.सू.६-२-११८) इत्येतन्न भवति अबहुव्रीहित्वात् । बहुव्रीहौ हि तद्विधीयते । आद्युदात्तं द्व्यच्छन्दसि' (पा.सू.६-२-११९) इत्येतदपि न भवति, पथिन्शब्दस्य अन्तोदात्तत्वात् । करत् । करोतेर्लेटि व्यत्ययेन शप् । शपो लुकि 'लेटोऽडाटौ' इति अडागमः । 'इतश्च लोपः' इति इकारलोपः । यद्वा । छान्दसे लुङि 'कृमृदृरुहिभ्यः' (पा.सू.३.१.५९) इति च्लेः अङ् । 'ऋदृशोऽङि गुणः' (पा.सू.७.४.१६) इति गुणः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । प्र नः । 'उपसर्गाद्बहुलम्' (पा.सू.८.४.२८) इति नसो णत्वम् । तारिषत् । तारयतेः लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । 'आदेशप्रत्यययोः' इति षत्वम् ।। १२ ।।

**सिद्धाञ्जनम्– सः** प्रस्तुतः **सुक्रतुः** शोभनकर्मा **आदित्यः** अदितिपुत्रः वरुणः **विश्वाहा** सर्वेष्वहःस्वित्यस्मिन्नर्थे निपातः, सर्वदा **नः** अस्मान् सुपथा शोभनेन मार्गेण सहितान् करत् करोतु, करोतेर्लेट्, सहितानित्यध्याहारः सायणीये । 'नः विश्वाहा सुपथा करत्' अस्माकं सर्वाण्यहानि सुपथानि शोभनमार्गनीतानि करोतु, न केवलं साकल्येन सर्वदा, अपि तु एकैकं दिनं सुनीतं करोत्वित्यर्थ उपपद्यते । **नः** अस्माकं **आयूंषि प्रतारिषत्** वर्धयतु, आयुष्मन्तः स्याम वरुणप्रसादात् । प्रपूर्वकस्तरतिर्वर्धनार्थः ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् । परि स्पशो नि षेदिरे ।। १३ ।।**

बिभ्रत् । द्रापिम् । हिरण्ययम् । वरुणः । वस्त । निःऽनिजम् । परि । स्पशः । नि । सेदिरे ।।

## ऋग्भाष्यम्

**......................अतिद्रुतभ्रमम् ।**
**हितं च रमणीयं च चक्रं स्वर्णं च वर्णतः ।**
**अविभ्रच सुनिर्णिक्तं शुद्धं वस्त्रमवस्त च ।**
**अविज्ञातचरा देवाः स्पशस्तस्य निषेदिरे ।**
**परितोवरुणः पाशमबिभ्रद्द्रुतबन्धनम् ।। १३ ।।**

**ऋग्भाष्यटीका– बिभ्रत्** । अतिद्रुत । **वरुणो द्रापिं** द्रुगतौ आप्लृव्याप्तौ आभ्यामिकार-प्रत्ययः । आद्यस्य चाकारः । द्रुतमाप्नोतीति द्रापिः । तं द्रापिम् अतिद्रुतभ्रमम् । **हिरण्ययं** हितं च रमणीयं च । हिरण्मयं वा । निपातनात्साधुः । ततश्च वर्णतः स्वर्णं स्वर्णसदृशम् । चक्रं सुदर्शनम् । **बिभ्रत्** अबिभ्रत् । विकरणव्यत्यासो द्विर्वचनं च छान्दसः । वचनव्यत्यासो वा । अबिभः शत्रन्ततयाप्युपपन्नमिति चेत् सत्यम् । प्रकारान्तरमेतत् । किञ्च । **निर्णिजं** सुनिर्णिक्तं णिजिर्शौचे । शुद्धं वस्त्रमिति शेषः । **वस्त** अवस्त । आच्छादितवान् । **स्पशो**ऽविज्ञातचरा देवाः । **परि** तस्य तं वरुणं परितः । **निषेदिरे** सेवायै निषण्णाः प्रसिद्धवरुणे योजयति । **वरुण इति** ।। प्रसिद्धो वरुणो द्रापिं पूर्ववत् । द्रुतबन्धनमिति यावत् । पाशमबिभ्रदिति ।। १३ ।।

**मन्त्रार्थमञ्जरी–** वरुणः । द्रापिम्, 'द्रु गतौ' 'आप्लृ व्याप्तौ', आभ्यामिकारप्रत्ययः, आद्यस्याकारः, द्रुतमाप्नोतीति द्रापिस्तं द्रापिमतिद्रुतभ्रमणम् । हिरण्ययम्, हितं च रमणीयं च हिरण्ययम्, हिरण्मयम् 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' इति षष्ठान्ते निपातनात्साधुः, स्वर्णसदृशं चक्रम् । बिभ्रत्, अबिभ्रत्, शब्विकरणं द्विर्वचनं च च्छान्दसम् । किं च, निर्णिजम्, निर्णिक्तम्, 'णिजिर् शौचे' शुद्धम् । (वस्त्रम्) इति शेषः । वस्त, अवस्त, आच्छादितवान्, 'वस आच्छादने' लङ् । 'बिभ्रत्' इति शत्रन्ततया 'द्रापिम् हिरण्ययम् । बिभ्रत्, दधानः । 'निर्णिजम् वस्त' इत्येकान्वयो वा । स्पशः, अविज्ञातचरा देवाः । परि (तस्य) तं वरुणं परितः । नि षे(से)दिरे, सेवायै निषण्णाः । प्रसिद्धवरुणपक्षे द्रापिम्, द्रुतमाप्नोतीत्युक्तदिशा पाशम् । बिभ्रत्, अबिभ्रदित्यर्थः । शिष्टं प्राग्वत् ।। १३ ।।

**स्कन्द– बिभ्रत्** उदयोत्तरकालं धारयन् **द्रापिम् हिरण्ययम्** कवचं हिरण्मयम् **वरुणः वस्त** वस आच्छादने । महता तेजसा आच्छादयति । **निर्णिजम्** 'निणिक्' (निघ.३,७) इति रूपनाम । आत्मीयं रूपमिति । तेजस्वित्वाद्ध्यादित्यस्य रूपं नोपलभ्यते । **स्पशः** च तदीयास्त्वपरा रश्म्याख्याः **परि नि वेदिरे** कृताकृतप्रत्यवेक्षणार्थं प्राणिनां सर्वतो निषीदन्ति । अथवा निर्णिगिति घटादिद्रव्यरूपम् । अभिप्रेतम् । उदयोत्तरकालमाबद्धहिरण्मयकवचो वरुणः रश्मिभिराच्छादयति घटादिद्रव्यगतं रूपम् । रश्मिभिस्तमोऽपनीय यावत् किञ्चिद् रूपं तत् सर्वं प्रकाशयतीत्यर्थः । तत्सहचरिताश्च देवानां स्पशः प्राणिनां प्रत्यवेक्षार्थं सर्वतो निषीदन्तीति पुराणेषु प्रसिद्धम्–

आदित्यचन्द्रावनलानिलौ च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य नृत्तम् ।। सति ।। १३ ।।

**वेङ्कटमाधव–** **बिभ्रत्** कवचं **हिरण्मयम्** **वरुणः** आच्छादयति रूपं दीप्तम् । परितश्चैनं निषीदन्ति ज्ञापका रश्मयः ।। १३ ।।

**मुद्गल–** **हिरण्ययम्** सुवर्णमयम् **द्रापिम्** कवचम् **बिभ्रत्** धारयन् **वरुणः** **निर्णिजम्** पुष्टम् स्वशरीरम् **वस्त** अच्छादयति । **स्पशः** हिरण्यस्य स्पर्शिनो रश्मयः **परि नि षेदिरे** सर्वतो निषण्णाः ।। १३ ।।

**सायण–** **हिरण्ययं** सुवर्णमयं **द्रापिं** कवचं **बिभ्रत्** धारयन् **वरुणः** **निर्णिजं** पुष्टं स्वशरीरं **वस्त** आच्छादयति । **स्पशः** हिरण्यस्पर्शिनो रश्मयः **परि नि षेदिरे** सर्वतो निषण्णाः ।

बिभ्रत् । बिभर्तेः शतरि 'नाभ्यस्ताच्छतुः' (पा.सू.७-१-७८) इति नुमभावः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । द्रापिम् । 'द्रा कुत्सायां गतौ'। दापयति इषून् कुत्सितां गतिं प्रापयतीति द्रापिः कवचम् । 'अर्तिह्री '(पा.सू.७-३-३६) इत्यादिना पुगागमः । औणादिके इप्रत्यये णिलोपः । हिरण्ययम् । 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' (पा.सू.६-४-१७५) इति हिरण्यशब्दात् विकारार्थे विहितस्य मयटो मशब्दलोपो निपातितः । वस्त । 'वस आच्छादने' । लङि अदादित्वात् शपो लुक् । पूर्ववत् अडभावः । निर्णिजम् । 'णिजिर् शौचपोषणयोः' । स्पशः । 'स्पश बाधनस्पर्शनयोः' । 'क्विप् च' इति क्विप् । नि षेदिरे । 'षद्लृ विशरणगत्यवसादनेषु' । अस्मात् गत्यर्थात् कर्मणि लिटि एत्वाभ्यासलोपौ । 'सदिरप्रतेः' इति षत्वम् ।। १३ ।।

**सिद्धाञ्जनम्–** **हिरण्ययं** हिरण्मयं (मयटो मलोपो निपातितः छन्दसि) **द्रापिं** कवचं **बिभ्रत्** धारयमाणः **वरुणः** आदित्यः **निर्णिजं** स्वच्छं स्वरूपं **वस्त** आच्छादयति (वस आच्छादने, लङ्, अडभावः लडर्थे)। **स्पशः** हिरण्यकवचस्पर्शिनः रश्मय, ज्ञापकाः **परि** परितो हिरण्यकवचभृतं वरुणं, **नि षेदिरे** निषण्णाः (स्पश स्पर्शने, क्विप् सम्यग्विविच्य दर्शनं स्पष्टीकरणं च धात्वर्थः । अत एव गूढदर्शिनश्चाराः स्पशा इति व्यवहारो लोके।) वरुणस्य राज्ञश्चारास्तं परितो निषण्णाः मनुष्याणामपराधान् राज्ञे कथयन्ति दण्डायेति स्थूला कथा । वस्तुतस्तु, हिरण्मयपात्राच्छादितं

सत्यं ज्ञापयितुं निषण्णाः प्रणिधय इव ज्ञापका रश्मयो दिव्या विभूतयो वा । अवघातव्यमिह हिरण्मयनेति ईशावास्यश्रुतिवचनम् ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**न यं दिप्स॑न्ति दि॒प्सवो॒ न द्रुह्वा॑णो॒ जना॑नाम् । न दे॒वम॒भिमा॑तयः ।। १४ ।।**

न । यम् । दिप्स॑न्ति । दि॒प्सव॑ः । न । द्रुह्वा॑णः । जना॑नाम् । न । दे॒वम् । अ॒भिऽमा॑तयः ।।१४।।

## ऋग्भाष्यम्

**स्तम्भयन्ति न यं वीराः स्तंभका अपि राक्षसाः ।**
**जनानां द्रोहिणो दैत्याः शत्रवश्चाभिमातयः ।। १४ ।।**

**ऋग्भाष्यटीका– न यम्** । स्तम्भयन्ति । यं वरुणम् । **दिप्सवो** दम्भितुमिच्छवः । इच्छया करणमुपलक्ष्यते । स्तम्भकाः । वीरा अपि राक्षसा इति यावत् । **न दिप्सन्ति** । अत्राप्युपलक्षणम् । न स्तम्भयन्ति । किञ्च । **जनानां द्रुह्वाणो** द्रोहिणः 'द्रुह जिघांसायाम्' । अन्येभ्योऽपि दृश्यन्त इति क्वनिप् । दैत्या यं न दिप्सन्ति यस्मै न द्रुह्यन्तीति वा । जनानामिति दिप्सव इत्यत्रापि सम्बध्यते । किञ्च । **अभिमातयः** शत्रवश्च राक्षसेभ्यो दैत्येभ्यश्चान्ये **यं देवं न** दिप्सन्ति इत्यादियोग्यक्रियान्वयः । यच्छब्दस्य पूर्वेण परेण वा सम्बन्धः ।। १४ ।।

**मन्त्रार्थमञ्जरी–** यम्, वरुणम् । दिप्सवः, दम्भितुमिच्छवः, करणोपलक्षणम् स्तम्भकाः, वीराः राक्षसा इति यावत् । न दिप्सन्ति, अत्राप्युपलक्षणम्– न स्तम्भयन्ति । किं च, जनानाम् । द्रुह्वाणः, द्रौहिणः, 'द्रुह जिघांसायाम्' 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप्, दैत्याः । (यम्) न (दिप्सन्ति) इत्यस्य 'यस्मै न द्रुह्यन्ति' इति वार्थः । अभिमातयः, शत्रवः । (च) 'मीङ् हिंसायाम्' क्तिन्, धातोरात्त्वम्, राक्षसेभ्यो दैत्येभ्यश्चान्ये । (यम्) देवम् न (दिप्सन्ति) इत्येवं योग्यक्रियान्वयः । यद्शब्दस्य पूर्वेण परेण वान्वयः ।। १४ ।।

**स्कन्द– न यम् दिप्सन्ति** दभ्नोतिर्वधकर्मा (तु निघ.२-१९) । जिघांसन्ति । **दिप्सवः** निघांसका असुराः । न द्रुह्वाणः द्रोग्धारः । कस्य । **जनानाम्** मनुष्याणाम् । न यमात्मीया हिंसका असुराः नापि मनुष्याणां हिंसकाश्चोरादयो हिंसन्तीत्यर्थः । **न** अपि यम् **देवम्**

**अभिमातयः** अभिमातिशब्दोऽत्र हिंसावचनः । ते हि ष्मा वनुयो नरोऽभिमाति कयस्य चित् (ऋ.८-२५-१५) इति यथा । असुरैश्चोरादिभिः प्रयुज्यमाना हिंसाः ।। १४ ।।

**वेङ्कटमाधव– यम्** वरुणं हिंसार्थिनः न हिंसितुमिच्छन्ति । **जनानाम्** अन्येषां द्रोग्धारश्च यस्मै न द्रुह्यन्ति । न यं चाभिमन्यन्ते अभिमातयः च । उत्तरत्र सम्बन्धः ।। १४ ।।

**मुद्गल– दिप्सवः** हिंसितुमिच्छन्तो वैरिणः **यम्** वरुणम् **न दप्सन्ति** भीता सन्तो हिंसितुमिच्छां परित्यजन्ति । **जनानाम्** प्राणिनाम् **द्रुह्वाणः** द्रोग्धारोऽपि यं वरुणं प्रति **न द्रुह्यन्ति** । **अभिमातयः** पाप्मानः **देवम्** तं वरुणम् न स्पृशन्ति ।। १४ ।।

**सायण– दिप्सवः** हिंसितुमिच्छन्तो वैरिणः **यं** वरुणं **न दिप्सन्ति** भीताः सन्तो हिंसितुमिच्छां परित्यजन्ति । **जनानां** प्राणिनां **द्रुह्वाणः** द्रोग्धारोऽपि यं वरुणं प्रति **न द्रुह्यन्ति** । **अभिमातयः** पाप्मानः । 'पाप्मा वा अभिमातिः' (तै.सं.२.१.३.५) इति श्रुत्यन्तरात् । **देवं** तं वरुणं **न** द्रुह्यन्ति ।

दिप्सन्ति । 'दम्भु दम्भे' । अस्मात् सनि 'सनीवन्तर्ध' (पा.सू.७-२-४९) इत्यादिना इडभावः । हलन्ताच्च' (पा.सू.१-२-१०) इत्यत्र हल्ग्रहणस्य जातिवाचित्वात् सनः कित्त्वात् 'दम्भ इच्च' (पा.सू.७-४-५६) इति दकारात् परस्य अकारस्य इकारः । 'अनिदिताम्' इति नलोपः । भष्भावाभावश्छान्दसः ('एकाचो बशो भष् झषन्तस्य स्ध्वोः' पा.सू.८.२.३७)। 'अत्र लोपोऽभ्यासस्य' (पा.सू.७-४-५८ ) इति अभ्यासलोपः । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण सनो नित्त्वात् नित्स्वरेणाद्युदात्तत्वम् । यद्वृत्तयोगात् अनिघातः । दिप्सवः । सनन्तात् दम्भेः 'सनाशंसभिक्ष उः' (पा.सू.३-२-१६८ ) इति उप्रत्ययः । प्रत्ययस्वरः । द्रुह्वाणः । 'दुह जिघांसायाम्' । 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् ।। १४ ।।

**सिद्धाञ्जनम्– दिप्सवः** जिघांसवः असुराः (दम्भेर्हननार्थाद्वञ्चनार्थाद् दमनार्थाद्वा सन्नन्ताद् उप्रत्ययः) **यं** देवं **न दिप्सन्ति** न जिघांसन्ति आसुरभुवोऽतीत्य वरुणस्य वर्तनात् तं हिंसितुं वञ्चयितुं वा न प्रभवन्ति देववैरिणोऽसुराः । अत एव तादृशेच्छावैफल्यम्, ज्ञानाद् उत्कृष्टस्य वरुणस्य दुर्गमत्वज्ञानाद्वा नेच्छन्ति हन्तुम् । न केवलं एत एव **जनानां** मनुष्याणां द्रुह्वाणः

द्रोग्धारोऽपि (द्रुह जिघांसायाम् कनिप्) मनुष्यद्रोहिणो राक्षसाः भूतविशेषो वा **न** यं **देवं दिप्सन्ति, अभिमातयः** पाप्मानः अपि 'पाप्मा वा अभिमाति' इति श्रुतिषु प्रसिद्धिः । तं वरुणं न स्पृशन्ति ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**उत यो मानुषेष्वा यशश्चक्रे असाम्या । अस्माकमुदरेष्वा ।। १५,१८ ।।**

उत । यः । मानुषेषु । आ । यशः । चक्रे । असामि । आ । अस्माकम् । उदरेषु । आ ।।

## ऋग्भाष्यम्

**असमं च यशश्चक्रे योऽस्माकं हृदयेषु च ।**
**आमानुषेषु चान्येषु समन्तादात्मनः सदा ।**
**अङ्गेष्वपि च मर्त्येषु व्यतनोदात्मनो यशः ।। १५, १८ ।।**

**ऋग्भाष्यटीका–** उत यः । असमं च । **यो** वरुणः । **असामि** समशब्दपर्यायः सामिशब्दः । न विद्यते सामि यस्य । यद्वा सममस्यास्तीति साम तदेव सामि । न सामि असामि असममात्मनो **यशो**ऽस्माकमुदरेषु सामीप्याद्धृदयेषु **आ** समन्तात् सर्वस्मिन्काले सदा **चक्रे** । अस्मान्स्वयशोविदश्चक्रे । न केवलमस्मासु अन्येष्वप्यासम्यक् भूतेषु **मानुषेषु** मनुष्येष्वा समन्ताच्चक्रे । आद्यश्चशब्दो वरुणस्य क्रियासमुच्चये । अन्यावितरेतरसमुच्चये । **उत**शब्दस्य कैमुत्यार्थस्य तात्पर्यमाह । **अङ्गेष्वपीति** ।। किमुत देवादिषु । अस्यापि पूर्ववत्सम्बन्धः ।। १५,१८ ।।

**मन्त्रार्थमञ्जरी–** यः, वरुणः । असामि, सममस्यास्तीति समि, तदेव सामि, न साम्यसामि, असममित्यर्थः । आत्मनः यशः अस्माकम् । उदरेषु, सामीप्याद्धृदयेषु । आ, समन्तात्सर्वस्मिन्काले । चक्रे, अस्मान्स्वयशोविदश्चक्रे । न केवलमस्मासु, अन्येष्वपि– आ, सम्यग्भूतेषु । मानुषेषु (अपि) आ समन्तात् । (चक्रे) उत, 'किमुत देवेषु?' इत्युतशब्दार्थः । अत्रापि यद्शब्दस्य पूर्वत्रेव अन्वयः ।। १५ ।।

**स्कन्द– उत यः** अपि च वरुणः मानुषेषु आकारोऽत्र चशब्दस्यार्थे । 'देवेभ्यश्च पितृभ्य आ' (ऋ.१०-१६-११) इति यथा । तच्छ्रुतश्च योग्यद्वितीयसमुच्चयाध्याहारः । मनुष्येषु देवेषु

च **यशः** अन्नम् **चक्रे** रश्मिभिः रसानाहरन् प्रतिददच्च करोति । कीदृशम् । असामि सामि-शब्दोऽर्धवचनः । अनर्धं सकलं प्रभूतमित्यर्थः । आकारस्तु पदपूरणो वा चक्रे इत्येतेन वा सम्बन्धयितव्यः । अभिमुखेन करोतीति । न च केवलेषु मानुषेषु देवेषु च **अस्माकम् उदरेषु आ** अयमप्याकारः चशब्दस्यार्थे । अस्माकमित्येतस्माच्च परो द्रष्टव्यः । अस्माकं च मनुष्याणां तिर्यक्सदृशानामुदरेषु । यच्छब्दश्रुतेस्तच्छब्दाध्याहृत्योत्तरयैकवाक्यता । तम् ।। १५ ।।

**वेङ्कटमाधव–** अपि च **यः** मनुष्येषु अन्नम् असाधारणम् **चक्रे** सः **अस्माकम्** अपि **उदरेषु आ** करोतु । प्रथम आकार सप्तम्यर्थं स्फुटीकरोति ।। १५ ।।

**मुद्गल–** **उत** अपि च **यः** वरुणः **मानुषेषु यशः** अन्नम् **आ चक्रे** सर्वतः कृतवान् स वरुणः कुर्वन्नपि **आ** सर्वतः **असामि** सपूर्णं चक्रे न तु न्यूनं कृतवान् । विशेषतः **अस्माकम् उदरेषु आ** सर्वतः चक्रे ।। १५ ।।

**सायण–** **उत** अपि च **यः** वरुणः **मानुषेषु यशः** अन्नम् **आ चक्रे** सर्वतः कृतवान् स वरुणः कुर्वन्नपि **आ** सर्वतः **असामि** संपूर्णं चक्रे न तु न्यूनं कृतवान् । विशेषतः **अस्माकम् उदरेषु आ** सर्वतः चक्रे ।

मानुषेषु । 'मनोर्जातावञ्यतौ षुक् च' (पा.सू.४-१-१६१) इति अञ् । 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् । चक्रे । प्रत्ययस्वरः । असामि । 'अव्यये नञ्कुनिपातानामिति वक्तव्यम्' (पा.सू.६-२-२३) इति अव्ययपूर्वपदप्रकृतिस्वरत्वम् । यशः । 'अशेर्युट् च' (उ.सू.४-६-३०) इति असुन् । उदरेषु । 'उदि गातेरजलौ पूर्वपदान्त्यलोपश्च' (उ.सू.५-६-९७) इति अल् । लित्स्वरः । 'गतिकारकोपपदात्' इत्युत्तरपदप्रकृतिस्वरत्वम् ।। १५,१८ ।।

**सिद्धाञ्जनम्–** **उत** अपि च **यः** वरुणः **मानुषेषु** सर्वस्मिन् मानुष्यके **यशः** प्रतिष्ठां माहात्म्यं गौरवं वा **आ** सर्वतः **चक्रे** कृतवान्, स तथा कुर्वन् **आ** सर्वतः **असामि** अन्यूनं सम्पूर्णं चक्रे । अपि च न केवलं सामान्यतः मनुष्यजातौ प्रतिष्ठां कृतवान्, किं तु अस्माकं विशेषतो ऋषीणां **उदरेषु** शरीरेषु, शरीरैकदेशेन शरीरं लक्ष्यते, **आ** 'चक्रे' इति सम्बन्धः । यो वरुणो मनुष्यजातिप्रतिष्ठां कृतवान्, स भगवान् ऋषीणां देहेष्वपि 'यशः' प्रतिष्ठां माहात्म्यं वा चक्रे इति अर्थोत्कर्षमावहति मन्त्रः । अस्यापकर्षाय भवति कर्मठव्याख्या मन्त्रस्थ उदरपदश्रवणाधारा ।

यशः अन्नं उदरपूरणाय वरुणेनानुगृहीतं सायणाभिमतम् । तर्हि, गम्भीरार्थानां ऋचां मध्ये नीचा मन्त्रद्रष्टुः उदरम्भरितासन्तृप्तिप्रख्यापना वैरस्याय कल्पते । ऋषीणामेतेषां नासील्लज्जा तज्ज्ञानं वेति विमर्शवीक्षितैः क्षिप्तश्चेदधिक्षेपो, कथं सोऽन्याय्यः स्यात् ? कर्मपरव्याख्यानस्यापि नावश्यकमीदृशं जघन्यं तात्पर्यग्रहणमिति स्थालीपुलाकन्यायेनेदं दर्शितम् ।। १५ ।। १८ ।।

।। इति प्रथमाष्टक द्वितीयाध्याय अष्टादशो वर्गः ।।

## ।। अथ एकोनविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**परा मे यन्ति धीतयो गावो न गव्यूतीरनु । इच्छन्तीरुरुचक्षसम् ।। १६ ।।**

परा । मे । यन्ति । धीतयः । गावः । न । गव्यूतीः । अनु । इच्छन्तीः । उरुऽचक्षसम् ।।१६।।

## ऋग्भाष्यम्

**महाज्ञानं परेशानमिच्छन्त्यो मम धीतयः ।**
**सर्वतो यांति यद्वच्च गावः शृङ्गस्वराननु ।। १६ ।।**

**ऋग्भाष्यटीका– परा मे** । महाज्ञानम् । **मे** मम । **धीतयो** बुद्धिविशेषाः । **इच्छन्तीः** इच्छन्त्यः । निश्रेयसमिति शेषः । **उरुचक्षसं** महाज्ञानम् । **परा** सर्वतः । सर्वं परित्यज्य **यन्ति** यान्ति । तमेवेच्छंत्य इति वा । किमिव । **गव्यूतीः** गवामूतय आह्वानानि गव्यूतयस्ताः शृङ्गस्वरान् । **अनु** प्रति । **गावो न** गावो यद्वत्तथा ।। १६ ।।

**मन्त्रार्थमञ्जरी–** मे, मम । धीतयः, बुद्धिविशेषाः । इच्छन्तीः, इच्छन्त्यः । (निःश्रेयसम्) इति शेषः । उरुचक्षसम्, महाज्ञानम्, परमेश्वरम् । परा, सर्वं पराकृत्य । यन्ति, यान्ति । किमिव ? गव्यूतीः, गवां यूतय आह्वानानि गव्यूतयस्ताः शृङ्गस्वरान् । अनु, प्रति । गावः न, गावो यथा, तथा इति ।। १६ ।।

**स्कन्द– परा मे यन्ति** परागच्छन्ति प्राप्नुवन्ति त्वां **मे** मम **धीतयः** प्रज्ञाः कर्माणि वा स्तुत्याख्यानि । मदीया बुद्धयः स्तुतयो वेत्यर्थः । कथं परायन्ति । **गावः न गव्यूतीः अनु** गावो यत्र चरन्ति सः भूप्रदेशो गव्यूतिरित्युच्यते । अनुशब्दः प्रतिशब्दस्यार्थे । गाव इव गव्यूतिं प्रति । **इच्छन्तीः** इच्छन्त्यः । किम् । सामर्थ्यादायुः । कीदृशं त्वाम् उच्यते । **उरुचक्षसं** बहूनां द्रष्टारं बहुदर्शनं वा ।। १६ ।।

**वेङ्कटमाधव–** परागच्छन्ति **मे** बुद्धयो वरुणं राजानं प्रति, यथा **गावः** गोमार्गान् प्रति गच्छन्ति, इच्छन्त्यः बहूनां द्रष्टारं द्रष्टुम् ।। १६ ।।

**मुद्गल– उरुचक्षसं** बहुभिर्द्रष्टव्यं वरुणम् **इच्छन्तीः मे धीतयः** शुनःशेपस्य बुद्धयः **परा यन्ति** पराङ्मुखा निवृत्तिरहिता गच्छन्ति । तत्र दृष्टान्तः । **गावः न** यथा गावः गव्यूतीः **अनु** गोष्ठान्यनुलक्ष्य गच्छन्ति तद्वत् ।। १६ ।।

**सायण– उरुचक्षसं** बहुभिर्द्रष्टव्यं वरुणम् **इच्छन्तीः मे धीतयः** शुनःशेपस्य बुद्धयः **परा यन्ति** पराङ्मुखा निवृत्तिरहिता गच्छन्ति । तत्र दृष्टान्तः । **गावो न** । यथा गावः **गव्यूतीरनु** गोष्ठानि अनुलक्ष्य गच्छन्ति तद्वत् ।

गव्यूतीः । गावोऽत्र यूयन्ते इति अधिकरणे क्तिन् । 'गोर्यूतौ छन्दसि' (पा.सू.६-१-७९.२) इति अवादेशः । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । यद्वा । यूतिः यवनम् । गवां यवनमत्रेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । इच्छन्तीः । 'इषु इच्छायाम्' । लटः शतृ । 'तुदादिभ्यः शः' । 'इषुगमियमां छः' (पा.सू.७-३-७७) इति छत्वम् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते ।। १६ ।।

**सिद्धाञ्जनम्– उरुचक्षसं** विशालचक्षुषं, विश्वस्य द्रष्टारमित्यर्थः, वरुणं **इच्छन्तीः** प्राप्तुं कामयमानाः **मे** मम **धीतयः** धीवृत्तयः **परा यन्ति** अतिदूरं गच्छन्ति, 'परा हि मे विमन्यवः' इति मन्त्रेऽप्येवमेवोक्तं अवधेयम् । अत्र दृष्टान्तः । **गावो न** यथा गाव **गव्यूतीः अनु** गोष्ठानि अनुलक्ष्य गच्छन्ति तद्वत् । गव्यूतीः- गावोऽत्र यूयन्त इति गव्यूतयस्ताः । छन्दसि अवादेशः । 'उना इव स्वसराणि' (मं.१, सू.३, ऋ.८.) इत्यत्र व्याख्या समालोच्या ।। १६ ।।

## ऋक्संहिता पदपाठसहिता

**सं नु वोचावहै पुनर्यतो मे मध्वाभृतम् । होतेव क्षदसे प्रियम् ।। १७ ।।**

सम् । नु । वोचावहै । पुनः । यतः । मे । मधु । आऽभृतम् । होताऽइव । क्षदसे । प्रियम् ।।

## ऋग्भाष्यम्

**आपूर्णं मधु मोक्षस्थं सुखं पचसि मेऽग्निवत् ।**
**तत्संवोचावहै भूयः प्रियस्त्वं मम यत्सदा ।। १७ ।।**

**ऋग्भाष्यटीका– सं नु** । आपूर्णम् । **यतः** त्वं **होतेव** अग्निवत् । अग्निर्यथौदनादिकं पचति तथा । **मे** मदीयम् । **आभृतं मधु** आपूर्णं मधु मोक्षस्थं सुखम् । **क्षदसे** पचसि । व्यक्तीकरोषीति यावत् । यद्यस्माच्च त्वं मम सदा **प्रियं** प्रियः । तत्तस्मात् नु इदानीम् । **पुनः** भूयो भूयः । आवां **सं वोचावहै** सम्भाषणं करवावहै ।। १७ ।।

**मन्त्रार्थमञ्जरी–** (हे वरुण) यतः (त्वम्) होतेव, अग्निरिव, अग्निर्यथौदनादिकं पचति, तथा । मे, मदीयम् । आभृतम्, आपूर्णम् । मधु, मोक्षस्थं सुखम् । क्षदसे, क्षरसि, (पचसि) व्यक्तीकरोषीति यावत् । (यत्) यस्मात् । (त्वम्) मम प्रियम्, सदा प्रियः । (तत्) तस्मात् । नु, इदानीम् । पुनः, भूयोभूयः । (आवाम्) सम् वोचावहै, सम्भाषणं करवावहै ।। १७ ।।

**स्कन्द– नु** (निघ.२,१५) इति क्षिप्रनाम । क्षिप्रम् **सं वोचावहै पुनः** आवां हरिश्चन्द्रशुनःशेपौ पुनःसम्भूतौ । किम् । सामर्थ्यान्मुञ्च त्वमावामिति । हरिश्चन्द्रं वा त्वं चाहं च पुनः संवोचावहै । मां विमुच्य मया सम्भाषस्व । अहमपि भवन्तं मुच्यमानं इति हि त्वदाशास इत्यर्थः । कस्मात् । **यतः मे** तादर्थ्य एषा चतुर्थी । मदर्थम् । येनोपस्तीर्याभिधार्य चाहं जुहूषितः तदाज्यलक्षणम् मधु **आभृतम्** ऋत्विग्भिः । यत् आज्यं गृहीत्वा मां होतुमृत्विज उपस्थिता इत्यर्थः । यतः **होतेव क्षदसे** क्षदतिरत्र सामर्थ्याद् विशसनार्थः । यथा होताऽध्रिगुप्रैषदानेन एवं त्वमपि निर्मोक्षणेन विशससि । किम् । **प्रियम्** इष्टं मम शरीरम् । अथवा यत इति सप्तम्यर्थे पञ्चमी । यत्र यज्ञे मदर्थं मध्वाभृतं यत्र च त्वं होतेव विशससि प्रियं मम शरीरं तत्र क्षिप्रं संवोचावहै पुनरिति ।। १७ ।।

**वेङ्कटमाधव–** त्वं चाऽहं च वरुण! अधुना संवादम् पुनःपुनः कुर्वः । **यतः मे** मधुसदृशं स्तोत्रं सम्भृतम् । त्वं च **होतेव प्रियम् क्षदसे** क्षदिः शकलीभावकर्मा । यथा होताऽध्रिगुं वदन् वाचा पशुं शकलीकरोत्येवमिदं तुभ्यं दत्तमिदं तुभ्यं दत्तमिति वदसि ।। १७ ।।

**मुद्गल– यतः** यस्मात् कारणात् **मे** मम जीवनार्थम् **मधु** मधुरं हविः **आभृतम्** अञ्जःसवाख्ये कर्मणि सम्पादितम् अत कारणात् **होतेव** होमकर्तेव त्वमपि **प्रियम्** हविः **क्षदसे** अश्नासि । **पुनः** हविःस्वीकारादूर्ध्वं तृप्तस्त्वं जीवन्नहं च **नु** अवश्यम् **सं वोचावहै** संभूय प्रियवार्ता करवावहै ।। १७ ।।

**सायण– यतः** यस्मात् कारणात् **मे** मज्जीवनार्थं **मधु** मधुरं हविः **आभृतं** अञ्जःसवाख्ये कर्मणि संपादितं अत कारणात् **होतेव** होमकर्तेव त्वमपि **प्रियं** हविः **क्षदसे** अश्नासि । **पुनः** हविःस्वीकारार्थं तृप्तस्त्वं जीवन्नहं च **नु** अवश्यं **सं वोचावहै** संभूय प्रियवार्ता करवावहै ।

वोचावहै । लोडर्थे छान्दसे लुङि ब्रुवो वचिः । 'अस्यतिवक्ति' इति च्लेः अङादेशः । 'वच उम्' इति उमागमे गुणः । व्यत्ययेन टेः ऐत्वम् । यद्वा । लोट एव लुङादेशः । स्थानिवद्भावात् ऐत्वम् । आभृतम् । 'हृग्रहोर्भः' । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ।। १७ ।।

**सिद्धाञ्जनम्– यतः** यस्मात् **मे** मया विभक्तिव्यत्ययः **मधु** सोमात्मकं **आभृतं** आहृतम् सम्पादितमित्यर्थः, त्वं च प्रियं तन्मधु **होतेव** यजमानार्थं होमकर्तेव **क्षदसे** अश्नासि यथाभागम् (क्षदतिः शकलीकरणार्थः, विभजने वर्तते, अत एव यथाभागस्वीकरणं विवक्षितमित्याचक्ष्महे)। तस्मात् **नु** क्षिप्रं पुनः **सं वोचावहै** परस्परसंवादसम्पन्नौ वार्ता करवावहै । अहं मधु आहृतवान्, त्वं च तृप्तः स्वीकृतवान्, इतः परं उभयोरावयोरन्तरङ्गव्यवहारश्चलत्विति शुनःशेपस्यर्षेर्वरुण-देवताविषयकविस्रम्भवाक्यं इदम् । वोचावहैलोडर्थे छन्दसि लुङ्, स्थानिवद्भावात् ऐत्वम् । अन्यत्सर्वं छान्दसम् ।। १७ ।।

## ऋक्संहिता पदपाठसहिता

**द॒र्शं नु वि॒श्वद॑र्शतं॒ द॒र्शं रथ॒मधि॒ क्षमि॑ । ए॒ता जु॑षत मे॒ गिरः॑ ।। १८ ।।**

द॒र्शम् । नु । वि॒श्वऽद॑र्शतम् । द॒र्शम् । रथ॑म् । अधि॑ । क्षमि॑ । ए॒ताः । जु॒षु॒त । मे॒ । गिरः॑ ।।१८।।

## ऋग्भाष्यम्

**अदर्शं तं च सर्वज्ञं तद्रथं च भुवि स्थितम् ।**
**सुगिरो मे जुषत च.........................।। १८ ।।**

**ऋग्भाष्यटीका– दर्शं नु** । अदर्शम् । अहं नु इदानीम् । **विश्वदर्शतं** सर्वज्ञम् । तं वरुणं च । **दर्शम्** अदर्शम् अद्राक्षम् । **अधि क्षमि** क्षमामधिकृत्य तृतीयोऽतिशये । भुवि स्थितम् । **रथं** तद्रथं चादर्शम् । स एवं दृष्टो वरुणः एता वेदरूपा **गिरो मे** सुगिरः । **जुषत** जुषतां च । आकर्णयतु ।। १८ ।।

**मन्त्रार्थमञ्जरी–** (अहम्) नु, इदनीम् । विश्वदर्शतम्, विश्वेन दर्शन तं ततम्, व्युत्पादित-मेतत्पदं 'वायवा याहि दर्शत' इत्यत्र, सर्वज्ञं, तं वरुणं च । दर्शम्, अदर्शम्, अद्राक्षम्, दृशेः लुङि 'इरितो वा' इति च्लेरङ्, 'ऋदृशोऽङि गुणः' 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । अधि क्षमि, क्षमामधिकृत्य, 'तृतीयोऽतिशये' (म०व्या०सू०) । भुवि स्थितम् रथम्, तद्रथम् । (च) दर्शम्, अदर्शम् । (सः) एवं दृष्टो वरुणः । एताः मे गिरः । जुषत, जुषताम्, आकर्णयतु ।। १८ ।।

**स्कन्द– दर्शम् नु** महता यत्नेन दृष्टवानहम् नु क्षिप्रम् । **विश्वदर्शतम्** सर्वस्य **दर्शनीयं** द्रष्टारं वा वरुणम् । न च केवलम् । किं तर्हि । **रथम्** अपि **दर्शम्** यत्रायमारूढः । क । **अधि क्षमि** पृथिव्या उपरि । दिवीत्यर्थः । यत एवमतो ब्रवीमि । स **एताः जुषत** जुषतां सेवतां **मे गिरः** स्तुतीः ।। १८ ।।

**वेङ्कटमाधव–** दृष्टवानस्म्यहम् इदानीं सर्वस्य दर्शनीयं वरुणम् **दर्शम्** चास्य **रथम्** भूमेरुपरि । सः **मे** स्तुतीः एताः सेवताम् ।। १८ ।।

**मुद्गल– विश्वदर्शतम्** सर्वैर्दर्शनीयम् अस्मदनुग्रहार्थमत्राविर्भूतं वरुणम् **दर्शं नु** अहं दृष्टवान् खलु । **क्षमि** क्षमायां भूमौ **रथम्** वरुणसम्बन्धिनम् **अधि दर्शम्** आधिक्येन दृष्टवानस्मि । **एताः** उच्यमानाः **मे गिरः** मदीयाः स्तुतीः **जुषत** वरुणः सेवितवान् ।। १८ ।।

**सायण– विश्वदर्शतम्** सर्वैर्दर्शनीयम् अस्मदनुग्रहार्थमत्राविर्भूतं वरुणं **दर्शं नु** अहं दृष्टवान्

खलु । **क्षमि** क्षमायां भूमौ **रथं** वरुणसंबन्धिनम् **अधि दर्शम्** आधिक्येन दृष्टवानस्मि । **एताः** उच्यमानाः **मे गिरः** मदीयाः स्तुतीः **जुषत** वरुणः सेवितवान् ।

दर्शम् । दृशेः 'इरितो वा' (पा.सू.३-१-५७) इति च्लेः अङादेशः । 'ऋदृशोऽङि गुणः' (पा.सू.७-४-१६) इति गुणः । विश्वदर्शतम् । दृशेः 'भृमृदृशि' (उ.सू.३-३९०) इत्यादिना अतच्प्रत्ययान्तो दर्शतशब्दः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । यद्वा । विश्वं दर्शनीयमस्येति बहुव्रीहिः । 'बहुव्रीहौ विश्वं संज्ञायाम्'(पा.सू.६-२-१०६) इति पूर्वपदान्तोदात्तत्वम् । क्षमि । 'आतो धातोः' (पा.सू.६-४-१४०) इत्यत्र 'आतः' इति योगविभागात् आकारलोपः ॥ १८ ॥

**सिद्धाञ्जनम्– विश्वदर्शतं** विश्वं दर्शतं दर्शनीयं यस्य तं वरुणं (दृशेरतच् प्रत्ययः) **दर्शं नु** दृष्टवानहं खलु (दृशेर्लुङ् अडभावः) **अधि** उपरि **क्षमि** क्षमायां (आतोऽभावः छान्दसः) भूम्यामुपरि अन्तरिक्षे **रथं** वरुणस्य यानं **दर्शं** दृष्टवानस्मि । **एताः मे गिरः** मदीयाः स्तुतीः **जुषत** सेवितवान् प्रीत्या स्वीकृतवांश्च स वरुणः (जुषतेः लङ् अडभावः)। भूमावेव मम सरथस्य वरुणस्याकाशं दर्शनं, तेन मदीयगिरां सेवनं च सम्पन्ने, इति भावः ॥ १८ ॥

## ऋक्संहिता पदपाठसहिता

**इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके ॥ १९ ॥**

इमम् । मे । वरुण । श्रुधि । हवम् । अद्य । च । मृळय । त्वाम् । अवस्युः । आ । चके ॥१९॥

## ऋग्भाष्यम्

**........................त्वाऽवनेप्सुरहं चके ।**

**पश्येयम्........................॥ १९ ॥**

**ऋग्भाष्यटीका– इमं मे** । त्वावनेप्सुः । हे **वरुण! मे इमं हवं** इदमाह्वानम् । **श्रुधि** शृणु । **अद्य च** अद्यैव । **मृळय** सुखय । रक्ष वा माम् । कुतः । **अवस्युः** अवनेप्सुः । अवशब्दस्य क्यजन्तस्येदं रूपम् । अहं त्वां त्वा **आचके** पश्येयम् । दृष्टवानस्मि । 'चक तृप्तौ' इत्यस्य दर्शनार्थत्वम् ॥ १९ ॥

**मन्त्रार्थमञ्जरी–** (हे) वरुण मे । इमम् हवम्, इदमाह्वानम् । श्रुधि, शृणु । अद्य च, अद्यैव । मृळय, सुखय, रक्ष वा । (माम्) इति वा योज्यम् । कुतः ? अवस्युः, अवनेप्सुः, अवस्शब्दात्क्यच्, तत उः । (अहम्) त्वाम्, त्वा । आ चके, पश्येयम्, 'चक तृप्तौ' इत्यस्य दर्शनार्थत्वं ध्येयम् ॥ १९ ॥

**स्कन्द– इमम् मे** मम हे **वरुण!** शृणुष्व **हवम्** आह्वानमिदम् । श्रुत्वा च **अद्य च** चशब्दादतश्चोर्ध्वम् **मृळय** विमुच्य मा सुखय । किं कारणम् । यस्मात् **त्वाम् अवस्युः** आत्मपालनकामोऽहन् **आ चके** कान्तिकर्मायम् (निघ.२,६) । कामये । पालयेत्वर्थः ॥ १९ ॥

**वेङ्कटमाधव– समम् मे वरुण!** शृणु **हवम्** । श्रुत्वा च **अद्य** मां सुखय । **त्वाम्** रक्षणेच्छुरहं कामये । यद्वाऽभिगच्छामि ॥ १९ ॥

**मुद्गल–** हे **वरुण! मे** मदीयम् **इमम् हवम्** आह्वानम् **श्रुधि** शृणु । किञ्च **अद्य** अस्मिन् दिने **मृळय** मृडय अस्मान् सुखय । **अवस्युः** रक्षणेच्छुः अहं **त्वाम्** वरुणम् **आ चके** आभिमुख्येन शब्दयामि । स्तौमीत्यर्थः ॥ १९ ॥

**सायण–** वरुणप्रघासेषु 'इमं मे वरुण' इति वारुणस्य हविषः अनुवाक्या । 'पञ्चम्यां पौर्णमास्याम्' इति खण्डे सूत्रितम्– 'इमं मे वरुण श्रुधि' 'तत्त्वा यामि ब्रह्मणा वन्दमानः' (आश्व.श्रौ.२-१७) इति ॥

हे **वरुण! मे** मदीयम् **इमम् हवम्** आह्वानम् **श्रुधि** शृणु । किञ्च **अद्य** अस्मिन् दिने **मृळय** मृडय अस्मान् सुखय । **अवस्युः** रक्षणेच्छुः अहं **त्वाम्** वरुणम् **आ चके** आभिमुख्येन शब्दयामि । स्तौमीत्यर्थः ।

श्रुधि । 'श्रु श्रवणे' । लोटो हिः । 'श्रुशृणुपकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः । अवस्युः । अवस्शब्दात् 'सुप आत्मनः क्यच्' । 'क्याच्छन्दसि' इति उप्रत्ययः । आ चके । 'कै गै शब्दे' । अस्मात् लिटि 'आदेचः' (पा.सू.६-१-४५) इति आत्वम् । द्विर्भावचुत्वे । 'आतो लोप इटि च' (पा.सू.६-४-६४ ) इति आकारलोपः । 'तिङ्ङतिङः' इति निघातः ॥१९॥

**सिद्धाञ्जनम्–** हे **वरुण! मे** मम **इमं हवं** आह्वानं **श्रुधि** शृणु (साहितिको दीर्घ ईकारः विकरणलोपः छान्दसः) । किञ्च **अद्य च** अधुना अस्मिन् दिने वा **मळय** मृडय सुखय । **अवस्युः** रक्षणेच्छुः (अवस्-शब्दात् क्यच् छन्दसि उप्रत्ययः) **त्वाम्** देवं **आ** आभिमुख्येन त्वामुद्दिश्येत्यर्थः । **चके** आक्रन्दितवानस्मि 'कै गै शब्दे' लिटि छान्दसं रूपम् ॥ १९ ॥

## ऋक्संहिता पदपाठसहिता

**त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि । स यामनि प्रति श्रुधि ॥ २० ॥**

त्वम् । विश्वस्य । मेधिर । दिवः । च । ग्मः । च । राजसि । सः । यामनि । प्रति । श्रुधि ॥

## ऋग्भाष्यम्

**.........त्वं च विश्वस्य राजा भवसि मेधिरः ।**
**मेधावान् ग्मः पृथिव्याश्च सकाले च प्रति श्रुधि ॥ २० ॥**

**ऋग्भाष्यटीका–** **त्वं विश्वस्य** त्वं च । **मेधिरो** मेधावान् । मत्वर्थ इरः । हे मेधिर यस्त्वमेव विश्वस्य कृत्स्नस्य जगतः । तस्यैव प्रपञ्चः **दिवः** स्वर्गस्य च । **ग्मः** पृथिव्याश्च । आकारलोपः छान्दसः । **राजसि** राजा भवसि । **सः यामनि** काले । अस्माकमापत्काल एव **प्रति श्रुधि** । विज्ञापनमाकर्णय । मोचयामि त्वामिति प्रतिजानीहि वा ॥ २० ॥

**मन्त्रार्थमञ्जरी–** मेधिर, मेधाविन्, मत्वर्थ इरन्प्रत्ययः । (यः) त्वम् (एव) । विश्वस्य, कृत्स्नस्य जगतः । तस्यैव प्रपञ्चनम् दिवः, स्वर्गस्य च । ग्मः च, ग्मायाश्च, पृथिव्याश्च, आतो लोपश्छान्दसः । राजसि, राजा भवसि । सः (त्वम्) यामनि, काले, अस्माकमापत्काले । (एव) प्रतिश्रुधि, विज्ञापनमाकर्णय, 'मोचयामि त्वाम्' इति प्रतिजानीहि इति वा ॥ २० ॥

**स्कन्द–** **सः यामनि** इति तच्छब्दाद् यच्छब्दोऽध्याहार्यः । यः **त्वम् विश्वस्य** यावदर्थनीयस्य सर्वस्य हे **मेधिर** यज्ञवन्! **दिवः च ग्मः च** 'ग्मा' (निघ १-१) इति पृथिवीनाम । दिवश्च पृथिव्याश्च । **राजसि** ईशिषे । सः यामनि अधिकरणेऽत्र मनिर्द्रष्टव्यः । मृत्युं प्रति गम्यते यस्मित् स यामा मरणकालः तत्र । मह्यम् **प्रति श्रुधि** प्रतिशृणु । किम् । सामर्थ्यात् मुञ्चामि त्वाम् । त्वं न म्रियस इत्येतत् प्रतिजानीहीत्यर्थः ॥ २० ॥

**वेङ्कटमाधव– त्वम् विश्वस्य दिवः** पृथिव्याः **च राजसि** प्राज्ञ! **सः** गमनेऽभिलषितम् अस्माकम् **प्रति श्रुधि** ।। २० ।।

**मुद्गल–** हे **मेधिर** मेधाविन्! वरुण! **त्वम् दिवः च** द्युलोकस्यापि **ग्मः च** भूलोकस्यापि एवमात्मकस्य **विश्वस्य** सर्वस्य जगतो मध्ये **राजसि** दीप्यसे । **सः** तादृशः **त्वम् यामनि** क्षेमप्रापणे अस्मदीये **प्रति श्रुधि** प्रतिश्रवणम् आज्ञापनं कुरु । रक्षिष्यामीति प्रत्युत्तरं देहीत्यर्थः ।। २० ।।

**सायण–** हे **मेधिर** मेधाविन्! वरुण! **त्वं दिवश्च** द्युलोकस्यापि **ग्मश्च** भूलोकस्यापि एवमात्मकस्य **विश्वस्य** सर्वस्य जगतो मध्ये **राजसि** दीप्यसे । **सः** तादृशः **त्वं यामनि** क्षेमप्रापणे अस्मदीये **प्रति श्रुधि** प्रतिश्रवणम् आज्ञापनं कुरु । रक्षिष्यामीति प्रत्युत्तरं देहीत्यर्थः ।

दिवः । 'ऊडिदम्'(पा.सू.६-१-१७१) इत्यादिना षष्ठ्या उदात्तत्वम् । ग्मः । 'ग्मा' (नि.१-१-२) इत्येतत् भूनामसु पठितम् । 'आतो धातोः' इत्यत्र आतः इति योगविभागात् 'आतो लोपः' इति प्रतिषेधेऽपि व्यत्ययेन आकारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । यामनि । 'या प्रापणे' । 'आतो मनिन्क्वनिप्वनिपश्च' (पा.सू.३-२-७४) इति मनिन् । नित्वादाद्युदात्तत्वम् । श्रुधि । उक्तम् ।। २० ।।

**सिद्धाञ्जनम्–** हे **मेधिर** मेधाविन्! वरुण! **त्वं विश्वस्य** सर्वस्य जगतः **दिवश्च** द्युलोकस्य च **ग्मश्च** भूलोकस्य च अर्थे (ग्मा पृथिवीनाम, आतो लोपः छन्दसि) **राजसि** दीप्यसे । सर्वस्यापि राजा भवसीत्यर्थः । **सः** तादृशस्त्वं **यामनि** प्रयाणे त्वदीये **प्रति श्रुधि** प्रतिश्रवणं कुरु, मदीयाह्वानस्य प्रत्युत्तरं देहि, सर्वतो यासि त्वं राजा विश्वस्य । यामनि 'या प्रापणे', अस्मात् आतो मनिन् ।। २० ।।

## ऋक्संहिता पदपाठसहिता

**उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत । अवाधमानि जीवसे ।। २१,१९,२५ ।।**

उत् । उत् । ऽतमम् । मुमुग्धि । नः । वि । पाशम् । मध्यमम् । चृत । अव । अधमानि । जीवसे ।

## ऋग्भाष्यम्

**स त्वं त्रिगुणपाशान्नो मुमुग्धि छिन्धि चाञ्जसा ।। २१,१९,६ ।।**

**ऋग्भाष्यटीका– उदुत्तमम्** । तात्पर्यमाह ।। सत्वम् । हे वरुण! स एवं विज्ञापितस्त्वम् । **नो**ऽस्माकम् । **उत्तमं पाशं** सत्वगुणाख्यम् । उदञ्जसा **मुमुग्धि** मुञ्च । सुहृद्भ्यो दत्वा । **मध्यमं** च रजोगुणनामकं पाशम् । **वि चृत** 'चृती हिंसायाम्' । अञ्जसा छिन्धि । उदासीनेभ्यो दत्वा । **अधमानि** च बन्धनानि तमोवृत्तिरूपाणि । **जीवसे** जीवितुं मुक्त्यर्थम् । **अव चृत** द्विषद्भ्यो दत्वेति ।। २१ ।।

**मन्त्रार्थमञ्जरी–** (हे वरुण) (सः) एवं विज्ञापितस्त्वम् । नः अस्माकम् । उत्तमम् पाशम्, सत्त्वगुणाख्यम् । उत्, अञ्जसा । मुमुग्धि, सुहृभ्द्यो दत्त्वा मोचय । मध्यमम् (च) रजोगुण-नामकम् । विचृत, 'चृती हिंसायाम्' अञ्जसा छिन्द्धि, उदासीनेभ्यो दत्त्वास्मत्तो वियोजय । अधमानि (च), बन्धनानि तमोवृत्तिरूपाणि । जीवसे, जीवितुम्, मुक्त्यर्थम् । अव (चृत), द्विषभ्द्यो दत्त्वा वियोजय इति । प्रसिद्धपाशत्रयमोचनप्रार्थनं तु व्यक्तम् ।। २१ ।।

**स्कन्द– उत् उत्तमम्** उत्तमं तावत् **पाशम् मुमुग्धि** ऊर्ध्वं मुञ्च **नः** । **वि पाशम्** मध्यमम् **चृत** 'चृती हिंसाग्रन्थनयोः' । मध्यममपि पाशं तत्रैव स्थितं विग्रन्थय विमुञ्चेत्यर्थः । अधमानपि पाशान् **अव चृत** अधो मुञ्च **जीवसे** जीवयितुं माम् ।। २१ ।।

**वेङ्कटमाधव–** उत्तमस्य पाशस्य उन्मोचनम्, मध्यमस्य विचर्तनम्, अवमोचनम् अधमानां बन्धनानां जीवनायेति ।। २१ ।।

**मुद्गल– नः** अस्माकम् **उत्तमम्** शिरोगतम् **पाशम् उत् मुमुग्धि** उत्कृष्य मोचय । **मध्यमम्** उदरगतं पाशं **वि चृत** वियुज्य नाशय । **जीवसे** जीवितुम् अधमानि मदीयान् पादगतान् पाशान् **अव चृत** अवकृष्य नाशय ।। २१ ।।

**सायण– नः** अस्माकम् **उत्तमं** शिरोगतं **पाशम् उत् मुमुग्धि** उत्कृष्य मोचय । **मध्यमम्** उदरगतं पाशं **वि चृत** वियुज्य नाशय । **जीवसे** जीवितुम् **अधमानि** मदीयान् पादगतान् पाशान् **अव चृत** अपकृष्य नाशय ।

उत्तमम् । उञ्छादिषु पाठादन्तोदात्तत्वम् । मुमुग्धि । 'मुच्लृ मोक्षणे' । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । द्विर्भावः । हलादिशेषः । 'हुझल्भ्यो हेर्धिः' (पा.सू.६-४-१०१) इति हेर्धिरादेशः । 'तिङ्ङतिङः' इति निघातः । चृत । 'चृती हिंसाग्रन्थनयोः' । लोटो हिः । 'तुदादिभ्यः शः' (पा.सू.३-१-७७) । 'अतो हेः' (पा.सू.६-४-१०५) इति हेर्लुक् । जीवसे । 'जीव प्राणधारणे' । 'तुमर्थे सेसेन्' (पा.सू.३-४-९) इति असेप्रत्ययः । प्रत्ययस्वरः ॥

**सिद्धाञ्जनम्–** ऋचोऽस्यास्तात्पर्यं 'उदुत्तमं वरुण पाशम्' इति मन्त्रस्य (ऋ.सं.१-२४-१५) व्याख्यायां द्रष्टव्यम् । हे **वरुण! नः** अस्माकं **उत्तमं** ऊर्ध्वगतं द्युलोकवैभवप्रवेशप्रतिबन्धकं शिरोग्रन्थिरूपं **पाशं उन्ममुग्धि** उत्कृष्य मोचय ('मुच्लृ मोक्षणे' विकरणस्य श्लुः, छान्दसः)। **मध्यमं** मध्यमलोकीयविशुद्धमहाप्राणशक्तिप्रसारनिरोधकमध्यग्रन्थिरूपं पाशं **वि चृत** विश्लिष्य नाशय ('चृती हिंसाग्रन्थनयोः' तुदादिः)। **अधमानि** अधोगतानि पार्थिवबन्धनानि ऊर्ध्ववैभवव्यापारप्रतिरोधकमूलग्रन्थिरूपान् पाशानित्यर्थः, तान् **अव चृत** अपकृष्य नाशय । किमर्थम् ? **जीवसे** जीवनाय अस्मदीयाय दिव्याय इत्यर्थः, जीवसे– तुमर्थे असे प्रत्ययः छन्दसि ॥ २१,१९ ॥

॥ इति प्रथमाष्टके द्वितीयाध्याये एकोनविंशो वर्गः ॥

## ॥ अथ विंशो वर्गः ॥

(सूक्तम् २६)

## ऋक्संहिता पदपाठसहिता

(१० आजीगर्त्ति शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरात ऋषिः । अग्निः देवता । गायत्री छन्दः)

**वसि॑ष्वा॒ हि मि॑येध्य॒ वस्त्रा॑ण्यूर्जां पते । सेमं नो॑ अध्व॒रं य॑ज ॥ १ ॥**

वसि॑ष्व । हि । मि॒ये॒ध्य॒ । वस्त्रा॑णि । ऊ॒र्जा॒म् । प॒ते॒ ॥ १ ॥

## ऋग्भाष्यम्

**अथ स्तौत्यग्निं विष्णुमग्निमप्यग्निगोचरैः ।**

**वचनैः सर्वदेवानां पूजायै प्रोद्यतो भवन् ।**
**वसिष्टोत्तमवस्त्राणि भूषणैरप्यलङ्कुरु ।**
**कुर्वन्नुत्सवमत्यन्तमस्मदीयं मखं यज ।**
**नित्यमेध्य हरे देव भोग्यान्नानां सदा पते ।**
**ऊर्जितानां जनानां वा स्वस्मिन्नो अध्वरं यज ।**
**रमयत्यध्वनि शुभे येन तेनाध्वरो मखः ।। १ ।।**

**ऋग्भाष्यटीका–** **वसिष्वेति** दशर्चं सूक्तम् । अश्वं नेति त्रयोदशर्चम् । तत्रान्त्या दैवी । तां विहाय द्वाविंशतेर्देवतामाह । **अथेति** ।। अग्निगोचरैरग्रेर्योग्यैः । वसिष्व । सर्वदेवानाम् । यद्वा सर्वदेवानामित्यादि शुनःशेपस्यैव विशेषणम् । वसिष्वेत्याद्येव व्याख्यानम् । हे **मियेध्य** नित्यमेध्य सदापवित्र मेधेभव वा । **ऊर्जाम्** ऊर्जबलप्राणनयोः । करणे क्विप् । बलादिकरणानां भोग्यान्नानाम् । वैशिष्ट्यद्योतनाय भोग्येत्युक्तम् । 'ऊर्जं देवान्नमुद्दिष्टम्' इति वचनात् । यद्वा कर्तरि क्विप् । ऊर्जितानां बलादिमतां जनानाम् । सदा **पते** हरे देव । अग्निगतेन रूपेण सर्वदेवानां पूजायै प्रोद्यतो भवन् **वस्त्राणि वसिष्व** आच्छादय । वस्त्राच्छादनं विना प्रार्थनयासिद्धमत आह । **उत्तमेति** ।। उपलक्षणमेतत् । भूषणैरप्यलङ्कुरु आत्मानमिति शेषः । स एवमत्यन्तमुत्सवं कुर्वंस्त्वम् । **नो**ऽस्मदीयमिमं **अध्वरं** मखं **यज** देहि । सम्प्रदानानुक्तेः स्ववाक्यमेव विवृणोति । **स्वस्मिन्निति** ।। सम्प्रदानस्याधिकरणत्वविवक्षया । अक्षय्यं ब्राह्मणे दानमिति यथा । नो अध्वरमिति प्रकृतिर्वेदानुकरणेन । यद्वा । **नो अध्वरं यजे**त्यनुवादेन स्वस्मिन्नस्मदीयं मखं यजेति व्याख्यानम् । मखे अध्वरशब्दं निर्वक्ति । **रमयतीति** ।। शुभोऽध्वा स्वर्गादिमार्गः । ज्ञानं वा । तदङ्गभूतानां द्रव्याणामुपलक्षणमेतत् ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'वसि॑ष्वा' इति षड्विंशं दशर्चं वर्गद्वयात्मकमाग्नेयं गायत्रं सूक्तम् । (हे) मियेध्य, नित्यमेध्य, 'आधिक्येऽधिकम्' (म०व्या०सू०) इत्युक्तेः, सदा पवित्र । ऊर्जाम्, 'ऊर्ज बलप्राणनयोः' करणे क्विप्, बलादिकरणानां भोग्यान्नानाम्' 'ऊर्जं देवान्नमुद्दिष्टम्' (बृ० भा०) इति वचनात्, यद्वा– कर्तरि क्विप्, ऊर्जां बलादिमतां जनानाम् । सदा– पते, हरे । अग्निगतेन रूपेण सर्वदेवानां पूजायै प्रौद्यतो भवत् (त्वम्) वस्त्राणि, उत्तमवासांसि । वसिष्व, आच्छादय, उपलक्षणमेतत्– भूषणैरप्यलंकुरु । (आत्मानम्) इति योज्यम् । हि । सः,

एवमत्यन्तमुत्सवं कुर्वंस्त्वम् । नः, अस्मदीयम् । इमम् । अध्वरम्, अध्वनि स्वर्गमार्गे ज्ञानमार्गे वा रमयतीति रमेः ण्यर्थाड्डः, मखम् । यज, देहि, स्वस्मिन्कुर्विति भावः । 'सोऽचि लोपे चेत्पादपूरणम्' इति 'सेमम्' इति साधु । 'प्रकृत्यन्तःपादमव्यपरे' इति 'नो अध्वरम्' इत्यपि साधु ।। १ ।।

**स्कन्द–** 'तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयतमस्तन्नु स्तुह्यथ त्वोत्स्रक्ष्याम इति । सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या (ऐ.ब्रा.७-१६) ।

'वसिष्वा हि मियेध्येत्याग्नेये' (बृ.दे.३-९९) । 'वसिष्वा हि' इत्येते द्वे सूक्ते अग्निदेवते । **वसिष्व** वस आच्छादने । आच्छादय । परिधत्स्वेत्यर्थः । **हि**शब्दः पदपूरणः । हे **मियेध्य!** । यज्ञार्ह! किम् । **वस्त्राणि** सभायोग्यानि अन्यानि वासांसि । **ऊर्जाम् पते!** हविर्लक्षणानामन्नानां स्वामिन्! परिधाय **सः इमम् नः अध्वरम् यज** इति व्याख्यातः पादः (ऋ.१,१४,११) ।। १ ।।

**वेङ्कटमाधव–** आच्छादय यज्ञिय! ज्वाला अन्नानां **पते!** अथ अस्माकं यज्ञम् **इमम् यज** ।। १ ।।

**मुद्गल–** 'वसिष्व' इति दशर्चं तृतीयं सूक्तम् । शौनःशेपम् । गायत्रम् । आग्नेयम् । वरुणेन अग्निस्तुतौ प्रेरितः शुनःशेपः एतदादिसूक्तद्वयेनाग्निमस्तौत् । हे **मियेध्य!** यज्ञस्य योग्य! **ऊर्जाम् पते** । अन्नानां पालक! अग्ने! **वस्त्राणि** आच्छादकानि तेजांसि **वसिष्व** आच्छादय । प्रज्वलितस्तेजसा भवेत्यर्थः । **हि** यस्मात् प्रज्वलितः तस्मात् सः तादृशस्त्वम् **नः** अस्मदीयम् **इमम् अध्वरम्** निष्पादय ।। १ ।।

**सायण–** 'वसिष्व' इति दशर्चं तृतीयं सूक्तम् । अत्रानुक्रम्यते- 'वसिष्व दशाग्नेयं तु' इति । शुनःशेपः ऋषिः । गायत्री छन्दः । इदमुत्तरं च सूक्तम् आग्नेयम् । प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दसि एतदादिसूक्तद्वयमनुवक्तव्यम् । तथा च सूत्रितम्- 'वसिष्वा हीति सूक्तयोरुत्तमामुद्धरेत्' (आश्व.श्रौ.४.१३) इति ।।

वरुणेन अग्निस्तुतौ प्रेरितः शुनःशेपः एतदादिसूक्तद्वयेन अग्निमस्तौत् । तया च आम्नायते-

'तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति । सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या' (ऐ.ब्रा.७-१६) इति । हे **मियेध्य!** मेधस्य यज्ञस्य योग्य! **ऊर्जां पते** अन्नानां पालकाग्ने! **वस्त्राणि** आच्छादकानि तेजांसि **वसिष्व** आच्छादय । प्रज्वलितस्तेजसा भवेत्यर्थः । **हि** यस्मात् प्रज्वलितः तस्मात् **सः** तादृशस्त्वं **नः** अस्मदीयम् **इमम् अध्वरं यज** निष्पादय ।

वसिष्व । 'वस आच्छादने' । लोटि 'थासस्से'(पा.सू.३-४-८०) । 'सवाभ्यां वामौ'(पा.सू.३-४-९१) । 'छन्दस्युभयथा'(पा.सू.३-४-११७) इति आर्धधातुकत्वात् 'आर्धधातुकस्येड्वलादेः' (पा.मू.७-२-३५) इति इडागमः । लसार्वधातुकानुदात्तत्वे धातुस्वरः । 'अन्येषामपि दृश्यते'(पा.सू.६-३-१३७) इति संहितायां दीर्घः । मियेध्य । मकारैकारयोर्मध्ये इयागमश्छान्दसः । ऊर्जां पते । 'सुबामन्त्रिते' (पा.सू.२-१-२) इति पराङ्गवद्भावात् षष्ट्या-मन्त्रितस्य समुदायस्य आष्टमिको निघातः । सेमम् । 'सोऽचि लोपे चेत्पादपूरणम्' (पा.सू.६-१-१३४) इति सोर्लोपः ।। १ ।।

**सिद्धाञ्जनम्– मियेध्य** मेध्य, मेघस्य यज्ञस्य अहं (मे इति स्थाने मिये इति छान्दसः इयादेशः) **ऊर्जां पते** बलानां पालक, ऊर्ज बलप्राणनयोः, भ्रजादिभ्यः धातुभ्यः ताच्छील्ये क्विप्, ऊर्क इति प्रथमैकवचनम्, **वस्त्राणि** परिधानानि **वसिष्व** आच्छादय 'वस आच्छादने', लोटि इडागमः छान्दसः, तेजांसि हि अग्नेः परिधानानि तस्मात् प्रज्वलितो भवेत्यर्थः । **हि** पादपुरणः । **'सः नः इमं अध्वरं यज'** पादोऽयं व्याख्यातः (१-१४-११) ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**नि नो होता वरेण्यः सदा यविष्ठ मन्मभिः । अग्ने दिवित्मता वचः ।। २ ।।**

नि । नः । होता । वरेण्यः । सदा । यविष्ठ । मन्मऽभिः । अग्ने । दिवित्मता । वचः ।। २ ।।

## ऋग्भाष्यम्

**वचो नो नि नयात्यंतं दिवि व्याप्ततया सदा ।**
**अशेषदेवगत्वेन मन्मभिर्मतिभिः सह ।**
**अवमो दशदेवेषु वह्निर्विष्णुस्तु तत्स्थितः ।। २ ।।**

**ऋग्भाष्यटीका– नि नः** । वचो नः । हे **यविष्ठ** अग्ने **होता** वरेण्यस्त्वं **नो**ऽस्मदीयं वचो **मन्मभिः** मनज्ञाने । ततः करणे मनिन् । मतिभिर्बुद्धिवृत्तिभिः सह । **सदा** दिवित्मता दिविव्याप्ततया तनोतेर्ड्मतुप् । भावप्रधानं चेदम् । दिवीति तत्रस्थोपलक्षणम् । अशेषदेवगत्वेन सर्वदेवविषयत्वेनेति यावत् । **नि** अत्यन्तम् । नय प्रवर्तयेति योग्यक्रियाध्याहारः । अग्नेर्यविष्ठत्वं कथमित्यत आह ।। **अवम इति** । उषा स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः । प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः । इत्युक्तेषु दशदेवेष्ववमः । तस्माद्यविष्ठ इति शेषः । विष्णोस्तु कथं यविष्ठत्वमित्यत आह ।। **विष्णुस्त्विति** । यवीयसि तिष्ठतीति यविष्ठ इत्यर्थः । तदधीनत्वादर्थवदिति वा ।। २ ।।

**मन्त्रार्थमञ्जरी–** (हे) यविष्ठ, यवीयः । अग्ने । होता, होतरि स्थितस्तन्नामा । वरेण्यः, वरणीयः, वृञः 'वृञ एण्यः' इत्येण्यः । (त्वम्) नः, अस्मदीयम् । वचः । मन्मभिः, मतिभिः, बुद्धिवृत्तिभिः सह, 'मन ज्ञाने' इत्यतः करणे मनिन् । दिवित्मता, 'दिवि' इति द्युस्थोपलक्षणम्, तनोतेः ड्मतुप्, भावप्रधानम्, द्युस्थाशेषदेवेषु व्याप्तत्वेन, सर्वदेवविषयत्वेनेति यावत् । नि, अत्यन्तम् । सदा । (नय) प्रवर्तय' इति योग्यक्रियाध्याहारः । 'उषाः स्वाहा च पर्जन्ये मित्रोऽग्निर्वरुणो विधुः । प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः' (अनुव्या० ३।३।३५) इत्युक्तानां मध्ये दशदेवेष्वधमतया यविष्ठत्वमग्नेर्ज्ञेयम् । विष्णोस्तु– यवीयसि स्थितत्वेनोपचारः, तदधीनत्वन्यायेनान्यगतयविष्ठत्वं प्रति स्वातन्त्र्याद्धेतोर्मुख्यमेव वा यविष्ठत्वम् ।। २ ।।

**स्कन्द– नि** इत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । निषीदः **नः** अस्माकं **होता वरेण्यः** वरणीयः **सदा यविष्ठ!** युवतम! । अग्निर्हि जीर्णोऽपीन्धनं प्राप्य पुनस्तरुणीभवति, अतो युवतमः । **मन्मभिः** यानि तवातिशयवन्ति ज्ञानानि तैः । हे **अग्ने! दिवित्मता** दीप्तिमता च वचसा युक्तः ।। २ ।।

**वेङ्कटमाधव– नि** कामय अस्मान् **हाता** वरणीयः **सदा** युवतम! पूजनीयैः स्तुतिभिः अग्ने! दीप्तिमता स्तोत्रेण ।। २ ।।

**मुद्गल– सदा यविष्ठ!** सर्वदा युवतम हे **अग्ने! वरेण्यः** वरणीयस्त्वम् **नः** अस्माकम् **होता** होमनिष्पादको भूत्वा **दिवित्मता** दीप्तिमता **वचः** वचसा स्तूयमानः सन् नि षीदेति शेषः । कीदृशस्त्वम् । **मन्मभिः** ज्ञापकैः तेजोभिर्युक्त इति शेषः ।। २ ।।

**सायण– सदा यविष्ठ!** सर्वदा युवतम हे **अग्ने! वरेण्यः** वरणीयस्त्वं **नः** अस्माकं **होता** होमनिष्पादको भूत्वा **दिवित्मता** दीप्तिमता **वचः** वचसा स्तूयमानः सन् नि षीद इति शेषः। कीदृशत्वम् । **मन्मभिः** ज्ञापकैः तेजोभिर्युक्त इति शेषः ।

यविष्ठ । युवशब्दात् इष्ठनि 'स्थूलदूर' (पा.सू.६.४.१५६) इत्यादिना यणादिपरस्य लोपः, पूर्वस्य उकारस्य गुणश्च । अवादेशः । आमन्त्रितनिघातः । मन्मभिः । 'मन ज्ञाने' । 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३-२-१७८) इति मनिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । दिवित्मता । 'दिवु क्रीडादौ' । 'इश्तिपौ धातुनिर्देशे' (पा.सू.३.३.१०८) इति इक्प्रत्ययः। तेन च धातुवाचिना दिविशब्देन धात्वर्थो दीप्तिर्लक्ष्यते । यद्वा ! औणादिको भावे किप्रत्ययः । दिविशब्दात् मतुपि तकारोपजनश्छान्दसः । यद्वा । बाहुलकात् दिवेभवि इतक् । मतुपि 'तसौ मत्वर्थे' (पा.सू.१-४-१९) इति भत्वात् जश्त्वाभावः । वचः । 'सुपां सुलुक्' (पा.सू.७-१-३९) इति तृतीयेकवचनस्य लुक् ॥ २ ॥

**सिद्धाञ्जनम्– सदा** सर्वदा **यविष्ठ** युवतम, यजमानार्थं साधयितव्ये पटुत्वं यजमाने लब्धजन्मनोऽनुदिनप्रवर्धनेन पुष्टिं चाग्नेर्द्योतयितुमिदं विशेषणम् । **वरेण्यः** वरणीयः श्रेष्ठः **मन्मभिः** प्राज्ञैर्मननैर्युक्तस्त्वं **अग्ने नः** अस्मदीयो **होता** देवानामाह्वाता भूत्वा, **नि** निषीदेति योग्यक्रियया सम्बध्यते । तथा अग्नेर्निषदनायोत्तेजनमाह, **दिवित्मता** दीप्तिमता, दिविशब्दान्मतुपि तकारोपजनः छान्दसः, **वचः** वचसा, तृतीयैकवचनस्य लुक्, उज्ज्वलितेन अस्मदीयस्तोत्रेण प्रीणितो निषीदेति भावः ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**आ हि ष्मा सूनवे पितापिर्यजत्यापये । सखा सख्ये वरेण्यः ॥ ३ ॥**

आ । हि स्म । सूनवे । पिता । आपिः । यजति । आपये । सखा । सख्ये । वरेण्यः ॥ ३ ॥

## ऋग्भाष्यम्

**सख्ये च सूनवे मह्यमायजत्येष देवताः ।**
**आपिः प्राप्यो मम स्वामी भृत्यत्वान्मह्यमापये ॥ ३,४ ॥**

**ऋग्भाष्यटीका–** **आ हि** । सख्ये च । **वरेण्यो** मम **पिता** एषोऽग्निः **सूनवे** मह्यं मदर्थे । यद्वा मम सखैष सख्ये च मह्यम् । अथवा **आपिः** कर्मणीकारः । प्राप्यः । मम स्वामीति यावत् । एषभृत्यत्वात् **आपये** कर्तरीकारः । मह्यं **आ यजति हि स्म** देवता इति शेषः । नानाविधः सम्बन्धो जीवेश्वरयोरनेनोच्यते ॥ ३ ॥

**मन्त्रार्थमञ्जरी–** वरेण्यः । मम पिता । (एषोऽग्निः) सूनवे, पुत्राय । (मह्यम्) मदर्थे । यद्वा मम मखा (एषः) सख्ये (च मह्यम्) अथ वा आपिः, कर्मणीकारः, प्राप्यः, मम स्वामीति यावत् (एषः) भृत्यत्वात् । आपये, कर्तरीकारः, आप्नुवते । (मह्यम्) आ यजति हि स्म (देवताः) इति शेषः । नानाविधः सम्बन्धो जीवेश्वरयोरनेनोच्यते ॥ ३ ॥

**स्कन्द–** आङ् मर्यादायाम् । **हि**शब्दो यस्मादर्थे । **स्म**शब्दः पदपूरणः । यस्मात् मर्यादया सूनवे पुत्रार्थम् **पिता आपिः** ज्ञातिश्च होता निषद्य **यजति आपये** ज्ञातये । सखा च सख्ये **वरेण्यः** वरणीयः । त्वं चास्माकं पित्रादिरूप इत्यर्थः ॥ ३ ॥

**वेङ्कटमाधव–** कश्चिदग्नेः स्तोता पुत्रस्थाने भवति तस्मै अयम् **पिता** भूत्वा **यजति** । ज्ञातिः ज्ञातये, मित्राय मित्रं वरणीयः । हिशब्दो विस्मये ॥ ३ ॥

**मुद्गल–** हे अग्ने! **वरेण्यः** वरणीयः **पिता** पितृस्थानीयस्त्वम् **सूनवे** पुत्रस्थानीयाय मह्यमभीष्टं देहीति शेषः । **हि स्म** इति निपातद्वयं सर्वथेत्यमुमर्थमाचष्टे । अभीष्टदाने दृष्टान्तद्वयमुच्यते– यथा **आपिः** बन्धुः **आपये** बन्धवे **आ यजति हि स्म** । सर्वथा ददातीति शेषः । **सखा** प्रियः **सख्ये** प्रियाय अभीष्टं सर्वथा ददाति तथा त्वमपि देहि ॥ ३ ॥

**सायण–** हे अग्ने! **वरेण्यः** वरणीयः **पिता** पितृस्थानीयः त्वं **सूनवे** पुत्रस्थानीयाय मह्यम् अभीष्टं देहीति शेषः । **हि स्म** इति निपातद्वयं सर्वथेत्यमुमर्थमाचष्टे । अभीष्टदाने दृष्टान्तद्वय-मुच्यते । यथा **आपिः** बन्धुः **आपये** बन्धवे **आ यजति हि स्म** । सर्वथा ददातीति शेषः । **सखा** प्रियः **सख्ये** प्रियाय अभीष्टं सर्वथा ददाति तथा त्वमपि देहि ।

स्मा सूनवे । 'निपातस्य च' (पा.सू.६-३-१३६) इति दीर्घः । यजतीत्यस्य सखा सख्ये इत्यत्राप्यनुषङ्गात् तदपेक्षयेयं प्रथमा इति 'चादिलोपे विभाषा' (पा.सू.८-१-६३) इति न

निहन्यते । यद्वा । 'हि च' (पा.सू.८-१-३४) इति निघातप्रतिषेधः । सख्ये । 'समाने ख्यश्चोदात्तः' इति सखिशब्दः इण्प्रत्ययान्त आद्युदात्तः । सुपः पित्त्वादनुदात्तत्वे स एव शिष्यते ॥ ३ ॥

**सिद्धाञ्जनम्– स्म** पादपूरणः, **आ** यजतिक्रियया सम्बध्यते, हि प्रसिद्धौ । **सूनवे** पुत्राय **पिता** जनकः **आ यजति** यजनं सर्वथा करोति, पुत्रं यजमाने सति, तस्य पिता स्वयमेव यजमान इव वात्सल्याद् यज्ञं निर्वहति । तथा **आपये** बान्धनाय **आपिः** बन्धुः, **सख्ये** सुहृदे **वरेण्यः** वरणीयः **सखा** च आ यजति । एवं ममापि त्वं पितेव आपिरिव सखेव भवसि भगवन्, तस्माद्यजेति प्रार्थना ॥ ३ ॥

## ऋक्संहिता पदपाठसहिता

**आ नो॑ ब॒र्ही रि॒शाद॑सो॒ वरु॑णो मि॒त्रो अ॑र्य॒मा । सीद॑न्तु॒ मनु॑षो यथा ॥ ४ ॥**

आ । नः॒ । ब॒र्हिः । रि॒शाद॑सः । वरु॑णः । मि॒त्रः । अ॒र्य॒मा । सीद॑न्तु । मनु॑षः । य॒था ॥ ४ ॥

**ऋग्भाष्यटीका– आ नः** । हे अग्ने! **वरुणो मित्रोऽर्यमा** इत्येवमादयः । **रिशादसो** देवाः । **नो बर्हिरागत्य सीदन्तु** उपविशन्तु । **मनुषो** मनुष्या **यथा** तथा प्रत्यक्षीभूताः ॥ ४ ॥

**मन्त्रार्थमञ्जरी–** (हे अग्ने) 'वरुणः, मित्रः, अर्यमा' इत्येवमादयः । रिशादसः, प्रागुक्तनिरुक्त्या अधिकसुखवन्तो देवाः । नः बर्हिः । आ, आगत्य । मनुषः, मनुष्याः । यथा (तथा) प्रत्यक्षीभूताः सीदन्तु, उपविशन्तु ॥ ४ ॥

**स्कन्द– आ** इत्युपसर्गः **सीदन्तु** इत्याख्यातेन सम्बन्धयितव्यः । **नः** अस्माकं स्वभूतम् **बर्हिः रिशादसः** हिंसतां क्षेप्तारः । प्रतिहिंसितार इत्यर्थः । **वरुणः मित्रः अर्यमा** च **आ सीदन्तु** । वरुणादयश्चात्र देवमात्रोपलक्षणार्थाः । सर्वे देवा आसीदन्त्वित्यर्थः । **मनुषः यथा** मनुष्या इव ॥ ४ ॥

**वेङ्कटमाधव– आ सीदन्तु बर्हिः** अस्माकम् इमे देवा मनोरिव प्रजापतेः रिशतामसितारः ॥ ४ ॥

**मुद्गल–** हे अग्ने! वरुणादयो देवाः त्वद्बन्धवः त्वया प्रेरिताः **रिशादसः** हिंसकानदन्तः **नः** अस्मदीयम् **बर्हिः** यज्ञम् **आ सीदन्तु** । दृष्टान्तः– **यथा मनुषः** ज्ञानिनः प्रजापतेर्यज्ञमासीदन्ति तद्वत् ।। ४ ।।

**सायण–** हे अग्ने! वरुणादयो देवाः त्वद्बन्धवः त्वया प्रेरिताः **रिशादसः** हिंसकानदन्तः **नः** अस्मदीयं **बर्हिः** यज्ञम् **आ सीदन्तु** । तत्र दृष्टान्तः– **यथा मनुषः** प्रजापतेर्यज्ञमासीदन्ति तद्वत् ।

बर्ही रिशादसः । विसजनीयस्य रुत्वे कृते 'रो रि' (पा.सू.८-३-१४) इति रेफलोपः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (पा.सू.६-३-१११) इति इकारस्य दीर्घत्वम् । रिशादसः। 'रिश हिंसायाम्' । रिशन्ति हिंसन्तीति रिशाः शत्रवः । 'इगुपधज्ञाप्रीकिरः कः' (पा.सू.३-१-१३५) । तानदन्तीति रिशादसः । 'सर्वधातुभ्योऽसुन्' (उ.सू.६३८) कृदुत्तरपदप्रकृतिस्वरत्वम् । सीदन्तु । 'षद्लृ विशरणगत्यवसादनेषु' । 'पाघ्रा' (पा.सू.३-१-१३७) इत्यादिना सीदादेशः । शपः पित्वादनुदात्तत्वम् । शतुश्च लसावधातुकस्वरेण धातुस्वरः शिष्यते । मनुषः । 'मन ज्ञाने' । मन्यते जानातीति मनुः प्रजापतिः । 'जनेरुसिः, निच्च' इत्यनुवृत्तौ 'बहुलमन्यत्रापि' (उ.सू.२.२७८ ) इति औणादिकः उसिप्रत्ययः । नित्वादाद्युदात्तत्वम् । यथा । 'यथेति पादान्ते' (फि.सू.८५) इति सर्वानुदात्तत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** हे अग्ने!, त्वया आहूताः प्रेरिताः देवाः **रिशादसः** हिंसकान् अदन्तः **मित्रः वरुणः अर्यमा च नः** अस्मदीयं **बर्हिः** अन्तर्वेद्यामास्तीर्णं आसनं **आ सीदन्तु** आगत्य निषीदन्तु । क इव? **मनुषो यथा** मनुष्या इव, प्रत्यक्षीभूताः व्यवहारयोग्या भवन्तु देवा इति भावः । मनुषः मनुष्या इति स्कन्दस्वामी । प्रजापतेरिति सायणः । देवाः प्रजापतेर्यज्ञमागताः किल! मनुः प्रजापतिः तस्य यज्ञं यथा देवा आगताः तथा इममपीति तात्पर्यमाह सायणः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**पूर्व्यं होतरस्य नो मन्दस्व सख्यस्य च । इमा उ षु श्रुधी गिरः ।। ५, २० ।।**

पूर्व्य । होतः । अस्य । नः । मन्दस्व । सख्यस्य । च । इमाः । ऊँ इति । सु । श्रुधि । गिरः ।।

## ऋग्भाष्यम्

**अस्य मेऽर्थे कुरु मदं स्वातंत्र्यान्मादयस्व वा ॥ ५, २० ॥**

**ऋग्भाष्यटीका– पूर्व्य होतः** । अस्य मे । हे **पूर्व्य** पूर्वस्मिन्काले भव । **होतः** अग्रे । **अस्य** एवं स्तुतवतः **सख्यस्य च** भावभवित्रोरभेदात् । सख्युश्च **नः** मेऽर्थे **मन्दस्व** मदं कुरु । इमा मदीयाः । गिरश्च **सुश्रुधि** सम्यक्शृणु । उ एव । मन्दस्वेति प्रकारान्तरेण व्याख्याति । **स्वातन्त्र्यादिति** ॥ स्वातन्त्र्यात्कारणात् णिचोंतर्णीतत्वेन मन्दस्वेत्यस्य मादयस्वेति वार्थः । अस्मिन्पक्षेऽस्य नः सख्यस्येति षष्ठी द्वितीयार्थे । यद्वा देवानित्यध्याहारः ॥ ५, २० ॥

**मन्त्रार्थमञ्जरी–** (हे) पूर्व्य, पूर्वस्मिन्काले भव, पूर्वशब्दाद्भवार्थे यत् । होतः, अग्ने । अस्य, एवं स्तुवतः । सख्यस्य च, भावभवित्रोरभेदात् सख्युश्च । नः, अस्मदर्थे । मन्दस्व, मदं कुरु, मादयस्वेति वा, तथात्वे 'अस्य' इत्यादिषष्ठ्यो द्वितीयार्थाः (देवान्) इति वा शेषः । इमाः, मदीयाः । गिरः (च) सु श्रुधि, सम्यक्छृणु । उ, एव ॥ ५ ॥

**स्कन्द–** पूर्वं एव पूर्व्यः । यकारः उपजनः । हे **पूर्व्य!** चिरन्तन! **होतः! अस्य नः मन्दस्व सख्यस्य च** सख्यस्येति द्वितीयार्थे षष्ठी । सख्यं च 'देवैः सह मनुष्याणां स्तुत्यस्तोतृत्वलक्षणम्' । इदं सख्यं च नः । उ **सु** इति पदपूरणौ । **इमाः श्रुधि गिरः** । शुनःशेपो देवानां स्तोतेत्वेतच्च प्रकाशय इमाः च स्तुतीः शृण्वित्यर्थः । अथवा अस्य सख्यस्येति सप्तम्यर्थे षष्ठी । मन्दतिरपि मोदनार्थः । 'मदि स्तुतिमोदमदस्वप्रकान्तिगतिषु' इति । अस्मिंश्च सख्ये मोदस्व इमाश्च शृणु स्तुतीरित्यर्थः ॥ ५ ॥

**वेङ्कटमाधव–** पूर्वेषु भव! **होतः!** अस्माकम् इदं सख्यम् अनुपालय । स्तुतीः **च इमाः** सुष्ठु शृणु ॥ ५ ॥

**मुद्गल–** हे **पूर्व्य!** अस्मदादेः पूर्वमुत्पन्न! **होतः!** होमनिष्पादकाग्ने! **नः** अस्मदीयस्य प्रवर्तमानस्य **अस्य** यज्ञस्य **सख्यस्य च** अस्मदनुग्रहस्य च सिद्ध्यर्थं मन्दस्व त्वं हृष्टो भव । इमाः अस्माभिः प्रयुज्यमानाः **गिरः** उ षु स्तुतिरूपा वाचोऽपि **श्रुधि** शृणु ॥ ५ ॥

**सायण–** हे **पूर्व्य!** अस्मदादेः पूर्वमुत्पन्न! **होतः!** होमनिष्पादकाग्ने! **नः** अस्मदीयस्य **अस्य** प्रवर्तमानस्य यज्ञस्य **सख्यस्य च** अस्मदनुग्रहस्य च सिद्ध्यर्थं **मन्दस्व** त्वं हृष्टो भव । **इमाः** अस्माभिः प्रयुज्यमानाः **गिरः उ षु** स्तुतिरूपा वाचोऽपि **श्रुधि** शृणु ।

पूर्व्य । आमन्त्रिताद्युदात्तत्वम् । होतः इत्यस्य 'नामन्त्रिते समानाधिकरणे' (पा.सू.८-१-७३) इति पूर्वस्य विद्यमानत्वात् आष्टमिको निघातः । अस्य । 'ऊडिदम्' इति षष्ठ्या उदात्तत्वम् । मन्दस्व । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । शपः पित्त्वादनुदात्तत्वम् । तिङ्च लसार्वधातुकस्वरेण धातुस्वरः । 'अपादादौ' इति पर्युदासात् आष्टमिकनिघाताभावः । सख्यस्य । सख्युः कर्म सख्यम् । 'सख्युर्यः' (पा.सू.५.१.१२६) इति यप्रत्ययः । 'यस्य' इति लोपे प्रत्ययस्वरः । उ षु । 'सुनः' (पा.सू.८.३.१०७) इति षत्वम् । श्रुधि । 'श्रु श्रवणे' । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (पा.सू.६-४-१०२) इति हेर्धिरादेशः । 'बहुलं छन्दसि' (पा.सू.२-४-३९) इति शपो लुक् ।। ५ ।। २० ।।

**सिद्धाञ्जनम्– पूर्व्य** सर्वेषां **नः** पूर्वमुत्पन्न, **होतः** हे अग्ने, **नः** अस्मदीयम्य **अस्य** यजनस्य **सख्यस्य** च त्वत्प्रसादसाधकसखिभावस्य च सिद्धये **मन्दस्व** मोदस्व । उ अपि च **इमाः** अस्मदीयाः **गिरः** स्तुतीः **सु** सुतरां सावधानमित्यर्थः, **श्रुधि** शृणु ।। ५,२० ।।

।। इति प्रथमाष्टके द्वितीयाध्याये विंशो वर्गः ।।

## ।। अथ एकविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**यच्चिद्धि शश्व॑ता॒ तना॑ दे॒वंदे॑वं॒ यजा॑महे । त्वे इद्धू॑यते ह॒विः ।। ६ ।।**

यत् चित् हि शश्व॑ता । तना॑ । दे॒वम्ऽदे॑वम् । यजा॑महे । त्वेइति॑ । इत् । हू॒यते॑ । ह॒विः ।। ६ ।।

## ऋग्भाष्यम्

**शश्वद्भिस्तरतः सर्वान्यदा देवान्यजामहे ।**
**तदा त्वय्येव हि हविर्हूयते..............।। ६ ।।**

**ऋग्भाष्यटीका– यच्चित्** । शश्वत् । **शश्वता** शश्वत् । सर्वेषु कालेषु । **तना** विस्तरतः सर्वदिशेषु । **चिदपि** । **यत्** यदा **देवंदेवम्** सर्वान्देवान् **यजामहे** सर्वे वयं यजमानाः । तदा **त्वे इत्** त्वय्येव । **हविर्हूयते हि** ।। ६ ।।

**मन्त्रार्थमञ्जरी–** शश्वता, शश्वत्, सर्वेषु कालेषु । तना, विस्तरतः, सर्वदिशेषु, तनोतेः आकारः । चित्, अपि । यत्, यदा । देवं देवम्, सर्वान्देवान् । यजामहे, सर्वे वयं यजमानाः । (तदा) त्वे इत्, त्वय्येव । हविः हूयते हि ।। ६ ।।

**स्कन्द– यत् चित्** यद्यपि **हि** इति पदपूरणः । **शश्वता तना** 'शश्वत्' (निघ.३-१) इति बहुनाम । बहुना हविर्लक्षणेन धनेन **देवंदेवम् यजामहे** । यद्यपीति वचनात् तथापीत्यध्याहार्यम् । तथापि **त्वे इत्** इच्छब्द एवार्थे । त्वय्येव **हूयते** सर्वं तत् हविः, नान्यत्र क्वचित् ।। ६ ।।

**वेङ्कटमाधव– यदि हि** वयं बहुना धनेन सर्वान् देवान् **यजामहे**, त्वयि एव तेभ्योऽपि **हूयते** हविः ।। ६ ।।

**मुद्गल–** हे अग्ने! **यच्चिद्धि** यद्यपि **शश्वता** शाश्वतेन नित्येन **तना** विस्तृतेन हविषा **देवंदेवम्** अन्यमन्यं वरुणेन्द्रादिरूपं नानाविधं देवताविशेषम् **यजामहे** । तथापि तत् **हविः** सर्वम् **त्वे इत्** त्वय्येव **हूयते** । अतो देवतान्तरविषयो यागोऽपि त्वदीयैव सेवेत्यर्थः ।। ६ ।।

**सायण–** हे अग्ने! **यच्चिद्धि** यद्यपि **शश्वता** शाश्वतेन नित्येन **तना** विस्तृतेन हविषा **देवंदेवम्** अन्यमन्यं वरुणेन्द्रादिरूपं नानाविधं देवताविशेषं **यजामहे** तथापि तत् **हविः** सर्वं **त्वे इत्** त्वय्येव **हूयते** । अतो देवतान्तरविषयो यागोऽपि त्वदीयैव सेवेत्यर्थः ।

तना । 'तनु विस्तारे' । 'क्विप् च' इति क्विप् । यद्वा । पचाद्यच् । 'सुपां सुलुक्' इति तृतीयाया आकारः । देवंदेवम् । 'नित्यवीप्सयोः' इति द्विर्भावः । 'तस्य परमाम्रेडितम्' (पा.सू.८-१-२) इत्युत्तरस्य आम्रेडितसंज्ञायाम् 'अनुदात्तं च' (पा.सू.८-१-३) इति सर्वानुदात्तत्वम् । यजामहे । 'निपातैर्यद्यदिहन्त' (पा.सू.८-१-३०) इति निघातप्रतिषेधः । त्वे । युष्मच्छब्दात् सप्तम्येकवचनस्य 'सुपां सुलुक्' इति शेआदेशः । 'स्वमावेकवचने' इति मपर्यन्तस्य त्वादेशः ।

शेपलोपे 'अतो गुणे' (पा.सू.६-१-९७) इति परपूर्वत्वम् । 'शे' (पा.सू.१-१-१३) इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि' (पा.सू.६-१-१२५) इति प्रकृतिभावः । हूयते । 'अकृत्सार्वधातुकयोः' (पा.सू.७-४-२५) इति दीर्घः ।। ६ ।।

**सिद्धाञ्जनम्–** हे अग्ने!, **यच्चिद्धि** यद्यपि **शश्वता** शाश्वतेन निरन्तरमित्यर्थः, **तना** ततेन विस्तृतेन यजनेन **देवंदेवम्** बहुदेववृन्दं, वीप्सायां द्विर्भावः **यजामहे,** तथाऽपि **हविः** अस्मदर्पणद्रव्यं **त्वे इत्** त्वय्येव **हूयते** । इन्द्रादीनां देवानां यजनं अग्निमुखेन हि सिद्ध्यति । तना– 'तनु विस्तारे', क्विप् चेति क्विप् तन इति प्रथमैकवचनम् । त्वे– युष्मच्छब्दात् सप्तम्येकवचनस्य शे आदेशः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः । प्रियाः स्वग्नयो वयम् ।। ७ ।।**

प्रियः । नः । अस्तु । विश्पतिः । होता । मन्द्रः । वरेण्यः । प्रियाः । सुऽअग्नयः । वयम् ।। ७ ।।

## ऋग्भाष्यम्

**.....................स प्रियो भव ।**

**मन्द्रो मदकरः......................।। ७,८ ।।**

**ऋग्भाष्यटीका– प्रियो नः** । सम्प्रियः । **विश्पतिः** विशां प्रजानां पतिः । **मन्द्रः** मन्दतेः कर्तरि रः मदकरः । सुखकरो **वरेण्यो** होताग्निः । **नः** प्रियोऽस्तु । स एवं गुणविशिष्टस्त्वं नः प्रियो भवेति यावत् । **स्वग्नयः** शोभनोऽग्निर्येषामस्ति ते तथोक्ताः । वयमपि तस्य प्रिया असाम ।। ७ ।।

**मन्त्रार्थमञ्जरी–** विश्पतिः, विशां प्रजानां पतिः । मन्द्रः, मन्दतेः कर्तरि रक्, मदकरः, सुखकरः । वरेण्यः । होता, अग्निः । नः प्रियः अस्तु, स एवं गुणविशिष्टस्त्वं नः प्रियो भवेति यावत् । स्वग्नयः, शोभनोऽग्निर्येषामस्तीति स्वग्नयः । वयम् (अपि) तस्य प्रियाः (असाम) ।। ७ ।।

**स्कन्द– प्रियः नः अस्तु** । तथोपकरोतु यथाऽस्माकं प्रियो भवतीत्यर्थः । विशो मनुष्यास्तेषां पतिरग्निः । **होता मन्द्रः** मन्दतेर्चतिकर्मण एतद्रूपम् । स्तुत्यः स्तोता वा । **वरेण्यः** वरणीयः । अग्नेरपि **प्रियाः** स्याम **स्वग्नयः** शोभनैराहवनीयादिभिर्युक्ताः वयम् ॥ ७ ॥

**वेङ्कटमाधव– प्रियः नः अस्तु विश्पतिः होता** मादयिता वरणीयः । **वयम्** चास्मै **स्वग्नयः प्रियाः** स्याम ॥ ७ ॥

**मुद्गल– विश्पतिः** विशां प्रजानां पालकः **होता** होमनिष्पादकः **मन्द्रः** हृष्टः **वरेण्यः** वरणीयः अग्निः **नः** अस्माकम् **प्रियः अस्तु** । **वयम्** अपि **स्वग्नयः** शोभनाग्नियुक्ताः सन्तः तव **प्रियाः** भूयास्मेति शेषः ॥ ७ ॥

**सायण– विश्पतिः** विशां प्रजानां पालकः **होता** होमनिष्पादकः **मन्द्रः** हृष्टः **वरेण्यः** वरणीयोऽग्निः **नः** अस्माकं **प्रियः अस्तु** । **वयम्** अपि **स्वग्नयः** शोभनाग्नियुक्ताः सन्तः तव **प्रियाः** भूयास्मेति शेषः ।

विश्पतिः । 'पत्यावैश्वर्ये' (पा.सू.६-२-१८) इति पूर्वपदप्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' (पा.सू.६-२-१९९) इत्युत्तरपदाद्युदात्तत्वम् । वरेण्यः । 'वृज एण्यः' (उ.सू.३. ३७८) । वृषादित्वादाद्युदातत्वम् । स्वग्नयः । बहुव्रीहौ 'नञ्सुभ्याम्' (पा.सू.६-२-१७२) इत्युत्तरपदान्तोदात्तत्वम् ॥ ७ ॥

**सिद्धाञ्जनम्– विश्पतिः** विशां प्रजानां पतिः पालकः **होता** आह्वाता **मन्द्रः** प्रहृष्टः **वरेण्यः** वरणीयः अग्निः **नः** अस्माकं **प्रियः अस्तु** सर्वदा प्रियो भूयादित्यर्थः । **वयं** वयमपि तस्य **प्रियाः स्वग्नयः** शोभनोऽग्निर्येषां ते, शोभनाग्निसम्पन्नाः भूयास्म ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**स्वग्नयो हि वार्यं देवासो दधिरे च नः । स्वग्नयो मनामहे ॥ ८ ॥**
सुऽअग्नयः । हि । वार्यम् । देवासः । दधिरे । च । नः । सुऽअग्नयः । मनामहे ॥ ८ ॥

**ऋग्भाष्यटीका– स्वग्नयो हि** । स्वग्नयो **देवासो** देवाः । **नः** अस्मभ्यम् । **वार्यं** वरणीयम् । वित्तं **दधिरे** दत्तवन्तः । चशब्दात्पालयांबभूवुश्च । स्वग्नयो वयं च । तन्**मनामहे** मन्यामहे । अस्मदीयं देवताभिपूजनं देवानां चास्मभ्यं वित्तदानादिकं सर्वमग्निनिमित्तकमिति ॥ ८ ॥

**मन्त्रार्थमञ्जरी–** स्वग्नयः । देवासः, देवाः । नः, अस्मभ्यम् । वार्यम्, वरणीयं वित्तम् । दधिरे, दत्तवन्तः । (हि) चशब्दात्पालयाम्बभूवुश्च । स्वग्नयः (वयं च तान्) मनामहे, मन्यामहे । अस्मदीयं देवतापूजनं देवतानां चास्मभ्यं वित्तदानादिकं सर्वमग्निप्रसादहेतुकमिति ॥ ८ ॥

**स्कन्द– स्वग्नयः हि** हिशब्दोऽत्र पदपूरणः । शोभनाहवनीयादिभिर्युक्ता **वार्यम्** वरणीयम् । किं तत् । सामर्थ्यादग्नेः स्तोत्रम् । **देवासः दधिरे च** देवशब्दोऽत्र हविर्दानादृत्विक्षु वर्तते । चशब्दश्चास्मात् परो द्रष्टव्यः । देवाश्च दधिरे ऋत्विजश्च विश्वामित्रादयो धारयन्ति कुर्वन्ति । **नः** अस्माकं सम्बन्धिना । वयं च तैराहवनीयादिभिः **स्वग्नयः मनामहे** मन्यतेरर्चतिकर्मण एतद् रूपम् । स्तुमः । अथवा हिशब्दो यस्मादर्थे । वार्यमिति सोमलक्षणहविर्वचनः । दधिरे चेति चशब्दाद् योग्यद्वितीयसमुच्चयाध्याहारः । मनामह इत्यपि याञ्चायाम् । एवमेकवाक्यता– यस्मात् स्वग्नयः ऋत्विजोऽस्मत्तो वरणीयतरं सोमलक्षणं हविर्धारयन्ति, दास्यन्ति चाग्नये, तस्मात् स्वग्नयो वयं याचामहे । किम् । सामर्थ्यादात्मविमोक्षम् ॥ ८ ॥

**वेङ्कटमाधव– स्वग्नयः हि** वरणीयं धनम् अस्मभ्यम् देवा धारयन्ति । ततो वयम् **स्वग्नयः** हविर्वहनायाग्निं स्तुमः ॥ ८ ॥

**मुद्गल– स्वग्नयः** शोभनाग्नियुक्ताः **देवासः** दीप्यमाना ऋत्विजः **नः** अस्मदीयम् **वार्यम्** वरणीयं हविः **हि** यस्मात् **दधिरे** धृतवन्तः तस्माद्वयम् **स्वग्नयः** शोभनाग्नियुक्ताः सन्तः **मनामहे** त्वां याचामहे ॥ ८ ॥

**सायण– स्वग्नयः** शोभनाग्नियुक्ताः **देवासः** दीप्यमाना ऋत्विजः **नः** अस्मदीयं **वार्यम्** वरणीयं हविः **हि** यस्मात् **दधिरे** धृतवन्तः तस्माद्वयं **स्वग्नयः** शोभनाग्नियुक्ताः सन्तः **मनामहे** त्वां याचामहे ।

वार्यम् । 'वृञ् वरणे' । 'वृङ् सम्भक्तौ' । 'ऋहलोर्ण्यत्' (पा.सू.३-१-१२४) । 'ईडवन्द' (पा.सू.६-१-२१४) इत्यादिनाद्युदात्तत्वम् । दधिरे । इरेचः चित्त्वादन्तोदात्तत्वम् । 'हि च' (पा.सू.८-१-३४) इति निघातप्रतिषेधः । मनामहे । 'मन ज्ञाने' । व्यत्ययेन शप् ॥ ८ ॥

**सिद्धाञ्जनम्–** **स्वग्नयः** शोभनाग्निसमेताः सन्तः **देवासः** **च** देवाश्च **नः** अस्मदर्थ **वार्यम्** वरणीयं (दिव्यं भोग्यं रतिरूपं वस्तु) **हि** यस्मात् **दधिरे** धृतवन्तः, तस्मात् वयमपि **स्वग्नयः** शोभनाग्नियुक्ताः **मनामहे** स्तुमः, मन्यतिरर्चतिकर्मा व्यत्ययेन शप् । अस्मदर्थ वरणीयदिव्यभोग्यबलादेर्धारकानां अग्नियुक्तानां देवानां अनुग्रहादेव वयमग्नियुक्ताः स्तोतुं ध्यातुं ज्ञातुं वा प्रभवाम इति भावः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**अथा न उभयेषाममृत मर्त्यानाम् । मिथः सन्तु प्रशस्तयः ।। ९ ।।**

अथ । नः । उभयेषाम् । अमृत । मर्त्यानाम् । मिथः । सन्तु । प्रऽशस्तयः ।। ९ ।।

## ऋग्भाष्यम्

**.................स्त्रीणां पुंसां चोभयवर्गिणाम् ।। ९ ।।**

**ऋग्भाष्यटीका–** **अथा नः** । स्त्रीणाम् । हे **अमृत!** **अथ** अन्यच्च । **उभयेषाम्** उभयवर्गिणां स्त्रीणां पुसां च । **नो**ऽस्माकं **मर्त्यानाम्** । **मिथः** परस्परम् । **प्रशस्तयः** स्तुतयः । **सन्तु** सम्प्रीतिरस्त्विति यावत् ।। ९ ।।

**मन्त्रार्थमञ्जरी–** (हे) अमृत । अथ, अन्यच्च । उभयेषाम्, उभयवर्गिणां स्त्रीणां पुंसां च । नः, अस्माकम् । मर्त्यानाम् । मिथः, परस्परम् । प्रशस्तयः । सन्तु, सम्प्रीतिरस्त्विति यावत् ।। ९ ।।

**स्कन्द–** **अथ** विमोक्षानन्तरम् **नः** 'त्यदादीनि सर्वैर्नित्यम्' (पा.सू.१-२-७२) इत्येवमयमस्मदो युष्मच्छब्देन एकशेषः । तव चास्माकं च **उभयेषाम्** **आमृत**! मरणवर्जित! अग्ने! **मर्त्यानाम्** मनुष्याकाराणाम् । शुनश्शेपो हि मनुष्यत्वादेव तदाकारः, अग्निस्तु पुरुषविधत्वात् **मिथः** परस्परम् **सन्तु** **प्रशस्तयः** । प्रशंस त्वमस्मान्– नेदृशा अन्ये स्तोतार इति । वयमपि प्रशंसामः– नेदृशोऽन्यो देव इति । अथवा मिथःशब्दः सहत्ववचनः । तवास्माकं च सह सन्तु प्रशस्तयः । नहि स्तुत्यस्य स्तोत्रा विना प्रशंसास्ति, न स्तोतुः स्तुत्येन । तत्र तव स्तुत्यस्य अस्माभिरेव सहास्माकं च स्तोतॄणां त्वयैव सह । पशंसाऽस्तु, माऽन्येन केनचिदित्याशास्महे ।। ९ ।।

**वेङ्कटमाधव– अमृत**! अग्ने! तव च अस्माकं च **मर्त्यानाम् उभयेषाम्** परस्परम् **प्रशस्तयः सन्तु** । सुष्टुतमिति त्वं ब्रूहि, सुदत्तमिति वयमिति ।। ९ ।।

**मुद्गल**– हे **अमृत**! मरणरहिताग्ने! **अथ** कर्मानुष्ठानानन्तरम् **मर्त्यानाम्** मनुष्याणाम् **नः** अस्माकम् अस्मत्स्वामिनः हरिश्चन्द्रस्य तव च **उभयेषाम् मिथः** परस्परम् **प्रशस्तयः** प्रशंसारूपा वाचः **सन्तु** ।। ९ ।।

**सायण– हे** अग्ने! **अमृत**! मरणरहिताग्ने! **अथ** कर्मानुष्ठानानन्तरं **मर्त्यानां** मनुष्याणां **नः** अस्माकम् अस्मत्स्वामिनस्तव च **उभयेषां मिथः** परस्परं **प्रशस्तयः** प्रशंसारूपा वाचः **सन्तु** । सम्यगनुष्ठितमिति यजमानविषया प्रशंसा सम्यगनुगृहीतमित्यग्निविषया ।

अथ । 'निपातस्य च' (पा.सू.६-३-१३६) इति संहितायां दीर्घः । अमृत । 'अपादादौ' (पा.सू.४-२-१३५) इति पर्युदासात् षाष्ठिकमाद्युदात्तत्वम् । मर्त्यानाम् । 'मृङ् प्राणत्यागे'। 'असिहसि' (उ.सू.३-३६६) इत्यादिना तन्प्रत्ययान्तो मर्तशब्दः । तस्मात् 'भवे छन्दसि' (पा.सू.४-४-११०) इति यत् । 'यतोऽनावः'(पा.सू ६-१-२१३) इत्याद्युदात्तत्वम् । सन्तु । श्नसोरल्लोपः । प्रशस्तयः । 'तादौ च'(पा.सू.६-२-५०) इति गतेः प्रकृतिस्वरत्वम् ।।९।।

**सिद्धाञ्जनम्– अथ** प्रागुक्तप्रकारेण अस्माकं शोभनाग्नियोगपूर्वकध्यानसम्पत्प्राप्तेः परं, हे **अमृत**! अमर्त्य अग्ने! **मार्त्यानां नः** अस्माकं **उभयेषां** अमृतस्य तव मार्त्यानां अस्माकं च **मिथः** परस्परं **प्रशस्तयः** प्रशंसाः विस्रम्भेण रहस्यवाचः **सन्तु** भवन्तु । ऋषीणां देवताभिः प्रत्यक्षव्यवहारः साधारणो बोध्यः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः । चनो धाः सहसो यहो ।। १०, २९, २६ ।।**

विश्वेभिः । अग्ने । अग्निऽभिः । इमम् । यज्ञम् । इदम् । वचः । चनः । धाः । सहसः । यहो इति ।।

## ऋग्भाष्यम्

**चनः सुखं धा अस्मासु वायोः पुत्रोऽग्निरेव चेत् ।**
**भगवान्वायुना व्यंग्यो..............................।। १०,२१,७ ।।**

**ऋग्भाष्यटीका– विश्वेभिः । चनः ।** हे **अग्ने! विश्वेभिः** सर्वैः **अग्निभिः** सह । **इमम्** अस्मदीयं **यज्ञमिदं वचश्च** । स्वीकुर्विति शेषः । चनो धा इत्यस्यार्थमाह ।। **च न इति** ।। **धाः** अधाः । धेहि । **सहसो यहो** इत्येतदग्नौ विष्णौ च क्रमेण व्याख्याति । **वायोरिति** । अग्निरेव चेद्विवक्षितः तदा सहसो वायोर्यहो पुत्रेति व्याख्येयम् । भगवांश्चेत्तदा वायुना व्यंग्य इति कृत्वा सहसो यहो इति सम्बुद्धिर्युक्ता । 'प्राणं वाव महान् सह ओजो बलमित्याचक्षत' इति हि श्रुतिः । यहुशब्दोऽपत्यनामसु पठितः ।। १०,२१,७ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । विश्वेभिः, सर्वैः । अग्निभिः (सह) इमम्, अस्मदीयम् । यज्ञम् इदम् वचः (च) (स्वीकुरु) इति शेषः । सहसः, बलदेवताया वायोः । यहो, पुत्र । (अग्ने) वायुव्यङ्ग्यत्वाद्धरेरपि तत्पुत्रत्वं ज्ञेयम्, 'प्राणं वाव महान्त्सह ओजो बलमित्याचक्षते' इति श्रुतेः सहो वायुः, यहुशब्दोऽपत्यनामसु (वै०नि०२।२) पठितः (त्वम्) चनः, सुखम् । धाः 'डुधाञ् धारणपोषणयोः' लोडर्थे लुङ्, अडभावः, अस्मासु धेहीत्यर्थः ।। १० ।।

**स्कन्द– विश्वेभिः** हे **अग्ने!** आत्मनो भ्रातृभिः **अग्निभिः** सह **इमम् यज्ञम् इदम् वचः** स्तुतिलक्षणम् । **चनः** 'चनः' (या.६-१६) इत्यन्ननाम । अन्नं चरुपुरोडाशादिलक्षणम् **धाः** स्थापय त्वम् । सामर्थ्यात् अत्र स्थापयितव्येषु यज्ञं तावद् देवेषु स्थापय, स्तुतिं स्वकरणे, चनोऽपि स्वोदरे । मां तु मुञ्चेत्यर्थः । हे **सहसः यहो!** बलस्य पुत्र! । बलेन मथ्यमानाभ्यामरणीभ्यामग्निर्जायत इति बलस्य पुत्र उच्यते ।। १० ।।

**वेङ्कटमाधव–** सर्वैः सहायभूतैः **अग्निभिः अग्ने!** अस्माकम् **इमम् यज्ञम् इदम्** च स्तोत्रम् अन्नं चात्मस्थं कुरु बलस्य पुत्र! ।। १० ।।

**मुद्गल– सहसः** बलस्य **यहो!** पुत्र! हे देवतारूप! **अग्ने! विश्वेभिः** सर्वैराहवनीयादिभि-र्युक्तस्त्वम् **इमम्** अस्मदीयम् **यज्ञम् इदम्** अस्मदीयम् **वचः** स्तोत्रं च सेवमानः **चनः** अन्नम् **धाः** अस्मभ्यं धेहि ।। १० ।।

**सायण– सहसः** बलस्य **यहो!** पुत्र! हे देवतारूप! **अग्ने विश्वेभिः अग्निभिः** सर्वैराहवनीयादिभिर्युक्तस्त्वम् **इमम्** अस्मदीयं **यज्ञम् इदम्** अस्मदीयं **वचः** स्तोत्रं च सेवमानः **चनः** अन्नं **धाः** अस्मभ्यं धेहि ।

विश्वेभिः । 'बहुलं छन्दसि' (पा.सू.२-४-३९) इति भिस ऐसादेशाभावः । चनः । 'चायृ पूजानिशामनयोः' । 'चायेरन्ने ह्रस्वश्च' (उ.सू.४-६३९) इति असुन्; तत्संनियोगेन नुडागमश्च । नित्त्वादाद्युदात्तत्वम् । धाः । लुङि 'गातिस्था' (पा.सू.२-४-७७) इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा.सू.६-४-७५) इति अडभावः । सहसो यहो इति 'सुबामन्त्रिते' (पा.सू.२-१-२) इति पराङ्गवद्भावात् 'आमन्त्रितस्य च' (पा.सू.६-१-१९८) इति षष्ठ्यामन्त्रितसमुदायो निहन्यते ।। १०,२१ ।।

**सिद्धाञ्जनम्– सहसः** बलस्य **यहो** पुत्र! (यहुः अपत्यनामसु पठितम्) **अग्ने** भगवन् **विश्वेभिः** विश्वैः (बहुलं छन्दसि) **अग्निभिः** अन्यैस्त्वद्विशेषभूतैः सहितः स्थानाभेदात् एकोऽपि बहुधा भवत्यग्निः, **इमं यज्ञं** अस्मदीयं इदं **वचः** अस्मदीयं स्तोत्रं च स्वीकृत्य **चनः** सुखं (चनः अन्नं, भोग्यं च भवति, आनन्दे च धात्वर्थः, चनस्यतमित्यत्र व्याख्यातम् १-३-१) **धाः** धेहि (लोडर्थे लुङ्ग अडभावः)। अस्मदीयं यजनं स्तवनं चाङ्गीकृत्य स्वयं धारयमाणः सुखमस्मासु स्थापय ।। १० ।।

।। इति प्रथमाष्टके द्वितीयाध्याये एकविंशो वर्गः ।।

## ।। अथ द्वाविंशो वर्गः ।।

(सूक्तम् २७)

## ऋक्संहिता पदपाठसहिता

(१३ आजीगर्त्ति शुनःशेपः स कृत्रिमो वैश्वामित्रो देवराता ऋषिः । १-१२ अग्निः १३ देवः । १-१२ गायत्री, १३ त्रिष्टुप् छन्दः)

**अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।। सम्राजन्तमध्वराणाम् ।। १ ।।**

अश्वम् । न । त्वा । वारऽवन्तम् । वन्दध्यै । अग्निम् । नमःभिः । सम्ऽराजन्तम् । अध्वराणाम् ।।

## ऋग्भाष्यम्

**......................वारवान्बडवामुखः ।**

**स्वदृष्टान्तो हरेर्यस्माद्विष्णुः सबडवामुखः ।। १ ।।**

**ऋग्भाष्यटीका– अश्वं न** । अत्र वारवच्छब्दस्याभिधेयमाह । **वारवानिति** ।। अश्वं नेत्यस्य तात्पर्यमाह । **स्वदृष्टान्त इति** ।। कुत इत्यत आह । **यस्मादिति** ।। सोऽश्वो बडवामुखश्च विष्णुरेव यस्मात्तस्मात्स्वदृष्टान्त इति । अहं **अध्वराणां सम्राजन्तम्** ईशानम् । **वारवन्तमग्निं** त्वाम् **अश्वं न** अश्वं त्वामिव । **नमोभिः** नमस्कारात्मकैर्वाक्यैः **वन्दध्यै** उत्तमपुरुषार्थेध्यै वन्दे । यद्वा तुमर्थ एवाध्यै तथा सति प्रारभ इति क्रियाध्याहारः । प्रह्वन्यमिव त्वां स्तोतुमुचितमिति ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'अश्वं न' इति सप्तविंशं त्रयोदशर्चं वर्गत्रयात्मकं सूक्तम् । तत्र अन्त्या दैवी त्रिष्टुप् । अन्या आग्नेय्यो गायत्र्यः । (अहम्) अध्वराणाम् । सम्राजन्तम्, ईशानम्, राजतेः झप्रत्ययः, 'झोऽन्तः' इत्यन्तादेशः । वारवन्तम्, बडवामुखम् । अग्निम् । (त्वा) त्वाम्) । अश्वम् न, अश्वरूपं त्वामिव, 'गगनं गगनाकारम्' (काव्यालंकारसूत्रवृत्तिः ४।३।१४) इत्यादिवत् । नमोभिः, नमस्कारात्मकैर्वाक्यैः । वन्दध्यै, वन्दे, वन्दतेः उत्तमपुरुषार्थे ध्यैप्रत्ययः, यद्वा– तुमर्थ एव 'तुमर्थे सेसेन्' इत्यध्यैप्रत्ययः, वन्दितुम्, तथात्वे (प्रारभे) इति क्रियाध्याहारः । 'नह्यन्यमिव त्वां स्तोतुमुचितम्' इत्याकूतम् ।। १ ।।

**स्कन्द– अश्वम् वारवन्तम्** इति समानाधिकरणे एते । वारवन्तमिति वालशब्दस्य कपिलादित्वाद् रत्वम् । अश्वम् न वालवन्तम् वालवान् योऽश्वस्तमिव त्वाम् वन्दध्यै तुमर्थेऽयमध्यैप्रत्ययः । वन्दितुम् इच्छामः प्रारभामहे वा इति वाक्यशेषः । कम् । **अग्निम्** । **नमोभिः** नमस्कारैः स्तुतिभिः । कीदृशम् । **सम्राजन्तम्** राजतिरैश्वर्यकर्मा (निघ.२-२१) । सम्यगीशानम् । **अध्वराणाम्** यज्ञानाम् । अथवा राजतिर्दीप्त्यर्थः । सम्यग् दीप्यमानम् । सप्तम्यर्थे वात्र षष्ठी । षष्ठीश्रुतेर्वा मध्य इति वाक्यशेषः । अश्वोपमानाभिप्रायः पर्येष्यः ।। १ ।।

**वेङ्कटमाधव– अश्वम्** इव त्वा वालवन्तं नमस्कारैर्वन्दितुम् ईशानम् यज्ञानामुपक्रम इति ।। १ ।।

**मुद्गल–** 'अश्व न त्वा' इति त्रयोदशर्चं चतुर्थं सूक्तम् । शौनःशेपम् । गायत्रम् । आग्नेयम् । **अध्वराणाम्** यज्ञानाम् **सम्राजन्तम्** सम्राड्रूपम् स्वामिनम् **अग्निम् त्वा** त्वाम् **नमोभिः** स्तुतिभिः **वन्दध्यै** वन्दितुं प्रवृत्ता इति शेषः । दृष्टान्तः । **वारवन्तम्** वालयुक्तम् **अश्वम्**

**न** अश्वमिव । अश्वो यथा वालैर्बाधकान् मशकमक्षिकादीन् परिहरति तथा त्वमपि ज्वालाभिः अस्मद्विरोधिनः परिहरसीत्यर्थः ।। १ ।।

**सायण–** 'अश्वं न त्वा' इति त्रयोदशर्चं चतुर्थं सूक्तम् । पूर्ववत् ऋष्यादयः । त्रयोदश्याः 'नमो महद्भ्यः' इत्यस्याः त्रिष्टुप् छन्दः । विश्वेदेवा देवता । तथा चानुक्रान्तम्– 'अश्वं सप्तोना गायत्रेऽन्त्या दैवी त्रिष्टुप्' इति । प्रातरनुवाकाश्विनशस्त्रयोः उत्तमावर्जितस्य सूक्तस्य विनियोग उक्तः ।

**अध्वराणां** यज्ञानां **सम्राजन्तं** सम्राट्स्वरूपं स्वामिनम् **अग्निं** त्वां **नमोभिः** स्तुतिभिः **वन्दध्यै** वन्दितुं प्रवृत्ता इति शेषः । अत्र दृष्टान्तः । **वारवन्तं** वालयुक्तम् **अश्वं न** अश्वमिव । अश्वो यथा वालैर्बाधकान् मशकमक्षिकादीन् परिहरति तथा त्वमपि ज्वालाभिरस्मद्विरोधिनः परिहरसीत्यर्थः ।

वारवन्तम् । मतुपः पित्त्वादनुदात्तत्वम् । घञो ञित्त्वात् आद्युदात्तो वारशब्दः । 'कर्षात्वतः' (पा.सू.६-१-१५९) इति अन्तोदात्तत्वं व्यत्ययेन न प्रवर्तते । वन्दध्यै । 'वदि अभिवादन-स्तुत्योः' । 'इदितो नुम् धातोः' (पा.सू.७-१-५८) इति नुम् । 'तुमर्थे सेसेन्' (पा.सू.३-४-९) इति अध्यैप्रत्ययः । प्रत्ययस्वरः । सम्राजन्तम् । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । समासे कृदुत्तरपदप्रकृतिस्वरेण स एव । अध्वराणाम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** षष्ठेऽनुवाके चतुर्थं अश्वं न त्वेति त्रयोदशर्चं सूक्तम् । ऋष्यादयः पूर्ववत् । त्रयोदश्यास्त्रिष्टुप् छन्दः विश्वेदेवा देवताः ।।

तत्र प्रथमामृचमाह– **अश्वं न त्वेति** ।। **वारवन्तं** वालवन्तम् (कपिलादित्वात् रत्वम्) **अश्वं न** अश्वमिव **त्वा** त्वाम् **अग्निं नमोभिः** नमस्कारः (सर्वैः करणैर्नमनं प्रपत्तिशब्दवाच्यं नमस्करणं बहुवचनप्रयोगाद्बोध्यम्) **वन्दध्यै** वन्दितुं (तुमर्थे अध्यै प्रत्ययः), प्रारभामहे । कीदृशम्? **अध्वराणां** यज्ञानां **सम्राजन्तं** सम्यगीशानम् (राजतिरैश्वर्यकर्मा)। अग्रेर्ज्वाला एव वालाः, यथा वालवान् अश्वः मशकमक्षिकादीन् वालैः परिहरति, तथा अग्निः दिव्यशक्तिज्वालाभि-र्बाधकान् देववैरिणः यज्ञविघातकान् यागयात्रायां परिहरति । यात्राध्वननार्थः अध्वरशब्दोऽत्र बोध्यः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः । मीढ्वाँ अस्माकं बभूयात् ।। २ ।।**

सः । घ । नः । सूनुः । शवसा । पृथुऽप्रगामा । सुऽशेवः ।। मीढ्वान् । अस्माकम् । बभूयात् ।।

## ऋग्भाष्यम्

**सूनुः स शवसो वायोः पृथुज्ञानः सुशेवकृत् ।**
**सुखकृन्नो भवेन्मीढ्वान्स्वामि नः सूनुरेव वा ।**
**व्यंग्यत्वाद्वायुना सार्धं सुशेवः सुसुखात्मकः ।। २ ।।**

**ऋग्भाष्यटीका– स घा** । **सूनुः** । **शवसा** षष्ठ्यर्थे तृतीया । **शवसो** बलरूपस्य वायोः **सूनुः पृथुप्रगामा** गमेर्भावे अनिण् । **पृथु** विस्तृतम् । **प्रगाम** प्रकृष्टज्ञानं यस्यासौ तथोक्तः पृथुज्ञानः । सोऽग्निर्नोऽस्माकम् । **शुशेवः** शोभनं शेवं यस्माद्भवति स तथोक्तः । **सुशेवकृत्** सुखकृत् । **बभूयात्** भवेत् । द्विर्वचनं छान्दसः । किञ्च । **स घ** स एव । **अस्माकं मीढ्वान्** सेचको दाता स्वामी च बभूयात् । प्रकारान्तरेण व्याख्याति । नः सूनुरिति । नः सूनुरित्येव वा योज्यम् । कथं विष्णोर्वायुसूनुत्वमृषिसूनुत्वं चेत्यत आह ।। **व्यंग्यत्वादिति** ।। वायुना ऋषिणा चेति शेषः । तर्हि शवसेत्यस्य कथं सम्बन्ध इत्यत आह ।। **वायुनेति** ।। वायुना सार्धं सूनुरिति वा मीढ्वान् बभूयादिति वा योज्यम् । सुशेव इत्यस्यार्थान्तरमाह ।। **सुशेव इति** ।। २ ।।

**मन्त्रार्थमञ्जरी–** शवसा, षष्ठ्यर्थे तृतीया, शवसो बलरूपस्य वायोः । सूनुः । 'शवसा, वायुना सह । नः, ऋषेः । सूनुः' इति वा, व्यङ्ग्यत्वात् । पृथुप्रागमा, गमेः भावेऽनिण्, पृथु विस्तृतं प्रगाम प्रकृष्टज्ञानं यस्यासौ तथोक्तः, पृथुज्ञानः । सः । अग्निः । नः, अस्माकम् । सुशेवः, शोभनं शेवं सुखं यस्माद्भवति स सुशेवः, सुखकृत् । बभूयात्, भवेत्, द्विर्वचनं छान्दसम् । किं च, (सः) घ, स एव । अस्माकम् । मीढ्वान्, सेचको दाता स्वामी च । (बभूयात्) ।। २ ।।

**स्कन्द– घ** इति पदपूरणः । **सः** प्रकृतोऽग्निः **नः सूनुः** 'अस्मदो द्वयोश्च' (पा.सू.१-

२-५९) इत्येवमेतद् द्वयोर्बहुवचनम् । आवयोर्हरिश्चन्द्रशुनश्शेपयोः पुत्रः अरुणीमन्थनेन जनितत्वात् । यद्यपि यजमानत्वाद्धरिश्चन्द्रेणैवाग्निर्जनितः नोभाभ्याम्, तथापि साहचर्यात् निमित्तत्वसामान्याद्वा उभौ प्रति पुत्रत्वव्यपदेशः । **शवसा पृथुप्रगामा** स्वेन तेजसाऽयं विस्तीर्णगामी । अथवा पूर्वेण सम्बध्यते । बलेन हेतुना पुत्र इति । यस्माद् बलेनारणिं मथित्वा जात इत्यर्थः । **सुशेवः** सुसुखः । **मीढ्वान्** घनवान् सेक्ता वा हविर्नयनद्वारेण वृष्टिप्रदत्वात् **अस्माकम् बभूयात्** अत्यर्थं बलेन भूयादित्याशास्महे । कः । सामर्थ्यात् मोक्ता । अथवा सुशेव इत्येतेन सम्बध्यते । सुशेवोऽस्माकं भूयात् । अथवा सूनुरित्येतेन सम्बध्यते अस्माकं पुत्रो भूयादित्याशास्महे । जनयित्वा त्वां यष्टुमाशास्महे इत्यर्थः । अत्र चास्माकमित्येतत् सुशेव इत्येतेन सम्बध्यते । योऽस्माकं सुसुखो विमोक्तृत्वात् स नः सूनुर्भूयादिति ।। २ ।।

**वेङ्कटमाधव–** स खलु अस्माकम् बलेन स्तूयमानो विस्तीर्णगमनः सुसुखः कामानां सेक्ता अत्यन्तं भवतु ।। २ ।।

**मुद्गल– सः घ** स एवाग्निः **नः** अस्माकम् **सुशेवः** सुमुखो भवत्विति शेषः । कीदृशः। **शवसा** बलस्य **सूनुः** पुत्रः **पृथुप्रगामा** पृथुप्रगमनः । किञ्च **अस्माकम् मीढ्वान्** कामानां वर्षिता **बभूयात्** भवतु ।। २ ।।

**सायण– सः घ** स एवाग्निः **नः** अस्माकं **सुशेवः** सुसुखो भवत्विति शेषः । कीदृशः । **शवसा** बलस्य **सूनुः** पुत्रः **पृथुप्रगामा** पृथुप्रगमनः । किंच **अस्माकं मीढ्वान्** कामानां वर्षिता **बभूयात्** भवतु ।

घा नः । 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' (पा.सू.६-३-१३३) इति दीर्घः । शवसा । 'सुपा सुपो भवन्ति' इति उसः टादेशः । पृथुप्रगामा । प्रकर्षेण गमनं प्रगामः । 'हलश्च' (पा.सू. ३-३-१२१) इति घञ् । पृथुः प्रगामा यस्यासौ पृथुप्रगामा । 'सुपां सुलुक्' इति पूर्वसवर्ण आकारः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । सुशेवः । 'इण्शीङ्भ्यां वन्' (उ.सू.१-१५०) इति शेवशब्दो वन्प्रत्ययान्त आद्युदात्तः । ततो बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'आद्युदात्तं यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । मीढ्वान् । 'मिह सेचने' इत्यस्मात् वसुप्रत्ययान्तो 'दाश्वान् साह्वान् मीढ्वांश्च' इति निपातितः । बभूयात् । भवतेश्छान्दसस्य

लिट 'तिङां तिङो भवन्ति' (पा.सू.७-१-३९) इति लिङादेशः । यासुट्स्थानिवद्भावात् आर्धधातुकत्वात् शबभावः । द्विर्वचने 'भवतेरः' (पा.सू.७-४-७३) इति अत्वम् । 'तिङ्ङतिङः' इति निघातः ॥ २ ॥

**सिद्धाञ्जनम्– सः घ** स एवाग्निः **नः** अस्माकं **सूनुः** पुत्रः अस्मासु लब्धजन्मत्वात्, **शवसा** स्वीयेन दीप्तेन बलेन **पृथुप्रगामा** विस्तीर्णप्रकृष्टगमनः (पृथुः प्रगामः यस्य सः, प्रगामा इत्यत्र आकारश्चान्दसः) **सुशेवः** शोभनसुखः **अस्माकं मोढ्वान्** सेक्ता वर्षिता प्राप्तव्यभावायापेक्षितानां तेजोबलादीनां, **बभूयात्** भवतु । छान्दसस्य भवतेर्लिटः लिङादेशः ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**स नो दूराच्चासाच्च नि मर्त्यादघायोः । पाहि सदमिद्विश्वायुः ॥ ३ ॥**

सः । नः । दूरात् । च । आसात् । च । नि । मर्त्यात् । अघऽयोः ॥ पाहि । सदम् । इत् । विश्वऽआयुः ॥ ३ ॥

## ऋग्भाष्यम्

**आसात्समीपतश्चास्मानघार्थायोर्निपाहि च ।**
**प्रतिप्रति सदो नित्यो विश्वायुः.............॥ ३ ॥**

**ऋग्भाष्यटीका– स नः** । आसात् । **विश्वायुः** विश्वं पूर्णमायुरस्येति नित्यः । **सोऽग्नि-स्त्वम्** । **नोऽस्मान्** । **सदं** सीदंत्यस्मिन्निति सदशब्दः सदःशब्दपर्यायः । अध्याहृतकर्मप्रवचनीय प्रतिशब्दयोगे द्वितीया । स च वीप्सायाम् । इच्छब्दो वा तदर्थः । अत उक्तं प्रतिप्रति सद इति । सर्वेष्वपि स्थानेष्विति यावत् । **दूराच्च** दूरस्थाच्च । **आसाच्च** समीपतश्च । अन्तिकनामसु पाठात् । समीपस्थाच्चाघायोरघार्थायोः । आयुःशब्दसमानार्थोऽयमायुशब्दः । यद्वा गमनमायुशब्दम् । तादर्थ्याच्च ताच्छब्द्यम् । मर्त्यान्निश्रितं पाहि । चशब्दः प्रार्थनासमुच्चये ॥ ३ ॥

**मन्त्रार्थमञ्जरी–** विश्वायुः विश्वं पूर्णमायुर्यस्येति विश्वायुः, नित्यः । सः अग्निः । (त्वम्) नः, अस्मान् । सदम्, सदस्शब्दपर्यायोऽयम्, सीदन्त्यस्मिञ्जना इति सीदतेः अधिकरणेऽकारप्रत्ययः (प्रति) इति शेषः, स च 'लक्षणेत्थं भूत' इत्यादिना वीप्सायां कर्मप्रवचनीयः, सदं सदं प्रति,

'सदम् इत्' इतीत् शब्दस्य वा 'सदं सदं प्रति' इत्यर्थः, सर्वेष्वपि स्थानेष्विति यावत् । दूरात् च, दूरस्थाच्च । आसात् च, समीपतश्च, अन्तिकनामसु (वै०नि०२।१६) पाठात्समीपस्थाच्च । अघायोः, अघार्थायुष्मतः, आयुस्‌शब्दपर्यायोऽत्रायुशब्दः, यद्वा– अयतेः उण् (एतेः ऊण्) अघार्थगतिमतः । मर्त्यात् । नि, निश्चितं यथा तथा । पाहि ।। ३ ।।

**स्कन्द–** य उक्तगुणोऽसि **सः नः** अस्माकम् **दूरात् च आसात् च** 'आसात्' (निघ.२-१६) इत्यन्तिकनाम । तास्थ्याच्चोभयत्र ताच्छब्द्यम्, मञ्चाः क्रोशन्तीति यथा । दूरस्थादन्तिकस्थाच्च । **मर्त्यात् आघायोः** पापकामात् **नि पाहि** नियमेन रक्ष । **सदम्** सदाशब्दपर्यायोऽयम् । **इत्** शब्द पदपूरण पूर्वार्थे वा । सदैव । **विश्वायुः** आयुःशब्द एतेः । एति गत्यर्थः । अन्ननाम वा । सर्वगामी सर्वान्नो वा ।। ३ ।।

**वेङ्कटमाधव–** स अस्मान् दूरान् अन्तिकात् च पापमिच्छत मर्त्यात् सदैव नि पाहि सर्वेषामभिगन्ता ।। ३ ।।

**मुद्गल–** हे अग्ने! **विश्वायुः** व्याप्तगमनः **सः** त्वम् **दूरात् च** दूरेऽपि **आसात् च** आसन्नदेशेऽपि **अघायोः** अघं पापम् अनिष्टं कर्तुमिच्छतः **मर्त्यात्** मनुष्यात् वैरिणः **नः** अस्मान् **सदमित्** सर्वदैव **नि पाहि** नितरां पालय ।। ३ ।।

**सायण–** हे अग्ने! **विश्वायुः** व्याप्तगमनः **सः** त्वं **दूराच्च** दूरेऽपि **आसाच्च** आसन्नदेशेऽपि **अघायोः** अघं पापमनिष्टं कर्तुमिच्छतः **मर्त्यात्** मनुष्यात् वैरिणः **नः** अस्मान् **सदमित्** सर्वदैव **नि पाहि** नितरां पालय ।

अघायोः । 'सुप आत्मनः क्यच्' (पा.सू.३-१-८) । 'अश्वाघस्यात्' (पा.सू.७.४.३७) इति आत्वम् । पाहि । पादादित्वादनिघातः । विश्वायुः । 'इण् गतौ' इत्यस्माद्धावे 'एतेर्णिच्च' (उ.सू.२-२७५) इति उसिः । विश्वमयनं गमनं यस्येति बहुव्रीहिः । 'बहुव्रीहौ विश्वं संज्ञायाम्'(पा.सू.६-२-१०६) इति पूर्वपदान्तोदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** हे अग्ने! **विश्वायुः** विश्वं सर्वं आयुः त्वदीयमेव (आयुःशब्दपर्याय आयुशब्दः षकारलोपो वा छान्दसः, एवमेव अघायोरित्यत्रापि बोध्यम् । सायणस्त्वन्यथा व्याचष्टे) **सः**

त्वं **दूराच्च** दूरेऽपि **आसाच्च** अन्तिकेऽपि **अघयोः** पापमिच्छतः पापजीविन इत्यर्थः । **मर्त्यात्** मनुष्यात् **सदमित्** सदैव **नि पाहि** नितरां रक्ष **नः** अस्मान् । आसात्– अन्तिकवचनः। सदम्– सदापर्यायः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**इमम् ू षु त्वमस्माकं सनिं गायत्रं नव्यांसम् । अग्ने देवेषु प्र वोचः ।। ४ ।।**
इमम् । ऊँ इति । सु । त्वम् । अस्माकम् । सनिम् । गायत्रम् । नव्यांसम् । अग्ने । देवेषु । प्र । वोचः ।। ४ ।।

## ऋग्भाष्यम्

**..............................त्वमिमां स्तुतिम् ।**
**सनिं दानस्वरूपां च गायत्री छन्दआत्मिकाम् ।**
**नव्यांसं स्तुतिषु श्रेष्ठां वद देवेषु सादरम् ।। ४ ।।**

**ऋग्भाष्यटीका– इममूषु** । त्वमिमाम् । हे **अग्ने! त्वमस्माकम्** । इमं स्तवमिति शेषः । **इमां** स्तुतिम् । **सनिं** दानस्वरूपाम् । 'षणु दाने' । देहीत्युपलक्षितामिति यावत् । **गायत्रं** गायत्रीछन्दआत्मिकाम् । **नव्यांसं** नवतराम् । अत्यन्तापूर्वां स्तुतिषु श्रेष्ठाम् । **देवेषु सु प्रवोचः** । सादरं वद च । देवान्प्रापयेति यावत् । उशब्दश्चशब्दार्थे । लकारव्यत्ययः छान्दसः ।।४।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने त्वम् अस्माकम् । इमम् (स्तवम्) इति शेषः, इमां स्तुतिम् । सनिम्, दानस्वरूपाम्, 'षणु दाने' इत्यत इकारः, 'देहि' इत्युपलक्षितामिति यावत् । गायत्रम्, गायत्रीछन्दआत्मिकाम् । नव्यांसम्, नवतराम्, अत्यन्तापूर्वाम्, स्तुतिषु श्रेष्ठाम् । देवेषु । सु प्र वोचः (उ), सादरं वद च, देवान्प्रापय चेति यावत्, उशब्दश्चशब्दार्थः, लोडर्थे लुङ् अडभावः ।। ४ ।।

**स्कन्द– इमम्** ऊ षु ऊ सु इति पदपूरणौ । इमम् **त्वम् अस्माकम् सनिम्** 'षणु दाने' । मद्यतिरिक्तसोमादिहविर्दानम् **गायत्रम्** गायतिरर्चतिकर्मा (निघ.२-१४) । स्तोत्रं च **नव्यांसम्** नवतरम् अन्यैः स्तोतृभिरकृतपूर्वम् हे अग्ने! **देवेषु प्र वोचः** देवेभ्यः प्रकर्षेणाचक्ष्व । मां मुञ्चेत्यर्थः ।। ४ ।।

**वेङ्कटमाधव–** **अस्माकम्** इदम् हविषो दानम् **गायत्रम्** च साम नवतरम् **अग्ने!** देवेषु प्र ब्रूहि ॥ ४ ॥

**मुद्गल–** हे **अग्ने! त्वम् अस्माकम्** अस्मत्सम्बन्धिनम् **इमम् ऊ षु** पुरोदेशे अनुष्ठीयमानमपि **सनिम्** हविर्दानम् **नव्यांसम्** नवतरम् **गायत्रम्** स्तुतिरूपं वचोऽपि **देवेषु** देवानामग्रे **प्र वोचः** प्रब्रूहि ॥ ४ ॥

**सायण–** हे **अग्ने! त्वम् अस्माकम्** अस्मत्संबन्धिनम् **इमम् षु** पुरोदेशे अनुष्ठीयमानमपि **सनिम्** हविर्दानं **नव्यांसम्** नवतरं **गायत्रम्** स्तुतिरूपं वचोऽपि **देवेषु** देवानामग्रे **प्र वोचः** प्रबूहि ।

ऊ षु । 'निपातस्य च'(पा.सू.६-३-१३६) इति संहितायां दीर्घत्वम् । 'सुञः' (पा.सू.८-३-१०७) इति षत्वम् । नव्यांसम् । नवशब्दात् ईयसुन् ईकारलोपश्छान्दसः । ईयसुनो नित्त्वादाद्युदात्तत्वम् । वोचः । 'छन्दसि लुङ्लङ्लिटः' इति लोडर्थे प्रार्थनायां लुङि 'अस्यतिवक्ति' (पा.सू.३-१-५२) इति च्लेः अङादेशः । 'वच उम्' (पा.सू.७-४-२०)॥ ४ ॥

**सिद्धाञ्जनम्–** हे अग्ने! भगवन्, **इमं** अद्य प्रवृत्तं **अस्माकं सनिम् ऊ षु** दानं अपि अस्माभिरनुष्ठीयमानं त्यागरूपं यजनमित्यर्थः (ऊषु, संहितायां दीर्घत्वं, सुञ इति षत्वम्) **नव्यांसम्** नवीयांसं, नवतरम् (नवशब्दात् ईयसुन् ईकारलोपश्छान्दसः) **गायत्रम्** गायत्रीच्छन्दोबद्धस्तुतिरूपं वचनमपि **देवेषु** देवानां पुरः **त्वम् प्र वोचः** प्रब्रूहि । वोचः-छन्दसि लोडर्थे प्रार्थनायां लुङ् ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**आ नो भज परमेष्वा वाजेषु मध्यमेषु । शिक्षा वस्वो अन्तमस्य ॥ ५, २२ ॥**

आ । नः । भज । परमेषु । आ । वाजेषु । मध्यमेषु । शिक्ष । वस्वः । अन्तमस्य ॥ ५, २२ ॥

## ऋग्भाष्यम्

**उत्तमाधममध्येषु भोगेष्वस्मानवाप्नुहि ।**
**रक्षकत्वेन शिक्षास्मान्ज्ञानवस्वर्थमेव च ।**
**अन्ते मोक्षे मितत्वेन ज्ञानमन्तममुच्यते ॥ ५, २२ ॥**

**ऋग्भाष्यटीका– आ नः** । उत्तम । हे अग्ने! त्वम् । **परमेषु वाजेषु** अन्नेषु । **नो**ऽस्मान् **आभज** । तथा **मध्यमेषु** वाजेषु न आभज । अत्र परममध्यमग्रहणमधमानामप्युपलक्षणम् । तथा वाजग्रहणं सर्वभोगानाम् । तथाचोत्तमाधममध्यमेषु भोगेष्वस्माभिर्भुज्यमानेषु सत्सु त्वमस्मान् रक्षकत्वेनावाप्नुहि । त्वद्रक्षिता वयं सर्वभोगभोक्तारो भूयास्मेत्युक्तं भवति । तथा **अन्तमस्य** ज्ञानलक्षणस्य **वस्वः** वसुनः । चतुर्थ्यर्थे षष्ठी । ज्ञानवस्वर्थं चास्मान् शिक्षेति यावत् । इदमेव मुख्यं प्रार्थ्यं न तु भोगा इत्येवशब्दः । अन्तमशब्दस्य ज्ञानवाचित्वं कथमित्यत आह ।। **अन्त इति** ।। अन्ते संसारस्येति शेषः । तस्यार्थो **मोक्ष इति** ।। तादर्थ्ये सप्तमी । मोक्षसाधनतयेति यावत् । मितत्वेन प्रमितत्वेन । आतोऽनुपसर्गे कः ।। ५, २२ ।।

**मन्त्रार्थमञ्जरी–** (हे अग्ने त्वम्) परमेषु । वाजेषु, अन्नेषु । नः, अस्मान् । आ भज । तथा मध्यमेषु (वाजेषु) आ (भज) अत्र परममध्यमग्रहणमधमानामप्युपलक्षणम्, तथा वाजग्रहणं सर्वभोगानाम्, ततश्च – उत्तममध्यमाधमभोगेष्वस्माभिर्भुज्यमानेषु सत्सु त्वमस्मान् रक्षकत्वेनावाप्नुहि, त्वद्रक्षिता वयं सर्वभोगभोक्तारो भूयास्मेत्युक्तं भवति । तथा अन्तमस्य, ज्ञानलक्षणस्य । वस्वः,वसुनः, चतुर्थ्यर्थे षष्ठी, ज्ञानवस्वर्थम् । (चास्मान्) शिक्ष– इति यावत् । अन्ते संसृतेरन्ते मोक्षे मोक्षार्थं मितं मोक्षहेतुत्वेन प्रमितमित्यन्तमं ज्ञानं ध्येयम्, अन्तशब्दोपपदात् 'माङ् माने' इत्यतः 'आतोऽनुपसर्गे कः' ।। ५ ।।

**स्कन्द– आ भज** सेवस्व **नः** अस्मान् **परमेषु** 'यस्य च भावेन भावलक्षणम्' (पा.सू.२-३-३७) इत्येवमियं सप्तमी । तच्छ्रुतिसामर्थ्याद् योग्यलक्षणभूतक्रियाध्याहारः । परमेषूपकल्पितेषु हविर्लक्षणेष्वन्नेषु । न केवलेषु । किं तर्हि । आ भज वाजेषु हविर्लक्षणेष्वन्नेषु मध्यमेषु अपि । अथवा न इति षष्ठी । परमेष्वित्यादिषु द्वितीयार्थे सप्तमी । आभजस्वास्माकं स्वभूतानि हविर्लक्षणान्यन्नानि मध्यमानि च, मां तु मुञ्चेत्यर्थः । किञ्च **शिक्ष** 'शिक्ष दाने' । देहि । **वस्वः अन्तमस्य** अन्तमशब्दोऽन्तिकनाम (निघ.२-१६) । द्वितीयार्थे चोभयत्र षष्ठी । धनं सन्निकृष्टतमम् । अत्यन्तोकृष्टमित्यर्थः । तद्धि देवानां सन्निकृष्टतमं भवति, नान्यत् ।। ५ ।।

**वेङ्कटमाधव–** प्रापय अस्मान् दूरस्थेषु अन्नेषु, **आ भज** च मध्यमेषु । तथा प्रयच्छ अन्तिकतमं धनमिति ।। ५ ।।

**मुद्गल–** हे अग्ने! **परमेषु** उत्कृष्टेषु द्युलोकवर्तिषु **वाजेषु** अन्नेषु **नः** अस्मान् **आ भज** सर्वतः प्रापय । **मध्यमेषु** अन्तरिक्षलोकवर्तिषु वाजेषु आ भज । **अन्तमस्य** अन्तिकतमस्य भूलोकस्य सम्बन्धीनि **वस्वः** वसूनि **शिक्ष** देहि ।। ५ ।।

**सायण–** हे अग्ने! **परमेषु** उत्कृष्टेषु द्युलोकवर्तिषु **वाजेषु** अन्नेषु **नः** अस्मान् **आ भज** सर्वतः प्रापय । **मध्यमेषु** अन्तरिक्षलोकवर्तिषु वाजेषु आ भज । **अन्तमस्य** अन्तिकतमस्य भूलोकस्य संबन्धीनि **वस्वः** वसूनि **शिक्ष** देहि ।

शिक्ष । 'शिक्ष विद्योपादाने' । शपः पित्वात् धातुस्वरः । 'द्व्यचोऽतस्तिङः' (पा.सू.६-३-१३५) इति संहितायां दीर्घः । **अन्तमस्य** अन्तिकतमस्य । 'तमे तादेश्च' (पा.सू.६.४.१४९) इति तिकशब्दलोपः ।। ५,२२ ।।

**सिद्धाञ्जनम्–** हे अग्ने! **परमेषु** ऊर्ध्वं द्युलोकवर्तिषु उत्तमेषु **वाजेषु** तेजोबलादिसमृद्धिषु **नः** अस्मान् **आ भज** सर्वतः प्रापयेति सायणीयम् । भागहरान् कुवित्यर्थः, भज धात्वर्थो लक्षणीयः । तथा **मध्यमेषु** अन्तरिक्षलोकवर्तिषु, **अन्तमस्य** अन्ततमस्य अत्यन्तं सन्निकृष्टस्य भूलोकस्य सम्बन्धिषु वाजेषु आ भजेति सम्बन्धः । किं च **वस्वः** वसूनि त्रिलोकवर्तीनि **शिक्ष** शिक्षय ज्ञापय नः । 'शिक्ष विद्योपादाने' अन्तर्भावितण्यर्थः ।। ५ ।।

**।। इति प्रथमाष्टके द्वितीयाध्याये द्वाविंशो वर्गः ।।**

## ।। अथ त्रयोविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ । सद्यो दाशुषे क्षरसि ।। ६ ।।**

विऽभक्ता । असि । चित्रभानो इति चित्रऽभानो । सिन्धोः । ऊर्मौ । उपाके । आ ।। सद्यः । दाशुषे । क्षरसि ।। ६ ।।

## ऋग्भाष्यम्

**क्षीराब्ध्यूर्मिसमीपस्थो मुक्तभोगविभागदः ।**
**यजमानाय सद्यश्च क्षरस्यखिलमीप्सितम् ।**
**नित्यमुत्तमतेजस्त्वाचित्रभानुर्हरिः स्मृतः ॥ ६ ॥**

**ऋग्भाष्यटीका– विभक्तासि** । क्षीराब्धि । हे **चित्रभानो** त्वम् । **सिन्धोः** समुद्रस्य **ऊर्मौ** । षष्ठ्यर्थे सप्तमी । जातावेकवचनम् । ऊर्मीणामुपाके । अन्तिकनामैतत् । स्थित इति शेषः । क्षीराब्ध्यूर्मिसमीपस्थः सन् **अविभक्ता** विभागकर्ता मुक्तभोगविभागदोऽसि । **दाशुषे** यजमानाय । **सद्य** एवाविलम्बेन । **क्षरसि** नित्यं ददासि । अखिलमीप्सितमिति शेषः । चित्रभानुशब्दं हरौ निर्वक्ति । **उत्तमेति** ॥ एतच्चोक्तस्मरणार्थम् ॥ ६ ॥

**मन्त्रार्थमञ्जरी–** (हे) चित्रभानो, निरुक्तं प्राक् 'इन्द्रा याहि चित्रभानो' इत्यत्र । (त्वम्) सिन्धोः, समुद्रस्य । ऊर्मौ, षष्ठ्यर्थे सप्तमी, जातावेकवचनम्, ऊर्मीणाम् । उपाके, अन्तिकनामैतत् (वै०नि०२।१६) समीपे (स्थितः) इति शेषः, क्षीराब्ध्यूर्मिसमीपस्थः सन् । आ विभक्ता, विभागकर्ता, मुक्तभोगविभागदः । असि । दाशुषे, यजमानाय । सद्यः, सद्य एवाविलम्बेन । क्षरसि, नित्यं ददासि । (अखिलमभीप्सितम्) इति शेषः ॥ ६ ॥

**स्कन्द– विभक्ता** त्वम् **असि चित्रभानो**! भानुर्दीप्तिः । विचित्रदीप्ते! पूजनीयदीप्ते! वा अग्ने! कस्य । **सिन्धोः ऊर्मौ** सिन्धुरत्र स्यन्दनात् सोमोऽभिप्रेतः । ऊर्मावित्यपि षष्ठ्यर्थे सप्तमी । सोमस्योर्मेः । **उपाके** अन्तिकनामैतत् (निघ.२-१६) सन्निकृष्टे । कस्मिन् । सामर्थ्याद् यागकाले । प्राप्ते यागकाले त्वं देवानां सोमस्य विभक्तेत्यर्थः । अथवा उपाके इत्येतदूर्मावित्येतेन समानाधिकरणम् । तात्स्थ्यात् ताच्छब्द्येनात्मान्तिकस्थस्य सोमोर्मेर्विभक्तेत्यर्थः । आकारस्तु दपपूरणो वा मयार्दार्थो वा विभक्तेत्येतेन सम्बन्धयितव्यः मर्यादया विभक्तेति । विभज्य च **सद्यः** समानेऽहनि तस्मिन्नेव **दाशुषे क्षरसि** सम्प्रदाने चतुर्थीश्रुतेः क्षरतिरत्र दानार्थः । यजमानाय ददासि यद् दातव्यं धनं वा आयुर्वा ॥ ६ ॥

**वेङ्कटमाधव–** दाता भवसि चित्रदीप्ते! स्यन्दमानस्य गोधनस्य सङ्घे अन्तिकस्थे सति **सद्यः** एव त्वं यजमानाय धनम् **क्षरसि** ॥ ६ ॥

**मुद्गल–** हे **चित्रभानो!** विचित्ररश्मियुक्ताग्ने! **विभक्ता** विशिष्टस्य धनस्य प्रापयिता **असि** । दृष्टान्तः । आकारः उपमार्थः । यथा **सिन्धोः** नद्या **उपाके** समीपे **ऊर्मौ** ऊर्मिं तरङ्गोपलक्षितं कुल्यादिप्रवाहं विभजन्ति तद्वत् । **दाशुषे** हविर्दत्तवते यजमानाय **सद्यः** तदानीमेव **क्षरसि** कर्मफलभूतां वृष्टिं करोषि ।। ६ ।।

**सायण–** हे **चित्रभानो!** विचित्ररश्मियुक्ताग्ने! **विभक्ता** विशिष्टस्य धनस्य प्रापयिता **असि** । तत्र दृष्टान्त उच्यते । आकार उपमार्थः । यथा **सिन्धोः** नद्याः **उपाके** समीपे **ऊर्मौ** ऊर्मिं तरङ्गोपलक्षितं कुल्यादिप्रवाहं विभजन्ति तद्वत् । **दाशुषे** हविर्दत्तवते यजमानाय **सद्यः** तदानीमेव **क्षरसि** कर्मफलभूनां वृष्टिं करोषि ।

सिन्धोः । 'स्यन्दू प्रस्रवणे' । 'स्यन्देः सम्प्रसारणं धश्च' (उ.सू.१-११) इति उप्रत्ययः । 'नित्' इत्यनुवृत्तेः आद्युदात्तत्वम् । उर्मिः । 'अर्तेरूच्च' (उ.सू.४-४८४) इति मिः । प्रत्यय-स्वरः । दाशुषे । 'धृतव्रताय दाशुषे' (ऋ.सं.१-२५-६) इत्यत्रोक्तम् ।। ६ ।।

**सिद्धाञ्जनम्–** हे **चित्रभानो!** विचित्रकिरणसम्पन्न अग्ने! त्वं **विभक्ता असि** विभज्य दाता भवसि । किं च **दाशुषे** दत्तवते **सद्यः** अविलम्बेन **क्षरसि** प्रवहसि स्वयम् । तत्र दृष्टान्तः । **आ** आकारः उपमार्थः । यथा **सिन्धोः** नद्याः **उपाके** समीपे **ऊर्मौ** तरङ्गे तदुपलक्षितप्रवाहे सति, कुल्यादिखातानां पूरणाय सिन्धुः स्वयं क्षरति, तथा यजमानमुद्दिश्य यथाभागं पूरणाय त्वं प्रवहसि ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः ।। ७ ।।**

यम् । अग्ने । पृत्ऽसु । मर्त्यम् । अवाः । वाजेषु । यम् । जुनाः । सः । यन्ता । शश्वतीः । इषः ।।

## ऋग्भाष्यम्

**यं मर्त्यं रक्षसि विभो यं युत्सु प्रेरयस्यपि ।**
**ज्ञानाज्ञानात्मकेष्वेव स गन्ता नित्यसत्सुखम् ।**
**भोगान्वा मुक्तिगान्नित्यानिह चेदुपचारतः ।। ७ ।।**

**ऋग्भाष्यटीका– यमग्ने** । **यं मर्त्यम्** । हे **अग्ने**! विभो त्वं **यं मर्त्यम्** । **पृत्सु** युत्सु अध्यात्मं ज्ञानाज्ञानात्मकेषु तत्कर्तृकेष्वेव युद्धेषु **अवाः** रक्षसि । **यम**पि यं च **वाजेषु** अन्नेषु **जुनाः** 'जुन गतौ' । गमयसि प्रेरयसि । स एव मर्त्यः **शश्वतीः** नित्या **इषः** अन्नानि नित्यसत्सुखं मुक्तिगतं **यन्ता** । यमिरत्र गत्यर्थः । गन्ता । शश्वतीरिष इत्यस्य व्याख्यानान्तरं नित्यान् भोगान्वेति । कथं भोगानां नित्यत्वमित्यत उक्तम् । **मुक्तिगानिति** ।। अग्निविषये कथमिति चेत् । ऐहिकभोगविषयं व्याख्यास्यामः । कथमिह नित्यत्वमित्यत आह ।। **इहेति** ।। उपचारबीजं च बहुकालीनत्वम् ।। ७ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने, विष्णो । (त्वम्) यम् मर्त्यम् । पृत्सु, पृतनायाः पृत्, पृतना-कर्तृकेषु युद्धेषु, अध्यात्मम्– ज्ञानाज्ञानात्मकेषु युद्धेषु । अवाः, रक्षसि । यम् (च) वाजेषु, अन्नेषु । जुनाः, 'जुन गतौ' इत्यतोऽन्तर्णीतण्यर्थाल्लडर्थे लेट्, 'लेटोऽडाटौ' इत्यडागमे 'इतश्च लोपः' इति सिप इकारलोपे रुत्वविसर्गौ, गमयसि, प्रेरयसि । सः, स एव मर्त्यः । शश्वतीः, शाश्वतीः, नित्याः । इषः, अन्नानि, नित्यसत्सुखम्, नित्यान्भोगान्वा । यन्ता, गन्ता, यमिः अत्र गत्यर्थः । मुक्तिफलं प्राप्नोतीत्यर्थः । प्रसिद्धाग्निपक्षे तु बहुकालीनैहिकभोगावाप्तिर्ज्ञेया ।। ७ ।।

**स्कन्द– यम्** हे **अग्ने! पृत्सु** संग्रामेषु **मर्त्यम् अवाः** पाल्यसि त्वम् । **वाजेषु** अन्नेषु च हविर्लक्षणेषु निमित्तभूतेषु **यम् जुनाः** 'जुन गतौ' । गच्छसि । यं च प्रति हवींषि भक्षयितुं गच्छसीत्यर्थः । अथवा वाजेष्विति तृतीयार्थे सप्तमी । जुना इत्यपि जुनातेः । जुनातेः सामर्थ्यात् प्रीणनार्थः । अन्नैश्च य प्रीणयसीत्यर्थः । **सः यन्ता** यच्छतिर्दानार्थः । प्रयन्ता । अन्येभ्यो दातेत्यर्थः । अथवा 'यमु बन्धने' । आत्मनि निबन्धा । लब्धेत्यर्थः । किम् । **शश्वतीः** ध्रुवाः अनपायिनी । अथवा 'शश्वत्' (निघ ३-१) इति बहुनाम । बह्वीः । काः । इषः अन्नानि ।। ७ ।।

**वेङ्कटमाधव– यम्** त्वम् **अग्ने**! सङ्ग्रामेषु **मर्त्यम्** रक्षसि, यम् वा तत्र प्रहिणोषि, सः नियच्छति बहूनि अन्नानि ।। ७ ।।

**मुद्गल–** हे **अग्ने! पृत्सु** सङ्ग्रामेषु **यम् मर्त्यम्** यजमानम् **अवाः** अवसि रक्षसि । **यम्**

पुरुषम् **वाजेषु** सङ्ग्रामेषु **जुनाः** प्रेरयसि । **सः** नरो यजमानः **शश्वतीः इषः** नित्यान्यन्नानि **यन्ता** नियन्तुं समर्थो भवति ॥ ७ ॥

**सायण–** हे **अग्ने! पृत्सु** सङ्ग्रामेषु **यं मर्त्यम्** यजमानम् **अवाः** अवसि रक्षसि । **यम्** पुरुषं **वाजेषु** सङ्ग्रामेषु **जुनाः** प्रेरयसि । **सः** नरो यजमानः **शश्वतीः इषः** नित्यान्यन्नानि **यन्ता** नियन्तुं समर्थो भवति ।

पृत्सु । 'पदादिषु मांस्पृत्स्नूनामुपसंख्यानम्' ('पद्दन्नोमाशृन्निशसन्यूषन्...' पा.सू.६-१-६३) इति पृतनाशब्दस्य पृदादेशः । 'सावेकाचः' (पा.सू.६-१-१६८) इति विभक्तेरुदात्तत्वम् । अवाः आवः । अकाराकारयोर्विपर्ययः । यद्वा । लेटि आडागमः । 'इतश्च' (३-४-१००) इति सिप इकारस्य लोपः । जुनाः । जू इति गत्यर्थः सौत्रो धातुः । लङः सिप् । 'त्र्यादिभ्यः श्ना'। 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा.सू.६-४-७५) इति अडागमाभावः । यद्वृत्तयोगादनिघातः । यन्ता । तृनो नित्त्वादाद्युदात्तत्वम् । शश्वतीः । 'उगितश्च'(पा.सू.४-१-६) इति ङीप् ॥ ७ ॥

**सिद्धाञ्जनम्–** हे **अग्ने! यं मर्त्यं पृत्सु** पृतनासु तदुपलक्षिते युद्धे (पृतनाशब्दस्य पृत् आदेशः) **अवाः** अवसि (आव इत्यस्य अकार-आकारविपर्ययः, लेटि अडागमो वा), **यं वाजेषु** समृद्धेषु तेजोबलादिषु सम्पादयितव्येषु **जुनाः** जुनासि, प्रेरयसि (जू इति सौत्रो धातुः, क्र्यादिः, लङः सिप् अडभावः) **सः शश्वतीः** बहुला अपि **इषः** एषणाः प्रेरणावेगबलानीत्यर्थः, **यन्ता** नियन्तुं प्रभवति । यस्यापन्निवारणे रक्षणं, सम्पत्प्राप्तौ प्रेरणं च अग्निभगवत्प्रसादाद्भवतः, स उभयत्र स्वेषणवशंवदो न भवति, प्रेरणसहस्रवेगनीतो न भवति, किं तु युद्धेषु भगवद्रक्षितः, समृद्धिषु भगवत्प्रेरितः स्ववशो भवतीति भावः ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**नकि॑रस्य॒ सहं॑त्य पर्ये॒ता कय॑स्य चि॒त् । वाजो॑ अस्ति श्र॒वाय्यः॑ ॥ ८ ॥**

नकिः॑ । अ॒स्य॒ । सहं॑त्य॒ । प॒रि॒ऽए॒ता । कय॑स्य । चि॒त् । वाजः॑ । अ॒स्ति॒ । श्र॒वाय्यः॑ ॥ ८ ॥

## ऋग्भाष्यम्

**परिपूर्णोस्य नैवास्ति त्वदीयस्य तु कस्यचित् ।**
**भोगोऽपि बहुलो यस्माद्दित्ससस्येव पुनः पुनः ।**
**सहंत्यः सन्ततबलः सहसः पुत्र एव वा ।**
**श्रवाय्यः श्रवणीयश्च सुप्रसिद्धतमोऽपि वा ।। ८ ।।**

**ऋग्भाष्यटीका– नकिः** । परिपूर्णः । सन्ततबलः **सहंत्यः** । सह इति बलनाम । त्य इति तनोतेर्ड्यः । सहसा बलेन त्यः सन्ततः सहंत्यः । सहः शब्दस्य मुमागमः । यद्वा सहयो वायोः पुत्र एवाग्निरिति सहंत्यः । त्य इत्यपत्यार्थे तद्धितः । हे सहंत्य! अस्य यं मर्त्यमिति प्रकृतस्य । त्वदीयस्य तु **कयस्य चित्** कस्यचित् **श्रवाय्यः** श्रवणीयः । श्रुतिसुखकृत्सु प्रसिद्धतमोऽपि वा बहुलोऽपीति यावत् । **वाजो** भोगः । **पर्येता** पर्याप्तः । परिपूर्णो नकिर्नैवास्ति । महानपि भोगस्त्वद्भक्तानां परिपूर्णो न भवतीत्येतदुपपादयति ।। **यस्मादिति** ।। **दित्ससि** ददासि च । यतो महाभोगान्पुनः पुनस्तेभ्यो ददासि तस्मात्तेषां न कोऽपि भोगोऽन्तिम इति भावः । यद्वा यस्मात्पुनः पुनरित्यत्युच्चमोक्षभोगं ददासि तस्माद्बहुलोऽपि सांसारिको भोगस्तेषां न परिपूर्णस्तुच्छ एवेति ।। ८ ।।

**मन्त्रार्थमञ्जरी–** (हे) सहन्त्य, सहसा बलेन तत, तनोतेः ड्यः पूर्वस्य मुमागमोऽन्त्यलोपश्च, सहसो वायोः पुत्रेति वा, अपत्यार्थे त्यः, पूर्ववद्रूपम्, अग्ने । अस्य, 'यं मर्त्यम्' इति प्रकृतस्य । त्वदीयस्य कयस्य चित्, कस्य चित् । श्रवाय्यः, श्रवणीयः, श्रुतिसुखकृत्, सुप्रसिद्धतमोऽपि वा, बहुलोऽपीति यावत् । वाजः, भोगः । पर्येता, पर्याप्तः, परिपूर्णः । नकिः, न । अस्ति, महानपि भोगस्त्वद्भक्तानां परिपूर्णो न भवति, उपर्युपरि यथेष्टं भोगविशेषं ददासीति वा, 'महाफलमोक्षरूपं पुमर्थं ददासीति कृत्वा बहुलोऽप्यैहिको भोगो न परिपूर्णः, तेषां तुच्छ एव' इति भावः ।। ८ ।।

**स्कन्द–** किञ्च **नकिः** अस्य नकिरिति निपातो नेत्यस्यार्थे । अस्येत्यनुदात्तत्वात् पूर्वस्याम् ऋच्यादिष्टस्य मर्त्यस्यान्वादेशः । न चास्य मर्त्यस्य हे सहन्त्य! सहस्वन्! अभिभवित! **पर्येता** परिगन्ता प्राप्ता । कः । सामर्थ्यादनिष्टः । नचैनं कश्चिदनिष्टः प्राप्नोतीत्यर्थः । अथवा पर्येतेति

परिपूर्वं एतिः सामर्थ्यादत्र वधार्थः । न चास्य कश्चिद्धन्तेत्यर्थः । **कयस्य चित्** कस्यचिदपि । सर्वस्येत्यर्थः । किञ्च **वाजः** अन्नं बलं वाऽस्य अस्ति भवति श्रवाय्यः श्रवणीयं प्रख्यातम् ॥ ८ ॥

**वेङ्कटमाधव–** यं त्वं सङ्ग्रामेषु सहनशील! रक्षस्यहिंसार्थम्, **अस्य** परितो गन्ता न कश्चित् **अस्ति** । यकार उपजनः । कस्य चिदपि । ससेनमसेनं वा न तं कश्चिदभिभवति । श्रवणीयम् अन्नं च तस्य अस्ति शत्रुभ्यो जितम् ॥ ८ ॥

**मुद्गल–** हे **सहन्त्य** शत्रूणामभिभवनशीलाग्ने! अस्य त्वद्भक्तस्य यजमानस्य **कयस्य चित्** कस्यापि **पर्येता नकिः** आक्रमिता नास्ति । किञ्च अस्य यजमानस्य **श्रवाय्यः** श्रवणीयः **वाजः** बलविशेषः अस्ति ॥ ८ ॥

**सायण–** हे **सहन्त्य** शत्रूणामभिभवनशीलाग्ने! अस्य त्वद्भक्तस्य यजमानस्य **कयस्य चित्** कस्यापि **पर्येता नकिः** आक्रमिता नास्ति । किञ्च अस्य यजमानस्य **श्रवाय्यः** श्रवणीयः **वाजः अस्ति** बलविशेषः अस्ति ।

कयस्य । यकारोपजनश्छान्दसः । श्रवाय्यः । 'श्रुदक्षिस्पृहिगृहिभ्य आय्यः' (उ.सू.३-३७६) इति आय्यप्रत्ययः ॥ ८ ॥

**सिद्धाञ्जनम्–** हे **सहन्त्य** साहयितः शत्रूणामभिभवितः अग्ने! अस्य त्वामाश्रितस्य **कयस्य चित्** कस्यापि पुरुषस्य **पर्येता** आक्रमिता **नकिः** न कोऽपि वर्तते । कुतः? अस्य **श्रवाय्यः** श्रवणीयः विश्रुतः **वाजः** सर्वसमृद्धिः अस्ति, तस्मात् न कुतोऽप्याक्रमः सम्भवति । कयस्य– यकारोपजनश्छान्दसः ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु सनिता ॥ ९ ॥**

सः । वाजम् । विश्वऽचर्षणिः । अर्वत्ऽभिः । अस्तु । तरुता । विप्रेभिः । अस्तु । सनिता ॥ ९ ॥

## ऋग्भाष्यम्

**वाजं तारयिताऽऽनेता सोऽर्वद्भिर्गोसमाप्तितः ।**
**त्वदीयस्तु भवेद्विप्रैर्दाता विपुलदानतः ।**
**युद्धस्य तारकोऽन्नस्य दाता भोगस्य वा भवेत् ।**
**इन्द्रियैस्तमसा युद्धं तरुता ज्ञानदोऽथवा ।। ९ ।।**

**ऋग्भाष्यटीका– स वाजम्** । वाजं तारयिता । अग्ने! **सः** प्रकृतस्त्वदीय एव **विश्वचर्षणिः** सर्वप्रजाधिपो भूत्वा दानेन गवां बलीवर्दानां च समाप्तत्वात् । **अर्वद्भिः** अश्वैः **वाजं** अन्नं **तरुता** तारयिता । तरतिरत्रानयत्यर्थे । आनेता **अस्तु** भवेत् । त्वद्भक्तश्चक्रवर्ती भवतु । अर्थिभ्यो गाश्च ददातु । यथा गोदाने धान्यानयनादिकमश्वैरेव कुर्यात्तथेत्यभिप्रायः । किञ्च **विप्रेभिः** विप्रैः करणैः । **सनिता** दाताऽस्तु । कुतः विपुलदानतः तावद्विपुलदाता भवतु । यदेकस्य दातुमशक्तत्वेन विप्रान्करणी कुर्यादिति भावः । प्रकारान्तरेण व्याचष्टे । **युद्धस्येति** ।। स त्वदीयो विश्वचर्षणिर्भूत्वार्वद्भिरश्वैर्वाजं तरुता युद्धस्य तारकः पारगोऽस्तु । तथा विप्रेभिर्विप्रेभ्यो वाजं सनिता अन्नस्य भोगस्य वा दाता भवेदिति । प्रकारान्तरेण व्याख्याति । **इन्द्रियैरिति** ।। स त्वदीयो विश्वचर्षणिर्बहुशिष्योऽर्वद्भिरिन्द्रियैस्त्वद्विषयैर्वाजं तमसा गुणेन सह यद्युद्धं तस्य । तरुतास्तु । तथा विप्रेभ्यः सनिता ज्ञानदोऽस्त्वित्यथवार्थः ।। ९ ।।

**मन्त्रार्थमञ्जरी–** (हे अग्ने) । सः, प्रकृतः । त्वदीय एव विश्वचर्षणिः, विश्वाश्चर्षणयः प्रजा अस्य स तथा, सर्वाधिपो भूत्वा । दानेन (गवाम्) बलीवर्धानाम् । समाप्तत्वात् अर्वद्भिः, अश्वैः । वाजम्, अन्नम् तरुता, तारयिता, तरतिः अत्रानयत्यर्थे, आनेता । अस्तु, भवेत्, त्वद्भक्तश्चक्रवर्ती भवतु, अर्थिभ्यो गाश्च ददातु, यथा गोदाने धान्यानयनादिकमश्वैरेव कुर्यात्तथेत्यभिप्रायः ।। किं च, विप्रेभिः, विप्रैः करणैः । सनिता, 'षणु दाने' दाता । अस्तु, यदैकस्य दातुमशक्तत्वेन विप्रान्करणीकुर्यात्तावद्विपुलदाता भवत्विति भावः । यद्वा– (हे अग्ने) सः, त्वदीयः । विश्वचर्षणिः (भूत्वा) अर्वद्भिः, अश्वैः । वाजम् तरुता, युद्धस्य तारकः, पारगः । अस्तु । तथा विप्रेभिः, विप्रेभ्यः । (वाजम्) सनिता, अन्नस्य भोगस्य वा दाता । अस्तु, भवेत् इति । अथ वा सः, त्वदीयो भक्तः । विश्वचर्षणिः, बहुशिष्यः । अर्वद्भिः, इन्द्रियैस्त्व-द्विषयैः । वाजम्, तमोगुणेन सह यद्युद्धं तस्य । तरुता अस्तु । तथा विप्रेभिः । सनिता, ज्ञानदः । अस्तु इत्यर्थः ।। ९ ।।

**स्कन्द– सः** प्रकृतोऽग्निः **वाजम्** सङ्ग्रामम् **विश्वचर्षणिः** सर्वस्य द्रष्टा **अर्वद्भिः** अश्वैः **अस्तु तरुता** तरतिः प्लवनार्थः । प्लवनं च गमनम्, प्लवतेर्गत्यर्थत्वात् । अस्मदर्थं गन्ताऽस्तु । सङ्ग्रामे गत्वाऽस्माकं नित्यं साहाय्यं करोत्वित्यर्थः । किञ्च वाजमिति सप्तम्यर्थे द्वितीया । तात्स्थ्याद्वा ताच्छब्द्यं मञ्चाः क्रोशन्तीति यथा । तरुतेत्यपि तूर्वतेर्हिंसार्थस्येदं रूपम् । सङ्ग्रामे सङ्ग्रामस्थम् अस्मच्छत्रुं हिंसिताऽस्तु । किञ्च **विप्रेभिः** तृतीयानिर्देशात् स्तूयमान इति वाक्यशेषः । मेधाविभिरस्माभिः स्तूयमानः **अस्तु सनिता** सम्भक्ता । कस्य । सामर्थ्यादस्मत्स्तुतीनाम् अस्माकमेव वा ।। ९ ।।

**वेङ्कटमाधव– सः** सङ्ग्रामं विश्वस्य द्रष्टा अश्वैः **अस्तु तरुता** तारकः । मेधाविभिरश्वैः अस्तु सङ्ग्रामं सम्भक्ता ।। ९ ।।

**मुद्गल– विश्वचर्षणिः** सर्वैर्मनुष्यैरुपेतः **सः** अग्निः **अर्वद्भिः** अश्वैः **वाजम्** सङ्ग्रामम् **तरुता** तारयिता **अस्तु** । **विप्रेभिः** मेधाविभिः ऋत्विग्भिः सहितः तुष्टोऽग्निः **सनिता** फलस्य दाता **अस्तु** ।। ९ ।।

**सायण– विश्वचर्षणिः** सर्वैर्मनुष्यैरुपेतः **सः** अग्निः **अर्वद्भिः** अश्वैः **वाजम्** सङ्ग्रामम् **तरुता** तारयिता **अस्तु** । **विप्रेभिः** मेधाविभिः ऋत्विग्भिः सहितः तुष्टोऽग्निः **सनिता** फलस्य दाता **अस्तु** ।

विश्वचर्षणिः । विश्वे चर्षणयो यस्य । 'बहुव्रीहौ विश्वं संज्ञायाम्' (पा.सू.६-२-१०६) इति पूर्वपदान्तोदात्तत्वम् । अर्वद्भिः । 'ऋ गतौ' । 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३-२-७५) इति वनिप् । भिसि 'अर्वणस्त्रसावनञः' (पा.सू.६-४-१२७) इति नकारस्य 'तृ इत्ययमादेशः । तरुता । 'तृ प्लवनतरणयोः' । अस्मात् 'ग्रसितस्कभित' (पा.सू.७-२-३४) इत्यादौ तृनन्तो निपातितः । निपातनादेव इकारस्य उत्वम् ।। ९ ।।

**सिद्धाञ्जनम्– विश्वचर्षणिः** सर्वस्य द्रष्टा **सः** अग्निः **अर्वद्भिः** अश्वैः (प्राणबलवेगसङ्केतः अश्वोऽवधेयः) **वाजं** समृद्धिं **तरुता** तारयिता प्रापयिता **अस्तु** भवतु । **विप्रेभिः** मेघाविभिः सुप्रकाशप्रज्ञासम्पन्नैः द्वारा **सनिता** सम्भक्ता **अस्तु** भवतु । अग्निर्भगवान् यजमानेऽवस्थितः जेतृभिर्दिव्यप्राणबलावेशैस्तेजोबलादिसमृद्धिं जित्वा उज्ज्वलज्ञानैः साधनैः भोक्ता भवतु उक्तलक्षणस्य वाजस्येति सूक्ष्मं तात्पर्यम् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**जराबोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीकम् ॥ १०, २३ ॥**

जराऽबोध । तत् । विविड्ढि । विशेऽविशे । यज्ञियाय । स्तोमम् । रुद्राय । दृशीकम् ॥१०,२३॥

## ऋग्भाष्यम्

**स्तुतिबोद्धा यतस्तां त्वमवधारय सर्वदा ।**
**नित्यज्ञानोऽपि दत्वा तत्फलं वेत्तेति कथ्यते ।**
**रुजां विद्रावकेशाय प्रत्यक्षां तव वा स्तुतिम् ॥ १०,२३ ॥**

**ऋग्भाष्यटीका– जराबोध** । स्तुतिबोद्धा । जरतिः स्तुत्यर्थः । जरां स्तुतिम् । बुध्यत इति जराबोधः । हे **जराबोध** यतस्त्वं जराबोधः स्तुतिबोद्धा । **तत्** तस्मात् **रुद्राय** रुजां विद्रावकायेशाय विष्णवे तुभ्यम् । **दृशीकं** स्तोमं प्रत्यक्षामुच्चैः क्रियमाणां तां स्तुतिम् । **विविड्ढि** विशेषेण विद्धि । सर्वदावधारय । त्वद्विषयामिमां स्तुतिं त्वमेवावधारयेत्यर्थः । ननु परमेश्वरः सर्वज्ञः तत्कथं विशिष्य स्तुतिबोद्धा कथ्यते कथं च नित्यज्ञानो विविड्ढीति प्रार्थ्यत इत्यत आह । **नित्येति** ॥ सर्वज्ञोऽपीत्यपि ग्राह्यम् । तत्फलं स्तुतिफलम् । वेत्ता स्तुतेः । विद्धीति प्रार्थ्यते चेत्यपि द्रष्टव्यम् । किमर्थम् । **यज्ञियाय** यज्ञे भवाय । **विशेविशे** सर्वस्मै जनाय तत्प्रयोजनसिद्धये । प्रसिद्धाग्नौ व्याख्याति । **तव वेति** ॥ अनेन रुद्रपदमत्राग्निविषयम् अन्यत्समानमित्युक्तं भवति । ईशायेति वदता शिवोऽप्यत्र रुद्र इति सूचितम् । अत्रेतिहासो भवति । अग्निः स्तूयमानः शुनःशेपमुवाच रुद्रं स्तुहि 'रौद्रा हि पशव' इति । स तं प्रत्युवाच । नाहं जानामि रुद्रं स्तोतुम् । त्वमेवैनं स्तुहीति । तदिदमुच्यते जराबोधेति । हे जराबोध रुद्र स्तुतिवेत्तस्तत्तस्मादेव यज्ञियाय विशेविशे आदरार्थं द्विर्वचनम् । मह्यमिति यावत् । **रुद्राय** रुद्रस्य स्तोमं त्वमेव **विविड्ढि** कुर्विति यावत् ॥ १०,२३ ॥

**मन्त्रार्थमञ्जरी–** (हे) जराबोध, जरां स्तुतिं बुद्ध्यत इति जराबोध, स्तुतिबोद्धः, हेतुगर्भम् । तत्, स्तुतिबोद्धृत्वात् । रुद्राय, रुजां द्रावकाय, विष्णवे तुभ्यम् । प्रसिद्धाग्निपक्षे तु– रुद्राय, प्रसिद्धाग्नये तुभ्यम् । दृशीकम्, प्रत्यक्षम्, दृशेः कर्मणीकक् (कीकच्), उच्चैः क्रियमाणम् । स्तोमम्, स्तुतिम् । विविड्ढि, विशेषेण विद्धि, सर्वदाऽवधारय, त्वद्विषयामिमां स्तुतिं त्वमवधारयेत्यर्थः ।

किमर्थम् ? यज्ञियाय, यज्ञे भवाय, यज्ञशब्दाद्धः । विशेविशे, सर्वस्मै जनाय, तत्प्रयोजनसिद्धये । 'विविड्ढि' इत्यन्वयः । अत्रेतिहासो भवति शुनः शेपेन स्तूयमानोऽग्निस्तमुवाच, रुद्रं स्तुहि रौद्रा हि पशव इति । स तं प्रत्युवाच, नाहं जानामि रुद्रं स्तोतुं त्वमेव स्तुहीति । तदिदमुच्यते जराबोधेति । (हे) जराबोध, रुद्रस्तुतिबोद्धः, हे अग्ने । तत् । यज्ञियाय, यज्ञे भवाय । विशेविशे, द्विरुक्तिरादरार्था, मह्यं जनायेति यावत् । रुद्राय, रुद्रस्य । दृशीकम् स्तोमम् । त्वमेव विविड्ढि, कुर्विति यावत् ।। १० ।।

**स्कन्द–** अत्रेतिहासमाचक्षते– अग्निः स्तूयमानः शुनःशेपमुवाच– रुद्रं स्तुहि, 'रौद्रा हि पशवः' इति । स तं प्रत्युवाच– 'नाहं जानामि रुद्रं स्तोतुम् त्वमेवैनं स्तुहि, इति । तदेतदनयोच्यते जराबोधेति । जरा स्मुतिः जरतेः स्तुतिकर्मणः (या.४,२८) । तां यो बुध्यते बोधयति देवान् होतृत्वात्सजराबोधोऽग्निः, तस्य सम्बोधनं हे **जराबोध! तत् विविड्ढि** विदेः ज्ञानार्थस्येदं रूपम् । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः । यत् मामवोचः तत् त्वमेव वेत्सि । अथवा विविड्ढीति 'विष्लृ व्याप्तौ' इत्यस्यैतद्रूपम् । अयं च 'वेषः' (निघ.२-१) इति कर्मनामसु पाठान्नाम्नां चाख्यातजत्वात् कर्मणि च करोत्यर्थस्य सम्भवात् करोत्यर्थोऽपि, न व्याप्त्यर्थः एवेति गम्यते । तत् कुर्वित्यर्थः । किं तत् । उच्यते । **विशेविशे यज्ञियाय** सर्वत्र तादर्थ्ये चतुर्थी । यावान् कश्चिन्मनुष्यो यज्ञार्होऽहं वाऽन्यो वा यज्ञस्य कर्ता तस्य सर्वस्यार्थाय । **स्तोमम् रुद्राय** रुद्रार्थम् । कीदृशम् । **दृशीकम्** दर्शनीयम् । अथवा यज्ञियायेत्येतद् रुद्रायेत्येतेन समानाधिकरणं न विशेविशे इत्येतेन । विशेविशे इति षष्ठ्यर्थे चतुर्थी । सर्वमनुष्याणां यज्ञार्हाय रुद्राय स्तोममिति । यास्कस्तु (या.१७-७) रोरूयमाणत्वाद् अग्निरेवात्र रुद्रशब्देनोच्यत इति व्याचष्टे । तत्र जराबोधेति आत्मन एवान्तरात्मन इदं सम्बोधनमिति व्याख्यातव्यम् । स्तुत्या स्तुतेर्वा बोधयित! अन्तरात्मन्! यदुच्यते तद् विविड्ढि । किं तत् । सर्वमनुष्याणां यज्ञियाय स्तोममग्रय इति ।। १० ।।

**वेङ्कटमाधव–** स्तुत्या देवानां बोधयितः! स्तोतः! **तत्** जानीहि मनुष्यस्य **यज्ञियाय स्तोमम् रुद्राय** दर्शनीयम् । अत्र यास्कः (१०-७-८)– 'अग्निरपि रुद्र उच्यते' । 'जरा स्तुतिः जरते स्तुतिकर्मणः तां बोध तया बोधयितरिति वा । **तद्विविड्ढि** तत् कुरु । मनुष्यस्य मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयम्' इति ।। १० ।।

**मुद्गल–** हे **जराबोध!** जरया स्तुत्या बोध्यमान अग्ने! **विशेविशे** तत्तद्यजमानरूप-प्रजानुग्रहार्थम् **यज्ञियाय** यज्ञसम्बन्ध्यनुष्ठानसिद्ध्यर्थम् **तत्** देवयजनम् **विविड्ढि** प्रविश । यजमानोऽपि **रुद्राय** क्रूराय अग्नये **तुभ्यम् दृशीकम्** दर्शनीयं समीचीनम् **स्तोमम्** स्तोत्रं करोतीति शेषः ।। १० ।।

**सायण–** अप्तोर्यामे हेतुरतिरिक्तोक्थे 'जराबोध तद्विविड्ढि' इति स्तोत्रियस्तृचः । 'यस्य पशवो नोपधरेरन्' इति खण्डे सूत्रितम्– 'अतिरिक्तोक्थानि जराबोध तद्विविड्ढि' (आश्व.श्रौ.९-११) इति ।

हे **जराबोध!** जरया स्तुत्या बोध्यमान अग्ने! **विशेविशे** तत्तद्यजमानरूपप्रजानुग्रहार्थम् **यज्ञियाय** यज्ञसम्बन्ध्यनुष्ठानसिद्ध्यर्थम् **तत्** देवयजनम् **विविड्ढि** प्रविश । यजमानोऽपि **रुद्राय** क्रूराय अग्नये **तुभ्यम् दृशीकम्** दर्शनीयं समीचीनम् **स्तोमम्** स्तोत्रं करोतीति शेषः । अत्र यास्क एवं व्याख्यातवान्– 'जरा स्तुतिर्जरतेः स्तुतिकर्मणस्तां बोध तया बोधयितरिति वा तद्विविड्ढि तत्कुरु मनुष्यस्य मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयम्' (निरु.१०-८) इति ।

जराबोध । 'जॄष् वयोहानौ' । अत्र तु स्तुत्यर्थः । 'षिद्भिदादिभ्योऽङ्' (पा.सू.३- ३-१०४) इति अप्रत्ययः । ततः टाप् । जरया स्तुस्या बोधो यस्यासौ जराबोधः । यद्वा । जरया बोध्यते इति जराबोधः । कर्मणि घञ् । आमन्त्रिताद्युदात्तत्वम् । विविड्ढि । 'विश प्रवेशने' । लोटो हि । 'बहुलं छन्दसि' इति शपः श्लुः । अभ्यासहलादिशेषौ । 'हुझल्भ्यो हेर्धिः' इति हेर्धिरादेशः । षत्वष्टुत्वे । यद्वा । 'विष्लृ व्याप्तौ' इत्यस्मात् लोण्मध्यमैकवचने अभ्यासस्य गुणाभावः । विशेविशे । 'सावेकाचः' इति चतुर्थ्या उदात्तत्वम् । 'अनुदात्तं च' इति आम्रेडितानुदात्तत्वम् । यज्ञियाय । 'यज्ञर्त्विग्भ्यां घखञौ' (पा.सू.५-१-७१) इति घः । दृशीकम् । 'अनिदृशिभ्यां च' (दश.पा.३) इति कीकन्प्रत्ययः । नित्त्वादाद्युदात्तः ।।१०,२३।।

**सिद्धाञ्जनम्– जराबोध!** जरया स्तुत्या बोधः अन्तःप्रकाशरूपं ज्ञानं यस्य स जराबोध अग्निः, तस्य आत्मन एव वा सम्बोधनम् । **तत्** तत् स्थानं **विविड्ढि** प्रविष (विष-धातोः लोटो हि, छन्दसि शस्यः श्लु) तच्छन्दश्रवणात् उत्तरत्र यच्छब्दोऽध्याहार्यः । यत्र **विशेविशे** सर्वस्य जनस्य क्षेमाय, तादर्थ्ये चतुर्थी, **यज्ञियाय** यज्ञे भवाय, यज्ञार्हाय वा **रुद्राय** उग्रबलाय

अग्नये **दृशीकम्** दर्शनीयं (अनिदृशिभ्यां कीकन्) प्रत्यक्षं **स्तोमम्** स्तोत्रं करोति यजमान इति शेषः । जराबोधः अग्निरिति गृहीत्वा तदनुसारेण व्याचक्षते, अन्तरात्मनः सम्बोधनमुपपद्यतेतराम् । अत्र तच्छब्दार्थोऽवधेयः । यस्मिन् अन्तः दिव्ये यजनालये यजमानः अपरोक्षं अग्नये स्तोमं करोति न तु परीक्षेण यथा बहिर्मुखः साधारणो जनः करोति, येन च सर्वस्यापि मानुष्यकस्य आग्नेयोऽनुग्रहः क्षेमप्रदः सम्पाद्यते, तत् स्थानं देवयजनालयात्मकं प्रविशेत्युक्तम् ।। १० ।।

।। इति प्रथमाष्टके द्वितीयाध्याये त्रयोविंशो वर्गः ।।

## ।। अथ चतुर्विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**स नो॑ म॒हाँ अ॑नि॒मा॒नो धू॒मके॑तुः पुरु॒श्च॒न्द्रः । धि॒ये वाजा॑य हिन्वतु ।। ११ ।।**

सः । नः॒ । म॒हान् । अ॒नि॒ऽमा॒नः । धू॒मऽके॑तुः । पु॒रु॒ऽच॒न्द्रः । धि॒ये । वाजा॑य । हि॒न्व॒तु ।। ११ ।।

### ऋग्भाष्यम्

**नितराममितत्वेन महान्पुरु सुखश्च सः ।**
**धूत्करोति गरुत्मान्यद्धरेश्चेद्धूमकेतुता ।**
**ताच्छील्ये म इति ह्यस्मात्सूत्राद्धूम इतीरितः ।**
**ज्ञानायान्नाय च स नः प्रहिणोतु सुकर्मणाम् ।। ११ ।।**

**ऋग्भाष्यटीका– स नः** । अनिमानशब्दार्थं वदंस्तस्य महच्छब्देन गतार्थतां वारयति । **नितरामिति** ।। यद्यपि नीतिमानशब्देन समस्तं तथापि सामर्थ्यान्नञर्थेन सम्बध्यते । महत्त्वं ह्यापेक्षिकं भवति अतो नितराममानत्वेन तद्व्याख्यातमित्यर्थः । **पुरुश्चन्द्रः** चदेराह्लादनार्थत्वा-त्पुरुसुखः । पारस्करादित्वात्सुट् । **सः** इति प्रसिद्धः । उत्तरत्र पुनः स इति श्रवणात् । यद्वा निमानत्वादिविधानेन भिन्नवाक्यार्थत्वाद्धिः स इत्युक्तम् । तेन चशब्दश्च समर्थितः । धूमः केतुरस्येत्यग्नेर्धूमकेतुत्वं प्रसिद्धम् । हरेस्तु कथमित्यत आह ।। **धूत्करोतीति** ।। हरेश्चेद्धूमकेतुता

विवक्षिता तदा 'धूञ् कम्पन' इत्यतः 'ताच्छील्ये म' इत्यस्मात्सूत्रात्ताच्छील्यविशिष्टकर्तरि मप्रत्यये कृते यद्यस्माद्धूत्करोति तस्माद्गरुत्मान् धूम इतीरितः । स केतुरस्येति व्याख्यातव्य-मित्यर्थः । स एवम्भूतोऽग्निः नोऽस्मान् । **धिये** ज्ञानाय । **वाजाय** अन्नाय च **हिन्वतु** । सुकर्मणां करणे प्रहिणोतु । यैः कर्मभिर्धीमंतो वाजवन्तश्च स्याम (तत्र प्रेरयतु) ।। ११ ।।

**मन्त्रार्थमञ्जरी–** अनिमानः, मानं मर्यादा, मितिरिति यावत्, नितरां न विद्यते मानं मितिर्यस्य स इत्यनिमानः, हेतुगर्भमिदम् । नितराममितत्वात्– महान् । पुरुश्चन्द्रः, चन्देः आह्लादनार्थत्वात्पुरुसुखः, पारस्करादित्वात्सुट् । सः, प्रसिद्धः । धूमकेतुः, धूमः केतुर्यस्येति धूमकेतुः, विष्णुपक्षे 'धूञ् कम्पने' इत्यतस्ताच्छील्ये (ताच्छील्ये मः (म.व्या.सू.) इति) मप्रत्यये धूत्करोति पक्षवातादिना कम्पत इति धूमो गरुत्मान् केतुर्यस्येति ज्ञेयम् । स एवं भूतोऽग्निः । नः, अस्मान् । धिये, ज्ञानाय । वाजाय, अन्नाय । (च) हिन्वतु, प्रहिणोतु, यैः कर्मभिर्धीमन्तो वाजवन्तश्च स्याम तत्कर्मसु प्रेरयतु ।। ११ ।।

**स्कन्द– सः** अग्निः **नः** अस्मान् **महान् अनिमानः** अनियतं मानं यस्य सोऽनिमानः । नियतपरिमाणवर्जितः । **धूमकेतुः** केतुः पताकोच्यते । धूमः पताकास्थानीयो यस्य स धूमकेतुः । अथवा 'केतुः' (निघ.३-९) इति प्रज्ञानाम । धूमः केतुः ज्ञानं यस्य स धूमकेतुः । धूमेन ज्ञायत इत्यर्थः । **पुरुश्चन्द्रः** 'पुरु' (निघ.३-१) इति बहुनाम । 'चन्द्रश्चन्दतेः कान्तिकर्मणः' (या ११-५) । बहूनां कान्तः । **धिये** प्रज्ञायै, कर्मणे वा यागाख्याय **वाजाय** अन्नाय च **हिन्वतु** । हिन्वतिः प्रीणनार्थः । प्रीणयतु । अग्निना हि प्रीण्यमाना वयं सुखं प्रज्ञां यागम् अन्नं च प्राप्नुमः ।। ११ ।।

**वेङ्कटमाधव– सः** अस्मान् **महान्** निमानवर्जितः **धूमकेतुः** बहूनां कमनीयः कर्मणे अन्नाय च प्रहिणोतु ।। ११ ।।

**मुद्गल– सः** अग्निः **नः** अस्मान् **धिये** कर्मणे **वाजाय** अन्नाय च **हिन्वतु** प्रीणयतु । कीदृशः । **महान्** गुणाधिकः अनिमानः निमानवर्जितः । अपरिच्छिन्न इत्यर्थः । **धूमकेतुः** धूमेन ज्ञाप्यमानः पुरुश्च बहुदीप्तिः ।। ११ ।।

**सायण– सः** अग्निः **नः** अस्मान् **धिये** कर्मणे **वाजाय** अन्नाय च **हिन्वतु** प्रीणयतु । कीदृशः । **महान्** गुणाधिकः अनिमानः निमानवर्जितः । अपरिच्छिन्न इत्यर्थः । **धूमकेतुः** धूमेन ज्ञाप्यमानः पुरुश्च बहुदीप्तिः ।

महाँ अनि इत्यत्र संहितायां नकारस्य रुत्वानुनासिकावुक्तौ । अनिमानः । न विद्यते निमानोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । धूमकेतुः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । पुरुश्चन्द्रः । 'चदि आह्लादने दीप्तौ च' । अस्मात् 'स्फायितञ्चि' इत्यादिना कर्तरि रक् । पुरुश्चासौ चन्द्रश्चेति समासान्तोदात्तत्वम् । 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' (पा.सू.६-१-१५१) इति सुट् । तस्य श्रुत्वेन शकारः । धिये । 'सावेकाच' इति चतुर्थ्या उदात्तत्वम् । हिन्वतु । हिविः प्रीणनार्थः । 'इदितो नुम् धातोः' (पा.सू.७-१-५८) इति नुम् ।। ११ ।।

**सिद्धाञ्जनम्– सः** अग्निः **नः** अस्मान् **धिये** धारणात्मकोत्कृष्टप्रज्ञाय **वाजाय** बलसमृद्धये च **हिन्वतु** प्रेरयतु । कीदृशः ? **महान्** प्रभावाधिकः **अनिमानः** अविद्यमानः निमानः परिच्छेदः यस्य सः, परिच्छेदवर्जितः **घूमकेतुः** धूमः केतुः ध्वजो यस्य स इति भौतिकोऽग्निः बाह्यः । धूमः ऊर्जवेगेन सहसा वा यः बाष्पगतिप्रायः कम्पो जायते स केतुः ज्ञानं यस्य सः, उक्तलक्षणेन बलवेगभावस्पन्देन अग्निर्जायत इत्यर्थः । **पुरुश्चन्द्रः** बहुदीप्तिः, पुरुश्चासौ चन्द्रश्च, पुरुर्बहुनामा चन्द्रः आह्लादो दीप्तिर्वा, पुरुचन्द्र इत्यत्र मध्ये, 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' (पा.सू.६-१-१५१) इति सुट्, सुट श्चुत्वेन शकारः ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**स रे॒वाँ इ॑व वि॒श्पति॒र्दैव्यः॑ के॒तुः शृ॑णोतु नः । उ॒क्थैर॒ग्निर्बृ॒हद्भा॑नुः ।। १२ ।।**

सः । रे॒वान्ऽइ॑व । वि॒श्पतिः॑ । दैव्यः॑ । के॒तुः । शृ॒णो॒तु॒ । नः॒ । उ॒क्थैः । अ॒ग्निः । बृ॒हत्ऽभा॑नुः ।।

## ऋग्भाष्यम्

**देवानां केतुभूतोऽसौ वित्तवान्विश्पतिर्यथा ।**
**अस्मदीयानि चोक्थानि बृहत्तेजाः शृणोतु... ।। १२ ।।**

**ऋग्भाष्यटीका–** **स रेवान्** । देवानाम् । **विश्पतिरिव** राजा यथा तथा **रेवान्** वित्तवान् । **दैव्यो** देवसम्बन्धी **केतुः** देवानां केतुभूतोऽग्रगामित्वात् । **बृहद्भानुः** बृहत्तेजाः । **सोऽसौ अग्निः नः** अस्मदीयान् **उक्थैः** उक्थानि स्तोत्राणि च । **शृणोतु** ।। १२ ।।

**मन्त्रार्थमञ्जरी–** (रेवानिव विश्पतिः, विश्पतिरिव रेवान्) विश्पतिरिव राजेव रेवान्वित्तवान् । दैव्यः, देवसम्बन्धी । केतुः, देवानां केतुभूतः, अग्रगामित्वात् । बृहद्भानुः, बृहत्तेजाः । सः, असौ । अग्निः । नः, अस्मदीयानि । उक्थैः, उक्थानि । (च) शृणोतु ।। १२ ।।

**स्कन्द–** **सः रेवान्** धनवान् **इव विश्पतिः** विशो मनुष्याः तेषामपि पतिर्विश्पतिः राजा । यथा धनवान् राजा सर्वार्थिनाम् एवमभिप्रेतानि सम्पादयन् । **दैव्यः** देवः देवेषु वा भवो दैव्यः । **केतुः** प्रज्ञानसत्त्वः कर्ता वा सर्वस्य कर्मणः **शृणोतु नः उक्थैः** द्वितीयार्थ एषा तृतीया । उक्थानि शस्त्राणि **अग्निः बृहद्भानुः** महादीप्तिः ।। १२ ।।

**वेङ्कटमाधव–** **सः** घनवानिव मनुष्यराजः देवानां प्रज्ञानभूतः **शृणोतु** अस्मान् क्रियमाणैः स्तोत्रैः **अग्निः** महातेजाः ।। १२ ।।

**मुद्गल–** **सः अग्निः उक्थैः** स्तोत्रैः युक्तान् **नः** अस्मान् **शृणोतु** । दृष्टान्तः– **रेवानिव** यथा लोके धनवान् राजा बन्दिनां स्तोत्रं शृणोति तद्वत् । **विश्पतिः** प्रजापालकः **दैव्यः** देवानां सम्बन्धी **केतुः** दूतवज्ज्ञापकः **बृहद्भानुः** प्रौढरश्मिः ।। १२ ।।

**सायण–** **सः अग्निः उक्थैः** स्तोत्रैर्युक्तान् **नः** अस्मान् **शृणोतु** । तत्र दृष्टान्तः । **रेवानिव** । यथा लोके धनवान् राजा बन्दिनां स्तोत्रं शृणोति तद्वत् । कीदृशः । **विश्पतिः** प्रजापालकः **दैव्यः** देवानां संबन्धी । 'अग्निः देवानां होता' (ऐ.ब्रा.३-१४) इति श्रुत्यन्तरात् । **केतुः** दूतवत् ज्ञापकः । 'अग्निः देवानां दूत आसीत्' (तै.सं.२-५-४-५) इति श्रुतेः । **बृहद्भानुः** प्रौढरश्मिः ।

स रेवान् । 'एतत्तदोः' (पा.सू.६-१-१३२) इति मोर्लोपः । 'रयेर्मती बहुलम्' इति संप्रसारणम् । परपूर्वत्वम् । 'आद्गुणः' । 'छन्दसीरः' इति मतुपो वत्वम् । 'आरेशब्दाच्च मतुप उदातत्वं वक्तव्यम्' (पा.सू.६-१-१७६) इति मतुप उदात्तत्वम् । विश्पतिः । 'परादिश्छन्दसि बहुलम्' (पा.सू.६-२-१९९) इत्युत्तरपदाद्युदात्तत्वम् । बृहद्भानुः । बहुव्रीहौ पूर्वपदप्रकृति-स्वरत्वम् ।।

**सिद्धाञ्जनम्– सः अग्निः नः** अस्मान् विज्ञापकान् **शृणोतु** आकर्णयतु । क इव? **रेवानिव** आढ्य इव, धनिकः स्वामी यथा अर्थिनां विज्ञप्तीः श्रुत्वा तदीप्सितं करोति तथेत्यर्थः (रेवान् रयः छन्दसि सम्प्रसारणं, मतुपो वत्वं च)। कीदृशोऽग्निः ? **विश्पतिः** प्रजानां पालकः **दैव्यः केतुः** देवसम्बन्धी ज्ञापकः दूतो देवानामित्यर्थः । देवानां अयं दैव्यः, केतुः, 'कित ज्ञाने' इत्यस्य रूपम् । **उक्थैः** स्तोत्रैरस्मदीयैः **बृहद्भानुः** प्रौढरश्मिः बृहन्तो भानवो यस्य सः । स्तोत्रैरग्नेर्भानवोऽस्मासु प्रौढा भवन्तीति बोध्यम् ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यो॒ नमो॒ युव॑भ्यो॒ नम॑ आशि॒नेभ्यः॑ ।। यजा॑म दे॒वान्यदि॑ श॒क्नवा॑म॒ मा ज्याय॑सः॒ शंस॒मा वृ॑क्षिदेवाः ।। १३,२४,२७ ।।**

नमः॑ । म॒हत्ऽभ्यः॑ । नमः॑ । अ॒र्भ॒केभ्यः॑ । नमः॑ । युव॑ऽभ्यः । नमः॑ । आ॒शि॒नेभ्यः॑ । यजा॑म । दे॒वान् । यदि॑ । श॒क्नवा॑म । मा । ज्याय॑सः । शंस॑म् । आ । वृ॒क्षि॒ । दे॒वाः॒ ।। १३,२४,२७ ।।

## ऋग्भाष्यम्

**............................................अथ ।**
**नारायणब्रह्मपुरःसरास्तु देवा महांतः शिशवः स्कन्दपूर्वाः ।**
**वटुस्वरूपाश्च त एव कुत्रचियुवान इन्द्रादय एत एव च ।**
**महत्त्वमेषां गुणतोऽपि यूनामिन्द्रादयो मध्यगुणा युवानः ।**
**आपेक्षिकाल्पैश्च गुणैस्तदीयैः समीरिता आशिना अर्भकाश्च ।**
**कृतं नमः शक्तिमन्तो यजाम न ज्यायसां स्तुतिमात्रं लुपामः ।**
**एकस्य विष्णोरपि रूपभेदा अणीयांसः संत्यथवा महान्तः ।**
**युवत्वसाम्येऽपि महत्त्वभेदायुवामहानित्यपि भेद उक्तः ।। १३,२४,८ ।।**

**ऋग्भाष्यटीका– नमः** । अथ । अथ देवाः स्तूयन्त इति शेषः । अत्र महदादि-शब्दनिर्दिष्टान्देवानाह ।। **नारायणेति** ।। वटुस्वरूपाश्चेत्यनेनाशिनशब्दो वटुवाचीत्युक्तम् । नम आवटुभ्य इति पुराणसमाख्यानात् । एत एव अर्भकत्वादिनैवोक्ता एव । स्कन्द पूर्वा इत्युक्तानेवेन्द्रादय इति परामृशति । कथमेकत्रैव त्रिप्रकारत्वमित्यत उक्तम् । कुत्रचिद्रूपविशेषे ।

एतदुक्तं भवति । नारायणादय इन्द्रान्ता अवान्तरपित्रादिसम्बन्धप्रसिद्धिशून्या महान्तः । शिवादि पित्रादिसम्बन्धवत्त्वेन प्रसिद्धाः स्कन्देन्द्रादयोर्भकाः । त एव रूपविशेषे युवान आशिनाश्चेति । एतेन नारायणादीनां सर्वेषामपि देवानां निर्जरत्वात्कथं महत्त्वमित्याशङ्काप्यपास्ता भवति । युवत्वेऽपि प्रकारभेदेन महत्त्वाद्युक्तेः । प्रकारान्तरेण यूनामपि नारायणादीनां महत्त्वं व्याख्याति । **महत्त्वमिति** ।। यूनामप्येषां महत्त्वं युज्यते यतो गुणतो महत्त्वमुच्यते न जरसेत्यर्थः । तर्हि वयः प्रकरणविरोधः स्यादित्यतो गुणत्वादिकमपि युज्यत एवेत्याह ।। **इन्द्रादय इति** ।। त एव तदीयैः स्वैः स्वैरापेक्षिकाल्पैर्गुणैराशिना अर्भकाश्च समीरिताः । नारायणादिवदनन्तगुणत्वस्य अस्मदादिवदत्यल्पगुणत्वस्य चाभावान्मध्यगुणत्वाद्युवान एवेन्द्रादयो ब्रह्मादीन्मध्यमगुणान्यूनो-पेक्ष्याल्पगुणत्वादस्मदादिभ्योत्यल्पगुणेभ्योऽधिकगुणत्वादाशिनाः । नारायणादिभ्योऽत्यल्पगुणत्वा-दर्भका इति । एवं महदादिपदार्थानुक्त्वा पूर्वार्धवाक्यार्थमाह ।। **कृतमिति** ।। महदादिभ्यो देवेभ्यो नमः अस्माभिर्नमस्कृतम् । उत्तरार्धं व्याख्याति । **शक्तिमन्त इति** ।। देवैर्यूपान्मोचिता वयं यदि शक्रवाम यजने शक्तिमन्तो भवाम तर्हि देवान्यजाम । शक्त्यभावेऽपि ज्यायसो ज्यायसां देवानाम् । **शंसं** शंसनं स्तुतिमात्रं **मा वृक्षि** । 'ओव्रश्चू छेदन' इत्यस्येदं रूपम् । न लुपामः । न लुप्तं करिष्यामो हे देवा इति । अस्त्वेवं महत्त्वादि व्याख्यानं यदा समस्ता देवा विवक्षिताः स्युः । यदा तु विष्णुरेक एव विवक्षितस्तदा कथमित्यत आह । **एकस्येति** ।। रूपभेदा रूपविशेषाः । वाशब्दान्मध्यमप्रकारद्वयोपेताः । ततः किमित्यत आह ।। **युवत्वेति** ।। महत्त्वभेदात् परिमाणभेदात् । अपिशब्देनार्भकाशिनयोः समुच्चयः ।। १३,२४ ।।

**मन्त्रार्थमञ्जरी–** महद्भ्यः, देशकालगुणापरिच्छेदवद्भ्यो विष्णो रूपविशेषेभ्यः । नमः ।। अर्भकेभ्यः, लोकदृष्ट्यार्भकपरिमाणरूपविशेषेभ्यः । नमः । युवभ्यः, युवपरिमाणरूपविशेषेभ्यः । नमः । आशिनेभ्यः, वटुरूपविशेषेभ्यः । नमः । (हे) देवाः, क्रीडादिगुणसम्पूर्णा भगवन्तः । यूपान्मोचिताः । (वयम्) यदि । शक्रवाम, यजने शक्तिमन्तो भवेम । (तर्हि) देवान् यजाम । शक्त्यभावे ज्यायसः, ज्यायसां देवानां विष्णुरूपविशेषाणाम् । शंसम्, शंसनम्, स्तुतिमात्रम् । मा आ वृक्षि, 'ओव्रश्चू छेदने' कर्मणि लुङ्, चिण्, शकारचकारयोः ककारषकारौ, 'ग्रहिज्या' इति सम्प्रसारणम्, न लुपामः, न लुम्पामः, लुप्तं न करिष्यामः, यद्वा– वृश्चतेः व्यत्ययेनात्मने-

पदोत्तमपुरुषैकवचनम्, 'च्लेः सिच्' 'स्वरति सूति' इतीडभावः, 'स्कोः संयोगाद्योर्' इत्युपधा-लोपः, व्रश्चादिना षत्वम्, 'षढोः कः सि' इति कत्वम्, 'आदेशप्रत्यययोः' इति षत्वम्, 'न माङ्‌योगे' इत्यडभावः । यद्वा– महद्भ्यः, नारायणादीन्द्रान्तदेवेभ्यः । नमः । अर्भकेभ्यः, रुद्रादिपितृसम्बन्धप्रसिद्धिमत्त्वात्स्कन्देन्द्रादिदेवेभ्यः । नमः । युवभ्यः, स्कन्देन्द्रादिदेवानामेव युवरूपेभ्यः (नमः । आशिनेभ्यः, तेषामेव) वटुरूपेभ्यः । नमः । इत्यर्थः । उत्तरार्धं पूर्ववत् । देवपदेन नारायणादयः सर्वे देवा ग्राह्याः ।। १३ ।।

**स्कन्द–** इति प्रार्थितः अग्निस्तमुवाच– 'विश्वान्नु देवान् स्तुहि इति । स तान् 'नमः' इत्यृचाऽस्तौत्' (ऐ.ब्रा.७-१६) । देवाः इत्यामन्त्रितयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । **नमः महद्भ्यः** वृद्धेभ्यः युष्मभ्यम् । **नमः अर्भकेभ्यः** अल्पनामैतत् (निघ.३-२) । अल्पेभ्यः । बालेभ्य इत्यर्थः । **नमः युवभ्यः** तरुणेभ्यः । **नमः आशनेभ्यः** । व्याप्तृभ्यः पलितानां तारुण्यावृद्धत्वलक्षणयोर्द्वयोरपि वयसोर्व्याप्तत्वादासन्नपलितेभ्यो मध्यमवयस्केभ्यो वेत्यर्थः । कुत एतत् । द्वयोरधिकारादस्य च वयसः परिशिष्टत्वात् (स्क.(या.३-२०) । किञ्च यजाम देवान् यदि शक्नवाम अविगुणयागस्य दुष्करत्वाद् एवमाहा यदि शक्नवामेति । यत एवमतो ब्रवीमि– **मा ज्यायसः** वृद्धतरस्य दीर्घतरस्य वा आयुषः शंसम् आशंसां प्रार्थनां वा **आ वृक्षि** वृश्चतेश्छेदनार्थस्येदं रूपम् । मध्यमपुरुषबहुवचनस्य स्थाने इह व्यत्ययेनोत्तमपुरुषैकवचनम् । मा छैत्त यूयं हे देवाः! । मा मे आयुषः प्रार्थनामपहार्ष्ट, दत्त मे दीर्घमायुरित्यर्थः । अथवा वृक्षीति स्वार्थ एवोत्तमपुरुषः । आ इत्येष तु वीत्येतस्यार्थमाह । मात्मनो दीर्घस्यायुषः प्रार्थनां विच्छिद्यासम् । अविच्छेदेन सततमायुः प्रार्थये । भवन्तश्च यथाप्रार्थितमेव मे देयासु इत्यर्थः ।।

**वेङ्कटमाधव– नमः** महाशरीरेभ्यः । **नमः** अल्पशरीरेभ्यश्च । **नमः** युवभ्यः वृद्धेभ्यश्च । शक्ता चेद्वयं देवान् एव यजामः । अभ्युदयस्य अभिलाषं हे देवाः! मा अहम् वृक्षि । वृश्चतिश्छेदनकर्मा । आशाच्छेदाद् अहं निराशो मा भूवमिति ।। १३ ।।

**मुद्गल–** अग्निना प्रेरितः शुनःशेपः विश्वान् देवान् अनया तुष्टाव । **नमः महद्भ्यः** गुणैरधिकेभ्यो देवेभ्यः । **नमः अर्भकेभ्यः** गुणैर्न्यूनेभ्यो देवेभ्यः, **नमः युवभ्यः** तरुणेभ्यो देवेभ्यः । **नमः आशिनेभ्यः** वृद्धेभ्यो देवेभ्यः । **यदि शक्नवाम** कथञ्चित् धनादिसम्पत्या

शक्ताश्चेत् तदानीम् **देवान् यजाम** । हे देवाः! **ज्यायसः** ज्येष्ठस्य देवताविशेषस्य **आ** सर्वतः प्रसृतम् **शंसम्** स्तोत्रम् **मा वृक्षि** अहं विच्छिन्नं मा कार्षम् ।। १३ ।।

**सायण–** दर्शपूर्णमासयोः स्रुगादापनात् पूर्वभाविनि जपे 'नमो महद्भ्यः' इत्येषा । 'ब्रह्मौदने प्राशिष्यमाणे' इति खण्डे- 'सूर्यो नो दिवस्पातु नमो महद्भ्यो नमो अर्भकेभ्यः ' (आश्व.श्रौ.१-४) इति सूत्रितम् ।

अग्निना प्रेरितः शुनःशेपो विश्वान् देवान् अनया तुष्टाव । तथा च आम्नायते- 'तमग्निरुवाच विश्वान्नु देवान् स्तुह्यथ त्वोत्स्रक्ष्याम इति स विश्वान्देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा' (ऐ.ब्रा.७-१६) इति । महान्तो गुणैरधिकाः । अर्भका गुणैर्न्यूनाः । युवानः तरुणाः । आशिनाः वयसा व्याप्ता वृद्धाः । यथोक्तचतुर्विधदेहयुक्तेभ्यो देवेभ्यो नमोऽस्तु । **यदि शक्नवाम** कथञ्चित् धनादिसंपत्त्या शक्ताश्चेत् तदानीं **देवान् यजाम** । हे देवाः! **ज्यायसः** ज्येष्ठस्य देवताविशेषस्य **आ** सर्वतः प्रसृतं **शंसम्** स्तोत्रं **मा वृक्षि** अहं विच्छिन्नं मा कार्षम् ।

आशिनेभ्यः । 'अशू व्याप्तौ' । 'बहुलमन्यत्रापि' (उ.सू.२-२०७) इति औणादिकः इनच्प्रत्ययः । 'चितः' इत्यन्तोदात्तत्वम् । यजाम । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः । शक्नवाम । 'शक्लृ शक्तौ' । 'आडुत्तमस्य पिच्च' इति तिङः पिद्वद्भावात् अनुदात्तत्वे सति विकरणस्वरः । 'निपातैर्यद्यदिहन्त' इति निघातप्रतिषेधः । ज्यायसः । प्रशस्यशब्दात् ईयसुन् 'ज्य च' (पा.सू.५-३-६१) इति ज्यादेशः । 'ज्यादादीयसः' (पा.सू.६-४-१६०) इति ईयसुन ईकारस्य आत्वम् । नित्त्वादाद्युदात्तत्वम् । शंसम् । 'हलश्च' इति घञ् । वृक्षि । 'ओव्रश्चू छेदने' । व्यत्ययेन आत्मनेपदोत्तमपुरुषैकवचनम् इट् । च्लेः सिच् । 'स्वरतिसूति' इत्यादिना इडभावः । 'स्कोः संयोगाद्योः' इति उपधासकारलोपः । व्रश्चादिना षत्वम् । 'षढोः कः सि'(पा.सू.८-२-४१) इति कत्वम् । 'आदेशप्रत्यययोः'(पा.सू.८-३-५९) इति षत्वम् । 'न माङ्योगे' इति अडभावः ।। १३,२४ ।।

**सिद्धाञ्जनम्– महद्भ्यः** अनुभावाधिकेभ्यः **नमः अर्भकेभ्यः** वयसा बालेभ्यः **नमः** । **युवभ्यः** तरुणेभ्य **नमः** । **आशिनेभ्यः** वयसा व्याप्तेभ्यः वृद्धेभ्यः (अशू व्याप्तौ औणादिक इनच् प्रत्ययः) **नमः** । उक्तेभ्यश्चतुर्विधेभ्यो जीवेभ्यो देवेभ्यो वा नमोऽस्तु, सर्वेष्वपि परस्य देवस्य वर्तनात्

विश्वदेवनमस्कारोऽनुष्ठितः । **यदि शक्नवाम** वयं शक्ताश्चेत् **देवान्** सर्वान् **यजाम** पूजाम, यज्ञेनाराधयाम । भोः **देवाः! ज्यायसः** सर्वेभ्योऽपि ज्यायसः, ज्येष्ठस्य परस्य देवस्य **आ शंसम्** सर्वतः प्रसृतं शंसनं स्तोत्रं, **मा वृक्षि** विच्छिन्नं मा कार्षं अहम् । वृक्षि 'ओव्रश्चू छेदन', व्यत्ययेनात्मनेपदोत्तमपुरुषैकवचनम्, माङ्योग अडभावः । अस्यामृचि नमस्करणं, यजनं, शंसनं, इति त्रिधा आराध्यभेदेन आराधनमुक्तम् । महद्भ्य इत्यादौ मनुष्या एव मता इत्युपपन्नम्, देवानां पृथक्स्मरणात्, मनुष्याणां विविधानां अवयवभूतत्वात् अवयविन एकस्य पुरुषस्य । पुरुषमेध-प्रस्तावे प्रागुक्तं सर्वमवधेयम् ।। १३ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये चतुर्विंशो वर्गः ।।

## ।। अथ पञ्चविंशो वर्गः ।।

(सूक्तम् २८)

## ऋक्संहिता पदपाठसहिता

(९ आजीगर्त्ति शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरात ऋषिः । १-४ इन्द्रः, ५-६ उलूखलं, ७-८ उलूखलमुसले, ९ प्रजापतिर्हरिश्चन्द्रः, (अधिषवण–) चर्म सोमो वा । १-६ अनुष्टुप्, ७-९ गायत्री)

**यत्र ग्रावा पृथुबुध्न ऊर्ध्वो भवति सोतवे । उलूखलसुतानामवेद्विन्द्र जल्गुलः ।। १ ।।**

यत्र । ग्रावा । पृथुऽबुध्नः । ऊर्ध्वः । भवति । सोतवे । उलूखलऽसुतानाम् । अव । इत् । ऊँइति । इन्द्र । जल्गुलः ।। १ ।।

## ऋग्भाष्यम्

**विस्तीर्णाधस्तना यत्र ग्रावाणोऽभिषवोद्धताः ।**
**धिषणाभिषुतान्सोमानव नः स्वीकृतस्तुते ।**
**गुरुस्वीकार इत्यस्माद्धातोः स्तुत्यो हि जल्गुलः ।। १ ।।**

ऋग्भाष्यटीका– **यत्र ग्रावा** । नवर्चमिदं सूक्तम् । तत्राद्याश्चतस्र ऐन्द्यः । विमुक्तपाशः शुनःशेप एताभिर्जुहवांचकार । विस्तीर्ण । हे **जल्गुलः** । नःस्वीकृतस्तुते इन्द्र! **यत्र** यज्ञे । **पृथुबुध्नः** जातावेकवचनम् । पृथु विस्तीर्णं बुध्नमधस्तनभागो येषां ते तथोक्ताः । विस्तीर्णाधस्तनाः

भागशब्दोऽध्याहार्यः । **ऊर्ध्वाः** ऊर्ध्वदेशसम्बन्धी । अभिषवोद्धताः सोमाभिषवे ऋत्विग्भिरुद्धताः । **ग्रावाः** ग्रावाणः । **सोतवे** सोमं सोतुम् । **भवति** सन्ति । तत्रोलूखलसुतानां द्वितीयार्थे षष्ठी । उलूखले सुतान् । धिषणाभिषुतान् । धिषण इत्युलूखलनाम । नोऽस्मदीयान् सोमानिति शेषः । अवेदु अवतिरवास्यर्थः । इत् उ इति निपातावधारणे । सर्वथैवावाप्नुहि । जल्गुल इत्येतत्कथं स्वीकृतस्तुतित्वं वदेदित्यत आह ।। **गुरेति** ।। अस्माद्धातुव्याख्यानात् । स्तुत्यः । स्तुतेः स्वीकर्ता । जरतिस्तावत्स्तुत्यर्थः ततो भावे सम्पदादित्वात्क्विप् गुरतेश्च कसुन् । उभयत्रापि रोल इति योगविभागेन रेफस्य लकारः । जरं गुरतीति जल्गुलाः तस्य सम्बुद्धिर्जल्गुलः । जल्गुल इति सम्बोध्यत इति शेषः ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'यत्र ग्रावा' इति नवर्चं वर्गद्वयात्मकमष्टाविंशं सूक्तम् । तत्र आद्याश्चतस्र ऐन्द्योऽनुष्टुभः । विमुक्तपाशः शुनःशेप एताभिर्जुहवाश्चकार । (हे) जल्गुलः, 'जर स्तुतौ', सम्पदादित्वाद्भावे क्विप्, 'गुर स्वीकारे' इत्यतः कसुन्, जरं स्तुतिं स्वीकरोतीति जर्गुरः, 'कृपो रो लः' इत्यत्र योगविभागादुभयत्र लत्वम्, सम्बुद्धिः, स्वीकृतस्तुते । (हे) इन्द्र । यत्र, यज्ञे । पृथुबुध्नः, जातावेकवचनम्, पृथवो विस्तीर्णा बुध्ना अधस्तनभागा येषां ते तथोक्ताः । ऊर्ध्वः, ऊर्ध्वाः, ऊर्ध्वदेशसम्बन्धिनः, सोमाभिषव ऋत्विग्भिरुद्धताः । ग्रावा, ग्रावाणः । सोतवे, 'षूञ् अभिषवे' तुमर्थे तवेन्, सोमं सोतुम् । भवति, सन्ति । 'यत्र' इति (श्रुतौ) श्रवणात् 'तत्र' इत्यन्वेति (तत्र) यज्ञे । उलूखलसुतानाम्, द्वितीयार्थे षष्ठी, उलूखले सुतान् । (नः) अस्मदीयान् । (सोमान्) इति शेषः । अव इत् । उ, एव । अवतिः अत्रावास्यर्थः, सर्वथैवावाप्नुहि इति । अध्यात्मं तु– यत्र, ज्ञानयज्ञे । (हे) जल्गुलः इन्द्र) पृथुलमूलभागः । ऊर्ध्वः, व्याहर्तुमुद्यतः । ग्रावा, वागिन्द्रियम् । (सोमम्) मनः । सोतवे, वेदवाक्पर्यालोचनेनालोडयितुम् । भवति, अस्ति । (तत्र) यज्ञे । (उलूखलसुतानाम्), उलूखले, धान्यचूर्णनस्थलं हि खलशब्दार्थः, तस्य चोरुत्वं भूमेरुच्चस्थत्वम्, उरुखलसदृशे देहे सुतान्मनोवृत्तिविशेषान् । अव इत् उ । इत्यर्थः ।। १ ।।

**स्कन्द–** 'ऐन्द्रश्चतुर्ऋचः परः' (बृ.दे.३-१००) । 'इन्द्रदेवत्योऽयं चतुर्ऋचः 'नमो महद्भ्यः' इत्यस्याः परः । वियुक्तपाशः शुनःशेप एतेन चतुर्ऋचेन सोमं जुहाव । परेणोलूखल-मुसलेनाभिसुषाव । अन्त्यया द्रोणकलशमभ्यवनिनाय । यथा वियुक्तपाशं शुनःशेपमधिकृत्य ब्राह्मणं

भवति– 'तमृत्विज ऊचुः– त्वमेव नोऽस्याह्नः संस्थामधिगच्छेति । अथ हैतं शुनःशेपोऽञ्जः सवं ददर्श । तमेताभिश्चतसृभिरभिसुषाव 'यच्चिद्धि त्वं गृहेगृहे' (ऋ.१-२८-५) इति' (ऐ.ब्रा.७-१७) इति । एतासां चर्चामुलूखलमुसलदेवतात्वादुलूखलमुसलेनाभिसुषावेति गम्यते । 'अथैनं द्रोणकलशमभ्यवनिनाय 'उच्छिष्टं चम्बोर्भर' (ऋ.१-२८-९) इत्येतयर्चा । अथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवाञ्चकार' (ऐ.ब्रा.७-१७) इति । **यत्र** यज्ञे अभिषवग्रावा **पृथुबुध्नः** हस्तेनोद्धृष्यमाण **ऊर्ध्वः भवति सोतवे** सोमाभिषवार्थम् । यत्रेति श्रुतेस्तत्रेत्यध्याहार्यम् । तत्र **उलूखलसुतानाम्** द्वितीयार्थे षष्ठ्येषा । षष्ठीश्रुतेर्वैकदेशामिति शेषः । उलूखलसुतं सोमम्, उलूखलसुतस्य वा सोमस्यैकदेशम् । **अव इत् इन्द्र!** जल्गुलः अवेत्युपसर्गो जल्गुल इत्याख्यातेन सम्बन्धयितव्यः । जल्गुल इत्येतश्च गिरतेर्यङ्लुगन्तस्य रूपम् । उ इति पदपूरणः । हे **इन्द्र! अव जल्गुलः** अत्यर्थं पुनःपुनर्वा अवगिर पिबेत्यर्थः । अधिषवणफलकयोरेव सोमोऽभिषूयते नोलूखले । तत्राभिधानात् तदाकारत्वात् तत्कार्यकरत्वाद् वा उलूखलशब्दः ।। १ ।।

**वेङ्कटमाधव–** यस्मिन् यज्ञे अभिषवग्रावा पृथुमूलः आहननप्रकारः ऊर्ध्वमुखः **भवति** सोमाभिषवाय । तत्र उलूखलसुतान् सोमान् **इन्द्रः!** त्वम् **अव जल्गुलः** अवगिर पिब ।। १ ।।

**मुद्गल–** 'यत्र ग्रावा' इति नवर्चं पञ्चमं सूक्तम् । शौनःशेपम् । आद्या षडनुष्टुभः । 'आयजी' इत्याद्यास्तिस्रो गायत्र्यः । आद्याश्चतस्र ऐन्द्र्यः । ततो द्वे उलूखलदेवत्ये । ततो द्वे उलूखलमुसल-देवत्यः । अन्त्याया 'उच्छिष्टम्' इत्यस्याः हरिश्चन्द्राधिपवणचर्मसोमानामन्यतमो देवता ।।

हे **इन्द्र! यत्र** यस्मिन् अञ्जःसवे कर्मणि **सोतवे** अभिषवार्थम् **ग्रावा** पाषाणः **पृथुबुध्नः** स्थूलमूलः **ऊर्ध्वः** उन्नतः **भवति** । तस्मिन् कर्मणि **उलूखलसुतानाम्** उलूखलेनाभिषुतानां रसम् **अव** इत् स्वकीयत्वेनावगत्यैव **जल्गुलः** भक्षय ।। १ ।।

**सायण–** 'यत्र ग्रावा' इति पञ्चमं सूक्तं नवर्चम् । आदितः षडनुष्टुभः । 'आयजी' इत्याद्या-स्तिस्रो गायत्र्यः । आदितश्चतसृणाम् इन्द्रो देवता । ततो द्वै उलूखलदेवत्ये । तदनन्तरभाविन्यौ उलूखलमुसलोभयदेवताके । अन्त्यायाः 'उच्छिष्टम्' इत्यस्याः हरिश्चन्द्राभिषवणचर्मसोमानामन्यतमो देवता । तथा च बृहद्देवतायामुक्तम्- 'चर्माधिपवणीयं वा सोमं वान्त्या प्रशंसति' (बृ.दे.३-

१०१) इति । तदुक्तमनुक्रमण्याम्- 'यत्र ग्रावा नव षळनुष्टुबादि यच्चिद्ध्यौलखल्यौ परे मौसल्यौ च प्रजापतेर्हरिश्चन्द्रस्यान्त्याचर्मप्रशंसा वा' इति । आद्याश्चतस्रः अञ्जःसवे होमे विनियुक्ताः । पञ्चम्याद्याश्चतस्रः अभिषवे । अन्त्या द्रोणकलशे सोमावनयने । तथा च ब्राह्मणम्– 'अथ हैतं शुनःशेपोऽञ्जःसवं ददर्श तमेताभिश्चतसृभिरभिसुषाव यच्चिद्धि त्वं गृहेगृह इत्यथैनं द्रोणकलश-मभ्यवनिनायोच्छिष्टं चम्बोर्भरेत्येतयर्चाथहास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुह-वाञ्चकार' (ऐ.ब्रा.७-१७) इति ।

हे **इन्द्र! यत्र** यस्मिन् अञ्जःसवे कर्मणि **सोतवे** अभिषवार्थम् **ग्रावा** पाषाणः **पृथुबुध्नः** स्थूलमूलः **ऊर्ध्वः** उन्नतः **भवति** । तस्मिन् कर्मणि **उलूखलसुतानाम्** उलूखलेनाभिषुतानां रसम् **अव इत्** स्वकीयत्वेनावगत्यैव **जल्गुलः** भक्षय ।

पृथुबुध्नः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । भवति । 'निपातैर्यद्यदिहन्त' (पा.सू.८-१-३०) इति निघातप्रतिषेधः । सोतवे । 'षुञ् अभिषवे' । 'तुमर्थे सेसेन्' (पा.सू.३-४-९) इति तवेन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । उलूखलसुतानाम् उलूखलेन सुतानाम् । 'तृतीया कर्मणि' (पा.सू.६-२-४८) इति पूर्वपदप्रकृतिस्वरत्वम् । जल्गुलः । 'गल अदने' । अस्मात् यङो लुकि लोण्मध्यमैकवचने 'लेटोऽडाटौ'(पा.सू.३-४-९४) इति अडागमः । 'इतश्च लोपः' (पा.सू.३-४-९७) इति इकारलोपः । उपधाया उत्वं च हलादिशेषाभावश्च पृषोदरादित्वात् ॥ १ ॥

**सिद्धाञ्जनम्–** षष्ठेऽनुवाके 'यत्र ग्रावा' इति नवर्चं पञ्चमं सूक्तम् । ऋषिः पूर्ववत् । आदितः षट् आनुष्टुभः । शिष्टा गायत्र्यः । आदितश्चतसृणां इन्द्रो देवता । अन्यासां ऋग्व्याख्यायां स्पष्टा भवन्ति ।

अस्मिन् सूक्ते ग्रावोलूखलाधिषवणीयादयः शब्दाः यज्ञसाधनाभिधायकाः प्रयुक्ताः कर्मैकपरता-समयस्य अत्यन्तमुपयुक्ताः स्युरापाततः । परीक्ष्यमाणे सूक्तार्थे बाह्यं याज्ञिकं कर्म निमित्तीकृत्य यज्ञोपकरणात्मकसङ्केतैर्गभीराणि वैदिकानि योगरहस्यानि गोपितानि लक्ष्यन्ते । तत्प्रदर्शनात् प्राक् मन्त्रस्थानां पदानां पूर्वव्याख्यानपर्यालोचनपुरस्सरं अर्थान् आचक्ष्महे– **यत्र** यस्मिन् कर्मणि (बहिर्योगे अन्तर्यागे वा) **सोतवे** सोतुं अभिषवार्थं **ग्रावा** पाषाणः अभिषवार्थः **पृथबुध्नः** पृथुः

पृथुलो विस्तीर्णः बुघ्नो मूलं यस्य सः, **ऊर्ध्वः** ऊर्ध्वस्थानगः 'उन्नत' इति पूर्वे, **भवति** वर्तते, तस्मिन् कर्मणि, हे **इन्द्र! उलूखलसुतानाम्** उलूखलेनाभिषुतानां (द्वितीयार्थे षष्ठी) एकदेशं वा रसम् **अव इत् जल्गुलः** अवेत्युपसर्गः अधःपर्यायः, इत् अवधारणार्थः जल्गुलः पिब! 'अवेत्' त्वदीयत्वेन अवगत्यैव पिबेति सायणीयम् । दिव्य ऊर्ध्वस्त्वं, इन्द्र, अधस्तादिहागत्य भौमोलूखलसुतं सोमं पिबेति वयम् । जल्गुलः– 'गल अदने', यङ् लुक्, लट् मध्यमैकवचनम्, उपधायाः उत्वं, अन्यच्च छान्दसम् ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**यत्र द्वाविव जघना धिषवण्या कृता । उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ २ ॥**
यत्र । द्वौऽइव । जघना । अधिऽसवन्या । कृता । उलूखलऽसुतानाम् । अव । इत् । ऊँइति । इन्द्र । जल्गुलः ॥ २ ॥

## ऋग्भाष्यम्

**फलकेऽभिषवस्यैव स्त्रियो जघनसाम्यतः ।**
**प्रोक्ते....................................॥ २ ॥**

**ऋग्भाष्यटीका– यत्र द्वौ** । पूर्वार्धतात्पर्यमाह ॥ **फलके इति** ॥ अत्र सोमाभिषवस्य हेतूफलके स्त्रियो जघनसाम्येन प्रोक्ते । अत्र स्त्रीग्रहणाभावेऽप्युत्तरत्र नारीग्रहणात् स्त्रिय इति लभ्यते । मैथुनकाले स्त्रीपुंसजघनाविवेति व्याख्याननिरासायैवशब्दः । फलकयोरुत्तराधरभावाभावात् । अधिषवणीशब्दस्य फलक एव प्रसिद्धस्योलूखलग्राव्णोर्व्याख्यातुमयुक्तत्वात् । जघनैकदेशयोर्जघन-शब्दस्य वृत्तेर्द्वावित्यादिकं चोपपद्यते । **यत्र** यज्ञे **द्वौ** जघनाविवाधिषण्या अधिषूयते सोम एतयो-रिति द्वे फलके । **कृता** कृते । तत्रोलूखलसुतानामिति पूर्ववत् । फलकयोरेवाधिषवणीत्वादुलूखल-सुतानामिति सर्वत्रोपचारः ॥ २ ॥

**मन्त्रार्थमञ्जरी–** अत्र सोमाभिषवस्य हेतू फलके स्त्रियां जघनसाम्येन स्तूयेते, अत्र स्त्रीपदाभावेऽप्यग्रे नारीपदश्रवणात् यत्र, यज्ञे । (द्वाविव जघना) द्वौ जघनाविव । (अधिष-वण्या), अधिषवण्यौ, अधिषूयते सोम एतयोरिति द्वे फलके । कृता, कृते । (तत्र) उलूखलसुतानाम्' इति प्राग्वत् फलकयोरेवाधिषवणीत्वात् 'उलूखलसुतानाम्' इति सर्वत्रोपचारः । अध्यात्मं तु– अधिषवण्यावोष्ठौ ज्ञेयौ । शिष्टं तुल्यम् ॥ २ ॥

**स्कन्द– यत्र** यज्ञे **द्वौ इव जघना** यथा मैथुनकाले स्त्रीपुंसजघने एवम् अभिषवकाले परस्परसम्पर्कौ **अधिषवण्या** प्रथमाद्विवचनस्यायमाजादेशः । अधिषवण्यौ ग्रावाणौ **कृता** कृतौ । तत्र उलूखलसुतानाम् इत्याद्युक्तार्थम् ।। २ ।।

**वेङ्कटमाधव– यत्र** द्वौ इव जघनौ अधिषवणफलके विस्तीर्णे अध्वर्युभिः कृते 'प्रतिमुखे पुरस्तात् समाविकर्ते पश्चात्' (आप.श्रौ ११-१-३१) इत्यधिषवणफलकयोः सूत्रमिति ।। २ ।।

**मुद्गल– यत्र** यस्मिन् कर्मणि **अधिषवण्या** उभे अधिषवणफलके **द्वौ इव जघना** द्वौ जघनस्य प्रदेशाविव **कृता** विस्तीर्णे कृते संपादिते । अन्यत् पूर्ववत् ।। २ ।।

**सायण– यत्र** यस्मिन् कर्मणि **अधिषवण्या** उभे अधिषवणफलके **द्वौ इव जघना** द्वौ जघनस्य प्रदेशाविव । 'जघनं जङ्घन्यतेः' (निरु.९-२०) इति यास्कः । **कृता** विस्तीर्णे कृते संपादिते । अन्यत् पूर्ववत् ।

जघना । 'हन्तेः शरीरावयवे द्वे च' (उ.सू.५-७१०) इति हन्धातोः अच् । द्वित्वम् । कर्दमादित्वात् मध्योदात्तः (फि.सू.५९) । 'सुपो सुलुक्' इति आकारः । अधिषवण्या । 'षुञ् अभिषवे' । ल्युट् । 'भवे छन्दसि' इति यत् । 'उपसर्गात्सुनोति' (पा.सू.८-३-६५) इति षत्वम् । 'तिस्वरितम्'(पा.सू.६-१-१८५) इति स्वरितः । न च 'यतोऽनावः' (पा.सू.६-१-२१३) इत्याद्युदात्तत्वम् । तत्र हि 'निष्ठा च यजनात्' (पा.सू.६-१-३०५) इत्यस्य अनुवृत्तेः व्यचूकस्यैव तदिति । कृता । पूर्ववत् आकारः ।। २ ।।

**सिद्धाञ्जनम्– यत्र** यस्मिन् कर्मणि **अधिषवण्या** अधिषवण्यो अधिषूयते सोमो ययोस्तौ, अधिषवणफलके (अधिपूर्वकः 'षुञ् अभिषवे' इति धातुः, ल्युट्, भवे यत् छन्दसि) **द्वाविव जघना** द्वौ जघनप्रदेशाविव **कृता** कृतौ (आकारश्छन्दसि) अधिषवणाय, नित्यसम्बद्धयोः फलकयोः द्वित्वं वैशाल्यं च द्योतयितुं जघनदृष्टान्तः । शिष्टं उलूखलादि व्याख्यातम् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**यत्र नार्यपच्यवमुपच्यवं च शिक्षते । उलूखलसुतानामवेद्विन्द्र जल्गुलः ।। ३ ।।**

यत्र । नारी । अपऽच्यवम् । उपऽच्यवम् । च । शिक्षते । उलूखलऽसुतानाम् । अव । इत् । ऊँइति । इन्द्र । जल्गुलः ।। ३ ।।

## ऋग्भाष्यम्

**...........उपच्यवश्चापच्यवः सङ्गतिभेदतः ।**
**जिह्वा ग्रावाऽथवाग्युक्तिरुच्यतेऽभिषवस्तथा ।**
**खलश्चोरुस्तथा देहः सोमो मन इतीरितः ।**
**ज्ञानोत्पत्तौ च फलकस्थाने ओष्ठे उदीरिते ।। ३ ।।**

**ऋग्भाष्यटीका– यत्र नारी** । **यत्र** यज्ञे स्थितयोः फलकयोः **उपच्यवम्** अधोगमनं उपरिगमनं च । **नारी** तज्जघनयुगलमिति यावत् । **शिक्षते** उपादत्ते । तस्यापि गतावपच्यवोपच्यवसद्भावात् । तत्रोलूखलसुतानामिति फलकयोः किं निमित्तावुपच्यवापच्यवावित्यत आह ।। **उपच्यवश्चेति** ।। सङ्गतिभेदतः फलकद्वयसंयोगस्य शिथिलत्वात् । ततः प्रहारपर्यायेणेति शेषः । ऋक्त्रयगतान् ग्रावादिशब्दानध्यात्मं व्याख्याति । **जिह्वेति** ।। वागिन्द्रियमिह जिह्वेत्युपलक्ष्यते । वाग्युक्तिर्वाचोमनसा वेदद्वारको योगः । अथशब्दः समुच्चये । कुतः तथा सादृश्यादिति यावत् । एवमुत्तरोऽपि तथाशब्दः । सादृश्यं च यथासम्भवमूह्यम् । उरुःखलश्च देहः । उलूखल इति वक्तव्ये उरुः खल इति वचनमूर्ध्वं खमस्येत्युलूखलशब्दव्याख्याननिरासार्थम् । बहोरलाक्षणिकस्याङ्गीकारात् । यत्र हि धान्यादिकं चूर्ण्यते तत्र खलशब्दो वर्तते । तस्य चोरुत्वं भूमेरूर्ध्वत्वम् । सोम इति मन इति चैकोऽर्थ ईरित इति योज्यम् । अन्यथेरितमिति स्यात् । मनः सोमलतास्थानीयमिति यावत् । ज्ञानोत्पत्ताविति सर्वत्रान्वयः । अनेन सोमरसस्थानीयं ज्ञानमिति सूचयति । ओष्ठशब्दोऽर्धर्चादि त्वात्पुन्नपुंसकलिङ्गः ।। ३ ।।

**मन्त्रार्थमञ्जरी–** यत्र, यज्ञे स्थितयोः फलकयोः । अपच्यवम्, अधोगमनम् । उपच्यवम्, उपरि गमनम् । च । नारी, तज्जघनयुगलमिति यावत् । शिक्षते, उपादत्ते, तस्यापि गतावपच्यवोपच्यवसत्त्वात्फलकयोश्चान्योन्यसंयोगस्य शिथिलत्वाद्भाव प्रहारपर्यायेणोपच्यवादिर्ज्ञेयः । अन्यत्प्राग्वत् ।। ३ ।।

**स्कन्द– नारी** इत्येतल्लुप्तोपमा । **यत्र** यज्ञे, मैथुनकाले स्वजघने नारीव पुरुषाय, एकोऽभिषवग्रावा इतरस्मै ग्राव्णे **अपच्यवम् उपच्यवम् च** च्यवतिर्गत्यर्थः । अपगमनमुपगमनम् च **शिक्षते** ददाति । अपगच्छत्युपगच्छति चेत्यर्थः । तत्र उलूखलसुतानाम् इत्याद्युक्तार्थम् ।। ३ ।।

**वेङ्कटमाधव– यत्र** अभिषवप्रवृत्तं ग्रावाणं दृष्ट्वा स्त्री भर्तरि प्रवेशकौशलं निर्गमनकौशलं च शिक्षते ।। ३ ।।

**मुद्गल– यत्र** यस्मिन् कर्मणि **नारी** पत्नी **अपच्यवम्** शालायाः निर्गमनम् **उपच्यवम् च** शालाप्राप्तिश्च **शिक्षते** अभ्यासं करोति । अन्यत् पूर्ववत् ।। ३ ।।

**सायण– यत्र** यस्मिन् कर्मणि **नारी** पत्नी **अपच्यवम्** शालायाः निर्गमनम् **उपच्यवम् च** शालाप्राप्तिश्च **शिक्षते** अभ्यासं करोति । अन्यत् पूर्ववत् ।

अपच्यवम् । 'च्युङ् गतौ' । 'ऋदोरप्' इति अप् । गुणावादेशौ । थाथादिना ('थाथ-घञ्क्ताजबित्रकाणाम्' पा.सू.६-२-१४४) उत्तरपदान्तोदात्तत्वम् । एवम् उपच्यवम् । शिक्षते । 'शिक्ष विद्योपादाने' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । 'निपातैर्यद्यदिहन्त' इति निघातप्रतिषेधः ।। ३ ।।

**सिद्धाञ्जनम्– यत्र** यस्मिन् यज्ञे **नारी** नरस्य मनुष्ययजमानस्य पुरुषस्य देवस्य वा पत्नी, शक्तिरित्यर्थः **अपच्यवं** निर्गमनं उपच्यवं च उपगमनं, आगमनं **च शिक्षते** अधीते, अभ्यासं करोति, अभ्यासेनाधिगच्छतीत्यर्थः । शिष्टं पूर्ववत् । अपच्यवम्– अपपूर्वकस्य, 'च्युङ् गतौ' इत्यस्य रूपम् । शिक्षते– 'शिक्ष विद्योपादाने', बाह्ये यज्ञे यजमानपत्नी यज्ञशालायाः बहिर्गच्छति, पुनः शालां आगच्छति– इदमेवापच्यवोपच्यवाभ्यां विवक्षितमिति सायणः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**यत्र मन्थां विबध्नते रश्मीन्यमितवा इव ।। उलूखलसुतानामवेद्विन्द्र जल्गुलः ।। ४ ।।**
यत्र । मन्थाम् । विऽबध्नते । रश्मीन् । यमितवैऽइव । उलूखलऽसुतानां । अव । इत् । ॐ इति । इन्द्र । जल्गुलः ।। ४ ।।

## ऋग्भाष्यम्

**मन्थरश्मीनश्वरश्मीन्यथा यत्र नि(वि)बध्यते ।**
**रश्मयोऽन्यत्र नाड्यश्च......................।। ४ ।।**

**ऋग्भाष्यटीका– यत्र मन्थाम्** । मन्थरश्मीन् । **यत्र** यज्ञे । रश्मीनुलूखलस्येति शेषः । द्रव्यान्तरेण दार्ढ्याय **विबध्नते** । किमिव । **मन्थां** मन्थानम् । **यमितवा इव** नियन्तुं यथा । मन्थरश्मीन्यथा चाश्वं नियन्तुमश्वरश्मीं स्तम्भादौ विबध्नन्ति तथा तत्रोलूखलसुतानाम् । के अध्यात्मं रश्मय इत्यत आह ।। **रश्मय इति** ।। अन्यत्र बाह्यात् । चस्त्वर्थः ।। ४ ।।

**मन्त्रार्थमञ्जरी–** यत्र यज्ञे । रश्मीन् (उलूखलस्य) इति शेषः । द्रव्यान्तरेण दार्ढ्याय विबध्नते, निबध्नाति । किमिव ? मन्थाम्, मन्थानम् । यमितवा इव, यमितुमिव, नियन्तुमिव, नियन्तुं यथा मन्थानं मन्थरश्मीन्यथा वाश्वं नियन्तुमश्वरश्मीन्स्तम्भादौ निबध्नाति तथा । (तत्र) उलूखलसुतानाम्' इति पूर्ववत् । अध्यात्मं तु (उलूखलकस्य) देहस्य । रश्मीन्, नाडीः । विबध्नते । इति ज्ञेयम् । अन्यत्पूर्ववत् ।। ४ ।।

**स्कन्द– यत्र** यज्ञे **मन्थाम्** अभिषवग्रावाऽत्र मन्था उच्यते सोमस्य मथितृत्वात् । तं **विबध्नते** विबध्नन्त्यङ्गुलीभिः । कथम् । **रश्मीन् यमितवा इव** अश्वरश्मीनिव नियन्तुमश्वान् । अथवा दधिमन्थनरज्जूराह । तृतीयार्थे द्वितीया । यथा दधिमन्थानं नियन्तुं रज्जुभिर्बध्नीयुस्तद्व-दित्यर्थः । तत्र उलूखलसुतानाम् इत्याद्युक्तार्थम् ।। ४ ।।

**वेङ्कटमाधव–** यस्मिन् यज्ञे सामाभिषवाय ग्रावाणं वारयन्ति रश्मीन् इव अश्वानां यमनाय तत्र उलूखलसुतानामिति ।। ४ ।।

**मुद्गल– यत्र** यस्मिन् कर्मणि **मन्थाम्** आशिरमथनहेतुं मन्थानम् **विबध्नते** विबध्नन्ति । दृष्टान्तः । **रश्मीन्** अश्वबन्धनार्थान् प्रग्रहान् **यमितवा इव** नियन्तुमिव । अन्यत् पर्ववत् ।। ४ ।।

**सायण– यत्र** यस्मिन् कर्मणि **मन्थाम्** आशिरमथनहेतुं मन्थानं विबध्नन्ति । तत्र दृष्टान्तः । **रश्मीन्** अश्वबन्धनार्थान् प्रग्रहान् **यमितवा इव** नियन्तुमिव । अन्यत् पूर्ववत् ।

मन्थाम् । 'पथिमथ्यृभुक्षामात्' (पा.सू.७-१-८५) इति द्वितीयायामपि व्यत्ययेन आत्वम् । प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्ते 'पथिमथोः सर्वनामस्थाने' (पा.सू.६-१-१९९) इत्याद्युदा-त्तत्वम् । यद्वा । मथ्यतेऽनयेति मन्था । 'मिथि विलोडने' इत्यस्मात् 'हलव' इति करणे

घञ् । ततः टाप् । ञित्वादाद्युदात्तत्वम् । विबध्नते । 'बन्ध बन्धने' । 'क्र्यादिभ्यः श्ना' (पा.सू.३-१-८१) । 'अनिदिताम्' (पा.सू.६-४-२४) इति नलोपे 'श्नाऽभ्यस्तयोरातः' (पा.सू.६-४-११२) इति आकारलोपः । प्रत्ययस्वरः । 'तिङि चोदात्तवति' इति गतेर्निघातः । यमितवै । 'यम उपरमे' । 'तुमर्थे सेसेन्' इति तवैप्रत्ययः । इडागमश्छान्दसः । यद्वा । ण्यन्तात् तवैप्रत्ययस्य इडागमे सति णिलोपश्छान्दसः । 'अन्तश्च तवै युगपत्' (पा.सू.६-१-२००) इत्याद्यन्तयोरुदात्तत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** **यत्र** यस्मिन् कर्मणि **मन्थां** मन्थानम् (मथिन् शब्दः द्वितीयायां आत्वं छान्दसम्)। 'आशिरमथनहेतुम्' इति सायणीयम् । **विबध्नते** विबध्नन्ति । तत्र दृष्टान्तः रश्मीन् प्रग्रहान् **यमितवै इव** नियन्तुमिव (यम उपरमे, तुमर्थे तवैप्रत्ययः) । अश्वनियमनाय प्रग्रहान् यथा दृढं कुर्वन्ति, तथा बन्धनरज्जुभिः मन्थानं विशेषेण बध्नन्ति । बाह्ये कर्मणि दधिमन्थनदण्डो मन्थाः । ग्रावोलूखलादीनामन्तयोगार्थविचारे मन्थाश्च विचार्यते सूक्तान्ते ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुन्दुभिः ।। ५, २९ ।।**

यत् । चित् । हि । त्वम् । गृहेऽगृहे । उलूखलक । युज्यसे । इह । द्युमत्ऽतमम् । वद । जयताम्ऽइव । दुन्दुभिः ।। ५,२९ ।।

## ऋग्भाष्यम्

**............यस्माद्युक्तो गृहे गृहे ।**
**देहे देहेऽथवा तेन द्युमद्दुंदुभिमद्वद ।**
**पृथिवीदेवता तस्य तद्वतो वा स्वयं हरिः ।**
**सोमामात्योऽपरो देवो वनस्पतिरितीरितः ।**
**सोमो वा तद्वद्विष्णुर्वा श्रुतः फलकदेवता ।**
**वृक्षाणामपि सर्वेषामतः..............।। ५, २९ ।।**

**ऋग्भाष्यटीका–** **यच्चित्** । इयमुत्तरा चौलूखल्यौ । यस्मात् । हे **उलूखलक** स्वार्थे कः ।

**यत्** यस्मात् **त्वं गृहेगृहे** । **चित्** अपि सर्वेष्वप्येतद्यजमानानुष्ठितयज्ञगृहेषु । अथवाध्यात्मन्देहे देहे **युज्यसे** युक्तो वर्तसे । पूज्यतयेति शेषः । **हि** तेन कारणेन । **इह** यज्ञे । **जयतामिव दुन्दुभिः** जयतां पुंसां दुन्दुभिवत् । **द्युमत्तमं** द्युमत्प्रकाशवत्तमम् उच्चैरिति यावत् । **वद** ध्वनिं कुरु । कथमचेतनस्योलूखलस्यैवं प्रार्थनमित्यत आह ।। **पृथिवीति** ।। तस्य उलूखलस्य । तद्गतः पृथिवीगतः । वनस्पतिरिति शब्देनेरितः सोमस्यामात्योप्यपर उलूखलस्य देवः । वनस्पतिरितीरित इत्यनेन द्वितीयायामृचि वनस्पति इत्येतदुक्तार्थं भवति । आयजी इति द्वे ऋचावुलूखलमुसलयोरिति केचित् । तदसत् । अधिषवण्योः प्रकृतत्वेन तयोरेव द्विवचनविषयत्वोपपत्तेः । फलकयोरप्यचेतनयोः प्रार्थनादिसम्भवार्थं प्रसङ्गाद्देवतामाह ।। **सोमो वेति** ।। अत्रापि सोमामात्य इत्युक्तमनुवर्तते । तेन वनस्पती इति व्याख्यातं भवति । सोमस्य तद्गतस्य विष्णोश्च कथं वनस्पतित्वमित्यत आह ।। **वृक्षाणामपीति** ।। देवतेति वर्तते । एवं पृथिव्यास्तद्गतस्य हरेश्च वनस्पतित्वं समर्थनीयम् । अतः यच्चिद्धीत्याद्यासुचत सृषूक्तं युक्तमिति शेषः । एतेन प्राग्देहस्योलूखलत्वमुक्तमिदानीं तूलूखलाधिकरणत्वमिति विरोधोऽपि परास्तः । पूर्वमचेतनस्येदानीं देवताया उलूखलशब्दोक्तत्वात् ।। ५,२५ ।।

**मन्त्रार्थमञ्जरी–** इयम् उत्तरा चौलूखल्यावनुष्टुभौ । (हे) उलूखलक, स्वार्थे कः (कन्) । यत्, यस्मात् । त्वम् । गृहेगृहे, सर्वेष्वेतद्यजमानानुष्ठितयज्ञगृहेषु, अध्यात्मम्– देहेदेहे । चित्, अपि । युज्यसे, युक्तो वर्तसे । (पूज्यतया) इति शेषः । हि, तेन कारणेन । इह, यज्ञे । जयतामिव दुन्दुभिः, जयतां पुंसां दुन्दुभिवद्भेरीवत् । द्युमत्तमम्, प्रकाशवत्तमम्, उच्चैरिति यावत् । वद, ध्वनिं कुरु । अत्रोलूखलस्य जडस्यैव प्रार्थनायोगादभिमानिनयन्यायाच्चोलूखलदेवता धरादेवी तद्गो हरिश्च सोमामात्यो वनस्पत्याख्यदेवस्तद्गतो हरिश्च ज्ञेयाः ।। ५ ।।

**स्कन्द–** 'उलूखलस्य द्वे इमे' (बृ.दे.३-१०१) । द्वे एते ऋचौ उलूखलदेवत्ये । **यत् चित्** यद्यपि हि इति पदपूरणः । **त्वम् गृहेगृहे उलूखलक! युज्यसे** व्रीह्याद्यवघातार्थम् । यद्यपीति वचनात् तथापीत्यध्याहार्यम् । तथापि **इह** मया शुनःशेपेन सोमाभिषवाय नियुक्तम् **द्युमत्तमम्** दीप्तिमत्तमम् **वद** शब्दं कुरु । कथम् । **जयताम्** इव राज्ञाम् **दुन्दुभिः** वादित्रम् । सङ्ग्रामे हि ये जयन्ति तेषां दीप्तिमद् दुन्दुभिर्वदति नेतरेषाम् ।। ५ ।।

**वेङ्कटमाधव–** यदि अपि **हि** त्वम् **उलूखलक!** सर्वेषु गृहेषु **युज्यते** **इह** अपि दीप्ततमम् **वद** मुसलेनाभिहतः । यथा **जयताम् दुन्दुभिः** ।। ५ ।।

**मुद्गल–** हे **उलूखलक! यत् चिद्धि** यद्यपि त्वम् अवघातार्थम् **गृहेगृहे युज्यसे** तथापि **इह** वैदिककर्मणि तीव्रमुसलप्रहारेण **द्युमत्तमम्** अतिशयेन दीप्तं प्रभूतध्वनियुक्तशब्दम् **वद** । दृष्टान्तः– **जयतामिव दुन्दुभिः** यथा युद्धे जयं प्राप्नुवतां राज्ञां दुन्दुभिः महान्तं ध्वनिं करोति तद्वत् ।। ५ ।।

**सायण–** हे **उलूखलक! यत् चिद्धि** यद्यपि त्वम् अवघातार्थम् **गृहेगृहे युज्यसे** तथापि **इह** वैदिककर्मणि तीव्रमुसलप्रहारेण **द्युमत्तमम्** अतिशयेन दीप्तं प्रभूतध्वनियुक्तशब्दम् **वद** । दृष्टान्तः– **जयतामिव दुन्दुभिः** यथा युद्धे जयं प्राप्नुवतां राज्ञां दुन्दुभिः महान्तं ध्वनिं करोति तद्वत् । उलूखलशब्दं यास्क एवं व्याख्यातवान्– 'उलूखलमुरुकरं वोर्ध्वखं वोर्क्करं वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरं वै तत्तदुलूखलमित्याचक्षते परोक्षेणेति च ब्राह्मणम्' (निरु.९-२०) इति ।

उलूखलक । 'अपादादौ' इति पर्युदासात् आष्टमिकनिघाताभावे षाष्ठिकमाद्युदात्तत्वम् । युज्यसे । अदुपदेशात् लसार्वधातुकानुदात्तत्वे यक्स्वरः शिष्यते । न च 'तिङ्ङतिङः' इति निघातः । 'निपातैर्यद्यदिहन्त' इति प्रतिषेधात् । द्युमत्तमम् । दीव्यतेर्दीप्त्यत्यर्थस्य संपादादि-लक्षणः क्विप् । 'दिव उत्' (पा.सू.६-१-१३१) इति उत्वम् । यणादेशे 'ह्रस्वनुड्भ्यां मतुप्' इति उदात्तत्वम् । ननु 'दिव उत्' इत्यत्र प्रातिपदिकं गृह्यते न धातुरित्युक्तत्वात् अक्षद्यूः इत्यादाविव अत्रापि ऊठा भवितव्यम् (पा.सू.६-४-१९) एवं तर्हि दीप्तिमत्स्वर्गवाचकेन दिवूप्रातिपदिकेन दीप्तिर्लक्ष्यते इत्युत्वं भविष्यति ।। ५,२५ ।।

**सिद्धाञ्जनम्–** ऐन्द्रश्चतुर्ऋचो गतः । परिभाषानुसारेण उलूखलस्य प्रतिपादनात् उलूखल-देवत्येयमृक् षष्ठी चेत्याहुः । उलूखलादेः स्वरूपमन्तर्यागे पुरस्ताद्विचार्यते । कर्मपराविरोधेनैव पदार्थो मन्त्राणामत्र सूक्ते प्रथमं दीयते । हे **उलूखलक, यच्चिद्धि** यद्यपि **त्वं गृहेगृहे** प्रतिगृहं **युज्यसे** युक्तो भवसि, तथाऽपि, इह अस्मिन् कर्मणि **द्युमत्तमं** अतिशयेन दीप्तं **वद** उज्ज्वलं

घोषं कुवित्यर्थः । तत्र दृष्टान्तः । **जयतामिव दुन्दुभिः** जयवतां वीराणां जयघोषं यथा दुन्दुभिर्वाद्यविशेषः करोति, तथा त्वं दीप्तिमन्तं ध्वनिं कुरु ।। ५ ।।

**।। इति प्रथमाष्टके द्वितीयाध्याये पञ्चविंशो वर्गः ।।**

## ।। अथ षड्विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**उत स्म ते वनस्पते वातो वि वात्यग्रमित् । अथो इन्द्राय पातवे सुनु सोममुलूखल ।। ६ ।।**

उत । स्म । ते । वनस्पते । वातः । वि । वाति । अग्रम् । इत् । अथोइति । इन्द्राय । पातवे । सुनु । सोमम् । उलूखल ।। ६ ।।

## ऋग्भाष्यम्

**......................वृक्षाग्र एव तु ।**
**वायुर्वाति वनानां वा भजनीयदिवौकसाम् ।**
**पतिर्विष्णुस्तु तस्याग्रे वायुर्देवो हि गच्छति ।**
**पातवे स्वस्य सोमं वा मनो वा सुनु विष्णवे ।। ६ ।।**

**ऋग्भाष्यटीका– उत स्म** । वृक्षाग्रे । हे **वनस्पते उलूखल** । **वात उत** वायुस्तु वायुरपि । **ते अग्रमित्** त्वदभिमतवृक्षाग्र एव । **विवाति** विविधं वाति स्म । एतत् घटनार्थं च प्राग्वृक्षाणामपीत्युक्तम् । विष्णौ पूर्वार्धतात्पर्यमाह । **वनानामिति** ।। विष्णुस्तु वनानां प्रसिद्धानां भजनीयत्वेन वनशब्दार्थानां दिवौकसां वा पतिः । तस्माद्वनस्पतिरिति शेषः । वनतेः कर्मण्यकारः । देव इति प्रसिद्धवायुव्युदासार्थम् । अग्रे गच्छतीति सेवक इति यावत् । यत एवमिन्द्रः स्वीयेन वातेन त्वदीयवृक्षाग्रमेव चालयति न तून्मूलयति । अथो तस्मादिन्द्रेणोपकृतत्वादिति देवतान्तरे । विष्णौ तु यत एवं त्वमतिसमर्थः **अथो** तस्मात् **इन्द्राय** प्रसिद्धाय विष्णवे च । षष्ठ्यर्थे चतुर्थी । विष्णुं प्रति तु स्वस्य **पातवे** पानाय । **सोमं** वा प्रसिद्धं बाह्ये अध्यात्मं मनो वा । **सुनु** ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (हे) वनस्पते, वनानां वृक्षाणां पते, पारस्करादित्वात्सुट् । उलूखल । वातः उत, वायुरपि । ते अग्रम् इत्, त्वदभिमन्थमानवृक्षाग्र एव । वि वाति, विविधं वाति । स्म । यत एवमिन्द्रः स्वीयेन वातेन त्वदीयवृक्षाग्रमेव चालयति अथो, तस्मात्, इन्द्रेणोपकृतत्वात् । इन्द्राय, षष्ठ्यर्थे चतुर्थी, प्रसिद्धेन्द्रस्य । पातवे, पानाय । सोमम् । सुनु, अभिषुणु । यद्वा वनस्पते, वनतेः कर्मण्यकारः, (वनानां) वननीयानां भजनीयानां देवानां पते । (हे) उलूखल, उलूखल देवतान्तर्गत हरे । वातः उत, वायुरपि । ते अग्रम्, इत्, त्वदग्र एव । वि वाति, विविधं धावति, त्वत्सेवकः सन् गच्छति । स्म । यत एवं त्वमतिसमर्थः । अथो, तस्मात् । इन्द्राय, इन्द्रस्य, विष्णोः । पातवे । सोमम्, अध्यात्मम् मनः । सुनु–इत्यर्थः । उलूखलो देहाभिमानिस्थः ॥ ६ ॥

**स्कन्द–** **उत** इति पदपूरणः । यस्मादर्थे वा । **स्म** इति तु पदपूरण एव । **वनस्पते** इति 'अथापि तद्धितेन कृत्स्नवन्निगमा भवन्ति' (या.२-५) इत्येवं वनस्पतिविकारस्योलूखल-स्याभिधानम् । यस्मात् ते तव हे वनस्पतिविकार! वृक्षावस्थायाम् **वातः वि वाति** वातिरत्र सामर्थ्यात् कम्पनार्थः । लट् च भूते काले । वातो विविधमकम्पयदित्यर्थः । किम् । **अग्रम्** । इत् शब्दस्तु पदपूरणः । **अथो** अद्यपि पदपूरणः । तस्मात् **इन्द्राय पातवे** पातुम् इन्द्रः पास्यतीत्येवमर्थम् । **सुनु** सोमम् हे **उलूखल!** । वात इन्द्रः स यस्माद् वृक्षावस्थायामग्रकम्पनेन तवोपकृतवान्, तस्मात् त्वमपि प्रत्युपकारार्थं तत्पानार्थं सुनु सोमम् उलूखलेत्यर्थः । अथवा वातो वि वात्यग्रमिति निष्प्रयोजनत्वमिति प्रतिपाद्यते । एतदुक्तं भवति । यस्माद् वृक्षावस्थायां वातेन चल्यमानमग्रं क्वचिदप्यन्यत्राविनियुक्तं निष्प्रयोजनमासीत् । इदानीं तु महति प्रयोजने इन्द्रपानार्थं सोमाभिषवे विनियुक्तमसि । तस्मात् सुनु सोमम् उलूखलेति ॥ ६ ॥

**वेङ्कटमाधव–** वृक्षविकारस्य वृक्षवत् स्तुतिः । अपि च ते **वनस्पते! वात अग्रम्** एव चलयतीन्द्रप्रसादात् । तथा सति इन्द्रस्य पानार्थम् **सुनु** सोमम् **उलूखल!** ॥ ६ ॥

**मुद्गल–** **उत** अपि च हे **वनस्पते!** उलूखलरूप वृक्ष! **ते अग्रम् इत्** तव पुरत एव **वातः वि वाति स्म** त्वरोपेतमुसलप्रहारैर्वायुर्विशेषेण प्र सरति खलु । **अथो** अनन्तरम् हे **उलूखल! इन्द्राय** इन्द्रोपकारार्थम् **पातवे** पातुम् **सोमम् सुनु** सोमाभिषवं कुरु ॥ ६ ॥

घोषं कुवित्यर्थः । तत्र दृष्टान्तः । **जयतामिव दुन्दुभिः** जयवतां वीराणां जयघोषं यथा दुन्दुभिर्वाद्यविशेषः करोति, तथा त्वं दीप्तिमन्तं ध्वनिं कुरु ।। ५ ।।

**।। इति प्रथमाष्टके द्वितीयाध्याये पञ्चविंशो वर्गः ।।**

## ।। अथ षड्विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**उत स्म॑ ते वनस्पते॒ वातो॒ वि वा॒त्यग्र॒मित् । अथो॒ इन्द्रा॑य॒ पात॑वे सु॒नु सोम॑मुलूखल ।। ६ ।।**

उत । स्म॒ । ते॒ । व॒नस्प॒ते॒ । वात॑ः । वि । वा॒ति॒ । अग्र॑म् । इत् । अथो॒इति॑ । इन्द्रा॑य । पात॑वे । सु॒नु । सोम॑म् । उ॒लू॒ख॒ल॒ ।। ६ ।।

## ऋग्भाष्यम्

**......................वृक्षाग्र एव तु ।**
**वायुर्वाति वनानां वा भजनीयदिवौकसाम् ।**
**पतिर्विष्णुस्तु तस्याग्रे वायुर्देवो हि गच्छति ।**
**पातवे स्वस्य सोमं वा मनो वा सुनु विष्णवे ।। ६ ।।**

**ऋग्भाष्यटीका–** **उत स्म** । वृक्षाग्रे । हे **वनस्पते** **उलूखल** । **वात उत** वायुस्तु वायुरपि । **ते अग्रमित्** त्वदभिमतवृक्षाग्र एव । **विवाति** विविधं वाति स्म । एतत् घटनार्थं च प्राग्वृक्षाणामपीत्युक्तम् । विष्णौ पूर्वार्धतात्पर्यमाह । **वनानामिति** ।। विष्णुस्तु वनानां प्रसिद्धानां भजनीयत्वेन वनशब्दार्थानां दिवौकसां वा पतिः । तस्माद्वनस्पतिरिति शेषः । वनतेः कर्मण्यकारः । देव इति प्रसिद्धवायुव्युदासार्थम् । अग्रे गच्छतीति सेवक इति यावत् । यत एवमिन्द्रः स्वीयेन वातेन त्वदीयवृक्षाग्रमेव चालयति न तून्मूलयति । अथो तस्मादिन्द्रेणोपकृतत्वादिति देवतान्तरे । विष्णौ तु यत एवं त्वमतिसमर्थः **अथो** तस्मात् **इन्द्राय** प्रसिद्धाय विष्णवे च । षष्ठ्यर्थे चतुर्थी । विष्णुं प्रति तु स्वस्य **पातवे** पानाय । **सोमं** वा प्रसिद्धं बाह्ये अध्यात्मं मनो वा । **सुनु** ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (हे) वनस्पते, वनानां वृक्षाणां पते, पारस्करादित्वात्सुट् । उलूखल । वातः उत, वायुरपि । ते अग्रम् इत्, त्वदभिमन्यमानवृक्षाग्र एव । वि वाति, विविधं वाति । स्म । यत एवमिन्द्रः स्वीयेन वातेन त्वदीयवृक्षाग्रमेव चालयति अथो, तस्मात्, इन्द्रेणोपकृतत्वात् । इन्द्राय, षष्ठ्यर्थे चतुर्थी, प्रसिद्धेन्द्रस्य । पातवे, पानाय । सोमम् । सुनु, अभिषुणु । यद्वा वनस्पते, वनतेः कर्मण्यकारः, (वनानां) वननीयानां भजनीयानां देवानां पते । (हे) उलूखल, उलूखल देवतान्तर्गत हरे । वातः उत, वायुरपि । ते अग्रम्, इत्, त्वदग्र एव । वि वाति, विविधं धावति, त्वत्सेवकः सन् गच्छति । स्म । यत एवं त्वमतिसमर्थः । अथो, तस्मात् । इन्द्राय, इन्द्रस्य, विष्णोः । पातवे । सोमम्, अध्यात्मम् मनः । सुनु– इत्यर्थः । उलूखलो देहाभिमानिस्थः ।। ६ ।।

**स्कन्द– उत** इति पदपूरणः । यस्मादर्थे वा । **स्म** इति तु पदपूरण एव । **वनस्पते** इति 'अथापि तद्धितेन कृत्स्नवन्निगमा भवन्ति' (या.२-५) इत्येवं वनस्पतिविकारस्योलूखल-स्याभिधानम् । यस्मात् ते तव हे वनस्पतिविकार! वृक्षावस्थायाम् **वातः वि वाति** वातिरत्र सामर्थ्यात् कम्पनार्थः । लट् च भूते काले । वातो विविधमकम्पयदित्यर्थः । किम् । **अग्रम्** । इत् शब्दस्तु पदपूरणः । **अथो** अद्यपि पदपूरणः । तस्मात् **इन्द्राय पातवे** पातुम् इन्द्रः पास्यतीत्येवमर्थम् । **सुनु** सोमम् हे **उलूखल!** । वात इन्द्रः स यस्माद् वृक्षावस्थायामग्रकम्पनेन तवोपकृतवान्, तस्मात् त्वमपि प्रत्युपकारार्थं तत्पानार्थं सुनु सोमम् उलूखलेत्यर्थः । अथवा वातो वि वात्यग्रमिति निष्प्रयोजनत्वमिति प्रतिपाद्यते । एतदुक्तं भवति । यस्माद् वृक्षावस्थायां वातेन चल्यमानमग्रं क्वचिदप्यन्यत्राविनियुक्तं निष्प्रयोजनमासीत् । इदानीं तु महति प्रयोजने इन्द्रपानार्थं सोमाभिषवे विनियुक्तमसि । तस्मात् सुनु सोमम् उलूखलेति ।। ६ ।।

**वेङ्कटमाधव–** वृक्षविकारस्य वृक्षवत् स्तुतिः । अपि च ते **वनस्पते! वात अग्रम्** एव चलयतीन्द्रप्रसादात् । तथा सति इन्द्रस्य पानार्थम् **सुनु** सोमम् **उलूखल!** ।। ६ ।।

**मुद्गल– उत** अपि च हे **वनस्पते!** उलूखलरूप वृक्ष! **ते अग्रम् इत्** तव पुरत एव **वातः वि वाति स्म** त्वरोपेतमुसलप्रहारैर्वायुर्विशेषेण प्र सरति खलु । **अथो** अनन्तरम् हे **उलूखल! इन्द्राय** इन्द्रोपकारार्थम् **पातवे** पातुम् **सोमम् सुनु** सोमाभिषवं कुरु ।। ६ ।।

**सायण– उत** अपि च हे **वनस्पते**! उलूखलरूप वृक्ष! **ते अग्रम् इत्** तव पुरत एव **वातः वि वाति स्म** त्वरोपेतमुसलप्रहारैर्वायुर्विशेषेण प्र सरति खलु । **अथो** अनन्तरम् हे **उलूखल! इन्द्राय** इन्द्रोपकारार्थम् **पातवे** पातुम् **सोमम् सुनु** सोमाभिषवं कुरु ।

वनस्पते । पारस्करादित्वात् सुट् । कार्ये कारणशब्दः । पातवे । 'पा पाने' । तुमर्थे सेसेन् इति तवेन्प्रत्ययः । ञ्नित्यादिर्नित्यम् इत्याद्युदात्तत्वम् । सुनु । 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति हेर्लुक् । विकरणस्वरेणान्तोदात्तत्वम् । पादादित्वादनिघातः । उलूखल । उर्ध्वं खम् अस्य इति उलूखलः । पृषोदरादिः ।। ६ ।।

**सिद्धाञ्जनम्– उत** अपि च हे **वनस्पते**!, **उलूखल**! वनस्पतिवृक्षः प्रकृतिः उलूखलस्तद्विकारः कार्ये कारणशब्दः । **ते** तव **अग्रमित्** पुरत एव **वातः** वायुः **विवाति स्म** विशेषेण प्रसरति खलु । 'त्वरोपेतमुसलप्रहारैर्वायुः प्रसरति खलु' इति सायणव्याख्या । **अथो** अनन्तरं **इन्द्राय** इन्द्रार्थे **पातवे** पातुं तदीयपानार्थमित्यर्थः । **सोमं सुनु** अभिषुतं कुरु ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**आयजी वाजसातमा ता ह्यु१च्चा विजर्भृतः । हरी इवान्धांसि बप्सता ।। ७ ।।**

आयजीइत्यायजी । वाजऽसातमा । ता । हि । उच्चा । विऽजर्भृतः । हरीइवेतिहरीऽइव । अन्धांसि । बप्सता ।। ७ ।।

## ऋग्भाष्यम्

**आयाज्यावन्नलब्धृणामुत्तमावतिभक्षकौ ।**
**जह भक्षण इत्यस्माद्यथाऽश्वावन्नभक्षकौ ।**
**सोमस्य भक्षकावत्र..............।। ७ ।।**

**ऋग्भाष्यटीका– आयजी** ।। द्वेफलकदेवताके इत्युक्तम् । आयाज्यौ । **आयजी** कर्मणीकारः । आयाज्यौ सम्यग्याज्यौ । **वाजसातमा** वाजमन्नं सनुत इति वाजसौ । जनसनखनक्रमगमो विट् । अतिशयेन वाजसौ वाजसातमौ । अन्नलब्धृणामुत्तमौ । **उच्चा** उत्कृष्टौ । **ता** तौ फलकौ । विजर्भृता **हि** विशेषेण भक्षयतो हि । अतिभक्षकौ वर्तेते । कथमिदं लभ्यत

इत्यत आह । **जहेति** ।। अस्मात्प्रथमपुरुषद्विवचने हकारस्य भकारे रमागमे बहुलग्रहणादृकारे च विकरणे कृते सतीदं रूपं सिद्ध्यतीत्यर्थः । काविव **हरी इव** । अश्वौ इन्द्रस्येति शेषः । यथा **अन्धांसि** अन्नानि **बप्सता** बप्सन्तौ । अत्तिकर्मायम् । अन्नभक्षकौ तथा । ननु हरी धाना ऋजीषादेरंधसो भक्षकौ प्रसिद्धौ फलकयोस्तु कथं व्याख्यानमित्यत आह । **सोमस्येति** ।। सवनकाले सोमस्य भक्षकाविति अत्र फलकविषये व्याख्येयमित्यर्थः ।। ७ ।।

**मन्त्रार्थमञ्जरी–** इयम् उत्तरा च फलकदेवताके गायत्र्यौ । आयजी, आङ्पूर्वस्य यजतेः कर्मणीकारः, आयाज्यौ, सम्यग्याज्यौ । वाजसातमा, वाजमन्नं सनुत इति वाजसौ, 'जनसनखन-क्रमगमो विट्' 'विड्वनोरनुनासिकस्य' इत्यनुनासिकस्यात्त्वम्, अतिशयेन वाजसौ वाजसातमौ, अन्नलब्धृणामुत्तमौ । उच्चा, उत्कृष्टौ । ता, तौ, फलकौ, तदभिमानिनौ सोमवनस्पती । विजर्भृतः हि, विशेषेण भक्षयतो हि, सोमाभिषवकालेऽतिभक्षकौ वर्तेते, 'जह भक्षणे' इत्यतो हकारस्य भकारे रमागमे बहुलग्रहणादृकाररूपे च विकरणे कृते 'विजर्भृतः' इति रूपम् । तत्र दृष्टान्तः हरी इव, इन्द्रस्याश्वौ यथा । अन्धांसि, अन्नादीनि । बप्सता, बप्सतौ भक्षयन्तौ, तथा– इति, 'बप्स उदने' इत्यतः शतृ, यद्वा– 'प्सा अदने' श्लुविकरणम्, द्विर्वचनम्, शत्रन्तम् ।। ७ ।।

**स्कन्द–** द्वे परे मुसलस्य च उलूखलस्य च' (बृ.दे ३-१०१) । उभयदेवते इत्यर्थः । **ता ह्युच्चेति** तच्छब्दाद् यच्छब्दोऽत्राध्याहार्यः । ये उलूखलमुसले **आयजी** मर्यादया यष्टृणी । अवघातद्वारेण यागस्य कर्तृणी इत्यर्थः । **वाजसातमा** अवघातवेलायामन्नस्य सम्भक्तृतमे । **ता हि** हिशब्दः पदपूरणः । ते **उच्चा** उच्चैः **विजर्भृतः** हरतेर्यङ्लुगन्तस्य कर्मणीदं व्यत्ययेन च परस्मैपदम् । मुसल उत्क्षिप्यमाणे पुनःपुनर्विह्रियेते । अथवा हिशब्दो यस्मादर्थ एव । एवन्तु योजना– मर्यादया यष्टृणी अन्नानां च सम्भक्तृतमे उलूखलमुसले । कस्मात् । यस्मात् तत्र उच्चैः पुनःपुनर्विह्रियेते इति । किं कुर्वाणे । **हरी इव अन्धांसि बप्सता** हरी इन्द्राश्वौ बप्सतिरत्तिकर्मा (निघ.२,८) । यथा हरी यज्ञे स्वभागं धाना ऋजीषं च भक्षयतः एवमवघातवेलायां चरुपुरोडाशलक्षणान्यन्नानि भक्षयति हवींषि अवघ्नती इत्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** उलूखलमुसलयोर्द्वे भवतः । आयष्टव्ये अन्नानां सम्भक्तृतमे ते हि उच्चैः विह्रियेते, अश्वौ इव धान्यानामवहननकाले अन्नानि भक्षयन्तौ ।। ७ ।।

**मुद्गल**– ये उलूखलमुसले **आयजी** सर्वतो यज्ञसाधने **वाजसातमा** अतिशयेन अन्नप्रदे **ता हि** ते खलु **उच्चा** प्रौढध्वनिर्यथा भवति तथा **विजर्भृतः** विशेषेण पुनःपुनः विहारं कुरुतः । दृष्टान्तः । **अन्धांसि** अन्नानि चणकादीनि खाद्यानि **बप्सता** वप्सन्तौ हरी इव इन्द्रस्याश्वाविव ॥ ७ ॥

**सायण**– ये उलूखलमुसले **आयजी** सर्वतो यज्ञसाधने **वाजसातमा** अतिशयेन अन्नप्रदे **ता हि** ते खलु **उच्चा** प्रौढध्वनिर्यथा भवति तथा **विजर्भृतः** विशेषेण पुनःपुनः विहारं कुरुतः । तत्र दृष्टान्तः । **अन्धांसि** अन्नानि चणकादीनि खाद्यानि **बप्सता** वप्सन्तौ हरी इव इन्द्रस्याश्वाविव । अत्र यास्क एवं व्याचख्यौ– 'आयजी आयष्टव्ये अन्नानां संभक्तृतमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने'(निरु.९-३६) इति ।

आयजी । यजेः औणादिकः करणे इप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । वाजसातमा । वाजं सनोतीति वाजसाः । 'षणु दाने' । 'जनसन' इत्यादिना विट्प्रत्ययः । 'विड्वनोरनुनासिकस्यात्' इति आत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । आतिशायनिकस्तमप् । 'सुपां सुलुक्' इति पूर्वसवर्णदीर्घः । विजर्भृतः । 'हृञ् हरणे' । अस्मात् यङ्लुकि अभ्यासहलादिशेषोरत्जश्त्वेषु कृतेषु 'रुग्रिकौ च लुकि' (पा.सू.७-४-९१) इति रुगागमः । ततः प्रत्ययलक्षणेन धातुसंज्ञायां लिटि द्विवचनं तम् । 'अदादिवच्च' इति वचनात् शपो लुक् । गुणे प्राप्ते- 'क्ङिति च' इति प्रतिषेधः । 'हृग्रहोर्भश्छन्दसि' इति भत्वम् । प्रत्ययस्वरः । 'हि च' इति निघातप्रतिषेधः । बप्सता । 'भस भक्षणदीप्त्योः' । लटः शतृ । 'जुहोत्यादिभ्यः श्लुः' । 'घसिभसोर्हलि च' (पा.सू.६-४-१००) इति उपधालोपः । 'नाभ्यस्ताच्छतुः' (पा.सू.७-१-७८) इति नुम्प्रतिषेधः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । ७ ॥

**सिद्धाञ्जनम्**– अस्यामष्टम्यां वा मुसलशब्दो न पट्यते । अत्र 'आयजी' इति उत्तरत्र 'वनस्पती' इति च द्विवचनश्रुत्या उलूखनमुसले अत्र प्रतिपादिते इति प्राहुः । तात्पर्यं पुरस्ताद् विचार्यते पदार्थमात्रमत्र ब्रूमः । **आयजी** सर्वतो यज्ञसाधने (यजेः करणे इ प्रत्ययः औणादिकः) **वाजसातमा** वाजं बलसमृद्धिं सनुतः दत्त इति वाजसौ, अतिशयेन वाजसौ वाजसातमौ, **ता हि** तौ खलु **उच्चा** उच्चैः **विजर्भृतः** विजर्हृतः विहारं पुनः पुनः कुरुतः (विपूर्वको हरतिर्धातुः,

यङः लुक्, अभ्यासः, रुगागमः) तत्र दृष्टान्तः– **अन्धांसि** अन्नानि **बप्सता** भक्षयन्ती **हरी इव** इन्द्राश्वाविव । बप्सता– 'भस भक्षणे' लटः शतृ, जुहोत्यादिभ्यः श्लुः, नाभ्यस्तादिति नुम् प्रतिषेधः । अत्र आयजी इत्यादि पुल्लिङ्गशब्दौ परिगृहीतौ । एवं 'वनस्पती' इत्युत्तरत्र सङ्गच्छते ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**ता नो॑ अ॒द्य वन॑स्पती ऋ॒ष्वावृ॒ष्वेभि॑: सो॒तृभि॑: । इन्द्रा॑य॒ मधु॑मत्सु॒तम् ।। ८ ।।**

ता । नः॒ । अ॒द्य । व॒न॒स्प॒ती॒ इति॑ । ऋ॒ष्वौ । ऋ॒ष्वेभि॑: । सो॒तृऽभि॑: । इन्द्रा॑य । मधु॑ऽमत् । सु॒तम् ।।

## ऋग्भाष्यम्

**........................ऋष्वावतिमहत्तरौ ।**
**महद्भिः सोतृभिः सोममिन्द्राय मधुमत्सुतम् ।। ८ ।।**

**ऋग्भाष्यटीका– ता नः** । **ऋष्वौ** । हे ऋष्वावतिमहत्तरौ **वनस्पती** । **ता** तावुक्तस्वरूपौ युवाम् । **ऋष्वेभिः** महद्भिः **सोतृभिः** सहेन्द्राय । **नो**ऽस्मदीयम् । **मधुमत्** स्वादुयुक्तम् । सोममिति शेषः । **सुतं** सुनुतम् । यद्यप्यृष्वशब्दो महन्नामैव तथापि सोतॄणां महत्त्ववद्देवतामहत्त्वं न भवतीति प्रदर्शनायातिमहत्तरावित्युक्तम् ।। ८ ।।

**मन्त्रार्थमञ्जरी–** (हे) ऋष्वौ, अतिमहत्तरौ । वनस्पती, सोमतदमात्यौ । ता, तौ, उक्तस्वरूपौ युवाम् । ऋष्वेभिः, महद्भिः । सोतृभिः, अभिषवकर्तृभिः सह । इन्द्राय । नः, अस्मदीयम् । मधुमत्, स्वादुयुक्तम् । (सोमम्) इति शेषः । सुतम्, सुनुतम् ।। ८ ।।

**स्कन्द–** प्रत्यक्षकृतोऽयं मन्त्रः । ऋष्वाविति नामन्त्रणम् । अत्र यच्छब्दमध्याहृत्यैकवाक्यता नेया । ये **ऋष्वौ** 'ऋष्वः' (निघ.३,३) इति महन्नाम । महती **ता** ते **नः** अस्मदर्थम् **अद्य** हे **वनस्पती** । वनस्पतिविकारभूते! उलूखलमुसले! **ऋष्वेभिः** महद्भिः **सोतृभिः** अभिषोतृभिः ऋत्विग्भिः सह **इन्द्राय मधुमत्** स्वादुयुक्तम् अन्नम् **सुतम्** अभिषुतम् ।। ८ ।।

**वेङ्कटमाधव– तौ नः अद्य वनस्पती!** महान्तौ महद्भिः **सोतृभिः** ग्रावभिः सह इन्द्रार्थम्

**मधुमत्** अन्धः **सुतम्** । परोक्षोपक्रमाः प्रत्यक्षापवर्गाश्च मन्त्रा भवन्ति विपरीताश्च इति ।। ८ ।।

**मुद्गल– अद्य** अस्मिन् कर्मणि हे **वनस्पती!** उलूखलमुसलरूपौ **ता** तौ युवाम् **ऋष्वेभिः** दर्शनीयैः **सोतृभिः** अभिषवहेतुभिः सह **ऋष्वौ** दर्शनीयौ भूत्वा **इन्द्राय** इन्द्रार्थम् **मधुमत्** माधुर्योपेतं सोमद्रव्यम् न अस्मदीयम् **सुतम्** अभिषुतम् ।। ८ ।।

**सायण– अद्य** अस्मिन् कर्मणि हे **वनस्पती!** उलूखलमुसलरूपौ **ता** तौ युवाम् **ऋष्वेभिः** दर्शनीयैः **सोतृभिः** अभिषवहेतुभिः सह **ऋष्वौ** दर्शनीयौ भूत्वा **इन्द्राय** इन्द्रार्थम् **मधुमत्** माधुर्योपेतं सोमद्रव्यम् न अस्मदीयम् **सुतम्** अभिषुतम् ।

ता । 'सुपां सुलुक्' इति आकारः । नो अद्य । 'प्रकृत्यान्तःपादम्' इति प्रकृतिभावः । वनस्पती । उभयपदप्रकृतिस्वरे प्राप्ते 'आमन्त्रितस्य' इति सर्वानुदात्तत्वम् । 'प्लुतप्रगृह्या अचि' (पा.सू.६-१-१२५) इति प्रकृतिभावः । सुतम् । 'षुञ् अभिषवे' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । निघातः ।। ८ ।।

**सिद्धाञ्जनम्– अद्य** इदानीं हे **वनस्पती! ऋष्वौ** (महन्नाम) उत्कृष्टौ **ता** तौ युवां **ऋष्वेभिः** ऋष्वैः महद्भिः **सोतृभिः** अभिषवकर्तृभिः सह **इन्द्राय** इन्द्रार्थं **मधुमत्** माधुर्योपेतं **नः** अस्मदीयं सोमद्रव्यं **सुतम्** सुनुतम् ('षुञ् अभिषवे' विकरणलोपः छान्दसः)। वनस्पती उलूखलमुसले इति व्याख्यातारः । मुसलशब्दस्याश्रवणात् अधिषवणफलकयोः द्वित्वात् वनस्पतिकार्यत्वाच्च, कथं ताभ्यां न भाव्यम्? ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**उच्छिष्टं चम्वोर्भर सोमं पवित्र आ सृज । नि धेहि गोरधि त्वचि ।। ९, २६, २८ ।।**

उत् । शिष्टम् । चम्वोः । भर । सोमम् । पवित्रे । आ । सृज । नि । धेहि । गोः । अधि । त्वचि ।।

## ऋग्भाष्यम्

**सोममुत्पवनायैतं द्रोणोपरि पवित्रके ।**
**भर शिष्टं चमसयोर्ऋजीषं गोरधित्वचि ।**

**भरेत्यात्मानमेवाह स्वान्तर्यामिणमेव वा ।**
**शिरोभेदौ तु चमसौ द्रोणं चोदरमीरितम् ।**
**पवित्रं बुद्धिरेवात्र मनःशुद्धिस्तया यतः ।**
**मुखचर्मैव गोचर्म मन एतेषु विष्णवि ।**
**धार्यम्................।। ९, २६, ९ ।।**

**ऋग्भाष्यटीका– उच्छिष्टम्** । प्रजापतेर्हरिश्चन्द्रस्यांत्या चर्मप्रशंसा वेति केचित् । तदसत् । अप्रतिभासनात् । सोमस्यैव संस्कार्यतया प्राधान्यप्रतीतेश्च । अतः सोमोऽत्र देवतेति गम्यते । **सोमम्** । एतं सोमम् । **उत्** उत्पवनाय । **पवित्रे** द्रोणोपरिपवित्रके द्रोणकलशस्योपरि स्थिते पवित्रे । **आसृज** विसृज । शिष्टं सोमं **चम्वोः** चमसयोः । **भर** पूरय । **गोरधि त्वचि** चर्मण उपरि **नि धेहि** स्थापय । सोमस्य चर्मणि निधानस्याप्रसिद्धत्वादृजीषमिति शेषः । यद्यप्यत्रैतमिति द्रोणोपरीति च नास्ति । तथाप्यथैनन्द्रोणकलशमभ्यवनिना योच्छिष्टं चम्वोर्भरेत्येतयर्चेति ब्राह्मणस्मरणायोक्तम् । तेनापि सोम एवात्र देवतेति सिद्ध्यति । अत एव बृहद्देवताकार आह 'सोममन्त्या प्रशंसति' इति । नन्वत्र भर सृज निधेहीति कं प्रत्युच्यत इत्यत आह । **भरेति** ।। उपलक्षणमेतत् । अन्यस्याभावादिति भावः । अध्यात्मं चमसादिशब्दाभिधेयमाह । **शिर इति** ।। 'इदं तच्छिर' इति हि श्रुतिः । उदरशब्देन हृदयमुपलक्ष्यते । तत्र हि सोमशब्दस्य मनसः प्राचुर्येण वृत्तिः । सोम शुद्धिहेतोः पवित्रस्य बुद्धेश्च साम्योपपादनं मनःशुद्धिस्तया यत इति । गो शब्दावाङ्मुखेस्तीति मुखचर्मैव गोचर्म । एतेषु सोमस्य भरणादिकं व्याख्याति । **मन इति** ।। एतेष्वाधारेषु स्थित इति शेषः । अस्मिन्पक्षे निधेहीत्यत्रापि सोमस्यैव कर्मत्वम् । विष्णवीति प्रयुंजानो वेदतुल्यत्वं भाष्यस्य सूचयति ।। ९,२६ ।।

**मन्त्रार्थमञ्जरी–** सौमी गायत्रीयम् ऋक् । (एतम्) सोमम् । उत्, उत्पवनाय । पवित्रे, द्रोणकलशस्योपरिस्थितपवित्रे । आ सृज, विसृज । शिष्टम् (सोमम्) चम्वोः, चमसयोः । भर, पूरय । गोः । अधि त्वचि, चर्मण उपरि । (ऋजीषम्) इति शेषः । नि धेहि, स्थापय– इत्यृषिरात्मानं प्रति वा स्वान्तर्यामिणं प्रति वाह– इति ज्ञेयम् । अध्यात्मं तु (एतम्) सोमम्, मनः । उत्, उत्पवनाय, शोधनार्थम् । पवित्रे, बुद्धौ । आ सृज । शिष्टम् । (सोमम्), मनोवृत्तिविशेषम् । चम्वोः, चमसशब्दितशिरोभेदयोः । भर, 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस

ऊर्ध्वबुध्नः' (बृ०उ०४।२।३) इति श्रुतेः । गोः अधि त्वचि, मुखचर्मणि, गोपदस्य वाक्पर्यायतयात्र मुखं गोपदार्थः । (ऋजीषम्) ऋजीषस्थानीयं मनोवृत्तिविशेषम् । नि धेहि, बुद्धयादिस्थानेषु स्थिते हरौ मनो निवेशयेति तात्पर्यार्थः ।। ९ ।।

**स्कन्द–** 'प्रतावनिम् हरिश्चन्द्र चर्म वाऽन्त्या प्रशंसति' (ऋ.अनु.१-२८) । अधिषवणं चर्म इयमृक् सूक्तान्त्या प्रशंसति । अधिषवणचर्मदेवतेत्यर्थः । केचित्तु 'कर्म वाऽन्त्या प्रशंसति' इति पठन्ति । ते च यान्यस्यामृचि कर्माणि 'भर आसृत निधेहि' इति तेषामेषां स्तुतिं मन्यन्ते । तद्वारेण वा यागकर्मणः । पजापतिं हरिश्चन्द्रमित्येतत्तु प्रजापतेर्हरिश्चन्द्रस्यान्यतरस्योभयोर्वा अस्यामृचि प्रशंसाया असम्भवाद् यथोक्तं तत् पर्येष्यम् । 'अथैनं द्रोणकलशमभ्यवनिनाय उच्छिष्टं चम्वोर्भर' इत्येतयर्चा' (ऐ.ब्रा.७-१६) इति प्रत्यक्षत्वाच्छ्रुतेः सोमप्रशंसार्थत्वमस्या ऋचो न्याय्यतरं दृश्यते । तया च बृहद्देवताकार आह– 'चर्माधिषवणाय वा सोम वाऽन्त्या प्रशंसति' (बृ.दे.३-१०१) इति । उच्छब्दो भरेत्याख्यातेन सम्बन्धयितव्यः । **शिष्टम्** अनुपयुक्तम् **चम्वोः** द्विवचननिर्देशादधिषवणफलके अत्र चमूरुच्यते । पञ्चम्यर्थे षष्टी । षष्टीनिर्देशाद्वा सकाशादिति वाक्यशेषः । अधिषवणफलकाभ्याम् अधिषवणफलकयोर्वा सकाशाद् **उत् भर** उद्धर **सोमम्** । आत्मनः एवायम् अन्तरात्मनः प्रैषः अध्वर्योर्वा । अथवा उदित्येष अवेत्येतस्य स्थाने शिष्टमित्यतेन सम्बध्यते । चम्वोः इति, चम्यतेऽस्मिन् सोम इति चमूश्चमसम्, सप्तमीबहुवचनस्य स्थाने व्यत्ययेनेदं द्विवचनम् । भरेत्यपि शुद्धोऽपि भरतिराङ्पूर्वार्थो द्रष्टव्यः । अवशिष्टं सोमं च समाहरेत्यर्थः । आहृत्य च पवित्रे पादनार्थम् **आ सृज** प्रक्षिप । आसृज्य च **नि धेहि** स्थापय द्रोणकलशे **गोः अधि त्वचि** गोस्त्वच उपरि । गोचर्मणि स्थिते द्रोणकलशेऽवनयेत्यर्थः ।। ९ ।।

**वेङ्कटमाधव–** 'चर्माधिषवणीयं वा सोमं वाऽन्त्या प्रशंसति' (बृ.दे.३-१०१) इत्युक्तम् । 'प्रजापतेर्हरिश्चन्द्रस्याऽन्त्या चर्मप्रशंसा वा' (ऋ २-१-२८) इति कात्यायनः । हरिश्चन्द्र! अधिषवणफलकयोरुपरि अवशिष्टम् **सोमम् भर** । सुतं च सोमं दशापवित्रे **आ सृज** । तदर्थम् **नि धेहि** अधिषवणफलकयोरुपरि **गोः त्वचि** इति ।। ९ ।।

**मुद्गल–** हे ऋत्विग्विशेष! हरिश्चेन्द्रदेवतापक्षे हे हरिश्चन्द्र! इति । **चम्वोः** सोमस्य

भक्षत्वसम्पादकयोः अधिषवणफलकयोः **शिष्टम्** अभिषवराहित्येन अवशिष्टम् **सोमम् उत् भर** शाकटस्योपरि हर । सोमम् अभिषुतम् सोमम् पवित्रे दशापवित्रे **आ सृज** आनीय प्रक्षिप । प्रक्षेपे सत्यवशिष्टं सोमम् **गोः त्वचि** आनडुहे चर्मणि **अधि नि धेहि** अध्यारोप्य स्थापय ॥ ९ ॥

**सायण–** हे ऋत्विग्विशेष! हरिश्चेन्द्रदेवतापक्षे हे हरिश्चन्द्र! इति । **चम्वोः** सोमस्य भक्षत्वसम्पादकयोः अधिषवणफलकयोः **शिष्टम्** अभिषवराहित्येन अवशिष्टम् **सोमम् उत् भर** शाकटस्योपरि हर । **सोमम्** अभिषुतम् सोमम् पवित्रे दशापवित्रे **आ सृज** आनीय प्रक्षिप । प्रक्षेपे सत्यवशिष्टं सोमम् **गोः त्वचि** आनडुहे चर्मणि **अधि नि धेहि** अध्यारोप्य स्थापय ।

चम्वोः । 'चमु अदने' । चम्यते भक्ष्यतेऽत्रेति चमूः । 'कृपिचमि' (उ.मू.१-८१) इत्यादिना औणादिक उप्रत्ययः । प्रत्ययस्वरः । सप्तमीद्विवचनस्य 'उदात्तस्वरितयोर्यणः स्वरितः' (पा.सू.८-२-४) इति स्वरितत्वम् । 'उदात्तयणो हल्पूर्वात्' (पा.सू.६-१-१७४) इति व्यत्ययेन न भवति । भर । 'हृग्रहोर्भः' । धेहि । 'ध्वसोरेद्धावभ्यासलोपश्च' (पा.सू.६-४-११९) इति एत्वाभ्यासलोपौ । निघातः । त्वचि । 'सावेकाचः' इति विभक्तरुदात्तत्वम् ॥ ९,२६ ॥

**सिद्धाञ्जनम्–** आत्मन एव सम्बोधनं युक्तम्, न च क्षतिः कर्मपरार्थस्य । **चम्वोः** चमसयोः पानयोः, द्विवचननिर्देशात् अधिषवणफलकयोः शिष्टं अभिषवात्परं अवशिष्टं **सोमं उद्धर** उद्धर, समाहरेत्यर्थः (हृग्रहोर्भः) समाहृत्य **पवित्रे** शोधनार्थं दशापवित्रे **आ सृज** आनीय प्रक्षिप । आसृज्य च **गोः अधि त्वचि** गोः चर्मणि आधारे **नि धेहि** स्थापय ।

अथ विचारतः सूक्ततात्पर्यमात्रमत्राचक्ष्महे । सारतो विचारश्च कृतः, अन्यत्र निरीक्षणीयः । इदानीं वक्ष्यमाणप्रकारस्य सूक्तार्थस्योपपत्तिश्च तत्र ग्राह्या । यत्र ग्रावेत्यादिकासु चतसृषु प्रत्यृचं उत्तरोऽर्धर्चः समानः । तस्य तात्पर्यं चैवं भवति । उलूखलशब्दलक्षितेऽस्मिन् शरीरे अभिषुतानां सोमानां इन्द्रस्वीकारक्षमतां उक्त्वा तत्पानाय इन्द्रः प्रार्थ्यते । कथमभिषुताः सोमा इति का वा साधनसामग्री का वा क्रियेत्यादि च पूर्वार्धर्चेषु कीर्त्यते । तत्र प्रथमं ऊर्ध्वस्थितेन ग्राव्णा वज्रेणेन्द्रायुधेन, ज्ञानप्रकाशगर्भितक्रियाशक्तिसम्पन्नेन, विविधावरणानां निवारणेन, मानुषमनःप्राण-

शरीरनिगूढसम्मदसोमरसस्रुतिनिरोधकजडघनद्रव्यांशानां प्रहर्त्रा, स्वीयप्रहारसाधितनिलीनसोम-रसाधारभूतअन्नमयादिघनांशमार्दवसम्पादकेन, अत एव आनन्दरसनिष्यन्दहेतुना सोमाभिषवो निष्पाद्यत इत्यभिप्रायेण यत्र अन्तर्यागे ग्रावा पृथुबुध्न ऊर्ध्वो भवतीत्युक्तं प्रथमस्यां ऋचि । अथ चान्तर्यजने चलति, अधिषवणफलकद्वयसङ्केतिता अन्या च सामग्री भवति । ज्ञानक्रिया-शक्तिप्रतिनिधिभूतयोः देहे मनःप्राणात्मकद्वन्द्वभूतयोः सङ्गतयोः अवियोज्यतया एककार्यनिष्पत्ति-रतयोः यजमानजनसर्वानुभूतिसारनिष्पीडनार्थयोः अधिषवणफलकस्थानीययोः सतोरेव उलूखलभूते शरीरे रसोऽभिषुतो भवतीति जघन्ययोपमया अधिषवणफलकयोः द्यावापृथिव्योरिव द्वन्द्वता, अवियोज्यता सुसङ्गतत्वं च तल्लक्षितयोः प्राणमनसोः प्रतिपादितानि द्वितीयस्याम् । अन्तर्यजने चलति, यजमानस्य नरस्य सर्वसत्त्वगता शक्तिः सूर्यस्य प्रभेव स्वभावसिद्धा अवियोज्या उलूखलायमाने शरीरे रसनिष्पादनाय आरोहणावरोहणरूपगतिद्वयं जागरूकतयाऽन्ववेक्षते ।

एवमूर्ध्वस्थानादागमनं उपच्यवशब्दप्रतिपादितमवतरणं, शरीरमूलप्रदेशादूर्ध्वगमनं निर्गमनरूपं अपच्यवशब्दवाच्यं चेत्यनयोरुभयोः गमनं स्वायत्तीकरणाय ज्ञानं सम्पादयन्ती सैषा नारीशब्दवाच्या नरशक्तिर्गुप्तविद्यामन्तःशरीरे शिक्षत इति प्रतिपादितं तृतीयस्याम् । यथा बहिर्यागे आशिरमन्यनदण्डं भाण्डदार्ढ्याय विबध्नन्ति, तथा रहोयागेऽस्मिन् मनःप्राणसाङ्गत्यसिद्ध्या ज्ञानक्रियाशक्तिविलास-विशेषात् निष्पीड्यमानस्य सम्मदसोमरसस्य धारणार्थं देहे स्तब्धप्रायां स्थिरतामाधातुं अभिषवहेतुभिः देवताशक्तिविशेषैः पृष्ठवंशः अमृतमन्थनमन्दरवत् क्रियत इत्यावेदितं चतुर्थ्याम् । एवमृक्चतुष्टयं शरीरे सुतस्य शुद्धानन्दरसस्य अभिषवणसहकारिभूतानि साधनानि कर्माणि चोतवा, तत्तादृशं सोमं स्वीकुरु भगवनिन्द्रेति प्रार्थितं ऋषिणा ।

ततश्च ऋग्भिश्चतसृभिः अधिषवणीयकर्म प्रस्तौति । यस्मिन् फलकद्वये सोमो निष्पीड्यते तदधिषवणफलकद्वयम्, वनस्पतिशब्दव्यवहार्यं दारुमयत्वात् । अत्र प्रथमं द्वाभ्यामृग्भ्यां उलूखल-शब्दलक्षितं शरीरमेव प्रस्तूयते । अधिषवणफलकद्वयलक्षितयोः प्राणमनसोराधारभूतं हि शरीरम् । तच्च वानस्पत्यमेव भवति, कन्दमूलफलादिपरिणामत्वात्तस्य । यद्यपि 'गृहे गृहे' एकैकस्यापि मनुष्यस्य शरीरं युक्तं भवति, तथापि तच्छरीरं विशिष्टं यत्र सोमः सूयते, तस्माज्जयघोषो भवतु, हे देह, जडोऽपि त्वं सोमसूरसि, उपात्तज्ञानोऽसि चेति पञ्चम्यामृचि गीतम् । तव बलप्रदः कार्यसाधकः प्राण उत्तेजितो भवति पुरतः, तस्मात् सुनुहि सोमन्, विसृज सर्वानुभूतिसारभूतं

त्वयि निलीनं अत्यन्तगाढसान्द्रतमतमःप्रदेशेषु निमग्नं देवेभ्यो देयं रसमिति षष्ठ्यामुद्घोषितम् । अथ शारीरयोरत एव वनस्पत्योः प्राणमनसोः उच्चैर्विजृम्भमाणयोः बलसमृद्धयोः भोगशक्तिसम्पन्नयोः इन्द्राश्वतुल्यता प्रस्तुता सप्तम्याम् । महद्भिः स्थानोत्कर्षसम्पन्नैः सोमाभिषवहेतुभिः शक्तिविशेषैर्युक्तो युवां मधुमत्तमं इन्द्रपरिग्राह्यं सोमं सुनुतं इति बनस्पतिशब्दलक्षितयोः प्राणमनसोः सम्बोधनं अष्टम्याम् । शुद्धे देहे, सिद्धे पात्रे द्रोणकलशशब्दप्रतिपादिते सोमरसो निधीयतामिन्द्रार्थमिति नवम्यामन्त्यायाम् । तत्र च तथा शरीरकलशे अभिषुतरसस्थापनात् पूर्वं यत्कर्तव्यमुक्तं तच्चावधेयम् । 'चम्वोः' चमसपानवत् स्थितयोरधिषवणफलकलक्षितयोः प्राणमनसोः योऽवशिष्टः सोमस्तमाहृत्य शरीरादूर्ध्वं पवित्रे स्थाने शोधनाय क्षिप्त्वा चित्प्रकाशरश्मिलक्षिते गोः आवरणरक्षणभूते अन्नमयांशे चर्मणि निक्षिप्य शोधितं साधितं च रसं द्रोणकलशपदवेदनीयेऽन्नमये देहे स्थापयेदित्युक्तम् ॥

॥ इति प्रथमाष्टके द्वितीयाध्याये षड्विंशो वर्गः ॥

## ॥ अथ सप्तविंशो वर्गः ॥

(सूक्तम् २९)

### ऋक्संहिता पदपाठसहिता

(७ आजीगर्त्ति शुनःशेपः स कृत्रिमो वैश्वामित्रो देवराता ऋषिः । इन्द्रः । पङ्क्तिः)

**यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि । आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ १ ॥**

यत् । चित् । हि । सत्य । सोमऽपाः । अनाशस्ताःऽईव । स्मसि । आ । तू । न इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ १ ॥

### ऋग्भाष्यम्

**यत्सद्गुणाशस्ता इव स्मसि वयं ततः ।**
**शुभ्रवाङ्गनआदीनां विषयेऽस्मान्प्रशंसय ।**
**बहुवाच्यज्ञेययुक्तान्कृत्वाऽस्मांस्त्वं महामख ॥ १ ॥**

**ऋग्भाष्यटीका– यच्चिद्धि** । सप्तर्चमिदं सूक्तम् । आव इन्द्रमिति द्वाविंशत्यर्चम् । आद्येनोत्तरस्य च पञ्चदशभिरिन्द्रं तुष्टाव । यत्सत् । हे **सत्य** सद्गुण । **सोमपाः तुविमघ** महामख सर्वमखार्चनीय **इन्द्र! यत्** यस्मात् **चित्** एव । वयमिदानीम् । **अनाशस्ता इव** अस्तुत्या इव । **स्मसि** स्मः । अत्यन्ता प्रशस्तानीश्वरोऽपि न प्रशस्तान्करोतीतीवशब्दः । ततः कारणात् । त्वन्तु त्वमेव । **नो**ऽस्मान् **शुभ्रिषु** शुभ्रेषु । **सहस्रेषु** सहस्रसङ्ख्याकेषु । **गोष्वश्वेषु** च तद्विषये । **आशंसय** प्रशंसय लोकेनेति । बाह्ये स्फुटम् । अध्यात्मन्तु गौर्वाक् । अश्वा मन आदीनि ज्ञानेन्द्रियाणि । ततश्च शुभ्रवाङ्मनआदीनां विषयेऽस्मान्प्रशंसयेत्यर्थः । वागादीनां शुभ्रत्वं शुद्धत्वं भविष्यति । सहस्रत्वसम्पादनाय बहुवाच्येत्युक्तम् । ततश्च विषयद्वारकं वागादीनां सहस्रत्वमित्युक्तं भवति । बहवश्च परमात्मगुणादयः ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ **'यच्चिद्धि'** इति सप्तर्चं नवविंशमेकवर्गात्मकमैन्द्रं पाङ्क्तं सूक्तम् । (पङ्क्तिच्छन्दो देवता तु शची) (हे) सत्य, सद्गुण । सोमपाः । तुविमघ, महामख, सर्वमखार्चनीय । इन्द्र । यत् यस्मात् । चित्, एव । वयमिदानीम् अनाशस्ता इव, अस्तुत्या इव । स्मसि, स्मः । हि । अत्यन्ताप्रशस्तानीश्वरोऽपि नः प्रशस्तान्करोतीतीवशब्दः । ततः कारणात् (त्वम्) तु, त्वमेव । नः, अस्मान् शुभ्रिषु, शुभ्रेषु । सहस्रेषु, सहस्रसङ्ख्याकेषु । गोषु अश्वेषु (च), तद्विषये । आशंसय, प्रशंसय । (लोकेन) इति योज्यम् । अध्यात्मं तु गौर्वाक्, अश्वा मनआदीनि ज्ञानेन्द्रियाणि, ततश्च शुभ्रवाङ्मनसादीनां विषयेऽस्मान्प्रशंसयेत्यर्थः, वागादीनां शुभ्रत्वं शुद्धत्वं, तेषां सहस्रत्वं भगवद्गुणादिरूपविषयबाहुल्याज्ज्ञेयम् ।। १ ।।

**स्कन्द–** 'तं विश्वे देवा ऊचुः । इन्द्रो वै वेदानामोजिष्टो बलिष्टः सहिष्ठः सत्तमः पारयिष्णुतमस्तन्तु स्तुह्यथ त्वोत्स्रक्ष्याम इति । स इन्द्रं तुष्टाव' (ऐ.ब्रा.७-१६) । 'ऐन्द्रं यच्चिद्धि सत्येत्युत्तरं चाश्विनात्तृचात्' (बृ.दे.३-१०२) । 'आश्विनावश्वावत्या' (ऋ.१-३०, १७-१९) इत्येतस्मात् । यत् इति 'सुपां सुलुक्' (पा.सू.७-१-३९) इति पञ्चम्या लुक् । **चित् हि** इति पदपूरणे । यस्मात्ते **सत्य! सोमपाः!** सोमानां पातः! **अनाशस्ता इव** ईषच्छंसनं स्तुतिराशस्तम् । अविद्यमानमाशस्तं येषां ते अनाशस्ताः ईषत्स्तुतिवर्जिताः । अत्यन्तस्तुतिपरा भवन्त इत्यर्थः । इवशब्दस्तु 'अस्त्युपमानार्थस्य सम्प्रत्यर्थे प्रयोगः' (या.७-३१) इति

पदपूरणः । **स्मसि** भवामः । यस्मादत्यन्तं स्तुम इत्यर्थः । यस्मादिति वचनात् तस्मादित्य-ध्याहार्यम् । तस्मात् **आ नः शंसय** । **तु** इति पदपूरणः क्षिप्रार्थे वा । क्षिप्रमस्मानाशंसय प्रार्थयमानात् प्रार्थितसम्पादनेन प्रयुङ्क्ष्व । देहीत्यर्थः । हे **इन्द्र**! किम् । उच्यते । **गोषु अश्वेषु** द्वितीयार्थेऽत्र सर्वत्र सप्तमी । गाः अश्वांश्च । कीदृशान् । **शुभ्रिषु** शुभ्रिणः शोभावतः । शोभनान् इत्यर्थः । क्रियतः । **सहस्रेषु** सहस्रसङ्ख्याकान् हे **तुवीमघ**! बहुधन! ॥ १ ॥

**वेङ्कटमाधव– यत् सत्य** सोमस्य पातः! वयम् आशंसारहिता दरिद्रैरप्रार्थिता **इव** भवामः ततः अस्मान् बहुधन! दरिद्रः क्षिप्रम् **आ शंसय** गवादिषु त्वया दत्तेषु । शुभ्रिणः शोभायुक्ता इति । यद्वा स्तुतिरहितानाशंसय गवादिप्रदानेनेति ॥ १ ॥

**मुद्गल–** 'यच्चिद्धि' इति सप्तर्चं षष्ठं सूक्तम् । शुनःशेप ऋषिः । पङ्क्तिः छन्दः । इन्द्रो देवता ।

विश्वेभिर्देवेभिः प्रेरितः शुनःशेप एतदादिकाभिर्द्वाविंशतिसङ्ख्याकाभिः ऋग्भिरिन्द्रं तुष्टाव । हे **सोमपाः**! सोमस्य पातः! **सत्य**! सत्यवादिन्! **इन्द्र**! **यच्चिद्धि** यद्यपि वयम् अनाशस्ता इव स्मासि अप्रशस्ता इव भवामः । तथापि तुवीमघ हे बहुधन! इन्द्र! त्वं तु **गोषु अश्वेषु शुभ्रिषु** शोभनेषु **सहस्रेषु** सहस्रसङ्ख्याकेषु च निमित्तभूतेषु च क्षिप्रम् न अस्मान् **आ शंसय** प्रशस्तान् कुरु ॥ १ ॥

**सायण–** विश्वेभिर्देवेभिः प्रेरितः शुनःशेप एतदादिकाभिर्द्वाविंशतिसङ्ख्याकाभिः ऋग्भिरिन्द्रं तुष्टाव । तथाच ब्राह्मणं– 'तं विश्वे देवा ऊचुरिन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स इन्द्रं तुष्टाव यच्चिद्धि सत्य सोमपा इत्येतेन सूक्तेनोत्तरस्य च पञ्चदशभिः' (ऐ.ब्रा.७-१६) इति । हे **सोमपाः**! सोमस्य पातः! **सत्य**! सत्यवादिन्! **इन्द्र**! **यच्चिद्धि** यद्यपि वयम् अनाशस्ता इव स्मासि अप्रशस्ता इव भवामः । तथापि तुवीमघ हे बहुधन! इन्द्र! त्वं तु **गोषु अश्वेषु शुभ्रिषु** शोभनेषु **सहस्रेषु** सहस्रसङ्ख्याकेषु च निमित्तभूतेषु च क्षिप्रम् न अस्मान् **आ शंसय** प्रशस्तान् कुरु अस्मद्दोषमनपेक्ष्य गवादीन् प्रयच्छेत्यर्थः ।

सोमपाः । विजन्तः । आमन्त्रितनिघातः । अनाशस्ता इव । 'शंसु स्तुतौ' । 'निष्ठा'

इति भावे क्तः । 'यस्य विभाषा' इति इट्प्रतिषेधः । ना बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तर-पदान्तोदात्तत्वम् । स्मसि । 'इदन्तो मसि' । तू नः । 'ऋचि तुनुघ' इत्यादिना दीर्घः । गोषु । 'सावेकाचः' इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'न गोश्वन्साववर्ण' इति प्रतिषेधः । अश्वेषु । अश्नुतेऽध्वानमित्यश्वः । अशिपि' इत्यादिना क्वन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । शुभ्रिषु । 'शुभ दीप्तौ' । 'अदिशादिभूशुभिभ्यः क्रिन्' (उ.सू.४-५०५) इति क्रिन्प्रत्ययः । व्यत्ययेनान्तोदात्तत्वम् ॥ १ ॥

**सिद्धाञ्जनम्–** अथ षष्ठेऽनुवाके 'यच्चिद्धि सत्य सोमपा' इति सप्तर्चं षष्ठं सूक्तं शुनःशेपस्यार्षम् । पङ्क्तिश्छन्दः इन्द्रो देवता ।

हे **सोमपाः** सोमस्य पातः, **सत्य** स्वरूपेण सत्य, **यच्चिद्धि** यद्यपि वयं **अनाशस्ता इव** अप्रशस्ता इव, अश्रेष्ठा इव **स्मसि** भवामः, तथाऽपि हे **तुविमघ** बहुधन, (बहोर्विविधत्वं, घनस्य दिव्यत्वं च बोध्ये) **इन्द्र**, त्वं **गोषु** प्रज्ञारश्मिरूपेषु घनेषु निमित्तभूतेषु **अश्वेषु** भोगसमर्थक्रियाशक्तिसम्पन्नप्राणरूपेषु, तथा **शुभ्रिषु** शोभनेषु शिवङ्करेषु **सहस्रेषु** सहस्रविधेषु च योगक्षेमेषु निमित्तभूतेषु, **नः** अस्मान् **आशंसय** आशस्तान् कुरु, प्रशस्तान् विधेहि । अनाशस्ताः- 'शंसु स्तुतौ', निष्ठेति भावे क्तः । स्मसि- इदन्तो मसिः । तु– ऋचि दीर्घः । शुभ धातोः क्रिन् प्रत्ययः ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**शिप्रिन्वाजानां पते शचीवस्तव दंसना । आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ २ ॥**

शिप्रिन् । वाजानाम् । पते । शचीऽवः । तव । दंसना । आ । तू । न इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ २ ॥

## ऋग्भाष्यम्

**सुखिन्नन्नपते वाग्ज्ञ तव कर्माणि सर्वशः ॥ २ ॥**

ऋग्भाष्यटीका– शिप्रिन् । सुखिन् । हे **शिप्रिन्** सुखिन् । **वाजानां पते**ऽन्नपते । **शचीवः**

शचीति वाङ्नाम । तद्वत्त्वं च तत्प्रयोगादिज्ञत्वेन । वागृज्ञ । **दंसना** दंसनानि । सर्वशो लोकस्य कर्माणि । तव त्वत्प्रेरितानि त्वद्विषयाणि च । स एवंविधस्त्वम् **आ तू नः** ।। २ ।।

**मन्त्रार्थमञ्जरी–** (हे) **शिप्रिन्,** सुखिन् । वाजानाम्, अन्नानाम् । पते । शचीवः, 'शची' इति वाङ्नाम (वै०नि०१।११), शचीवन्, तद्वत्त्वं च तत्प्रयोगादिज्ञत्वेनेति वागभिज्ञ, 'मतुवसो रुः सम्बुद्धौ छन्दसि' इति 'शचीवः' इति साधु । दंसना, दंसनानि, सर्वलोककर्माणि । तव, त्वत्प्रेरितानि त्वद्विषयाणि च । (सः) एवंविधस्त्वम् । 'आ तू नं इन्द्र' इत्यादि पूर्ववत् ।। २ ।।

**स्कन्द–** शिप्रे हनू नासिके वा । तद्वन्! अथवा 'शिप्राः शीर्षसु वितता हिरण्ययीः' (ऋ.५-५४-११) इति प्रयोगदर्शनात् शिप्राशब्दः शिरस्त्राणवचनः । तद्वन्! **वाजानां पते!** बलानामन्नानां वा स्वामिन् । **शचीवः!** कर्मवन् ! प्रज्ञावन्! वा **तव दंसना** 'दंसि दर्शनदंसनयोः' । दर्शना । का । स्त्रीलिङ्गनिर्देशाद् वाक् स्तुतिर्वा अस्मासु । यत एवम् अतो ब्रूमः । **आ तू नः इन्द्र** इत्याद्युक्तार्थम् ।। २ ।।

**वेङ्कटमाधव–** हनूमन्! अन्नपते! प्रज्ञावन्। तव विद्यते कल्याणं कर्मेति ।। २ ।।

**मुद्गल–** हे **शचीवः!** शक्तिमन् । **शिप्रिन्!** शोभनहनूयुक्त! **वाजानां पते!** अन्नानां पालक! **इन्द्र!** तव **दंशना** कर्मविशेषोऽनुग्रहरूपः सर्वदा वर्तते ।। २ ।।

सायण– हे **शचीवः!** शक्तिमन् । **शिप्रिन्!** शोभनहनूयुक्त! **वाजानां पते!** अन्नानां पालक! **इन्द्र!** तव **दंशना** कर्मविशेषोऽनुग्रहरूपः सर्वदा वर्तते । अन्यत् पूर्ववत् ।

शिप्रिन् । 'शिप्रे हनू नासिके वा'(निरु.६-१७) इति यास्कः । 'अत इनिठनौ' इति मत्वर्थीय इनिः । आमन्त्रिताद्युदात्तत्वम् । वाजानां पते । 'सुबामन्त्रिते' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायनिघातः । न च 'आमन्त्रितं पूर्वमविद्यमानवत्' इति शिप्रिन् इत्यस्य अविद्यमानवत्वेन पदादपरत्वात् पादादित्वाच्च न निघातः 'नामन्त्रितं समानाधिकरणे सामान्यवचनम्' इति अविद्यमानवत्वप्रतिषेधात् । शचीवः । 'छन्दसीरः' इति मनुपो वत्वम् । 'मतुवसो रुः' इति रुत्वे 'खरवसानयोर्विसर्जनीयः' (पा.सू.८-३-१५) पादादित्वात् आमन्त्रितनिघाताभावः ।। २ ।।

**सिद्धाञ्जनम्–** हे **शिप्रिन्** शोभनशिप्रयुक्त, शिप्रशब्दो हनूपर्यायः, शिप्रेण मुखं लक्ष्यते । **शचीवः** शक्तिमन्, शची शक्तिः कर्मनाम, मतुपो वः छन्दसि । **वाजानां पते** समृद्धीनां पालक, तव **दंसना** क्रिया दृष्टिर्वा, सर्वसमर्थेति शेषः । तस्मादस्मान् आशंसयेत्युत्तरार्धेण सङ्गच्छते । अन्यत् प्राग्वत् । दंसना 'दंसि दंसनदर्शनयोः', स्त्रीलिङ्गनिर्देशात् वाक् इति स्कन्दस्वामी ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**नि ष्वा॑पया मिथू॒दृशा॑ स॒स्तामबु॑ध्यमाने । आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शु॒भ्रिषु॑ स॒हस्रे॑षु तुवीमघ ॥ ३ ॥**

**नि । स्वा॒प॒य॒ । मि॒थु॒ऽदृशा॑ । स॒स्ताम् । अबु॑ध्यमाने॒ इति॑ । आ । तु । न॒ इन्द्र । शं॒स॒य॒ । गोषु॑ । अश्वे॑षु । शु॒भ्रिषु॑ । स॒हस्रे॑षु । तु॒वि॒ऽम॒घ॒ ॥ ३ ॥**

## ऋग्भाष्यम्

**दैत्यरक्षःप्रजे मिथ्यादृशौ सस्तां पुनर्बहु ।**
**अबुध्यमाने नित्यं च यथा निष्वापयेश्वर ॥ ३ ॥**

**ऋग्भाष्यटीका– नि ष्वापय** । दैत्य । हे **इन्द्र!** ईश्वर । **मिथुदृशा** मिथु इति निपातो मिथ्यार्थे मिथ्यादृशौ । सामर्थ्याद्दैत्यरक्षः प्रजे । सस्तां 'षस स्वप्ने' । अज्ञानितन्यौ भवताम् । मिथ्यादृशोस्तत्प्रार्थनं व्यर्थमित्यत उक्तं पुनर्बह्विति । कथम् । यथानित्यं च **अबुध्यमाने** भवतस्तथा त्वं तान्निष्वापय । किञ्च आतूनः ॥ ३ ॥

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र, ईश्वर । मिथुदृशा, 'मिथु' इति निपातो मिथ्यार्थे, मिथ्यादृशौ, सामर्थ्यात् दैत्यरक्षःप्रजे । सस्ताम्, 'षस स्वप्ने' अज्ञानिन्यौ भवताम् । कथम्? यथा नित्यं च अबुध्यमाने भवतस्तथा त्वं ते प्रजे नि ष्वा (स्वा)पय, नितरां स्वापय । किं च, 'आ तू न॑' इत्यादि ॥ ३ ॥

**स्कन्द–** मुमूर्षुः किल विकृतरूपाणि प्रेतपिशाचानि मिथुनानि पश्यति । तदभावमत्र शुनश्शेप आशास्ते । **नि स्वापय** अस्मद्दर्शनपरिहारार्थं नियमेन स्वापय । **मिथूदृशा** मिथुनीभूते ये दृश्येते

ते मिथूदृशा । प्रेतः पिशाचो वा पुमान् स्त्री च । ते च **सस्ताम्** स्वप्नं कुरुताम् । **अबुध्यमाने** प्रतिबोधवर्जिते । किञ्च **आ तू नः** इत्याद्युक्तार्थम् ॥ ३ ॥

**वेङ्कटमाधव–** मुमूर्षुः प्राणहरणार्थं यमादागते मिथुनीभूते दृश्यमाने द्वे स्त्रियौ पश्यति । ते त्वम् इन्द्र! **नि स्वापय** । त्वया निष्वापिते ते मया **अबुध्यमाने सस्ताम्** स्वपिताम् ॥ ३ ॥

**मुद्गल– मिथूदृशा** परस्परसङ्गतत्वेन दृश्यमाने यमदूत्यौ **नि स्वापय** नितरां सुप्ते कुरु । ते च अस्मान् मारयितुम् **अबुध्यमाने** सत्यौ **सस्ताम्** निद्रां प्राप्नुताम् । अन्यत पूर्ववत् ॥ ३ ॥

**सायण– मिथूदृशा** परस्परसङ्गतत्वेन दृश्यमाने यमदूत्यौ **नि स्वापय** नितरां सुप्ते कुरु । ते च अस्मान् मारयितुम् **अबुध्यमाने** सत्यौ **सस्ताम्** निद्रां प्राप्नुताम् । अन्यत पूर्ववत् ।

नि ष्वापय । सुपामादित्वात् षत्वम् (पा.सू.८-३-९८)। 'अन्येषामपि दृश्यते' इति दीर्घः । मिथुनतया युगलरूपेण पश्यतः इति मिथूदृशा । 'क्विप् च' इति शेः कर्तरि क्विप् । कृदुत्तर-पदप्रकृतिस्वरत्वम् । पूर्ववत् पूर्वपदस्य दीर्घः । 'सुपां सुलुक्' इति विभक्तेः आकारः। सस्ताम् । 'षस स्वप्ने' । लोटि तसस्ताम् । 'अदिप्रभृतिभ्यः' इति शपो लुक् । प्रत्ययस्वरः । पादादित्वात् निघाताभावः । अबुध्यमाने । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ३ ॥

**सिद्धाञ्जनम्–** अस्मिन् 'मिथूदृशा' 'गर्दभं' 'कुण्डृणाच्या' 'कृकदाश्वं' इति परोक्षवचनानि प्रयुक्तान्यवधेयानि । **मिथूदृशा** मिथुनतया परस्पराश्रयसम्बद्धत्वेन दृश्यमाने द्वन्द्वभूते अहोरात्रवत् तमःप्रकाशवत् अवतिष्ठमाने इत्यर्थः, **नि ष्वापय** नितरां सुप्ते कुरु । ते च **अबुध्यमाने** बोधशून्ये भूत्वा **सस्तां** निद्रां गच्छताम् । अन्यत् प्राग्वत् । मिथूदृशा– मिथू इति मिथुनस्य छान्दसं रूपम्, दृशः क्विप्, मिथूदृक् द्विवचनम् । सस्ताम्– 'षस स्वप्ने' लोट्, छान्दसो धातुः । 'उत त्ये देवी सुभगे मिथूदृशोषासानक्ता' (१-३१-५) इत्यत्र पर्यायेण परस्परदृशौ दिनं रात्रिश्चेति स्पष्टमाह मन्त्रः । अस्यामृचि अहोरात्र-निद्राजागरणादि-द्वन्द्ववशगो मा भूवं इति विवक्षया द्वन्द्वभूतं सर्वं निर्व्यापारं अवतिष्ठतामिति प्रार्थयते मन्त्रद्रष्टा ॥ ३ ॥

## ऋक्संहिता पदपाठसहिता

**ससन्तु त्या अरातयो बोधन्तु शूर रातयः ।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ।। ४ ।।**

ससन्तु । त्याः । अरातयः । बोधन्तु । शूर । रातयः । आ । तू । न इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ।। ४ ।।

## ऋग्भाष्यम्

**स्वपन्तु ते शत्रवस्ते सर्वदाऽज्ञानमोहिताः ।**
**बोधन्तु चैव मित्राणि तव रूपं सुनिर्भयम् ।। ४ ।।**

**ऋग्भाष्यटीका– ससन्तु** । स्वपन्तु । हे **शूर** । त्यास्ताः । व्यत्ययेन ते प्रसिद्धाः । **अरातयः** ते तव शत्रवः । **ससन्तु** स्वपन्तु सर्वदाऽज्ञानमोहिता भवंत्विति यावत् । किञ्च । **रातयः** तव मित्राणि **बोधन्त्वेव** जानंत्वेव । तव रूपमिति शेषः । शूरेति सम्बोधनस्य तात्पर्यं **सुनिर्भयमिति** ।। स्वार्थमेव वा **त्या** इति स्त्रीलिङ्गमिति ज्ञापनाय प्रजाशब्दः प्रागुक्तः । अन्यथा दैत्यरक्षसी इत्यवक्ष्यत् । किञ्च । आतूनः ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (हे) शूर । त्याः, ताः, व्यत्ययात् ते, प्रसिद्धाः । अरातयः, तव शत्रवः । समन्तु, स्वपन्तु, 'षस स्वप्ने' सदाज्ञानमोहिता भवन्त्विति यावत् । किं च, रातयः, तव मित्राणि । बोधन्तु (एव) जानन्त्वेव । (तव रूपम्) इति शेषः । किं च, 'आ तू न' ।। ४ ।।

**स्कन्द–** 'तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहार्यः । ये जाग्रतो मां मुच्यमानं नेच्छन्ति । **ससन्तु** स्वपन्तु । **त्याः अरातयः** अरातिशब्दः शत्रुपर्यायः, तस्य च पुल्लिङ्गत्वाख्या इति व्यत्ययेन ढाप् । ते मच्छत्रवः । **बोधन्तु** युध्यन्ताम् । हे **शूर!** रातयः ज्ञातयः ये मां मुच्यमानमिच्छन्तीत्यर्थः । श्रमवा अरातय इत्यदानान्यत्रोच्यन्ते । न रातयो दानानि । स्वपन्तु श्रव्यापाराणि भवन्तु । यानि तु मदायुषो दानानि, तानि बुध्यन्तां व्याप्रियन्ताम् । सदा देहि म आयुरित्यर्थः । किञ्च **आ तू नः** इत्याद्युक्तार्थम् ।। ४ ।।

**वेङ्कटमाधव–** स्वपन्तु **त्याः** अज्ञातयः, बुध्यन्तु च **शूर!** ज्ञातयः ॥ ४ ॥

**मुद्गल–** **त्याः** अस्माभिर्दृश्यमानाः परोक्षास्ताः **अरातयः** अदानशीलाः शत्रवः **ससन्तु** निद्रां कुर्वन्तु । हे **शूर! इन्द्र! रातयः** दानशीलाः बन्धवः **बोधन्तु** युध्यन्ताम् । अन्यत् पूर्ववत् ॥ ४ ॥

**सायण–** **त्याः** अस्माभिर्दृश्यमानाः परोक्षास्ताः **अरातयः** अदानशीलाः शत्रवः **ससन्तु** निद्रां कुर्वन्तु । हे **शूर! इन्द्र! रातयः** दानशीलाः बन्धवः **बोधन्तु** युध्यन्ताम् । अन्यत् पूर्ववत् ।

ससन्तु । प्रत्ययस्वरः । अरातयः । 'रा दाने' । 'मन्त्रे वृष' इत्यादिना भावे क्तिन् । न विद्यते रातिः एष्विति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । 'नञ्सुभ्याम्' इति तु 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति न भवति । यद्वा । 'क्तिचूक्तौ च संज्ञायाम्' इति कर्तरि क्तिच् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । बोधन्तु । पादादित्वात् 'तिङ्ङतिङः' इति निघाताभावः ॥ ४ ॥

**सिद्धाञ्जनम्–** **त्याः** ताः परोक्षाः अस्माकं न प्रत्यक्षभूता अपि वर्तमाना एव **अरातयः** अदानशीलाः अयज्वशक्तयः, यजनविरोधिनो मानुषा अमानुषा वेत्यर्थः, **ससन्तु** निद्रां प्राप्नुवन्तु, निर्व्यापारतां गच्छन्त्वित्यर्थः । हे **शूर** शौर्ययुक्त, **रातय** दानशीलाः तद्विपरीता अत एवानुकूलाः **बोधन्तु** जागरिता भवन्तु, अस्मदानुकूल्याय प्रवृत्ता भवन्तु । अन्यत् पूर्ववत् ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**समिन्द्र गर्दभं मृण नुवन्तं पापयामुया । आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ५ ॥**

सम् । इन्द्र । गर्दभम् । मृण । नुवन्तम् । पापया । अमुया । आ । तू । न इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ५ ॥

## ऋग्भाष्यम्

**पापया मायया मिथ्या स्तुवन्तं त्वामपि प्रभो ।**
**मायामयास्तव गुणा न सन्ति परमार्थतः ।**

**इति नित्यं रुवन्तं च मायावाद्याख्यगर्दभम् ।**
**संचूर्णय तमस्येव क्षिप्त्वा तप्ताश्मभिः सदा ॥ ५ ॥**

**ऋग्भाष्यटीका– समिन्द्र** । पापया । हे **इन्द्र!** प्रभो । **गर्दभं** दुर्वाक्त्वादिसाम्यान्माया-वाद्याख्यं गर्दभम् । **सं मृण** हिंसार्थोऽयम् । तमस्येव क्षिप्त्वा तप्ताश्मभिः सदा संचूर्णय । कथं भूतम् । **नुवन्तं** त्वां स्तुवन्तमपि । स्तुवतो हिंसानुपपन्नेति च न वाच्यम् । **पापयाऽमुया** माययेति शेषः । मायया स्तुतिं विवृणोति । **मिथ्येति** ॥ शाठ्येनेत्यर्थः । प्रकारान्तरेण मायया **नुवन्तमित्येतद्व्याख्याति । मायामया इति** ॥ ततश्च मायामाश्रित्येत्यर्थः । अनेन दयाशील देव प्रसीदेत्यादिस्तुतेः शाठ्यमूलत्वं निराकारमोंकारगम्यमित्यादि रवणस्यास्तुतित्वमुक्तं भवति । किञ्च । आतूनः ॥ ५ ॥

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । गर्दभम्, दुर्वाक्त्वादिसाम्यान्मायावाद्याख्यगर्दभम् । पापया अमुया । (मायया) इति शेषः, शाठ्येनेति यावत् । नुवन्तम्, स्तुवन्तमपीत्यर्थः, यद्वा 'मायामयास्तव गुणाः' (ऋ०भा० इत्यादिरूपेण नुवन्तं रुवन्तम् । सम् मृण, 'मृण हिंसायाम्', तमस्येव क्षिप्त्वा तप्ताश्मभिः सदा सञ्चूर्णय, एतेन 'दयाशील देव प्रसीद' (शिवभुजङ्गप्रयातस्तोत्रम् ८) इत्यादिस्तुतेः शाठ्यमूलत्वं 'निराकारमोंकारगम्य (वेद्य)म्' (वेदसारशिवस्तवः ५) इत्यादिरवणस्यास्तुतित्वमुक्तं भवति, अनाद्यनिर्वाच्यपापभूतमायामाश्रित्यानेकमानसिद्धभगवद्गुण-सत्यजगत्कारणत्वचिदानन्दादिदिव्यमहामहिम्नोऽपलापादिति भावः ॥ किं च, 'आ तू न' ॥ ५ ॥

**स्कन्द–** हे **इन्द्र! गर्दभम् सम् मृण** 'मृण हिंसायाम्' । भिन्धि । **नुवन्तम्** शब्दं कुर्वन्तम् । आरटन्तमित्यर्थः । **पापया अमुया** स्त्रीलिङ्गनिर्देशाद् वाचा । गर्दभोऽपि विस्वरमारटन्न-निष्टस्य सूचकः । तेनायं तदवघात आशास्यते । किञ्च **आ तू नः** इत्याद्युक्तार्थम् ॥५॥

**वेङ्कटमाधव– सम् मृण इन्द्र!** गर्दभम् शब्दायमानम् **पापया** अनया वाचा ॥ ५ ॥

**मुद्गल–** हे **इन्द्र! अमुया** अनया अस्माभिः श्रूयमाणया **पापया** निन्दारूपया वाचा **नुवन्तम्** स्तुवन्तम् । अपकीर्तिं प्रकटयन्तमित्यर्थः । तादृशम् **गर्दभम्** गर्दभसमानं वैरिणम् **सम् मृण** सम्यक् मारय । यथा गर्दभः श्रोतुमशक्यं परुषं शब्दं करोति तथा शत्रुरपि । अन्यत् पूर्ववत् ॥ ५ ॥

**सायण–** हे इन्द्र! **अमुया** अनया अस्माभिः श्रूयमाणया **पापया** निन्दारूपया वाचा **नुवन्तम्** स्तुवन्तम् । अपकीर्तिं प्रकटयन्तमित्यर्थः । तादृशम् **गर्दभम्** गर्दभसमानं वैरिणम् **सम् मृण** सम्यक् मारय । यथा गर्दभः श्रोतुमशक्यं परुषं शब्दं करोति तथा शत्रुरपि । अन्यत् पूर्ववत् ।

'नर्द गर्द शब्दे' । 'कॄगॄशॄशलिगर्दिभ्योऽभच्' (उ.सू.३-४०२) । 'चितः' इत्यन्तोदात्तत्वम् । मृण । 'मृण हिंसायाम्' । तौदादिकः । शस्य ङित्त्वात् गुणाभावः । नुवन्तम् । 'णु स्तुतौ' । शतरि अदिप्रभृतित्वात् शपो लुक् । शतुर्ङित्त्वात् गुणाभावे उवङादेशः । प्रत्ययाद्युदात्तत्वम् ॥ ५ ॥

**सिद्धाञ्जनम्–** हे इन्द्र! **अमुया** अनया श्रूयमाणया **पापया** अनृतविद्धया बाह्याभ्यन्तर-संवादशून्यया अत एव अपस्वरकठोरया वाचा **नुवन्तं** त्वां स्तुवन्तं **गर्दभं** गर्दभवद् अज्ञप्रायं स्तोत्रशब्दमात्रभारवाहिनं अवशजडगतिकं व्यर्थविपरीतार्थविरसं वा पामरसामान्यमनोरूपं **सं मृण** सम्यङ्मारय । आ त्वित्यादि पूर्ववत् । 'मृण हिंसायाम् । तुदादिः ॥ ५ ॥

## ऋक्संहिता पदपाठसहिता

**पताति कुण्डृणाच्या दूरं वातो वनादधि । आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ६ ॥**

पताति । कुण्डृणाच्या । दूरम् । वातः । वनात् । अधि । आ । तू । न इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ६ ॥

## ऋग्भाष्यम्

**दूरं च पातयत्वेनान्वायुस्तस्मिंस्तमस्यधः ।**
**वनं दृढग्रहेणैव तत्तमो वेदनोल्बणा ।**
**कुण्डृणाचीति सम्प्रोक्ता कुण्डान्नीचत्वतोऽधिकम् ।**
**कुम्भः कुण्डाभिधः कुम्भीपाकान्नीचा हि तद्गतिः ।**
**रेफः स्वरव्यत्ययश्च तदाधिक्यार्थमीरितौ ॥ ६ ॥**

**ऋग्भाष्यटीका– पताति** । दूरं च । किञ्च । **वातो** वायुदेवः एनान्प्रकृतांस्त्वन्निन्दकान् वनात् वने । **कुण्डृणाच्या** कुण्डृणाच्याम् । तस्मिन् प्रसिद्धे अन्धेतमसीति यावत् । **दूरं** दूरात् । **अधिपताति** अन्तर्णीतण्यर्थाल्लेट् । पातयतु च । किञ्च । आतूनः । कथं तमो वनमित्यत आह । **वनमिति** ।। वनतिः सम्भजनार्थः । सम्भजनं च दृढग्रहः । वियोगाभावः । अतस्तत्तमो दृढग्रहेण वनमित्युच्यते । कुण्डृणाचीशब्दस्य सनिमित्तमभिधेयमाह । **एवेति** ।। तत्तम एवोल्बणावेदना कुण्डृणाचीति सम्प्रोक्ता । स्त्रीलिङ्गसम्पादनाय वेदनोल्बणेत्युक्तम् । कुतः कुण्डान्नीचत्वतः । कःकुण्डः कुतश्च तमसस्ततो नीचत्वमित्यत आह । **कुम्भ इति** ।। कुम्भः कुम्भीपाकः । हीति 'रौरवोऽथ महानित्यादि' वाक्यप्रसिद्धिं दर्शयति । तद्गतिस्तेषां निन्दकानां गतिस्तमः । एवं तर्हि कुण्डनीचेति भवितव्यं कुण्डृणाचीति कथमित्यत आह । **रेफ इति** ।। अत्र रेफशब्देन श्रुतिसाम्यादृकार उच्यते । कुण्डशब्देऽकारस्य ऋकारः नीचेत्यत्र रवरयोरीकाराकारयोर्व्यत्ययश्च तस्य कुम्भीपाकान्नीचत्वस्याधिक्यज्ञापनार्थं प्रयुक्तौ अत एव प्रागधिकमित्युक्तम् ।। ६ ।।

**मन्त्रार्थमञ्जरी–** वातः, वायुदेवः । (एनान्) प्रकृतांस्त्वन्निन्दकान् । वनात्, वने, वनति सम्भजति स्वस्मिन्पतितं सर्वथा न मुञ्चतीति वनाख्ये । कुण्डृणाच्या, कुण्डृणाच्याम्, कुम्भीपाकादपि नीचत्वेन प्रसिद्धेऽन्धे तमसीति यावत् । दूरम्, दूरात् । अधि 'पताति' इत्यन्तर्णीतण्यर्थाल्लेट्, 'लेटोऽहाटौ' पातयतु । (च) किं च, 'आ तू न' कुण्डशब्दितात्कुम्भीपाकान्नीचा गतिः (कुण्डनीचा), कुण्डनीचैव कुण्डृणाची, ईकाराकारव्यत्ययोऽधिकदुःखद्योतनार्थः, पूर्वपदस्य ऋकारश्च ।। ६ ।।

**स्कन्द–** अर्धर्चान्त्योऽधिशब्दोऽपकृष्य पताति इत्याख्यातेन सम्बन्धयितव्यः । **अधि पताति** । 'अधीत्युपरिभावे' (या.१-३) । उपरि पतति । ऊर्ध्वं गच्छतीत्यर्थः । किम् । **कुण्डृणाच्या** अञ्चतिर्गत्यर्थः । कुण्डाकारा भूत्वाऽञ्चतीत्यर्थः । कुण्डृणाची वात्या । तृतीया च प्रथमार्थे । **दूरम् वातः वनात्** वनमरण्यम् । वातोऽरण्याद् दूरं पतति तिर्यग् गच्छति । औचित्यप्रदर्शनं चास्यार्धर्चस्य उत्तरेणैकवाक्यता । एतदुक्तं भवति– यथैव वात्याया ऊर्ध्वगमनमुचितं भवति वायोश्च तिर्यग्गमनम् एवं भवतोऽपि स्तोत्रानुग्रहकारणमेव । किञ्च **आ तू नः** इत्याद्युक्तार्थम् ।

अथवा कुण्ड्येऽश्नतीति कुण्डृणाची कुड्यचरी गृहगोधिकोच्यते । घरोविकलेति याऽपभ्रंशेन लोके प्रसिद्धा । तथाह्यश्वमेघपशुषु गरगोलिकायामस्य प्रयोगः 'कुण्डृणाची गोलतिका अप्सरसाम्' (तै.सं.५,५,१६,१) इति । साऽधिपताति ऊर्ध्वं गच्छति । या कुड्ये चङ्क्रम्यत इत्यर्थः । तस्या हि कृष्णाया दर्शनमनिष्टस्य सूचकम् । तदनेन प्रतिपादयति– वातश्च वनाद् दूरं गच्छति । मां स्वप्न आदायेति वाक्यशेषः । तद्धि मुमूर्षोर्भवति । तथा ह्यचिरमरणस्वप्नानधिकृत्य श्रुतिर्भवति– 'आशु वायुरेनं प्रवहति' इति । एताभ्यां द्वाभ्यां लिङ्गाभ्यामासन्नमरणतया मां ज्ञात्वा अनुग्राहकस्वभावत्वात् आ तू नः इन्द्र! किम् । सामर्थ्यादायुर्देहीत्यर्थः । न च केवलमायुः । किं तर्हि । गोषु अश्वेषु शुभ्रिषु सहस्रेषु इत्यादिकमुक्तार्थम् ॥ ६ ॥

**वेङ्कटमाधव–** कुण्डृणाची नाम पक्षी । तेन सह अरण्यात् दूरम् मत्समीपम् आपतति वायुः ॥ ६ ॥

**मुद्गल– वातः** अस्मत्प्रतिकूलो वायुः **कुण्डृणाच्या** कुटिलगत्या अस्मान् परित्यज्य **वनात् अधि** अरण्यादप्यधिकम् **दूरम्** दूरदेशम् **पताति** पततु । अन्यत् पूर्ववत् ॥ ६ ॥

**सायण– वातः** अस्मत्प्रतिकूलो वायुः **कुण्डृणाच्या** कुटिलगत्या अस्मान् परित्यज्य **वनात् अधि** अरण्यादप्यधिकम् **दूरम्** दूरदेशम् **पताति** पततु । अन्यत् पूर्ववत् ।

पताति । लेटि आडागमः । कुण्डृणाच्या । 'कुति दाहे' । अस्मात् ल्युडन्ते कुण्डनशब्दे डकारात् परस्य अकारस्य ऋकारश्छान्दसः । 'अवर्णाच्चेति वक्तव्यम्' इति णत्वम् । तत् अश्नतीति कुण्डृणाची । 'ऋत्विक्' इत्यादिना किन् । 'अनिदिताम्' इति नलोपे 'अश्नतेश्चेति वक्तव्यम्' (पा.सू.४-१-६.२) इति ङीप् । 'अचः' (पा.स.६-४-१३८) इति अकारलोपः । 'चौ' (पा.सू.६-३-१३८) इति पूर्वपदस्य दीर्घत्वम् । 'चौ' (पा.सू.६-१-२२२) इति आकारस्योदात्तत्वम् ॥ ६ ॥

**सिद्धाञ्जनम्– वातः** अस्मत्प्रतिकूलः वायुः कुण्डृणाच्या गरगोलिकया, वनचरीविशेषः, कुण्डृणाची, तया सह **वनात् अधि** वनादधिकं ऊर्ध्वं वा दूरं **पताति** पततु । अन्यत् व्याख्यातम् । कुण्डृणाच्या कुटिलगत्या इति सायणः । कुडि दाहे, अतो ल्युट् कुण्डनम्, डकारात् परस्य अकारस्य ऋकारश्छान्दसः, एवं कुण्डृणं तदश्नतीति कुण्डृणाचीति सायणः । ऋचस्तात्पर्य-

मेवंविधं भवति । कुण्डृणाचीति परोक्षवचनं पूर्वचि गर्दभवत् । इयं च वनचरी कृकलासजातिः । गृहे अस्याः दर्शनं अनिष्टमाहुः । अनिष्टापादनदुष्टशक्तिविशेषोपलक्षणमिदं कुण्डृणाचीपदम् । अस्मत्प्रतिकूलः सर्वोऽपि वातः स्वावासमरण्यप्रदेशं गच्छतु कुण्डृणाच्या वनचर्या सहेति भावः । अन्यत् पूर्ववत् ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**सर्वं परिक्रोशं जहि जम्भया कृकदाश्वम् । आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ७ ॥**

सर्वम् । परिऽक्रोशम् । जहि । जम्भय । कृकदाश्वम् । आ । तू । न इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ७ ॥

## ऋग्भाष्यम्

**सर्वं परिक्रोशकरं पापिनं जहि जम्भय ।**
**दंशय श्वादिभिर्नित्यं क्रकचैर्दंशनं यथा ॥ ७ ॥**

**ऋग्भाष्यटीका– सर्वम्** । हे **इन्द्र! परिक्रोशं** परिक्रोशकरं निन्दकम् । **सर्वं** पापिनं जनं **जहि** । **जम्भय** श्वादिभिर्नित्यं दंशय । कथम् । **कृकदाश्वं** कृकाः क्रकचाः तैर्दाश्वं दंशनम् । क्रकचैर्दारुणो दंशनं यथेति शेषः । किञ्च । आतूनः ॥ ७ ॥

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । परिक्रोशम्, परिक्रोशकरम्, निन्दकम् । सर्वम् (पापिनम्) जहि । जम्भय, श्वादिभिर्नित्यं दंशय । कथम्? कृकदाश्वम्, कृकाः क्रकचास्तैर्दाश्वं दंशनम्, क्रकचैर्दारुणं दंशनम् । (यथा) इति शेषः, तथेत्यर्थः ॥ ७ ॥

**स्कन्द–** अनिष्टं यत् सूचयति तत् सर्वम् त्वं शृगालवायसादिकम् **जहि** । किञ्च **जम्भय** जभि नाशने । नाशय **कृकदाश्वम्** । कृकलासः कृकदाश्व उच्यते । तस्य दर्शनमनिष्टस्य सूचकम् । किञ्च आ तू नः इत्याद्युक्तार्थम् ॥ ७ ॥

**वेङ्कटमाधव–** अन्यमपि **सर्वम्** परिक्रोष्टारं वृकादिकं नाशय, जम्भयोश्च कुरु कृकलासम् । **आ तू न इन्द्र!** इति ॥ ७ ॥

**मुद्गल– परिक्रोशम्** अस्मद्विषये सर्वत आक्रोशकर्तारम् **सर्वम्** पुरुषम् **जहि** मारय । **कृकदाश्वम्** अस्मद्विषये हिंसाप्रदं शत्रुम् **जम्भय** मारय । अन्यत् पूर्ववत् ।। ७ ।।

**सायण– परिक्रोशम्** अस्मद्विषये सर्वत आक्रोशकर्तारम् **सर्वम्** पुरुषम् **जहि** मारय । **कृकदाश्वम्** अस्मद्विषये हिंसाप्रदं शत्रुम् **जम्भय** मारय । अन्यत् पूर्ववत् ।

परिक्रोशम् । 'क्रुश आह्वाने' । परितः क्रोशयतीति परिक्रोशः । पचाद्यच् । कृदुत्तरपदप्रकृति-स्वरत्वम् । जहि । 'हन हिंसागत्योः' । 'हन्तेर्जः' (पा.सू.६-४-३६) इति जादेशः । तस्य 'असिद्धवदत्रा भात्' इति असिद्धत्वात् 'अतो हेः' इति हेर्लुक् न भवति । जम्भय । 'जभि नाशने' । चुरादित्वात् स्वार्थिको णिच् । शपः पित्त्वादनुदात्तत्वे णिच एव स्वरः शिष्यते । कृकदाश्वम् । 'कृञ् हिंसायाम्' । 'कृदाधारार्चिकलिभ्यः कन्' (उ.सू.३-३२०) इति भावे कन्प्रत्ययः । 'कित्' इत्यनुवृत्तेः गुणाभावः । तथा च कृको हिंसा तां दाशति प्रयच्छतीति कृकदाशुः । बहुलग्रहणात् दाशतेरपि कृके उपपदे 'कृके वचः कश्च' (उ.सू.१-६) इति उण् । प्रत्ययस्वरेणोदात्तः । द्वितीयायाम् अमिपूर्वत्वे प्राप्ते 'वा छन्दसि' इति तस्य बाधितत्वात् यणादेशः । 'उदात्तस्वरितयोर्यणः' इति विभक्तेः स्वरितत्वम् ।। ७ ।।

**सिद्धाञ्जनम्– सर्वं** सर्वविधं परिक्रोशं सर्वतः आक्रोशकर्तारं दुष्टशक्तिविशेषं (क्रुश आह्वाने परितः क्रोशयतीति परिक्रोशः, पचाद्यच्) **जहि** मारय (हन्तेः लोट्, जहि आदेशः) **कृकदाश्वं** कृको हिंसा तां दाशति ददाति यथाभागं मानुषेभ्यो विशेषतः देवयाजिभ्य इति शेषः, भूतविशेषं ईदृशं **जम्भय** नाशय । अन्यत् प्राग्वत् । कृकशब्दः, कृश हिंसायाम्, कन्-प्रत्ययः । जम्भय जभि नाशने, चुरादिः ।। ७ ।।

**।। इति प्रथमाष्टके द्वितीयाध्याये सप्तविंशो वर्गः ।।**

## ।। अथ अष्टाविंशो वर्गः ।।

(सूक्तम् ३०)

## ऋक्संहिता पदपाठसहिता

(२२ आजीगर्त्ति शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरात ऋषिः । १-१६ इन्द्रः, १७-१९ अश्विनौ, २०-२२ उषाः । १-१०, १२-१५, १७-२२ गायत्री, ११ पादनिचृद्गायत्री, १६ त्रिष्टुप् ।)

**आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम् । मंहिष्ठं सिञ्च इंदुभिः ।। १ ।।**
आ । वः । इन्द्रम् । क्रिविम् । यथा । वाजऽयन्तः । शतऽक्रतुम् ।। मंहिष्ठम् । सिञ्चे । इंदुऽभिः ।।

## ऋग्भाष्यम्

**हे वाजयंतो युध्यंतो देवा भोगिन एव वा ।**
**सोमैर्व इन्द्रमासिंचे क्रिविं यद्वन्नृपं कृतेः ।**
**कर्तारमीशमिव वा स्वदृष्टान्तो हरेर्भवेत् ।। १ ।।**

**ऋग्भाष्यटीका–** आ वः । हे । हे **वाजयन्तः** । वाजं युद्धं तत्कुर्वन्तः । तत्करोतीति णिच् । युध्यन्तो योद्धारः । यद्वा । वाजमन्नम् । सर्वभोगोपलक्षणं चेदम् । वाजं सर्वभोगान् । भुञ्जत इति प्रातिपदिकाद्धात्वर्थे इति णिच् भोगिनो देवा इति यावत् । एवशब्देनान्नमिच्छन्नहमिति व्याख्यानमपाकरोति । अनेकव्यत्ययापत्तेः । **वो** युष्माकं स्वामिनम् । **शतक्रतुं मंहिष्ठं** पूज्यतममिन्द्रं **इन्दुभिः** सोमैरहं **आ सिञ्चे** । कमिव । **क्रिविं** नृपं **यथा** यद्वत् । सार्वभौममैन्द्रे महाभिषेके यथाभिषिञ्चति तथेत्यर्थः । नृपः कुतः क्रिविः । कृतेः पालनादेः करणात् । करोतेः किविः । यद्वा क्रिविं यथा जगतः कर्तारमीशं विष्णुमिव । नन्विन्द्रोऽपि यदा विष्णुस्तदा कथमेतदित्यत आह । **स्वेति** ।। हरेर्विवक्षायामयं स्वदृष्टान्तो भवेत् ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'आ व' इति द्वाविंशत्यृचं वर्गचतुष्टयात्मकं त्रिंशं सूक्तम् । तत्र आदितः षोडशैन्द्र्यः, ततस्तृच आश्विनः, अन्त्यस्तृच उषस्यः । एकादशी पादनिचृद्गायत्रीविशेषः, षोडशी त्रिष्टुप्, शिष्टा गायत्र्यः । (हे) वाजयन्तः, वाजं युद्धम्, तत्कुर्वन्तः, 'तत्करोति तदाचष्टे' इति णिच्, यद्वा वाजमन्नम्, सर्वभोगोपलक्षणम् वाजान्सर्वभोगान् भुञ्जत इति 'प्रातिपदिकाद्धात्वर्थे' इति णिच्, भोगिनो देवा इति यावत् । वः, युष्माकम् । स्वामिनम् शतक्रतुम् । मंहिष्ठम्,

पूज्यतमम् । इन्द्रम् । इन्दुभिः, सोमैः अहम् आ सिञ्चे, सिञ्चामि । कमिव ? क्रिविम्, जगत्पालनादिकरणात्क्रिविशब्दवाच्यम्, कृञः किविः, नृपं विष्णुं विष्णुं वा । यथा, यद्वत्, सार्वभौममैन्द्रे महाभिषेके यथाभिषिञ्चति तथेत्यर्थः ।। १ ।।

**स्कन्द–** **आ** इत्युपसर्गः **सिञ्च** इत्याख्यातेन सम्बन्धयितव्यः । **वः** इति द्वितीया । एकवचनस्य स्थाने बहुवचनम् । त्वाम् **इन्द्रम् क्रिविम् यथा** 'क्रिविः' (निघ.३-२३) इति कूपनाम । इह च कूप एव वा वर्तते कूपसामीप्यादाहावे वा । यथा कश्चिन्महत्या कुल्ययाऽऽहार्योदकं कूपमाहावं वोदकेन सिञ्चेत् तद्वत् । **वाजयन्तः** वाजयतिरर्चतिकर्मा (निघ.३-१४) । स्तुवन्तः । अथवा अवग्रहणत्वात् पदस्य वाजमन्नं तदिच्छन्तो वाजयन्तः । कीदृशमिन्द्रम् । **शतक्रतुम् मंहिष्ठम्** महतिर्दानकर्मा (निघ.३-२०) । दातृतमम् । **आ सिञ्चे** वाजयन्तः इत्येतेन बहुवचनान्तेन सामानाधिकरण्याद् व्यत्ययेनेदमेकवचनम् । लिङर्थे आशिषि लट् । आसिञ्चेमेत्याशास्महे । केन । **इन्दुभिः** सोमैः । बहून् सोमांस्तुभ्यं ददामेत्येतदाशास्मह इत्यर्थः । न चाऽजीव एतद् भवतीत्यर्थाज्जीवितमाशास्तं द्रष्टव्यम् ।। १ ।।

**वेङ्कटमाधव–** **यथा** अन्नमिच्छन्तः कूपमुत्सिञ्चन्ति तस्य सेकार्थम् । एवं युष्मदर्थमहं दातृतमम् इन्द्रम् सोमैर्हुतैः **आ सिञ्चे** कामानुत्सिञ्चामीति ।। १ ।।

**मुद्गल–** 'आ व इन्द्रम्' इति द्वाविंशत्यृचं सप्तमं सूक्तम् । शुनःशेप ऋषिः । गायत्रम् । 'अस्माकम्' इत्येषा पादनिचृद्गायत्री, 'त्रयः सप्तकाः पादनिवृत्' (ऋ.अ.१-४-४) इत्युक्तत्वात् । 'शश्वदिन्द्र' इत्येषा त्रिष्टुप् । आदितः षोडशर्च ऐन्द्र्यः । सप्तदशीतः 'आश्विनावश्वावत्यः' इत्याद्यास्तिस्रः आश्विन्यः । 'कस्त उषः' इत्याद्यास्तिस्र उषोदेवताका ।

**वाजयन्तः** अन्नमिच्छन्तो वयं शुनःशेपाः हे ऋत्विग्यजमानाः! **वः** युष्माकं सम्बन्धिनमिमम् **इन्द्रम् इन्दुभिः** सोमैः **आ सिञ्चे** सर्वतः सिञ्चामहे तर्पयामः । कीदृशम् । **शतक्रतुम्** शतसङ्ख्याकं कर्मोपेतम् **मंहिष्ठम्** अतिशयेन प्रवृद्धम् । सेचने दृष्टान्तः । **यथा** येन प्रकारेण **क्रिविम्** अवटं जलेन पूरयन्ति तद्वत् ।। १ ।।

**सायण–** 'आ व इन्द्रम्' इति द्वाविंशत्यृचं सप्तमं सूक्तम् । शुनःशेप ऋषिः । गायत्रम् । 'अस्माकम्' इत्येषा पादनिचृद्गायत्री, 'त्रयः सप्तकाः पादनिवृत्' (ऋ.अ.१-४-४) इत्युक्त-

त्वात् । 'शश्वदिन्द्र' इत्येषा त्रिष्टुप् । आदितः षोडशर्च ऐन्द्रः । सप्तदशीतः 'आश्विनावश्वावत्य:' इत्याद्यास्तिस्रः आश्विन्यः । 'कस्त उषः' इत्याद्यास्तिस्र उषोदेवताका । तथा च अनुक्रमणिका- 'आ वो द्यधिकास्माकं पादनिवृच्छश्वत्त्रिष्टुप्परौ तृचावाश्विनोपस्यौ' इति ।

**वाजयन्तः** अन्नमिच्छन्तो वयं शुनःशेपाः हे ऋत्विग्यजमानाः! **वः** युष्माकं सम्बन्धिनमिमम् **इन्द्रम् इन्दुभिः** सोमैः **आ सिञ्चे** सर्वतः सिञ्चामहे तर्पयामः । कीदृशम् । **शतक्रतुम्** शतसङ्ख्याकं कर्मोपेतम् **महिष्ठम्** अतिशयेन प्रवृद्धम् । सेचने दृष्टान्तः । **यथा** येन प्रकारेण **क्रिविम्** अवटं जलेन पूरयन्ति तद्वत् ।

क्रिविशब्दः 'वव्रिः काटुः' इत्यादिषु चतुर्दशसु कूपनामसु 'क्रिविः कूपः सूदः' (नि.३-२३-१) इति पठितम् । क्रिविम् । 'कृती छेदने' । कृत्यते इति क्रिव्विः । क्रिविधृष्विच्छ-विस्थवि' (उ.सू.४-४९६) इत्यादौ क्विन्प्रत्ययान्तो निपातितः । अत एव तशब्दलोपः । नित्त्वादाद्युदात्तत्वम् । यथा । 'यथेति पादान्ते' इति सर्वानुदात्तत्वम् । वाजयन्तः । वाजमात्मन इच्छन्तः । 'सुप आत्मनः क्यच्' । 'न च्छन्दस्यपुत्रस्य' इति ईत्वदीर्घत्वयोर्निषेधः, 'अश्वाघ-स्यात्' इति पुनदीर्घविधानात् ज्ञापकात् । मंहिष्ठम् । 'महि वृद्धौ'। अतिशयेन मंहिता मंहिष्ठः । 'तुश्छन्दसि' (पा.सू.५-३-५९) इति तृजन्तात् इष्ठन्प्रत्ययः । 'तुरिष्ठेमेयःसु' (पा.सू.६-४-१५४) इति तृलोपः । इष्ठनो नित्त्वादाद्युदात्तत्वम् । सिञ्चे । 'षिचिर् क्षरणे' । व्यत्ययेन एकवचनम् । 'शे मुचादीनाम्' इति नुमागमः ॥ १ ॥

**सिद्धाञ्जनम्**– षष्ठेऽनुवाके आ व इन्द्रमिति द्वाविंशत्यृचं सप्तमं सूक्तम् शुनःशेपस्यार्षं गायत्रम्। अस्माकमित्येषा एकादशी पादनिचृद्गायत्री । शश्वदिन्द्र इति षोडशी त्रिष्टुप् । आदितः षोडश ऐन्द्र्यः ततस्तिस्र आश्विन्यः, अन्त्यास्तिस्र उषोदेवताकाः ।

भो देवाः! **वः** युष्माकं युष्मदीयमित्यर्थः अथवा वचनव्यत्ययः, इन्द्रं **वाजयन्तः** वाजमिच्छन्तः समृद्धिकामा वयं **इन्दुभिः** सोमैः **आ सिञ्चे** आ सिञ्चामः आसिक्तं कुर्मः तर्पयाम इति यावत् (वचनव्यत्ययः)। कीदृशम् ? **शतक्रतुं** बहुकर्माणम् पुनः कीदृशम् ? **मंहिष्ठं** प्रभूततमम् (महि वृद्धौ, तृजन्तात् मंहितुः इष्ठन् छन्दसि) । अत्र दृष्टान्तः । **क्रिविं यथा** क्रिविः कूपनाम, यथा लोके कूपं महत्या कुल्ययाहार्योदकं तेन पूरयन्ति, तथा सोमैर्वयं इन्द्रं पूरयित्वा समृद्धिमन्तो भवामः । 'भवेम' इति लिङर्थः उचितः ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**शतं वा यः शुचीनां सहस्रं वा समाशिराम् । एदु निम्नं न रीयते ॥ २ ॥**

शतम् । वा । यः । शुचीनाम् । सहस्रम् । वा । सम्ऽआशिराम् ॥ आ । इत् । ऊँइतिं । निम्नम् । न । रीयते ॥ २ ॥

## ऋग्भाष्यम्

**शतेन वा सहस्रेण सोमानामाशिरावताम् ।**
**पाताल इव नैवायं निलीनो भवति कचित् ।**
**विलापयति तानेव.........................॥ २ ॥**

**ऋग्भाष्यटीका–** **शतं वा** । शतेन वा । योऽयमिन्द्रः **शुचीनां** शुद्धानाम् । **समाशिरां** सङ्गताशिराणाम् । आशिरावतां दीर्घः छान्दसः । स्त्रीलिङ्गो वा शिराशब्दः । सोमानामिति शेषः । **शतं वा** शतेन वा । **सहस्रं वा** सहस्रेण वा । **इत्** कचित् । **न** उ नैव । **आ रीयते** आलीयते । निलीनो भवति । युगपदनेकैर्दीयमानैरपि सोमैर्न तस्यालम्बुद्धिर्भवतीति बहुभोगशक्तिमानिति भावः । किमिव । **निम्नं न** पाताल इव । अत्र नेत्युभयत्र सम्बध्यत इत्युक्तं भवति । प्रकारान्तरेण व्याचष्टे । **विलापयतीति** ॥ तान्सोमानेव । अनेनैवमुक्तं भवति । य इन्द्रः शुचीनां समाशिरां सोमानाम् । शतं वा सहस्रं वा रीयत एव । अन्तर्णीतण्यर्थोऽयं विलापयत्येव । स्वस्मिन्नन्त-र्भावयत्येव । किमिव । निम्नं न बह्वपि जलं पातालं यथा तथैवेति । तमाऽसिञ्चे इति पूर्वेणान्वयः ॥ २ ॥

**मन्त्रार्थमञ्जरी–** यः, अयमिन्द्रः । शुचीनाम्, शुद्धानाम् । समाशिराम्, षष्ठ्यर्थे द्वितीया दीर्घश्छान्दसः, स्त्रीलिङ्गो वा शिराशब्दः, आमि नुडभावो वा, सङ्गताशिराणाम्, दध्याख्याशिरावताम् । (सोमानाम्) इति शेषः । शतम् वा, शतेन वा । सहस्रम् वा, सहस्रेण वा । इत्, कचित् । (न) उ, नैव । आ रीयते, आलीयते, नैव निलीनो भवति, युगपदनेकैर्दीयमानैरपि सोमैर्न तस्यालम्बुद्धिर्भवति, बहुभोगशक्तिमानिति भावः । किमिव ? निम्नम् न, पातालमिव, 'न' इत्य-स्योभयत्रान्वयः । यद्वा– यः, इन्द्रः । शुचीनाम् समाशिराम् (सोमानाम्) शतम् वा सहस्रम् वा । (आ रीयते इत् उ) आ रीयत एव, अन्तर्णीतण्यर्थोऽयम्, विलापयत्येव किमिव ? निम्नम् न, बह्वपि जलं पातालं यथा तथैवेति । (तम्) 'आ सिञ्चे' इति पूर्वेण अन्वयः ॥२॥

**स्कन्द–** द्वावपि वाशब्दौ चार्थे । **यः** इन्द्रः **शतम् शुचीनाम्** शुद्धानां सोमानाम् **सहस्रम्** च **समाशिराम्** सोममिश्रणं दध्याशीरुच्यते । तेन सम्मिश्रानत्यन्तबहून् सोमान् इत्यर्थः । एदु **निम्नम् न रीयते आ** इत्युपसर्गो रीयते इत्याख्यातेन सम्बध्यते । रीयते इति चायं रीयते, रेजति (निघ.२-१४) इति गतिकर्मसु पाठाद् गत्यर्थः । इत् उ इति पदपूरणौ । अस्याश्चर्च उद्देशार्थं यच्छब्दश्रुतेः सर्वेषां पादानामुद्देश एवान्तर्गतत्वात् प्रतिनिर्देशात् तच्छब्दाध्याहारशक्तेः पूर्वयर्चैकवाक्यता । पूर्वा च 'आ वः' इति युष्मच्छब्दात् प्रत्यक्षकृता । अतोऽत्र रीयते इति व्यत्ययेन मध्यमस्य स्थाने प्रथमपुरुषः । आ रीयसे । पानार्थमागच्छसीत्यर्थः । कथम् । निम्नं न निम्नमिव प्रदेशम् । किम् । सामर्थ्यादुदकम् । यथा निम्नं प्रदेशमुदकं शीघ्रमागच्छति तद्वद् यः त्वं पानार्थमत्यन्तबहून् सोमान् शीघ्रमागच्छति तं त्वामिन्द्रं वाजयन्त आसिञ्चेम सोम-मित्याशास्महे इति समस्तार्थः ।। २ ।।

**वेङ्कटमाधव–** शतम् वा पूतानां सोमानाम् **सहस्रम् वा** सम्यगाशिरेण मिश्रितानाम् एवम् आगच्छति, **निम्नम्** इवोदकम् ।। २ ।।

**मुद्गल– यः इन्द्रः शुचीनाम्** शुद्धानां सोमानाम् **शतम् वा** शतसङ्ख्याकं समूहं वा **समाशिरम्** समीचीनेन आशिराख्येन श्रयणद्रव्येणोपेतानां सोमानाम् **सहस्रम् वा** सहस्रसंख्याकं समूहं वा **आ इदु रीयते** आगच्छत्येव । सोऽस्मान् अनुगृह्णात्विति शेषः । सोमप्राप्तौ दृष्टान्तः । **निम्नम् न** । यथा निम्नं प्रदेशम् आप आप्लुवन्ति तद्वत् ।। २ ।।

**सायण– यः इन्द्रः शुचीनाम्** शुद्धानां सोमानाम् **शतम् वा** शतसङ्ख्याकं समूहं वा **समाशिरम्** समीचीनेन आशिराख्येन श्रयणद्रव्येणोपेतानां सोमानाम् **सहस्रम् वा** सहस्रसंख्याकं समूहं वा **आ इदु रीयते** आगच्छत्येव । सोऽस्मान् अनुगृह्णात्विति शेषः । सोमप्राप्तौ दृष्टान्तः । **निम्नम् न** । यथा निम्नं प्रदेशम् आप आप्लुवन्ति तद्वत् ।

समाशिराम् । 'श्रीञ् पाके' इत्यस्य समाङ्पूर्वस्य क्विपि 'अपस्पृधेथाम्' इत्यादौ आशीरादेशो निपातितः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । रीयते । 'रीङ् श्रवणे' । 'दिवादिभ्यः श्यन्' ।। २ ।।

**सिद्धाञ्जनम्– यः** इन्द्रः **शुचीनां** शुद्धनां सोमानां **शतं वा** शतं बह्वर्थकम्, **समाशिरां**

समीचीनेन आशिराख्येन मिश्रणद्रव्येण युक्तानां सोमानां **सहस्रं वा** अत्यधिकं समूहं वेत्यर्थः, एदु आगत्यैव **निम्नं न** निम्नप्रदेशं आप इव **रीयते** अनायासेन प्राप्नोति, तमिन्द्रमिति पूर्वयर्चा सम्बन्धो योग्यः । दध्याशिरः सोमाः रहस्यार्थपराः प्रागुक्ताः अमितमपि सोमं स्वीकर्तुं प्रभुरिन्द्रः आपः निम्नस्थलमिव अनायासेनागच्छतीति भावः । 'रीञ् स्रवणे' दिवादिः । प्रयोगे सर्वत्र मन्त्रेषु अनायासगत्यर्थतया ग्राह्यः, तथा सायणीयमपि, न केवलं प्राप्त्यर्थो धातुः ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**सं यन्मदा॑य शु॒ष्मिण॑ ए॒ना ह्य॑स्योदरे॑ ॥ स॒मु॒द्रो न व्यचो॑ द॒धे ॥ ३ ॥**

सम् । यत् । मदा॑य । शु॒ष्मिणे॑ । ए॒ना । हि । अ॒स्य॒ । उ॒दरे॑ । स॒मु॒द्रः । न । व्यचः॑ । द॒धे ॥ ३ ॥

## ऋग्भाष्यम्

**................बलिनेऽस्मै मदाय च ।**
**सन्दधुर्नैव विश्वानि व्यक्तीरस्योदरे क्वचित् ।**
**समुद्रेकात्समुद्राख्या प्रकृतिश्च महत्त्वतः ॥ ३ ॥**

**ऋग्भाष्यटीका– संयत्** । बलिने । यत् यस्मात् एना एतानि विश्वानि च **अस्य** इन्द्रस्य **उदरे** प्रविष्टानि । **शुष्मिणे** बलिने । अस्मा इन्द्राय । षष्ठ्यर्थे चतुर्थी । **मदाय** तृप्तये । **व्यचो न सन्दध** इति वक्ष्यमाणमर्थवशात् बहुवचनान्तं सम्बध्यते । व्यचांसि व्यक्तीः । प्रभावान्कचिन्नैव सन्दधुः । हिरवधारणे । किञ्च । समुद्रः समुद्रे कात्कारणात्समुद्राख्या प्रकृतिश्च न व्यचो व्यक्तिम् । सन्दधे । कुतः । अस्य महत्त्वतः । तस्मादिति पूर्वेण सम्बन्धः । सप्रकृतिकानि विश्वान्युदरं प्रविश्य तृप्तिं जनयितुं नालम् । किमुत सोमा इति ॥ ३ ॥

**मन्त्रार्थमञ्जरी–** यत्, यस्मात् । एना, एतानि विश्वानि । (च) अस्य, इन्द्रस्य । उदरे प्रविष्टानि । शुष्मिणे, बलिने । (अस्मै) इन्द्राय, षष्ठ्यर्थे चतुर्थी । मदाय, तृप्तये । 'सम् दधे' इति वक्ष्यमाणमर्थवशाब्दहुवचनान्तं सम्बध्यते (व्यचः), व्यचांसि, व्यक्तीः, प्रभावान् । क्वचित् (न) हि सम् (दधे) नैव सन्दधुः, हिरवधारणे । किं च, समुद्रः, समुद्रेकहेतुना समुद्राख्यप्रकृतिः । (च) व्यचः, व्यक्तिम् । न (सम्) दधे । कुतः ? अस्य महत्त्वादिति भावः । (तस्मात्)

इति पूर्वेण अन्वयः । सप्रकृतिकानि विश्वान्युदरं प्रविश्य तृप्तिं जनयितुं नालम्, किमुत सोमाः ? इति ।। ३ ।।

**स्कन्द– यत्** ईदृशम् शतं सहस्रं च **मदाय** मदार्थं बलार्थं च **अस्य** इन्द्रस्य **उदरे समुद्रः न** समुद्रं इव **व्यचः** व्याप्तिं **सम् दधे** सम्यग् धारयति । यथा समुद्रो व्याप्नुयादेवमुदरं व्याप्यावतिष्ठत इत्यर्थः । किं तस्य । 'तद्वत् आरीयसे', 'तं वाजयन्त आसिश्रेम इत्येतदाशास्महे' इत्येवं यच्छब्दस्य पूर्वाभ्यामृग्भ्यामेकवाक्यता ।। ३ ।।

**वेङ्कटमाधव– यत्** सोमपात्रशतम् **अस्य** बलिन इन्द्रस्य **मदाय** भवति, सहस्रं वा । अनेन अस्य **उदरे** अन्तरिक्षम् इव व्याप्तिः **सम् दधे** । यथान्तरिक्षं विततं तद्वद् व्याप्तमिति । तस्मादागच्छतीति ।। ३ ।।

**मुद्गल– यत्** पूर्वोक्तं शतं सहस्रं वा **शुष्मिणे** शुष्मिणो बलवत इन्द्रस्य **मदाय** मदार्थं सङ्गतं भवति । **एना हि** अनेनैव शतेन सहस्रेण च **अस्य** इन्द्रस्य **उदरे व्यचः** व्याप्तिः **दधे** धृता भवति । दृष्टान्तः । **समुद्रः न** समुद्र इव । यथा समुद्रमध्ये जलं व्याप्तं तद्वत् ।। ३ ।।

**सायण– यत्** पूर्वोक्तं शतं सहस्रं वा **शुष्मिणे** शुष्मिणो बलवत इन्द्रस्य **मदाय** मदार्थं सङ्गतं भवति । **एना हि** अनेनैव शतेन सहस्रेण च **अस्य** इन्द्रस्य **उदरे व्यचः** व्याप्तिः **दधे** धृता भवति । तत्र दृष्टान्तः । **समुद्रः न** समुद्र इव । यथा समुद्रमध्ये जलं व्याप्तं तद्वत् ।

एना । 'सुपां सुलुक्' इति तृतीयायाः डादेशः । व्यचः । 'व्यचेः कुटादित्वमनसि' (का.१-२-१.१) इति ङिद्वद्भावस्य प्रतिषिद्धत्वात् 'ग्रहिज्या' इत्यादिना संप्रसारणं न भवति । असुनो नित्त्वादाद्युदात्तत्वम् । दधे । दधातेः कर्मणि अभ्यासह्रस्वजश्त्वेषु कृतेषु 'आतो लोप इटि च' इति आकारलोपः । प्रत्ययस्वरेणान्तोदात्तत्वम् । 'हि च' इति प्रतिषेधात् निघाताभावः ।। ३ ।।

**सिद्धाञ्जनम्– यत्** पूर्वोक्तं शतं शुचीनां सहस्रं वा समाशिरां सोमानां, **शुष्मिणे** बलवते, इन्द्रस्य **मदाय** संहर्षाय **सं** सङ्गतं भवति, **एना हि** अनेनैव सोमानां भूम्ना **अस्य** इन्द्रस्य **उदरे** कुक्षौ **व्यचः** व्याप्तिः (व्याप्त्यर्थाद्व्यचेरसुन्) **दधे** धृता भवति । तत्र दृष्टान्तः । **समुद्रो न** समुद्र

इव, यथा समुद्रोऽपां राशिः, उदकेन व्याप्तिमान्, इयत्तापरिच्छेदवर्जं अपां आधारो भवति, तथा सोमानामिन्द्रकुक्षिरिति भावः । प्रथमद्वितीयऋगर्थेन सङ्गच्छत इदम्, इन्द्रोदरं अतिमानसोमाधार-पात्रमिति कथनम् । 'यः कुक्षिः सोमपातमः समुद्र इव पिन्वते' इत्यत्रापि एवंजातीयको भावोऽवधेयः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**अयमु ते समतसि कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ।। ४ ।।**

अयम् । ऊँइति । ते । सम् । अतसि । कपोतःऽइव । गर्भऽधिम् । वचः । तत् । चित् । नः । ओहसे ।। ४ ।।

## ऋग्भाष्यम्

**तवैवायं प्रपञ्चश्च कपोतो गर्भधिं यथा ।**
**सम्यग्व्याप्नोषि विश्वं च तस्मान्नो वच ओहसे ।। ४ ।।**

**ऋग्भाष्यटीका– अयमु ते** । तवैव । हे इन्द्र **अयं प्रपञ्चः** । चशब्दात्प्रकृतिश्चेति शेषः । **त उ** तवैव । त्वदधीन एव । किञ्च । **गर्भधिं** गर्भो धीयतेऽत्रेति गर्भाशयं **कपोत इव** कपोतो यथा व्याप्नोति तथा । **समतसि** अत सातत्यगमने । सम्यग्व्याप्नोषि । विश्वमिति शेषः । **तत्** तस्मात् **चित्** एव **नो**ऽस्माकमृषीणां **वचो** वेदम् । **ओहसे** वहेः सम्प्रसारणं छान्दसं वहसि वेदप्रतिपाद्यो भवसि । न हि परिमित प्रभावो वेदप्रतिपाद्यो भवति ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (हे इन्द्र) अयम्, प्रपञ्चः प्रकृतिश्च । ते उ, तवैव, त्वदधीन एव । किं च, गर्भधिम्, गर्भो धीयतेऽत्रेति गर्भाशयम् । कपोत इव, कपोतो यथा व्याप्नोति तथा । सम् अतसि, 'अत सातत्यगमने' सम्यग्व्याप्नोषि । (विश्वम्) इति शेषः । तत्, तस्मात् । चित्, एव । नः, अस्माकम्, ऋषीणाम् । वचः वेदम् । ओहसे, वहेः सम्प्रसारणं छान्दसम्, वहसि, वेदप्रतिपाद्यो भवसि, नहि परिमितप्रभावो वेदप्रतिपाद्यो भवति ।। ४ ।।

**स्कन्द– अयम्** इति सन्निहितस्य सोमस्य प्रतिनिर्देशः । उ इति पदपूरणः । अयम् ते अभिषुतः सोमः । **सम् अनसि** अत सातत्यगमने । एकवाक्यताप्रसिद्ध्यर्थं

यच्छब्दोऽत्राध्याहर्तव्यः । यं प्रति सम्यक् सततं गच्छसि । कथम् । **कपोतः इव गर्भधिम्** गर्भो धीयतेऽस्यामिति गर्भधिः । कपोतिकाऽत्राभिप्रेता । यथा मैथुनार्थी कपोतः कपोतिकां तद्वदित्यर्थः । **वचः तत् चित्** चिच्छब्दः पदपूरणः । तच्छब्दश्रुतेश्च यच्छब्दोऽध्याहर्तव्यः । यदिदमुक्तं वचः तत् **नः** अस्माकम् **ओहसे** वहेः सम्प्रसारणेन गुणेन चेदं रूपम् । वहस्व आत्मानं प्रति प्रापय । शृण्वित्यर्थः । श्रुत्वा च सोमेनैव तृप्तो मां मोचयेत्यभिप्रायः ।। ४ ।।

**वेङ्कटमाधव– अयम्** सोमः त्वदीयः । तम् त्वं **कपोतः** कपोतीम् इव गर्भनिधानीं पिपासुः सङ्गच्छसि । स्तुतिं च ताम् अस्मदीयामात्मानं प्रापयसि ।। ४ ।।

**मुद्गल–** हे इन्द्र! **अयम् उ** अयमपि दृश्यमानः सोमः **ते** त्वदर्थं सम्पादितः । यं सोमम् **समतसि** सम्यक् सातत्येन प्राप्नोषि । दृष्टान्तः । **कपोतः इव** यथा कपोताख्यः पक्षी **गर्भधिम्** गर्भधारिणीं कपोतीं प्राप्नोति तद्वत् । **तच्चित्** तस्मादेव कारणात् **नः** अस्मदीयम् **वचः ओहसे** प्राप्नोषि ।। ४ ।।

**सायण–** हे इन्द्र! **अयम् उ** अयमपि दृश्यमानः सोमः **ते** त्वदर्थं सम्पादितः । यं सोमम् **समतसि** सम्यक् सातत्येन प्राप्नोषि । तत्र दृष्टान्तः । **कपोतः इव** यथा कपोताख्यः पक्षी **गर्भधिम्** गर्भधारिणीं कपोतीं प्राप्नोति तद्वत् । **तच्चित्** तस्मादेव कारणात् **नः** अस्मदीयम् **वचः ओहसे** प्राप्नोषि ।

अतसि । 'अत सातत्यगमैने' । कपोत इव । 'कबेरोतच् पश्च' (उ.सू.१-६२) इति ओतच् । व्यत्ययेन मध्योदात्तः । गर्भधिम् । गर्भोऽस्यां धीयते इति गर्भधिः । 'कर्मण्यधिकरणे च' (पा.सू.३-३-३९) इति किप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । ओहसे । 'तुहिर् दुहिर् उहिर् अर्दने' । व्यत्ययेन आत्मनेपदम् ।। ४ ।।

**सिद्धाञ्जनम्– अयं उ** अयं च अस्माभिरर्प्यमाणः सोमः **ते** तुभ्यं त्वदर्थमित्यर्थः । यं च सोमं त्वं **सम् अतसि** सम्यक् सातत्येन गच्छसि । तत्र दृष्टान्तः । कपोत इव पक्षिविशेषः पारावतो यथा **गर्भधिम्** गर्भधारिणीं कपोतिकां गच्छति, तथा त्वं सोमं प्राप्नोषि । **तच्चित्** तस्मादपि **नः** अस्माकं **वचः** वचनं स्तोत्रं **ओहसे** प्राप्नोषि सामोदं शृणोषीत्यर्थः, गतौ याचने च वर्तते अर्दत्यर्थ उहिर् धातुः । गर्भधिः गर्भोऽस्यां धीयते । इन्द्रः सोमं कामयमानः भोजं

भोजं पुनः **कपोत इव** कपोतीं गतोऽपि परावृत्य रिरंसुर्भवतीति दृष्टान्ते कपोतस्य वैशिष्ट्य-मवधेयम् । यद्यपि सामान्यत तिर्यञ्चः गर्भिणीषु न रमन्ते, तथाऽपि पारावतः अनुदिनप्रवर्धमानः प्रियां गर्भिणीं अपि कामयते रत्यर्थम् । अत एव हरिराह- पारावतः खरशिलाकणमात्रभोजी । कामी भवत्यनुदिनं वद कोऽत्र हेतुः' ।। इति । अन्यच्च प्राचीनं पद्यं भवति । 'कलकणितगर्भेण कण्ठेनाघूर्णितेक्षणः । पारावतः परावृत्य रिरंसुश्चुम्बति प्रियाम्' ।। इन्द्रस्य तथाविधसोमकामत्व-प्रतिपादनेन इन्द्रभागवते सोमयाजिनि रहोयागैकनिष्ठे पुरुषे तस्य रत्यतिशयः स्पष्टो भवति ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते । विभूतिरस्तु सूनृता ।। ५, २८ ।।**

स्तोत्रम् । राधानाम् । पते । गिर्वाहः । वीर । यस्य । ते । विऽभूतिः । अस्तु । सूनृता ।।

## ऋग्भाष्यम्

**गिरां वाहक ते स्तोत्रमखिलं वेदवैदिकम् ।**
**सूनृता वागियं मे च विभूतिरिति कल्प्यताम् ।**
**अस्त्वित्येतत्प्रसादेन फलदानादुदीर्यते ।। ५, २८ ।।**

**ऋग्भाष्यटीका– स्तोत्रम्** । गिराम् । हे **राधानां** सिद्धीनां **पते** । **गिर्वाहो** मे गिरां वेदानां वाहक । प्रवर्तक । वहतेरस् वृद्धिश्च । ह्रस्वः छान्दसः । **वीर** विक्रान्त । यस्य **ते** तव स्तोत्र-मखिलं वेद वैदिकमिति शेषः । इयं च मे **सूनृता**वाक्तस्य तव **विभूतिः** विभूतेरैश्वर्यस्य प्रतिपादिकाऽस्तु । त्वया विभूतिप्रतिपादिकेति कल्प्यताम् । ननु वेदानामर्थसम्बन्धस्यौत्पत्ति-कत्वात्कथमस्त्विति प्रार्थ्यत इत्यत आह । **अस्त्विति** ।। ल्यब्लोपनिमित्ता पञ्चमी । प्रसादेन फलदानमपेक्ष्यास्त्वित्येतदुदीर्यते । मदीयया सूनृतया वाचा प्रसन्नो भूत्वा फलं देहीत्यभिप्रायेण सूनृता विभूतिरस्त्विति लक्षणयोच्यत इति ।। ५ ।।

**मन्त्रार्थमञ्जरी–** (हे) राधानाम्, सिद्धीनाम् । पते । गिर्वाहः, गिरां वेदानां वाहो वाहक प्रवर्तक, वहतेः असुन्, वृद्धिश्च । वीर, विक्रान्त । यस्य । ते, तव । स्तोत्रम् । अखिलम्

(वेद) (वैदिकम्) इति शेषः । इयं च मे– सूनृता, वाक् । (तस्य तव) विभूतिः, विभूतेः, ऐश्वर्यस्य । प्रतिपादिका अस्तु, त्वया 'विभूतिप्रतिपादिका' इति कल्प्यताम् 'मदीयया सूनृतया वाचा प्रसन्नो भूत्वा फलं देहि' इति भावेन 'सूनृता, विभूतिः, अस्तु' इति लक्षणयोच्यत इति ज्ञेयम् ।। ५ ।।

**स्कन्द–** यावत् किञ्चित् **स्तोत्रम्** तत् सर्वं हे **राधानाम् पते!** घनानां स्वामिन्! **गिर्वाहः!** गिरः स्तुतयः ता उह्यन्ते प्राप्यन्ते यत्र स्तोतृभिः स गिर्वाहाः, तस्य सम्बोधनं हे गिर्वाहः! सुत्याश्रयेत्यर्थः । **वीर!** विक्रान्त! इति **यस्य ते** तव । सर्वैः स्तोत्रैः यः स्तूयस इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तस्य **विभूतिः** अस्तु विभवतीति विभूतिः समग्र-स्तुतिकरणसमर्था अस्तु भवतु । का । **सूनृता** अपठितमपि वाङ्नामैतत् । अथवा विभूतिशब्द ऐश्वर्यवचनः । सामर्थ्याच्चान्तर्णीतमत्यर्थः । विभूतिमत्यस्तु । मदैश्वर्यकरीयं स्तुतिलक्षणा मदीया वागस्त्वित्यर्थः । अथवा या तव विभूतिः साऽस्तु सूनृता । शोभनेषु नृषु स्तुतिपरेषु तायते विस्तीर्यत इति सूनृता । स्तोत्रकृद्भोग्येत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** गीर्भिरुह्यमान! अन्नानाम् **पते! यस्य** तव **स्तोत्रम्** इदमनेन क्रियते स्तोत्रा, तस्मै सत्या श्रीः **अस्तु** ।। ५ ।।

**मुद्गल–** हे इन्द्र! **राधानाम् पते** । धनानां पालक! **गिर्वाहः!** गीर्भिरुह्यमान! **वीर!** शौर्योपेत । **यस्य ते** तव स्तोत्रम् ईदृशं भवति, तस्य तव **विभूतिः** लक्ष्मीः **सूनृता** प्रियसत्यरूपा **अस्तु** ।। ५ ।।

**सायण–** हे इन्द्र! **राधानाम् पते** । धनानां पालक! **गिर्वाहः!** गीर्भिरुह्यमान! **वीर!** शौर्योपेत । **यस्य ते** तव स्तोत्रम् ईदृशं भवति, तस्य तव **विभूतिः** लक्ष्मीः **सूनृता** प्रियसत्यरूपा **अस्तु** ।

स्तोत्रम् । 'दाम्नीशस' (पा.सू.३-२-१८२) इति ष्ट्रन् । पश्चात् अर्शआद्यच् । अथवा स्तोतुरिदमित्यर्थे अण् । 'संज्ञापूर्वको विधिरनित्यः' इति वृद्धिर्न । राधानां पते । राध्नुवन्ति एभिरिति राधानि धनानि । 'सुबामन्त्रिते'(पा.सू.२-२-२) इति पराङ्गवद्भावात् षष्ठ्यामन्त्रित-

समुदायस्य निघातः । गिर्वाहः । 'वह प्रापणे' । 'वहिहाधाञ्भ्यश्छन्दसि' इति कारकपूर्वस्यापि वहतेः असुन्प्रत्ययः, 'गतिकारकयोरपि पूर्वपदप्रकृतेस्वरत्वं' च इति उक्तत्वात् । 'णित्' इत्यनुवृत्तेः उपधावृद्धिः । पूर्वपदस्य 'र्वोरुपधायाः' (पा.सू.८-२-७६) इति दीर्घस्याभावश्छान्दसः । षाष्टिकम् आमन्त्रितायुदात्तत्वम् । विभूतिः । 'तादौ च निति' इति गतेः प्रकृतिस्वरत्वम् ।। ५ ।।

**सिद्धाञ्जनम्**– **राधानां** धनानां, विविधानां दिव्यानामिति बोध्यम्, **पते** पालक, **गिर्वाहः** गीर्भिः त्वदाविष्कारकस्तोत्रवाग्भिः उह्यमान, (वहतेः असुन्) **वीर** विक्रमशालिन् **ते** तव (कर्मणि षष्ठी) **स्तोत्रं** त्वद्विषयकमित्यर्थः, **यस्य** यत्कर्तृकं भवति, तस्य **सूनृता** शोभना सत्या च वाक् **विभूतिः** ऐश्वर्यं **अस्तु** भवतु । शुभसत्या वाक् महदैश्वर्यं भवति चेत्, स्तोत्रं सार्थकं भवति वाक्सिद्धेः । सूनृता प्रियसत्या वाक् लोके प्रसिद्धा, वेदे तु अस्मदुक्तार्था ।। ५ ।।

**।। इति प्रथमाष्टके द्वितीयाध्याये अष्टाविंशो वर्गः ।।**

## ।। अथ एकोनत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो । समन्येषु ब्रवावहै ।। ६ ।।**

ऊर्ध्वः । तिष्ठ । नः । ऊतये । अस्मिन् । वाजे । शतक्रतोइति शतऽक्रतो । सम् । अन्येषु । ब्रवावहै ।।

## ऋग्भाष्यम्

**उत्तमः सन्नत्र युद्धे ज्ञानाज्ञानमये विभो ।**
**अभिप्रेतार्थसिद्ध्यर्थमस्माकं तिष्ठ सर्वदा ।**
**मत्स्थितस्त्वमहं चैव त्वामन्येषु ब्रवावहै ।। ६ ।।**

**ऋग्भाष्यटीका**– ऊर्ध्वः । उत्तमः । हे **शतक्रतो** विभो! **नोऽस्माकं ऊतये** अभिप्रेतार्थस्य ज्ञानादेः सिद्ध्यर्थम् । **अस्मिन्वाजे** । अत्रानुभवसिद्धे । ज्ञानाज्ञानमये युद्धे । ज्ञानाज्ञानहेतूनां

प्रमाणतदाभासादीनां सङ्घर्षे । **ऊर्ध्व** उत्तमोऽस्मत्प्रतिपक्षस्य जेता सन्सर्वदा **तिष्ठ** । तत एव मत्स्थितः त्वमहं च त्वां **अन्येषु** शिष्येषु **सम्ब्रवावहै** सम्यगुपदिशावः ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (हे) शतक्रतो, विभो । नः, अस्माकम् । ऊतये, अभिप्रेतार्थस्य ज्ञानादेः सिद्ध्यर्थम् । अस्मिन् वाजे, अत्रानुभवसिद्धे ज्ञानाज्ञानमये युद्धे, ज्ञानाज्ञानहेतूनां प्रमाणतदाभासानां सङ्घर्षे । ऊर्ध्वः, उत्तमः, अस्मत्प्रतिपक्षस्य जेता सन् । सदा तिष्ठ । तत एव मत्स्थितस्त्वमहं च त्वाम् अन्येषु, शिष्येषु । सम् ब्रवावहै, सम्यगुपदिशाव ।। ६ ।।

**स्कन्द–** उत्तिष्ठ । यद् ब्रवीमि तत्र प्रवर्तस्वेत्यर्थः । **नः** अस्माकं पालनाय **अस्मिन् वाजे** सङ्ग्रामे । आत्ममरणफलत्वाद् यज्ञमेव सङ्ग्राममाह । हे **शतक्रतो! सम् अन्येषु** अन्येष्विति द्वितीयार्थे सप्तमी । सम्भूयाऽन्यान् देवान् ब्रवावहै मद्विमोचनार्थमभ्यर्थयावहै इत्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** ऊर्ध्वः **तिष्ठ** अस्माकं रक्षणाय अस्मिन् सङ्ग्रामे शतकर्मन्! शत्रुषु त्वं च महं च सम्भूय ब्रवावहे ।। ६ ।।

**मुद्गल–** हे **शतक्रतो**! इन्द्र! **अस्मिन्** प्रसक्ते **वाजे** सङ्ग्रामे **नः** अस्माकम् **ऊतये** रक्षणाय **ऊर्ध्वः** उन्नतः उत्सुकः **तिष्ठ** भव । त्वं च अहं च मिलित्वा **अन्येषु** कार्यान्तरेषु **सम् ब्रवावहै** सम्यक् विचारयावः ।। ६ ।।

**सायण–** हे **शतक्रतो**! इन्द्र! **अस्मिन्** प्रसक्ते **वाजे** सङ्ग्रामे **नः** अस्माकम् **ऊतये** रक्षणाय **ऊर्ध्वः** उन्नतः उत्सुकः **तिष्ठ** भव । त्वं च अहं च मिलित्वा **अन्येषु** कार्यान्तरेषु **सम् ब्रवावहै** सम्यक् विचारयावः ।

तिष्ठ । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । ऊतये । 'ऊतियूति' इत्यादिना क्तिन उदात्तत्वम् । अस्मिन् । 'ऊडिदम्' इत्यादिना सप्तम्या उदात्तत्वम् ।। ६ ।।

**सिद्धाञ्जनम्–** हे **शतक्रतो**! शतकर्मन्, **अस्मिन्** प्रवर्तमाने **वाजे** प्राप्तव्ये समृद्धिविषये **नः** अस्माकं **ऊतये** अभिवृद्ध्यर्थं **उर्ध्वः तिष्ठ** उच्चैः स्थितो भव, तेनास्माकमुद्गमनं ऊर्ध्वस्थितिः सिद्ध्येत् । ततः परं **अन्येषु** विचारयितव्येषु विषयेषु **सम्** सङ्गतो भूत्वा **ब्रवावहै** आवां त्वं च अहं च, सम्भाषावहै । ईदृशोऽन्तरङ्गव्यवहारो देवताभिः सह ऋषीणां साधारणो लक्ष्यते ।।

## ऋक्संहिता पदपाठसहिता

**योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ।। ७ ।।**

योगेऽयोगे । तवःऽतरम् । वाजेऽवाजे । हवामहे । सखायः । इन्द्रम् । ऊतये ।। ७ ।।

## ऋग्भाष्यम्

**तेजस्वितममिन्द्रं तं योगे योगे हवामहे ।। ७ ।।**

**ऋग्भाष्यटीका– योगे** । तेजस्वि । हे **सखायो** वयम् । **तवस्तरं** तव इति बलस्येव तेजसोपि नाम । अन्तर्णीतमतुबर्थं च । तेजस्वितमम् । तमिन्द्रं **ऊतये योगेयोगे** सर्वेषु ध्यानयोगेषु । **वाजेवाजे** सर्वेषु युद्धेषु । मननेषु च हवामहे ।। ७ ।।

**मन्त्रार्थमञ्जरी–** (हे) सखायः । वयम्– तवस्तरम्, 'तवस्' इति बलस्येव तेजसोऽपि नाम, अन्तर्णीतमतुबर्थं च, तेजस्वितमम्, अतिशयेन तेजस्वी तवस्तरम् । इन्द्रम् । ऊतये, रक्षायै । योगेयोगे, सर्वेषु ध्यानयोगेषु । वाजेवाजे, सर्वेषु युद्धेषु मननेषु च । हवामहे, आह्वयामः ।। ७ ।।

**स्कन्द–** अपूर्वस्यागमो योग इत्यत्रेच्छाप्राप्तिः । तत्रतत्रेच्छाप्राप्तौ बलवत्तरम् इन्द्रम् । इदमिदं ददातीतीन्द्रम् । तत्र तत्र सङ्ग्रामे च हवामहे । हे **सखायः!** तत्र तत्र पालनाय ।।

**वेङ्कटमाधव–** प्रवेशेप्रवेशे अतिशयेन बलयुक्तम् **इन्द्रम्** युद्धेयुद्धे हवामहे **सखायः** सन्तो रक्षणाय ।। ७ ।।

**मुद्गल– योगेयोगे** प्रवेशे प्रवेशे तत्तत्कर्मोपक्रमे **वाजेवाजे** कर्मविघातिनि तस्मिंस्तस्मिन् सङ्ग्रामे **तवस्तरम्** अतिशयेन बलिनम् **इन्द्रम् ऊतये** रक्षार्थम् **सखायः** सखिवत्प्रिया वयम् **हवामहे** आह्वयामः ।। ७ ।।

**सायण– योगेयोगे** प्रवेशे प्रवेशे तत्तत्कर्मोपक्रमे **वाजेवाजे** कर्मविघातिनि तस्मिंस्तस्मिन् सङ्ग्रामे **तवस्तरम्** अतिशयेन बलिनम् **इन्द्रम् ऊतये** रक्षार्थम् **सखायः** सखिवत्प्रिया वयम् **हवामहे** आह्वयामः ।

योगेयोगे । 'युजिर् योगे' । 'हलश्च' इति घञ् । 'चजोः कु घिण्यतोः' (पा.सू.७- ३-५२) इति कुत्वम् । घञो ञित्त्वादाद्युदात्तत्वम् । 'नित्यवीप्सयोः' इति वीप्सायां द्विर्भावे सति आम्रेडितानुदात्तत्वम् । तवस्तरम् । तवसः शब्दात् 'अस्मायामेधा' (पा.सू.५-२-१२१) इति मत्वर्थीयो विनिः । तस्य च्छान्दसो लोपः ।। ७ ।।

**सिद्धाञ्जनम्– योगेयोगे** तत्र तत्र इन्छालाभे विषये **वाजेवाजे** तत्र तत्र समृद्धौ निमित्तभूतायां च **सखायः** सखिभूता वयं **इन्द्रं** देवं **ऊतये** अस्मदभिवृद्धये **हवामहे** आह्वयामः । कथंभूतमिन्द्रम्? **तवस्तरं** अतिशयेन बलिनम् । तवस शब्दात् मत्वर्थीयो विनिः छान्दसो लोपः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः । वाजेभिरुप नो हवम् ।। ८ ।।**

आ । घ । गमत् । यदि । श्रवत् । सहस्रिणीभिः । ऊतिभिः । वाजेभिः । उप । नः । हवम् ।।

## ऋग्भाष्यम्

**उक्तं चेत्स शृणोत्येव श्रुतं चेदागमिष्यति ।**
**बह्वर्थयुक्ताभिप्रायैरन्नैरप्युप नो हवम् ।। ८ ।।**

**ऋग्भाष्यटीका– आ घ** । अत्र यदि श्रवदिति परमेश्वरस्य श्रवणं पाक्षिकं प्रतीयते । तत्परिहाराय सोपस्करं व्याख्याति । **उक्तं चेदिति** ।। यद्यस्माभिरागच्छेत्युक्तं स्यात् तदा स इन्द्रः शृणोत्येवेत्यध्याहारः । **यदि श्रवच्छृणुयात्** । भक्त्योक्तं श्रुतं चेत्तर्हि **सहस्रिणीभिः** सहस्रवतीभिः । **ऊतिभिः** अभिप्रायैः बह्वर्थयुक्ताभिप्रायैः सह अन्नानां पृथगुक्तेस्तदन्यान्बहून् पुरुषार्थान् दातुमिति यावत् । **वाजेभिः** अन्नैरपि सह अन्नानि च दातुम् । **नो**ऽस्माकम् । हवमाह्वानम् । **उपागमत् घ** उपागच्छेदेव । आगमिष्यति ।। ८ ।।

**मन्त्रार्थमञ्जरी–** (इन्द्रः) यदि । श्रवत्, शृणुयात्, भक्तोक्तं श्रुतं चेत् । (तर्हि) सहस्रिणीभिः, सहस्रवतीभिः । ऊतिभिः, अभिप्रायैः बह्वर्थयुक्ताभि(क्तै)रभिप्रायैः, सह, बहून्पुमर्थान्दातुमिति यावत् । वाजेभिः, अन्नैः । (अपि), अन्नानि च दातुमिति यावत् । नः, अस्माकम् । हवम्, आह्वानम् । उप आ गमत् घ, उपागमदेव, आगमिष्यत्येव इति ।।८।।

**स्कन्द–** **घ** इति पदपूरणः । **उप** इति तृतीयपादस्य उपसर्गः आ गमत् इत्याख्यातेन सम्बन्धयितव्यः । **उपागमत्** उपागच्छेत् । **यदि श्रवत्** शृणुयादिन्द्रः । कथं पुनरुपागच्छेत् । **सहस्रिणाभिः ऊतिभिः** 'इत्थम्भूतलक्षणे' (पा.२-३-२१) इत्येवमेषा तृतीया । सहस्र-सङ्ख्यायुक्तैः पालनैः सम्बद्धः । पालनसाहस्रैरस्मान् पालयन्नित्यर्थः । **वाजेभिः** अन्नैश्च । अन्नानि च दददित्यर्थः । किं यदि शृणुयात् । उच्यते– **नः** अस्माकं स्वभूतम् हवम् आह्वानम् ॥ ८ ॥

**वेङ्कटमाधव–** उपागच्छेदिन्द्रः यदि शृणुयात् आह्वानं सहस्रसंख्यैः पालनैरन्नैश्च ॥ ८ ॥

**मुद्गल–** **यदि** अयम् इन्द्रः नः अस्मदीयम् **हवम्** आह्वानम् **श्रवत्** श्रुणुयात्, तदानीम् स्वयमेव **सहस्रिणीभिः ऊतिभिः** बहुभिः पालनैः **वाजेभिः** अन्नैश्च सह **उप** समीपे **घ** अवश्यम् **आ गमन्** ॥ ८ ॥

**सायण–** **यदि** अयम् इन्द्रः नः अस्मदीयम् **हवम्** आह्वानम् **श्रवत्** श्रुणुयात्, तदानीम् स्वयमेव **सहस्रिणीभिः ऊतिभिः** बहुभिः पालनैः **वाजेभिः** अन्नैश्च सह **उप** समीपे **घ** अवश्यम् **आ गमन्** आगच्छेत् ।

घ । 'ऋचि तुनुघ' इत्यादिना संहितायां दीर्घः । गमत् । 'लिडर्थे लेट्' । 'लेटोऽडाटौ' इति अडागमः । 'इतश्च लोपः' इति इकारलोपः । यद्वा । छान्दसे लुङि 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' (पा.सू.३-१-५५) इति चेः अङादेशः । 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा.सू.६-४-७५) इति अडभावः । श्रवत् । 'श्रु श्रवणे' । पूर्ववत् लेटि अडागमः । वाजेभिः । 'बहुलं छन्दसि' इति भिस ऐसादेशाभावः । हवम् । 'भावेऽनुपसर्गस्य'(पा.सू.३-३-७५) इति ह्वयतेः अप् संप्रसारणं च । अपः पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् ॥ ८ ॥

**सिद्धाञ्जनम्–** **घ** पादपूरणः संहितायां दीर्घः । स इन्द्रः यदि **श्रवत्** शृणुयाद्यदि, कम्? **नः** **हवं** अस्मदीयं हवं आह्वानं इत्यर्थः । **उप आ गमत्** अस्मत्समीपं अवश्यं आगच्छेत् (श्रवत्, गमत् द्वयं च लिङर्थे लेट्) कथमागच्छत् ? **सहस्रिणीभिः ऊतिभिः** बह्वीभिः वृद्धिभिः तत्सम्पादिकाभिरित्यर्थः, तथा **वाजेभिः** समृद्धिभिश्च युक्तः आगच्छेत् । इत्थंभूतलक्षणे तृतीया ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् । यं ते पूर्वं पिता हुवे ॥ ९ ॥**

अनु । प्रत्नस्य । ओकसः । हुवे । तुविऽप्रतिम् । नरम् । यम् । ते । पूर्वम् । पिता । हुवे ॥ ९ ॥

## ऋग्भाष्यम्

**पुरातनस्य विष्णोस्तदोकसोऽर्थे ह्वये हरिम् ।**
**महान् प्रति प्रतिस्थश्च तुविप्रतिरितीरितः ।**
**यं त्वां पूर्वं पिता ज्ञातैवाह्वयामास विश्वकृत् ।**
**त्वद्भक्त इति वा ब्रह्मा.....................॥ ९ ॥**

**ऋग्भाष्यटीका–** **अनु** । पुरातनस्य । अहं **प्रत्नस्य** पुरातनस्यानादेर्विष्णोः । **ओकसस्त**-दोकसः प्रसिद्धस्थानस्य वैकुण्ठादेरर्थे । **तुविप्रतिं नरम्** अक्षयमिन्द्रं हरिं त्वाम् । **हुवे** ह्वये । आह्वयामि । तुविप्रतिः कुत इत्यत आह । **महानिति** ।। तुवीति बहुनाम । ततो महान् प्रति प्रतिस्थः । सर्वान्वैरिणः प्रति तिष्ठतीति प्रतिः । प्रतिरयमुपसर्गः । उपसर्गाश्च सति क्रियावचने तत्सम्बन्धिनो भवन्ति । असति तु ससाधनां क्रियामाहुः । द्विर्वचनं त्वभिप्रायमात्रेण न तु ततः कर्मप्रवचनीयत्वम् । तुविर्महांश्चासौ प्रतिः प्रति प्रतिस्थश्चेति तुविप्रतिरितीरितः । कथं भूतम् । **यं ते** त्वाम् । **पूर्वं** पूर्वस्मिन्काले । **ते पिता** ज्ञातैव न तु जनको विश्वकृत् ब्रह्मा । **हुवे** आह्वयामास । यद्वा **ते** त्वदीयस्त्वद्भक्तो विश्वस्य **पिता** ब्रह्मा । **हुव** इति व्याख्येयम् ॥ ९ ॥

**मन्त्रार्थमञ्जरी–** अहम् प्रत्नस्य, पुरातनस्य, अनादेर्विष्णोः । ओकसः, प्रसिद्धस्थानस्य, वैकुण्ठादेः । (अनु) अर्थे, वैकुण्ठप्राप्त्यै । तु विप्रतिम्, तुविश्चासौ प्रतिश्च सर्ववैरिप्रतिस्थश्च, तम् । नरम्, अक्षयम्, इन्द्रं त्वाम् । हुवे, आह्वयामि यम् । ते, त्वाम् । पूर्वम्, पूर्वकाले । (ते) पिता, ज्ञातृत्वाद्विश्वकृद्ब्रह्मा । हुवे, आह्वयामास, व्यत्ययात् । यद्वा– ते, त्वदीयः, त्वद्भक्तः । विश्वस्य पिता, ब्रह्मा । यम् । (ते) त्वाम् । हुवे, आह्वयत् इति ॥ ९ ॥

**स्कन्द–** अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । 'प्रत्नम्' (निघ.३-२७) इति पुराणनाम । 'ओक इति निवासनाम' (या.३-३) । षष्ठी चोभयत्र

कर्मप्रवचनीययोगलक्षणद्वितीयास्थाने । पुराणनिवासस्थानं सोमाख्यं प्रति हुवे आह्वयामि त्वाम् । कीदृशम् । **तुविप्रतिम्** 'तुविः' (निघ.३-२) बहुनाम इति । प्रतिशब्द उपसर्गः । 'उपसर्गाश्च पुनरेवामात्मकाः यत्र कश्चित् क्रियावाचीशब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुः । यत्र तु क्रियावाची शब्दो न प्रयुज्यते ससाधनां तत्र क्रियामाहुः' (पाम.५-२-२८) । तेनायं प्रत्यवस्थातरि प्रतिशब्दो वर्तते । बहूनां प्रत्यवस्थाता तुविप्रतिः कृतानेकयुद्ध इत्यर्थः । तं तुविप्रतिं नरम् मनुष्याकारम् । **यम् ते** द्वितीयार्थे षष्ठ्येषा । यम् त्वाम् **पूर्वम् पिता** अपि मम **हुवे** आहूतवान् । अथवा यमिति प्रत्नस्यौकसः सोमाख्यस्य प्रतिनिर्देशः । यं सोमं ते तव स्वभूतं प्रति पिता मम आहूतवान् इति ।। ९ ।।

**वेङ्कटमाधव– यम्** इन्द्रं । तव **पिता** आहूतवान् तमहं त्वदर्थं पुराणस्यास्य निवासस्थानात् अनुक्रमेण **हुवे** अनेकेषु गच्छन्तं नेतारम् ।। ९ ।।

**मुद्गल– प्रत्नस्य** पुरातनस्य **ओकसः** स्थानस्य स्वर्गरूपस्य सकाशात् **तुविप्रतिम्** बहून् यजमानात् प्रति गन्तारम् **नरम्** पुरुषम् इन्द्रम् **अनु हुवे** अनुक्रमेण कर्मसु आह्वयामि । **यम् ते** त्वामिन्द्रं **पिता** अस्मदीयो जनकः **पूर्वम्** पुरा स्वकीयानुष्ठानकाले **हुवे** आहूतवान् । तमाह्वयामीति पूर्वत्रान्वयः ।। ९ ।।

**सायण– प्रत्नस्य** पुरातनस्य **ओकसः** स्थानस्य स्वर्गरूपस्य सकाशात् **तुविप्रतिम्** बहून् यजमानात् प्रति गन्तारम् **नरम्** पुरुषम् इन्द्रम् **अनु हुवे** अनुक्रमेण कर्मसु आह्वयामि । **यम् ते** त्वामिन्द्रं **पिता** अस्मदीयो जनकः **पूर्वम्** पुरा स्वकीयानुष्ठानकाले **हुवे** आहूतवान् । तमाह्वयामीति पूर्वत्रान्वयः ।

ओकसः । 'नब्विषयस्य' इत्याद्युदात्तत्वम् । हुवे । 'ह्वेञ् स्पर्धायां शब्दे च' । इटि 'बहुलं छन्दसि' इति संप्रसारणं परपूर्वत्वम् । गुणे प्राप्ते 'क्ङिति च' इति प्रतिषेधः । उवङादेशः । प्रत्ययस्वरेणान्तोदात्तत्वम् । पादादित्वादनिघातः । तुविप्रतिम् । तुवीनां बहूनां प्रतिगन्तारम् । अत्र प्रतिशब्दो भीमसेनो भीम इतिवत् प्रतिगन्तृशब्दं लक्षयित्वा तद्वारा तदर्थं लक्षयति । अतः 'प्रतिः प्रतिनिधिप्रतिदानयोः' (पा.सू.१-४-९२ ) इतिवत् सत्ववचनत्वेन अनिपातत्वात् अनव्ययत्वे 'पूरणगुण' (पा.सू.२-२-११) इत्यादिना न पष्ठीसमासनिषेधः । हुवे । ह्वेञो

लिटि 'बहुलं छन्दसि' इति पूर्ववत् संप्रसारणपरपूर्वत्वे । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (पा.सू.६-१-८२) इति द्विर्वचनाभावः । यद्वृत्तयोगादनिघातः ॥ ९ ॥

**सिद्धाञ्जनम्–** **प्रत्नस्य** पुरातनस्य **ओकसः** स्थानस्य सकाशात् **तुविप्रतिं** तुवीनां बहूनां अन्तर्यागप्रवृत्तानां प्रति प्रतिगन्तारम् तान् अनुग्रहीतुं आगन्तारमित्यर्थः, **नरं** पुरुषं बलिनं इन्द्रं **अनु हुवे** अनुक्रमेण आह्वयामि । **यं ते** त्वां (विभक्तिव्यत्ययः) **पिता** अस्मत्पिता **पूर्वं** **हुवे** जुहुवे, आहूतवान् । पितेति पूर्वपुरुषाणामृषीणामुपलक्षणम् । हुवे-ह्वेञ् धातुः, द्विर्वचनाभावः छन्दसि बहुलम् । तुविप्रतिम्-प्रतिः प्रतिनिधि-प्रतिदानयोरितिवत्, सत्त्ववचनतया प्रयुक्तः, भीमसेनो भीम इव । ते त्वामिति विभक्तिव्यत्ययेन इन्द्रमिति व्याख्यातम्, उत्तरत्र इन्द्रसम्बोधनश्रवणात् सङ्गच्छते चैतत् । अथवा आत्मानमेव ऋषिः 'तव पिता यं आहूतवान्' इत्याह ॥ ९ ॥

## ऋक्संहिता पदपाठसहिता

**तं त्वा वयं विश्ववाराशास्महे पुरुहूत । सखे वसो जरितृभ्यः ॥ १०, २९ ॥**

तम् । त्वा । वयम् । विश्वऽवार । आ । शास्महे । पुरुऽहूत । सखे । वसोइति । जरितृऽभ्यः ॥

## ऋग्भाष्यम्

**.................तं त्वामाशास्महे वयम् ॥ १० ॥**

**ऋग्भाष्यटीका–** **तं त्वा** । तं त्वाम् । हे **विश्ववार** सर्वैर्वरणीय । **पुरुहूत** बहुभिराहूत । **सखे** । सर्वत्र वसतीति वसुः । **वसो** । **वयं** तमुक्तरूपं **त्वा** त्वां **आशास्महे** इच्छामः । न केवलमस्मदर्थे किन्तु **जरितृभ्यः** अन्येभ्योऽपि स्तोतृभ्यः ॥ १० ॥

**मन्त्रार्थमञ्जरी–** (हे) विश्ववार, सर्वैर्वरणीय, वृञः कर्मणि घञ्, वृद्धिः । पुरुहूत, बहुभिराहूत । सखे । वसो, सर्वत्र वसतीति वसेः उः, सर्वग । वयम् । तम्, उक्तरूपम् । त्वा, त्वाम् । आ शास्महे, इच्छामः । न केवलमस्मदर्थे, किं तु जरितृभ्यः (अपि), स्तोतृभ्योऽपि ॥ १० ॥

**स्कन्द–** यं उक्तगुणोऽसि, **तम् त्वा वयम्** हे **विश्ववार!** सर्वस्य वरणीय! **आ शास्महे** प्रार्थयामहे । आत्मनोऽर्थाय जीवितं याचामह इत्यर्थः । हे **पुरुहूत! सखे! वसो!** शतपथे–

'यद्वै नु श्रेष्ठस्तेन वसिष्ठः' (माश ८-१-१,६) इति वसिष्ठशब्दस्य श्रेष्ठशब्देनार्थविवरणदर्शनाद् वसुशब्दः प्रशस्यवचनः, धननाम वा अत्रान्तर्णीतमत्वर्थः । प्रशस्य! धनवान्! वा न केवलमात्मन एवार्थाय । किं तर्हि । **जरितृभ्यः** अन्येषामपि स्तोतॄणामर्थाय । अथवा जरितृभ्य इत्यात्मन एव प्रतिनिर्देशः । स्तोतुरात्मनोऽर्थायेत्यर्थः ॥ १० ॥

**वेङ्कटमाधव– तम् त्वा वयम्** सर्वेषां वरणीय! प्रार्थयामः सखे! वासयितः । स्तोतॄणाम् ॥ १० ॥

**मुद्गल–** हे **विश्ववार!** सर्वैर्वरणीय! **पुरुहूत!** बहुभिः स्वस्वकर्मण्याहूत । सखे! सखिवत्प्रिय! **वसो!** निवासहेतो! इन्द्र! **तम्** पूर्वोक्तगुणयुक्तम् **त्वा** त्वाम् **जरितृभ्यः** स्तोतॄणामनुग्रहार्थम् वयम् **आ शास्महे** प्रार्थयामहे ॥ १० ॥

**सायण–** हे **विश्ववार!** सर्वैर्वरणीय! **पुरुहूत!** बहुभिः स्वस्वकर्मण्याहूत । सखे! सखिवत्प्रिय! **वसो!** निवासहेतो! इन्द्र! **तम्** पूर्वोक्तगुणयुक्तम् **त्वा** त्वाम् **जरितृभ्यः** स्तोतॄणामनुग्रहार्थम् वयम् **आ शास्महे** प्रार्थयामहे ।

आ शास्महे । 'आङः शासु इच्छायाम्' । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । वसो । 'नामन्त्रिते समानाधिकरणे' इति पूर्वस्य अविद्यमानवत्त्वनिषेधात् पराङ्गवद्भावे सति शेषनिघातेन वा 'आमन्त्रितस्य च' इति वा सर्वानुदात्तत्वम् । जरितृभ्यः । जरतिः स्तुतिकर्मा । तृचश्चित्त्वादन्तोदात्तत्वम् ॥ १० ॥

**सिद्धाञ्जनम्– विश्ववार!** विश्वैः वरणीय, **पुरुहूत!** पुरुभिः बहुभिः आहूत, **सखे!** समानख्यान, अस्मत्सहाय, **वसो!** धनभूत **तं** पूर्वोक्तगुणविशिष्टं **त्वां** इन्द्रं **वयं** तव सखायः **जरितृभ्यः** स्तोतृभ्यः, तेषामनुग्रहार्थमित्यर्थः **आशास्महे** प्रार्थयामहे ॥ १० ॥

॥ इति प्रथमाष्टके द्वितीयाध्याये एकोनविंशो वर्गः ॥

## ।। अथ त्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अस्माकं शिप्रिणीनां सोमपाः सोमपाव्नाम् । सखे वज्रिन्त्सखीनाम् ।। ११ ।।**

अस्माकम् । शिप्रिणीनाम् । सोमऽपाः । सोमऽपाव्नाम् । सखे । वज्रिन् । सखीनाम् ।। ११ ।।

## ऋग्भाष्यम्

**अस्माकं सुखिनां सोमपातॄणाम्.............।। ११ ।।**

**ऋग्भाष्यटीका– अस्माकम्** । अस्माकम् । हे **सोमपाः सखे वज्रिन्** । **शिप्रिणीनां** शिप्रं सुखम् । लिङ्गव्यत्ययेन सुखिनाम् । **सोमपाव्नाम्** आतो मनिन्नित्यादिना वनिप् । सोमपातॄणां तव सखीनामस्माकम् । भद्रं भवत्विति शेषः ।। ११ ।।

**मन्त्रार्थमञ्जरी–** (हे) सोमपाः सखे वज्रिन् । शिप्रिणीनाम्, शिप्रं सुखम्, लिङ्गव्यत्ययेन सुखिनाम् । सोमपाव्नाम्, 'आतो मनिन्' इत्यादिना पातेः वनिप्, सोमपातॄणाम् । तव सखीनाम् अस्माकम् । (भद्रं भवतु) इति शेषः ।। ११ ।।

**स्कन्द– अस्माकम् शिप्रिणीनाम्** शिप्रे हनू नासिके वा । तद्वतामित्यर्थः । हे **सोमपाः! सोमपाव्नाम्** सोमस्य पातॄणाम् हे **सखे! वज्रिन्! सखीनाम्** तथा तदस्तु त्वत्प्रसादेन ।। ११ ।।

**वेङ्कटमाधव– अस्माकम्** सोमपानसाधनभूतशिप्रायुक्तानाम् सोमस्य पातः! सोमपातॄणाम् **सखे! वज्रिन्! सखीनाम्** उत्तरत्र सम्बन्धः ।। ११ ।।

**मुद्गल–** हे **सोमपाः!** सोमस्य पातः । **सखे!** सखिवत्प्रिय । **वज्रिन्!** वज्रयुक्तेन्द्र । **सखीनम्** सखिवत् प्रियाणां **सोमपाव्नाम्** सोमस्य पातॄणाम् **अस्माकम् शिप्रिणीनाम्** हनूभ्यां युक्तानां गवां समूहः त्वत्प्रसादादस्त्विति शेषः ।। ११ ।।

**सायण–** हे **सोमपाः**! सोमस्य पातः । **सखे**! सखिवत्प्रिय । **वज्रिन्**! वज्रयुक्तेन्द्र । **सखीनम्** सखिवत् प्रियाणां **सोमपाव्नाम्** सोमस्य पातॄणाम् **अस्माकम् शिप्रिणीनाम्** दीर्घाभ्यां हनूभ्यां नासिकाभ्यां वा युक्तानां गवां समूहः त्वत्प्रसादादस्त्विति शेषः ।

शिप्रिणीनाम् । 'ऋन्नेभ्यो ङीप्'(पा.सू.४-१-५) इति ङीप् । तस्य पित्त्वादनुदात्तत्वे सति प्रत्ययस्वरः शिष्यते । सोमपाः । आमन्त्रितस्य सतिशिष्टत्वात् आमन्त्रिताद्युदात्तत्वम् । सोमपाव्नाम् । 'आतो मनिन्' इत्यादिना वनिप् । 'अल्लोपोऽनः' (पा.सू.६-४-१३४) इति अनः अकारस्य लोपः ।। ११ ।।

**सिद्धाञ्जनम्–** हे **सोमपाः**! सोमस्य पातः । **अस्माकं** सम्बन्धे षष्ठी, अस्मत्सम्बन्धिनां **शिप्रिणीनां** शोभनहनुयुक्तानां मुखोपलक्षणं, पानकर्मणि प्रियदर्शनत्वद्योतनार्थकमिदम्, 'शिप्राभ्यां शिप्रिणीनाम्' (१०-१०१-५) इति सुशिप्रार्थे शिप्रिणीशब्दः प्रयुक्तः । **सोमपाव्नाम्** सोमस्य पातॄणां **सखीनां** सखिवत्प्रियाणां देवानां **सखे** प्रिय, **वज्रिन्** वज्रयुक्त, त्वामाश्रयामः, स्तुमः, तवानुग्रहं प्रार्थयामहे, इति वा वाक्यशेषः । अस्माकं सखीनां गवां समूहः त्वत्प्रसादादस्त्विति वाक्यशेषः सायणव्याख्यानुसारतः ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**तथा तर्दस्तु सोमपाः सखे वज्रिन्तथा कृणु । यथा त उश्मसीष्टये ।। १२ ।।**

तथा । तत् । अस्तु । सोमऽपाः । सखे । वज्रिन् । तथा । कृणु । यथा । ते । उश्मसि । इष्टये ।।

## ऋग्भाष्यम्

**..........................अस्तु तत्तथा ।**
**ते सकाशाद्यथेच्छामः प्राप्तुं देव तथा कृणु ।**
**वज्रो ज्ञानं वज गतावित्यस्मात्...........।। १२ ।।**

**ऋग्भाष्यटीका– तथा तत्** । अस्तु तत् । हे **सोमपाः सखे वज्रिन्** देव । वयं ते सकाशादिति शेषः । यथा यत्र **इष्टये** गत्यर्थोऽयं प्राप्तुं **उश्मसि** । वश कान्तौ । इच्छामः । तत्तथास्तु । कथं त्वं **तथा कृणु** कुरु । हरौ वज्रिशब्दं घटयितुं वज्रशब्दार्थमाह ।। **वज्र इति** ।।

व्रज गतावित्यस्माद्भावे रप्रत्यये कृते गत्यर्थानां ज्ञानार्थत्वात् वज्रो ज्ञानमिति लभ्यते । तदस्यास्तीति वज्रीति ।। १२ ।।

**मन्त्रार्थमञ्जरी–** (हे) सोमपाः सखे वज्रिन्, देव । वयम्– ते (सकाशात्) इति शेषः । यथा (यच्च) इष्टये, 'इष गतौ' प्राप्तुम् । उश्मसि, 'वश कान्तौ' इच्छामः । तत् तथा अस्तु । कथम् ? त्वम्– तथा । कृणु, कुरु । वज्रिन्पदं भगवति प्राक् निरूपितम्, यद्वा 'वज गतौ' भावे रः (रन्) मतुबर्थ इनिप्रत्ययः, 'ज्ञानिन्' इति ध्येयम् ।। १२ ।।

**स्कन्द– तथा तदस्तु** सखीनां त्वत्प्रसादेन हे **सोमपाः! सखे! वज्रिन्! तथा कृणु यथा उश्मसि** कामयामहे वयम् । वयं हि चिरं जीवेमेति कामयामहे । त्वत्प्रसादेन तथैव **अस्तु** । स्वमपि **तत्** तथैव कुर्वित्यर्थः । किमर्थम् । **इष्टये** तव यागाय ।। १२ ।।

**वेङ्कटमाधव– यथा** वयं त्वत्त कामयामहे **तथा** अस्माकम् **तत् अस्तु** । **सखे! वज्रिन् ! तथा कुरु इष्टये** अभिलषितसिद्ध्यर्थमिति ।। १२ ।।

**मुद्गल–** हे **सोमपाः! सखे! वज्रिन्!** इन्द्र **इष्टये** अभिलषितार्थम् **ते** तव अनुग्रहम् **यथा** येन प्रकारेण **उश्मसि** वयं कामयामहे, त्वम् **तथा कृणु** कुरु । त्वत्प्रसादात् **तद्** अभीष्टम् **तथा अस्तु** ।। १२ ।।

**सायण–** हे **सोमपाः! सखे! वज्रिन्!** इन्द्र **इष्टये** अभिलषितार्थम् **ते** तव अनुग्रहम् **यथा** येन प्रकारेण **उश्मसि** वयं कामयामहे, त्वम् **तथा कृणु** कुरु । त्वत्प्रसादात् **तद्** अभीष्टम् **तथा अस्तु** ।

कृणु । 'कृषि हिंसाकरणयोश्च' । इदित्त्वात् नुम् । 'धिन्विकृण्व्योर च' (पा.सू.३-१-८०) इति उप्रत्ययः तत्संनियोगेन वकारस्य च अकारः । 'अतो लोपः' इति तस्य लोपः । तस्य स्थानिवद्भावात् लघूपधगुणाभावः । 'उतश्च प्रत्ययादसंयोगपूर्वात्' (पा.सू.६-४-१०६) इति हेर्लुक् । उश्मसि । 'वश कान्तौ' । 'इदन्तो मसि' । अदादित्वात् शपो लुक् । ग्रहिज्यादिना संप्रसारणम् । प्रत्ययस्वरः । यद्वृत्तयोगादनिधातः । इष्टये । 'इषु इच्छायाम्' । क्तिनि 'तितुत्र' (पा.सू.७-२-९) इत्यादिना इट्प्रतिषेधः । यद्वा । यजतेः क्तिनि 'वचिस्वपि' (पा.सू.६-

१-१५) इत्यादिना संप्रसारणम् । व्रश्चादिना षत्वे ष्टुत्वम् । पूर्वस्मिन् पक्षे 'मन्त्रे वृष' (पा.सू.३-३-९६) इति क्तिन उदात्तत्वम् । द्वितीये तु व्यत्ययेन ॥ १२ ॥

**सिद्धाञ्जनम्–** हे **सोमपाः!** सोमस्य पातः, **सखे!** सखिवत्प्रिय, **वज्रिन्!** वज्रयुक्त यथा येन प्रकारेण **ते** तव **इष्टये** यजनार्थं, यजतेः क्तिन् **उश्मसि** उपमः वयं कामयामहे, वश कान्तौ, इदन्तात् मसिः । **तथा** तेन प्रकारेण **तत् अस्तु** तद्यजनं भवतु, **तथा कृणु** तथा कुरु ॥ १२ ॥

## ऋक्संहिता पदपाठसहिता

**रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥ १३ ॥**

रेवतीः । नः । सधऽमादे । इन्द्रे । सन्तु । तुविऽवाजाः । क्षुऽमन्तः । याभिः । मदेम ॥ १३ ॥

## ऋग्भाष्यम्

**............................वित्तसंयुताः ।**
**रेवतीः पशवः प्रोक्ताः सधमादे सुखस्थितौ ।**
**तुविवाजा महान्नानि क्षुमन्तः स्थितिसंयुताः ।**
**ज्ञानयुक्तं सुखं वा स्यात्सतीशेऽस्माकमूर्जितम् ॥ १३ ॥**

**ऋग्भाष्यटीका–** रेवतीः । वित्तसंयुताः । वित्तसंयुता इत्यादिना रेवत्यादिवत्याशब्दार्थांस्तावदाह ॥ रैपर्यायो रेशब्दः । ततो रेवती रेवत्यो वित्तसंयुता इति भवति । यद्वा पशवो रेवत्यः प्रोक्ताः । पशवो वै रेवत्य इत्यादेः । सदेरकारप्रत्ययो दस्य च धः । सीदन्त्यस्मिन्निति सध आश्रयः । 'मदी हर्षे' भावे घञ् । मादः सुखं मादस्य सधः । उपसर्जनस्य पूर्वनिपातः । ततश्च सधमाद इत्यस्य सुखस्थितावित्यर्थो भवति । तिष्ठत्यस्मिन्निति स्थितिः । सधमादस्थयोः छन्दसीति तु नाश्रितम् । सहशब्दार्थानुपपत्तेः । तुविशब्दो बहुपर्यायः । वाजशब्दोऽन्नवाची । स्त्रीलिङ्गं वैदिकम् । अतः तुविवाजा महान्नानि । 'क्षि निवासगत्योः' इत्यतो डुप्रत्ययः । क्षुर्निवासः । क्षुमन्तः स्थितिसंयुताः । केचित्तु क्षुशब्द इत्यस्येदं रूपं मत्वा क्षुमन्तः शब्दवन्तः कीर्तिमन्त इति व्याकुर्वते । तदसत् । धातोः शब्दविशेषार्थत्वेन कीर्तेरलाभात् । रेवतीस्तुविवाजा इत्यस्य ज्ञानयुक्तं सुखं वार्थः । ज्ञानस्यैव मुख्यवित्तत्वात् । सुखस्यैव मुख्यान्नत्वात् । इदानीं

वाक्यार्थमाह ।। **स्यादिति** ।। ऊर्जितमेतदन्नादिकं **सधमाद इन्द्रे**ऽस्माकमीशे स्वामिनि सतीति शेषः । रेवतीर्वित्तसंयुतास्तुविवाजाः पशवस्तुविवाजाश्च वा सन्तु । कथंभूताः । वयं याभिः क्षुमन्तः सन्तो मदेम सुखिनो भवेम ।। १३ ।।

**मन्त्रार्थमञ्जरी**– सधमादे, 'मदी हर्षे' भावे घञ्, 'अत उपधायाः' इति वृद्धिः सीदत्यस्मिन्निति सदेः अकारो दस्य धः, पूर्वनिपातश्छान्दसः, मादसधे, सुखाश्रये (नः) इन्द्रे, अस्माकमीशे। (स्वामिनि सति) इति शेषः । रेवतीः, वित्तवत्यः । तुविवाजाः, स्त्रीलिङ्गं छान्दसम्, बह्वन्नानि रेवतीः, 'पशवो वै रेवत्यः' इति वचनाद्रेवत्यः पशवः । तुविवाजाः (च) वा । सन्तु । कथं भूताः ? याभिः । क्षुमन्तः, 'क्षि निवासगत्योः' इत्यतो डुः, स्थितिमन्तः । मदेम, सुखिनो भवेम । इति ।। १३ ।।

**स्कन्द**– रेवतीरित्येतत् सन्त्वित्येतेन सम्बन्धयितव्यम् । **रेवतीः सन्तु** धनवत्यो भवन्तु । धनस्य साधिका भवन्त्वित्यर्थः । **नः** अस्माकम् । काः । वाक्यसामर्थ्यात् स्तुतयः । कस्य । उच्यते । **सधमादे इन्द्रे** षष्ठ्यर्थे सप्तम्येषा । सहभूतैर्यो माद्यते तर्प्यते स्तूयते स सधमाद इन्द्रः तस्य । न च रेवतीरेव केवला । किं तर्हि । तुविवाजाः बह्वन्नाश्च । अन्नस्य बहुसाधिका इत्यर्थः । याः कीदृश्यः । उच्यते । **क्षुमन्तः** क्षुशब्द क्षु शब्दे इत्यस्य कीर्तिवचनः । कीर्तिमत्यः । वयम् याभिः मदेम 'मदति' (निघ.३-१४) इत्यर्चतिकर्मसु पाठाद् मदतिः स्तुत्यर्थः । याभिर्नित्यमिन्द्रं स्तवामेत्याशास्मह इत्यर्थः ।। १३ ।।

**वेङ्कटमाधव**– योऽस्माभिः सह सोमेन माद्यतीन्द्रः तस्मिन् **इन्द्रे** बह्वन्नाः आपः अस्माकम् **सन्तु** । क्षुधिता वयम् **याभिः मदेम** शब्दवन्तो विख्याता वेति ।। १३ ।।

**मुद्गल**– **क्षुमन्तः** अन्नवन्तो वयम् **याभिः** गोभिः सह **मदेम** हृष्येम, **सधमादे** अस्माभिः सह हर्षयुक्ते **इन्द्रे** सति **नः** अस्माकं ता गावः **रेवतीः** क्षीराज्यादिघनवत्यः **तुविवाजाः** प्रभूतबलाश्च **सन्तु** ।। १३ ।।

**सायण**– **क्षुमन्तः** अन्नवन्तो वयम् **याभिः** गोभिः सह **मदेम** हृष्येम, **सधमादे** अस्माभिः सह हर्षयुक्ते **इन्द्रे** सति **नः** अस्माकं ता गावः **रेवतीः** क्षीराज्यादिघनवत्यः **तुविवाजाः** प्रभूतबलाश्च **सन्तु** ।

रेवतीः । रयिशब्दात् मतुपि 'रयेमैतौ बहुलम्' इति संप्रसारणं परपूर्वत्वम् । 'छन्दसीरः' इति मतुपो वत्वम् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । 'आरेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम्' इति रेशब्दात् उत्तरस्यापि भवतीति पूर्वमेवोक्तम् । सधमादे । 'मद तृप्तियोगे' । चौरादिकः । सह मादयतीति सधमादः । पचाद्यच् । 'सध मादस्थयोश्छन्दसि' (पा.सू.६-३-९६) इति सहशब्दस्य सधादेशः । थाथादिना उत्तरपदान्तोदात्तत्वे प्राप्ते 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । तुविवाजाः । 'तु' इति सौत्रो धातुर्वृद्ध्यर्थः । 'अच इ' इति इः । संज्ञापूर्वकत्वात् गुणो न भवति । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । क्षुमन्तः । 'टुक्षु शब्दे' । अस्मात् क्विपि तुगभाव छान्दसः । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । मदेम । 'मदी हर्षे' । व्यत्ययेन शप् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम् । ततो धातुस्वरः शिष्यते ।। १३ ।।

**सिद्धाञ्जनम्– तुविवाजाः** बहुबलसमृद्धयः **रेवतीः** घनवत्यः (रयिः दिव्यं धनं भवति, रयिशब्दात् सम्प्रसारणे मतुप्, प्रथमार्थे द्वितीया) **सन्तु** भवन्तु । कास्ता 'रेवतीः'? विशेष्यं ऋचि नोक्तम् । स्तुतय इति स्कन्दस्वामी, गाव इति सायणः, गावः स्युः, न ताः पशवः, किन्तु प्रज्ञारश्मिधनप्रसविन्यः, बहुबलसमृद्धिसम्पन्नाः दिव्याः शक्तयः सम्पदो वा भवितुमर्हन्ति । तादृश्य सम्पदः **सधमादे** अस्माभिः सह हृष्यति **इन्द्रे नः** अस्माकं सन्त्विति योजना (सह मादयतीति सधमादः, चुरादिः, सधमाधस्ययोः सहादेशः छन्दसि) । अस्माभिः सह संहर्षवति इन्द्रे भगवति अस्माकं सम्पदः शक्तयो दिव्या उक्तलक्षणा गावो वा भवन्तु । **याभिः** उक्ताभिः वयं **क्षुमन्तः** सम्भारवन्तः **मदेम हृष्येम** । क्षुशब्दः अन्नवाची प्रायशः सायणीये, क्वचित् शब्दः स्तुतिः कीर्तिश्च भवति, एकत्र लक्षणया 'क्षुमति धनाढ्ये' इति व्याख्यातम् । एवं हि सम्भारो राशिः निधानं वा प्रायः सर्वत्र सङ्गच्छते ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**आ घ त्वावान्त्मनाप्तः स्तोतृभ्यो धृष्णवियानः । ऋणोरक्षं न चक्र्योः ।। १४ ।।**

आ । घ । त्वाऽवान् । त्मना । आप्तः । स्तोतृऽभ्यः । धृष्णोइति । इयानः । ऋणोः । अक्षम् । न । चक्र्योः ।। १४ ।।

## ऋग्भाष्यम्

**त्वद्वांस्त्वयैव चाप्तः स्यात्स्तोतृणामा समंततः ।**
**इयानो गम्यमानस्तै रणतोश्चक्रयोर्यथा ।**
**अक्षमाश्रयभावेन......................।। १४ ।।**

**ऋग्भाष्यटीका– आघ** । त्वद्वान् हे । हे **धृष्णो** प्रगल्भ । **त्वावान्** त्वद्वांस्त्वत्स्वामिकः पुरुषः । **त्मना** मन्त्रेष्वाङ्‌व्यादेरात्मनः । आत्मना घ त्वयैवाप्तः स्यात् । न केवलमन्त्रादिमानिति चशब्दः । वक्ष्यमाणसमुच्चये वा । किञ्च । **स्तोतृभ्यः** षष्ठ्यर्थे चतुर्थी स्तोतृणाम् । तृतीयार्थे वा तैस्स्तोतृभिः शिष्यैः । आ समंततः । इयानः गम्यमानस्तदाश्रयश्च स्यात् । इण्गतावित्यस्येदं रूपम् । किमिव । ऋणोः रणतोः रणतेः क्विपि सम्प्रसारणं शब्दं कुर्वतोः । चक्र्योः चक्रपर्यायश्चक्रि-शब्दः । चक्रयोरक्षं न यथाक्षमाश्रयभावेन वर्तते तथा । दार्ष्टान्तिके स्तोतृभ्य इत्युक्तत्वादत्रा-प्यृणोरित्युक्तम् ।। १४ ।।

**मन्त्रार्थमञ्जरी–** (हे) धृष्णो, प्रगल्भ । त्वावान्, त्वद्वान्, त्वत्स्वामिकः पुरुषः । त्मना, 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः, आत्मना । घ, त्वयैव । आप्तः (स्यात्) । किं च, स्तोतृभ्यः, षष्ठ्यर्थे चतुर्थी, स्तोतृणाम्, तृतीयार्थे वा, तैः स्तोतृभिः शिष्यैः । आ, समन्ततः । इयानः, तदाश्रयः । (च स्यात्) 'इण् गतौ' इत्यस्य चानश्, इयङादेशः । किमिव ? ऋणोः, रणतोः, रणतेः क्विपि सम्प्रसारणम्, शब्दं कुर्वतोः । चक्र्योः, चक्रपर्यायश्चक्रिशब्दः, चक्रयोः । अक्षम् न, यथाक्षमाश्रयभावेन वर्तते तथा । दार्ष्टान्तिके 'स्तोतृभ्यः' इत्युक्तत्वाद्दृष्टान्तेऽपि 'ऋणोः' इत्युक्तम् ।। १४ ।।

**स्कन्द– आ** इत्युपसर्गः **ऋणोः** इत्याख्यातेन सम्बन्धयितव्यः । **घ** इति पदपूरणः । **त्वावान्** त्वत्सदृशः **त्मना** आप्तः आत्मना स्तोतृभिः स्तुतिभिर्वा व्याप्तः । स्तुतः सन्नित्यर्थः । **स्तोतृभ्यः** हे धृणो! प्रगल्म! अभिभवितः! वा शत्रूणाम् । **इयानः** 'ईमहे' (निघ.३-१९) इत्यस्य याच्ञाकर्मण इदं रूपम् । याच्यमानः । **आ ऋणोः** ऋणु गतौ । सामर्थ्याच्चान्तर्णीत-ण्यर्थः । व्यत्ययेन च प्रथमपुरुषस्य स्थाने मध्यमपुरुषः। **आ ऋणोत्** आगमयति । किम् । सामर्थ्यादुत्तरस्यां चर्चिदर्शनात् कामान् स्तोतृभ्यो ददातीत्यर्थः । कथं च पुनः प्रेरयति । अक्षम् न चक्र्योः यथा अक्षं कश्चित् चक्रयोः प्रक्षिपेदेवं कामान् स्तोतृषु प्रक्षिपेदित्यर्थः ।। १४ ।।

**वेङ्कटमाधव–** त्वत्सदृशःस्तोतृकार्यार्थं शत्रूणां धर्षयितः! स्वयमेव गच्छन् भवति बन्धुः । तथा त्वं च स्वयमेव आगतः सन् स्तोतृणां कामान् **ऋणोः** प्राक्षिपः, यथा **अक्षम् चक्र्योः** प्रक्षिपन्ति ।। १४ ।।

**मुद्गल–** हे **धृष्णो**! धाष्टर्ययुक्त! इन्द्र! **त्वावान्** त्वत्सदृशो देवताविशेषः **त्मना आप्तः** त्वदनुग्रहवशात् स्वयमवाप्तः सन् **इयानः** अस्माभिर्याच्यमानः **स्तोतृभ्यः** स्तोतृणामनुग्रहाय तदभीष्टमर्थम् व अवश्यम् **आ ऋणोः** आनीय प्रक्षिपतु । दृष्टान्तः । **चक्र्योः** चक्रयोः **अक्षम् न** यथा अक्षं प्रक्षिपन्ति तद्वत् ।। १४ ।।

**सायण–** हे **धृष्णो**! धाष्टर्ययुक्त! इन्द्र! **त्वावान्** त्वत्सदृशो देवताविशेषः **त्मना आप्तः** त्वदनुग्रहवशात् स्वयमवाप्तः सन् **इयानः** अस्माभिर्याच्यमानः **स्तोतृभ्यः** स्तोतृणामनुग्रहाय तदभीष्टमर्थम् व अवश्यम् **आ ऋणोः** आनीय प्रक्षिपतु । दृष्टान्तः । **चक्र्योः** चक्रयोः **अक्षम् न** यथा अक्षं प्रक्षिपन्ति तद्वत् ।

त्वावान् । 'वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' (पा.सू.५-२-३९.१) इति वतुप् । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । 'आ सर्वनाम्नः' (पा.सू.६-३-९१) इति दकारस्य आत्वम् । वतुपः पित्त्वादनुदात्तत्वे प्रातिपदिकस्वरः शिष्यते । त्मना । 'मन्त्रेष्वाङ्यादेरात्मनः' (पा.सू.६-४-१४१) इति आकारलोपः । धृष्णो । 'भिषा प्रागल्भ्ये' । 'त्रसिगृधिधृषिक्षिपेः क्नुः' (पा.सू.३-२-१४०) । आमन्त्रितानुदात्तत्वम् । इयानः । 'ईङ् गतौ' । 'छन्दसि लिट्' (पा.सू.३-२-१०५) । तस्य 'लिटः कानज्वा' (पा.सू.३-२-१०६) इति कानजादेशः । 'अचि श्नुधातु' (पा.सू.६-४-७७) इत्यादिना इयङादेशः । 'द्विवचनप्रकरणे छन्दसि वेति वक्तव्यम्' इति वचनात् अभ्यासो न क्रियते । 'चितः' इत्यन्तोदात्तत्वम् । ऋणोः । 'ऋण गतौ' । लङि व्यत्ययेन तिपः सिपि 'इतश्च' (पा.सू.३-४-१००) इति इकारलोपः । 'तनादिकृञ्भ्य उः' (पा.सू.३-१-७९) । सार्वधातुकगुणः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडागमाभावः । विकरणस्वरेणान्तोदात्तत्वम् । अक्षम् । 'अक्षस्यादेवनस्य' (फि.सू.३५) इत्याद्युदात्तत्वम् । चक्र्योः । अकारस्य इकार छान्दसः ।। १४ ।।

**सिद्धाञ्जनम्–** हे **घृष्णो** प्रगल्भ, वलसाहसिन्, त्वमेव **त्वावान्** त्वत्सदृशः (छन्दसि वतुप्)

**त्मना** आत्मना स्वयमेव (छन्दसि आकारलोपः) **आप्तः** प्रत्ययितः विश्वसनीयः भूत्वा **इयानः** याच्यमानः सन् स्तोतृभ्यः स्तोतृणामनुग्रहार्थं अभीष्टं बलं **आ ऋणोः** आहृत्य प्रक्षिप्तवानसि । तत्र दृष्टान्तः । **चक्र्योः** रथचक्र्योः अक्षं न अक्षमिव । यथा चक्र्योरक्षप्रक्षेपेण दृढबन्धो जायते गमनाय रथः, तया त्वमेव आप्तः अन्यस्त्वत्सदृशः भूत्वा स्तोतृभ्यो बलं अनुगृह्णासि । तादृशममानुषं बलमन्तरा स्तोतृणां केवलं स्वबलेन गतिरेव न विद्यते । तादृशस्य अक्षप्रक्षेपोपमितस्य स्तोतृषु बलनिधानस्य त्वमेव त्वद्विध एव स्वामी । यमनुगृह्णासि त्वं, तं त्वत्सदृशं करोषि इति अन्यत्रापि गीतो मन्त्रोऽवधेयः । 'कदु द्युम्नमिन्द्र त्वावतो नृन् कया धिया करसे' (१०-२६-४) । तस्मादिन्द्रसदृशः कृतः स्तोता इन्द्रेणैव बलवान् भवति, न तु स्वात्मना । इदं च ऋच तात्पर्यं उत्तरयर्चा सङ्गच्छते । उभयोर्ऋचोस्तात्पर्यविचारो नैव कृतः पूर्वव्याख्यासु, कृतश्चद्भावः शुष्कः शोचनीयश्च लक्ष्यते, 'त्वावान् अन्यो देवताविशेषः' 'ऋणोः पुरुषव्यत्ययः' इति च पूर्वव्याख्या नाङ्गीकृताऽस्माभिः । इयानः– याश्चाकर्मणः इमहे इत्यस्य रूपम्, 'इङ् गतौ' तस्य लिटः कानच् । ऋणोः- तनादिर्धातुः, लुङि अडभावः, लडर्थे वा लङ् स्यान् । चक्र्योः– चक्रशब्दस्य अकारान्तस्य इकारश्छान्दसः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**आ यद्दुवः शतक्रतवा कामं जरितृणाम् । ऋणोरक्षं न शचीभिः ।। १५, ३० ।।**

आ । यत् । दुवः । शतक्रतो इति शतऽक्रतो । आ । कामम् । जरितृणाम् । ऋणोः । अक्षम् । न । शचीभिः ।। १५, ३० ।।

## ऋग्भाष्यम्

**......................स्तोतृणां काममादुहः ।**
**आ समन्तात्स्थितं काममत्याधिक्ये पृथक्पदम् ।। १५, ३० ।।**

**ऋग्भाष्यटीका– आ यत्** । स्तोतृणाम् । हे **शतक्रतो** यद्यस्मात्त्वम् । **शचीभिः** वेदवाग्भिः **जरितृणां** स्तोतृणाम् । **कामं** काम्यं सर्वं **आ दुवः** आदुहः । दुहेः छन्दसि लेटि रूपमेतत् । दुग्धवानसि । ऋणोरक्षन्नेति पूर्ववत् । आश्रयत्वमात्रेण दृष्टान्तः । तस्मान्ममापि कामं देहीति शेषः । द्वितीयस्य आशब्दस्य वैयर्थ्यमित्यत आह ।। **आसमन्तादिति** ।। ऐहिकं पारत्रिकं

चेत्यर्थः । पक्षान्तरमाह ।। **अत्याधिक्य इति** ।। प्रागेक आशब्दो दुव इति क्रियासम्बन्धी । द्वितीयस्तु ससाधनक्रियावाची कामविशेषणमित्युक्तम् । इदानीं तु द्वावपि दुव इति क्रिया सम्बन्धिनौ । अत्याधिक्यार्थत्वेन न वैयर्थ्यं चेत्यर्थः । पृथक्पदं पुनराशब्दः ।। १५ ।।

**मन्त्रार्थमञ्जरी–** (हे) शतक्रतो । यत्, यस्मात् । (त्वम्) शचीभिः, वेदवाग्भिः । जरितॄणाम्, स्तोतॄणाम् । आ कामम्, सर्वकाम्यम् । आ दुवः, आदुहः, दुहेः लङि हकारस्य वकारः, दुग्धवानसि । 'ऋणोरक्षं न' इति पूर्ववत् । आश्रयत्वमात्रेण दृष्टान्तः । तस्मान्मह्यमपि कामं देहि इति ।। १५ ।।

**स्कन्द– आ ऋणोः** आगमयसि आत्मनि प्रेरयसि । **यत् दुवः** दुव इति परिचरणा । यावती काचित् परिचर्या, तया सर्वथा स्तोतृभिरात्मानं परिचारयसि इत्यर्थः । न च दुव एव केवलम् । किं तर्हि । **शतक्रतो! आ कामम् जरितॄणाम्** ऋणोः कामानपि स्तोतॄणामागमयसि प्रेरयसि । सम्पादयसीत्यर्थः । कथं प्रेरयसि । **अक्षम् न** अक्षमिव **शचीभिः** प्रज्ञाभिः कर्मभिर्वा ।। १५ ।।

**वेङ्कटमाधव–** स्तोतॄणां परिचरणं शतकर्मन्! **कामम्** च **अक्षम्** इव चक्रयोर्यदा त्वं प्रज्ञाभिः प्राक्षिपस्तदा स्वयमेवागच्छसीति ।। १५ ।।

**मुद्गल–** हे **शतक्रतो**! इन्द्र! **यत्** दुव धनं कामितार्थरूपम् **आ** स्तोतृभिराप्तव्यमस्ति तं **कामम् जरितॄणाम्** स्तोतॄणामनुग्रहाय **आ ऋणोः** आनीय प्रक्षिपसि । दृष्टान्तः– **शचीभिः** कर्मभि शकटोचितव्यापारविशेषैः **अक्षं न** यथा अक्षं प्रक्षिपन्ति तद्वत् ।। १५ ।।

**सायण–** हे **शतक्रतो**! इन्द्र! **यत्** दुव धनं कामितार्थरूपम् **आ** स्तोतृभिराप्तव्यमस्ति तं **कामम् जरितॄणाम्** स्तोतॄणामनुग्रहाय **आ ऋणोः** आनीय प्रक्षिपसि । दृष्टान्तः– **शचीभिः** कर्मभि शकटोचितव्यापारविशेषैः **अक्षं न** यथा अक्षं प्रक्षिपन्ति तद्वत् ।

शचीभिः । शचीशब्दः शार्ङ्गरवादिङीनन्तः (पा.सू.४-१-७३) आद्युदात्तः ।। १५,३०।।

**सिद्धाञ्जनम्– शतक्रतो**! शतकर्मन् इन्द्र, **जरितॄणां** स्तोतॄणां **यत् दुवः** यत् परिश्रमात्मकं कर्म भवति, तत् **आ** तेषां **कामं** अभिलषितं **आ ऋणोः** त्वमेव प्रक्षिपसि । आ इति

उपसर्गाभ्यासात् 'ऋणोः' इति क्रियया द्विः सम्बन्धयितव्यः । द्विःप्रयोग आदरार्थः । स्तोतॄणां यः परिश्रमः यश्च कामः प्राप्तव्यमुद्दिश्य भवतः, तदुभयमपि सिद्धये साधनं भवति । तदपि इन्द्रेणैव स्तोतृषु प्रक्षिप्तम् । दिव्यत्वप्राप्तिरूपलक्ष्यसिद्धेः साधनभूतः तत्कामः तत्सदृशपरिश्रमश्च इन्द्रानुग्रहेणैव भवतः, तस्येश्वरत्वात् कारयितृत्वाच्च । तत्र दृष्टान्तः । **शचीभिः** शक्तिभिः तत्क्रियाभिरित्यर्थः । **अक्षं न** अक्षं यथा रथचक्योः प्रक्षिपन्ति तद्वत् । अत्रापि पूर्ववद् दृष्टान्तस्य प्रयोजनं ध्येयम् । यथा रथचक्रगतिरक्षं विना न सिद्ध्यति, स्तोतृगतिरपि परिश्रमाभिलषितवर्जं न भवति । अत्र इन्द्रमेव 'आ ऋणोः' इति सम्बोध्य आह, न तु पूर्वस्यामृचि सायणव्याख्यानुसारतः इन्द्रसदृशं अन्यं देवताविशेषम् । अनयोर्ऋचोः सम्बन्धोऽवधेयः ।। १५,३० ।।

।। इति प्रथमाष्टके द्वितीयाध्याये त्रिंशो वर्गः ।।

## ।। अथ एकत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि । स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये स नोऽदात् ।। १६ ।।**

शश्वत् । इन्द्रः । पोप्रुथत्ऽभिः । जिगाय । नानदत्ऽभिः । शाश्वसत्ऽभिः । धनानि । सः । नः । हिरण्यऽरथम् । दंसनाऽवान् । सः । नः । सनिता । सनये । सः । नः । अदात् ।। १६ ।।

## ऋग्भाष्यम्

**क्रोधाच्छ्वसद्भिः प्रथयद्भिरात्मवीर्यं सुरैः शश्वदिन्द्रो जिगाय ।**
**धनानि नः स्वर्णरथं च दाता लब्धा प्रादाल्लाभकृते च नोऽखिलम् ।।१६।।**

**ऋग्भाष्यटीका–** **शश्वदिन्द्रः** । तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा **हिरण्यरथं** ददौ तमेतया प्रतीयाय शश्वत् इन्द्र इति । क्रोधात् । इन्द्रः **पोप्रुथद्भिः** 'प्रथ प्रख्याने' इत्यस्येदं रूपम् । प्रथयद्भिरात्मवीर्यमिति शेषः । **नानदद्भिः** अतिशयेन पुनः पुनर्वा नादान्कुर्वद्भिः । **शाश्वसद्भिः** क्रोधात् भृशं भूयो भूयश्च श्वसद्भिः सुरैः शश्वत्सर्वदा । **धनानि** दैत्यसम्बन्धीनि । **जिगाय**

जितवान् । **दंसनावान्** कर्मवान् । **सः** इन्द्रो **नो**ऽस्मभ्यं **हिरण्यरथं** स्वर्णमयं रथमिदानीम् **अदात्** प्रादात् । **सः** एव च **नो**ऽस्मभ्यं **सनिता** अखिलमैहिकं दाता । यद्वा । स नोऽस्मदीयमखिलं हविरादिकं सनिता लब्धा । किञ्च । **स नो**ऽस्माकं सनये लब्धये । पारत्रिकलाभकृते च भवति ॥ १६ ॥

**मन्त्रार्थमञ्जरी–** इन्द्रः पोप्रुथद्भिः, 'प्रथ प्रख्याने' इत्यस्य यङ्लुगन्तस्य वा श्लुविकरणस्य वा शत्रन्तस्य रूपम्, प्रथयद्भिः, प्रख्यापयद्भिः । (आत्मवीर्यम्) इति शेषः । नानदद्भिः, अतिशयेन पुनः पुनर्वा नादान्कुर्वद्भिः । शाश्वसद्भिः, क्रोधाद्भृशं भूयोभूयश्च श्वसद्भिः । (सुरैः सह) शश्वत्, सर्वदा । धनानि, दैत्यसम्बन्धीनि । जिगाय, जितवान् । दंसनावान्, कर्मवान् । सः इन्द्रः । नः, अस्मभ्यम् । हिरण्यरथम्, स्वर्णमयं रथम् । इदानीम् अदात्, प्रादात् । सः (एव च) । नः अस्मभ्यम् । सनिता, अखिलमैहिकं दाता । यद्वा सः । नः, अस्मदीयम् । अखिलं हविरादिकम् सनिता, लब्धा । किं च, सः । नः अस्माकम् । सनये, लब्धये, पारत्रिकलाभकृते । (च भवति) ॥ १६ ॥

**स्कन्द–** 'तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ । तमेतया प्रतीयाय शश्वदिन्द्र इति' (ऐ.ब्रा ७-१६) । स नो हिरण्यरथमिति तच्छब्दात् यच्छब्दोऽध्याहार्यः । शश्वत् शब्दश्च नित्यपर्यायः । यो नित्यम् **इन्द्रः पोप्रुथद्भिः** प्रोथृ पर्याप्तावित्यस्यैतद्रूपम् । अभ्यस्तानामुपधा-ह्रस्वत्वमपीत्येवं ह्रस्वत्वम् । पर्याप्तिश्च समर्थीभाव उच्यते । अत्यर्थं समर्थैरश्वैः **जिगाय** जयति । न च केवलं पोप्रुथद्भिः । किं तर्हि । **नानदद्भिः** अत्यर्थं पुनःपुनर्वा हेषद्भिरित्यर्थः । **शाश्वसद्भिः** च शीघ्रगतित्वात् अत्यर्थं पुनःपुनर्वा श्वासं कुर्वद्भिः । किं पुनर्जिगाय । उच्यते– **धनानि** असुराणां स्वभूतानि । **स नः** सम्प्रदान एषा चतुर्थी । अदादित्येतेन व्यवहितेनाख्यातेन सम्बन्धयितव्यः । सः अस्मभ्यम् **अदात्** । किम् । **हिरण्यरथम्** हिरण्मयं रथम् । कीदृशः । **दंसनावान्** दसि दर्शनदर्शनयोः । दर्शनीयत्वाद् दंसना वाग् रूपं वा । अथवा दंसः इति कर्मनामसु (निघ.२-१) दर्शनात् तदेकदेशदंस्यनुगतो दंसनाशब्दोऽपि कर्मनामैव । वाग्भी रूपवान् कर्मवान् वेत्यर्थः । किञ्च **स नः सनिता** स एवास्माकं सर्वविधुरेषु सम्भक्ता । **सुनये सः नः** सनिर्लभः । जीवितस्य लाभाय स एवास्माकम् । जीवितमपि स एव दास्यतीत्यर्थः ॥ १६ ॥

**वेङ्कटमाधव–** इन्द्रेण दत्तं हिरण्यरथं प्रतिगृह्णन् तं स्तौति– ओष्ठव्यापारं कुर्वद्भिः अत्यन्तं हेषद्भिः अत्यन्तं श्वसद्भिः एतैः अश्वैः **इन्द्रः शश्वत् जिगाय** शत्रुधनानि । **सः** अस्मभ्यं कर्मवान् ददातु **हिरण्यरथम्** । **सः** हि अस्माकं धनस्य दाता । **सः** एव **नः** ददात्विति ।। १६ ।।

**मुद्गल–** तुष्टेनेन्द्रेण दत्तं हिरण्यरथम् अनया प्रतिजग्राह । **इन्द्रः शश्वत्** सर्वदा **धनानि** वैरिसम्बन्धीनि **जिगाय** जितवान् अश्वैरिति शेषः । कीदृशैः । **पोप्रुथद्भिः** घासभक्षणादनन्तर-भावितम् ओष्ठशब्दं कुर्वद्भिः **नानदद्भिः** नादमास्यगतं हेषाशब्दं कुर्वद्भिः **शाश्वसद्भिः** पुनःपुनः श्वसद्भिः । **दंसनावान्** कर्मवान् **सनिता** दाता **सः इन्द्रः नः** अस्माकम् **सनये** सम्भजनार्थम् हिरण्यरथम् सुवर्णेन निर्मितं रथम् **अदात्** दत्तवान् । 'स नः स नः' इति आदरार्थः ।।१६।।

**सायण–** तुष्टेनेन्द्रेण दत्तं हिरण्यरथम् अनया प्रतिजग्राह । तथा च ब्राह्मणं- 'तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ तमेतया प्रतीयाय शश्वदिन्द्र इति' (ऐ.बा.७.१६) इति । **इन्द्रः शश्वत्** सर्वदा **धनानि** वैरिसम्बन्धीनि **जिगाय** जितवान् अश्वैरिति शेषः । कीदृशैः । **पोप्रुथद्भिः** घासभक्षणादनन्तरभावितम् ओष्ठशब्दं कुर्वद्भिः **नानदद्भिः** नादमास्यगतं हेषाशब्दं कुर्वद्भिः **शाश्वसद्भिः** पुनःपुनर्भृशं वा श्वसद्भिः । **दंसनावान्** कर्मवान् **सनिता** दाता **सः इन्द्रः नः** अस्माकम् **सनये** सम्भजनार्थम् हिरण्यरथम् सुवर्णेन निर्मितं रथम् **अदात्** दत्तवान् । 'स नः स नः' इति आदरार्थम् ।

पोप्रुथद्भिः । 'प्रोथृ पर्याप्तौ' । अस्मात् यङ्लुकि अभ्यासहलादिशेषौ । 'ह्रस्वः' (पा.सू.७-४-५९) इति ह्रस्वत्वे कृते 'गुणो यङ्लुकोः' (पा.सू.७-४-८२) इति गुणः । धातोरुपधाया उत्वं छान्दसम् । अस्मात् यङ्लुगन्तात् शतरि 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । जिगाय । 'जि जये' । लिटो णलि वृद्धिः । 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् जि इत्यस्य द्विवचनम् । 'सन्लिटोर्जेः' (पा.सू.७-३-५७ ) इति अभ्यासादुत्तरस्य कुत्वम् । नानदद्भिः । 'णद अव्यक्ते शब्दे' । पूर्ववत् यङ्लुकि 'दीर्घोऽकितः' इति अभ्यासस्य दीर्घः । पूर्ववदाद्युदात्तत्वम् । शाश्वसद्भिः । 'श्वस प्राणने' । अन्यत् सर्वं पूर्ववत् । हिरण्यरथम् । 'समासस्य' इत्यन्तोदात्तत्वम् । अदात् । 'गातिस्था' इति सिचो लुक् । दंसनावान् । दंसशब्दः 'अप्नः दंसः वेषः' (नि.२-

१-३) इति कर्मनामसु पठितः । दंस एव दंसना । 'तदस्यास्ति' इति मतुप् । दस्यते अनेनेति दंसना ।। १६ ।।

**सिद्धाञ्जनम्–** **शश्वत्** सदा इन्द्रः देवराट् **धनानि** अस्माभिः प्राप्तव्यानि दिव्यानि ज्योतिर्बलादीनि धनानि जिगाय जितवान् अस्मदर्थमिति शेषः । कैः साधनैः ? भोगसामर्थ्य-क्रियाशक्तिकरणभूतः जगज्जीवप्राणसङ्केतभूतैरश्वैः । यद्यपि अश्वैरिति शब्दतो नोक्तम्, तथाऽपि द्योतितं त्रिभिर्विशेषणैः । तान्याह । **पोप्रुवद्भिः** पुनः पुनः समर्थीभवद्भिः (प्रोथृ पर्याप्तौ, पर्याप्तिश्च समर्थीभावः, यङ लुकि शतृप्रत्ययः) **नानवद्भिः** सन्तृप्तिप्रकाशकं शब्दं पुनः पुनः कुर्वद्भिः 'हेषद्भिः' (णद धातुः यङः लुक् पूर्ववत्) **शाश्वसद्भिः** पुनः पुनः प्रश्वसद्भिः कार्यसाधक-परिश्रमोत्तरकालीनः प्रश्वासयुक्तैरित्यर्थः । **सः** एवं अश्वैर्जितवानिन्द्रः दंसनावान् क्रियावान् (दंसः कर्म, दंस एव दंसना) **सनिता** दाता सन् **नः** अस्मभ्यं **सनये** लाभाय **हिरण्यरयं** हिरण्मयं ज्योतिर्मयं रथं **अदात्** दत्तवान् । ज्योतिर्मयेन यानेन देवदत्तेन हि दिव्यं धाम गच्छन्ति देवकामा ऋषयः ।। १६ ।।

**नीतिमञ्जरी–** देवानामपि स्तुतिः प्रियेत्याह–

> **'ऐश्वर्यपरिपूर्णोऽपि दद्यात्स्तुत्यापि चेप्सितम् ।**
> **शुनःशेपाय सौवर्णं रथमिन्द्रः स्तुतो ददौ ।। १२ ।।**

यः ऐश्वर्येण परिपूर्णः सोऽपि स्तुत्यैव तुष्टः सन् दद्यात् ईप्सितं इष्टं तस्यापि स्तुतिरेव इन्द्रवत्प्रिया । देवेन्द्रः परमैश्वर्यसम्पूर्णोऽपि शुनःशेपेन 'यच्चिद्धि' 'सत्ये च' इति सूक्ताभ्यां (ऋ० १-२५-२८) यत्नेन स्तुतः स ईप्सितं सौवर्णं सुवर्णमयं रथं तस्मै शुनःशेपाय ददौ दत्तवान् । तथा सर्वोऽपि स्तुतिप्रियो भवतीत्यर्थः । शुन इव शेपो यस्येति समासे 'शेपपुच्छलाङ्गूलेषु संज्ञायाम् (पा.वा.६-३-२१) इति षष्ठ्या अलुक् ।

तथा बृहद्देवता–

> **स्तूयमानः शश्वदिति प्रीतस्तु मनसा ददौ ।**
> **शुनःशेपाय दिव्यं तु रथं सर्वं हिरण्मयम् ।। १०३ ।।** (अ०३ श्लो०१०३ )

तत्प्रकारः यूपे बद्धः शुनःशेपः कस्येत्यनुवाकेन क्रमेण एकया प्रजापतिं एकयाग्निं तृचेन सवितारं एकत्रिशंता वरुणं पुनर्द्वाविंशत्या अग्निम् एकया विश्वान् देवान् द्वाविंशत्येन्द्रं च स्तुत्वा त्रयोविंशत्या 'शश्वदिन्द्र' इत्यनया तुष्टाव इन्द्रश्च सौवर्णं रथं प्रादादित्युच्यते ।

तत्र ऋक्–

शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि ।। स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये स नोऽदात् ।। १६ ।।

शुनःशेप इन्द्रं त्रिष्टुभा स्तौति । **इन्द्रः शश्वत्** निरन्तरम् एवं **धनानि** वैरिसम्बन्धीनि **जिगाय** जितवान् । कैः अश्वैरिति शेषः । कीदृशैः । **पोप्रुथद्भिः** घासभक्षणानन्तरभाविनम् ओष्ठशब्दं कुर्वद्भिः । पुनः कीदृशैः । **नानदद्भिः** नादं आस्यगतं हेषादिशब्दं कुर्वद्भिः । पुनः कीदृशैः । **शाश्वसद्भिः** पुनःपुनः भृशं वा श्वसद्भिः । **सनिता** दाता । 'षणु दाने' । **सः** इन्द्रः **नः** अस्माकं **सनये** सम्भजनार्थं **हिरण्यरथं** सुवर्णेन निर्मितं रथं **अदात्** दत्तवान् । किं लक्षणः । **दंसनावान्** कर्मवान् ।

स नोऽदादिति अदादवर्त्रो० (ऋ० प्रा० २-३९ ) इत्यभिनिहितसन्धिः । स नो द्विरुक्तिरादरार्था । 'अभ्यासे भूयांसमर्थं मन्यन्त' इति यास्कः ।

## ऋक्संहिता पदपाठसहिता

**आश्विनावश्वावत्येषा यातं शवीरया । गोमद्दस्रा हिरण्यवत् ।। १७ ।।**

आ । अश्विनौ । अश्वऽवत्या । इषा । यातम् । शवीरया । गोऽमत् । दस्रा । हिरण्यऽवत् ।। १७ ।।

### ऋग्भाष्यम्

**गोमद्धिरण्यवच्च स्याद्यथाऽऽयातं तथैव नः ।**
**सुखपुत्रयुजा चाश्ववत्येषा शं सुखं यतः ।**
**इडैश्वर्यं तथा वीरं वीर्यं स्वान्यश्वनामतः ।**
**गौर्वाग्धितं च रमणं परं ब्रह्मगुणोच्छ्रितम् ।। १७ ।।**

**ऋग्भाष्यटीका– आश्विनौ** । तृच आश्विनः । **गोमत्** । हे **दस्रा!** अश्विनौ । **अश्ववत्या**ऽश्वयुक्तया । **शवीरया** सुखपुत्रयुजा च । **इषा** अन्नेन सह **गोमत्** हिरण्यवदिति क्रियाविशेषणे । यथा युवयोरागमनं गोमद्धिरण्यवच्च स्यात्तथैव । नोऽस्मान्प्रति **आ यातम्** । अश्वादिकं दातुमायातमिति यावत् । शवीरयेत्येतत्सुखपुत्रयुजेति व्याख्यातम् । तत्किञ्चिद्विश-दयति । **शमिति** ।। यतः शं सुखं वीरश्च पुत्रः तद्वान्मत्वर्थे द्वन्द्वान्मत्वर्थे अर्श आदिभ्योच् । अतो युक्तमुक्तम् । इडादिशब्दानामध्यात्ममर्थानाह ।। **इडिति** ।। ऐश्वर्यं मनोजयः । 'ईश ऐश्वर्य' इत्यस्येदं रूपम् । तथाशब्दः समुच्चये । वीर्यमविद्याजये पराक्रमः । नामतो नाम्नोच्यन्ते । हितं च रमणीयं चेति परं ब्रह्म हिरण्यम् । यथा लोहानां हिरण्यं श्रेष्ठं तथा सर्वतोऽपि गुणोच्छ्रितमिति वा हिरण्यम् ।। १७ ।।

**मन्त्रार्थमञ्जरी–** (हे) दस्रा, दस्रौ । अश्विनौ । अश्ववत्या, अश्वयुक्तया । शवीरया, सुखपुत्राभ्यां युजा, द्वन्द्वादर्श आद्यच् । इषा, अन्नेन सह । 'गोमत्, हिरण्यवत्' इति क्रियाविशेषणे, यथा युवयोरागमनं गोमद्धिरण्यवच्च स्यात्तथा । अस्मान्प्रति– आ यातम्, अश्वादिकं दातुमायातमिति यावत् । अध्यात्मं तु (हे) दस्रा, दस्रौ । अश्विनौ । अश्ववत्या, इन्द्रियै-रुपेतया । शवीरया, भावप्रधानम् शवीर्यया, सुखेनाविद्यादिजयविषये पराक्रमयुक्तया । इषा, 'ईश ऐश्वर्ये' इत्यतः क्विपि शस्य षत्वे ह्रस्वत्वे च रूपत्वेनैश्वर्येण मनोजयरूपेण सह । गोमत् । वेदवाक्ययुक्तम् । हिरण्यवत्, हितरूपरमणरूपपरब्रह्मयुक्तम्– यथा तथा । आ यातम्– इति, तात्पर्यं प्राग्वत् ।। १७ ।।

**स्कन्द–** 'तमिन्द्र उवाचाश्विनौ नु स्तुहि । अथ त्वोत्स्रक्ष्याम इति । सोऽश्विनौ तुष्टावात उत्तरेण तृचेन' (ऐ.ब्रा.७-१६) । आ इत्युपसर्गो यातम् इत्याख्यातेन सम्बन्धयितव्यः । हे अश्विनौ! अश्ववत्या **इषा** 'इत्थम्भूतलक्षणे' (पा.सू.२-३-२१) इत्येवमेषा तृतीया । अश्ववतान्नेन सम्बद्धौ । **आ यातम्** आगच्छतम् । यदस्मभ्यमाश्वम् अन्नं च दातव्यं तद् गृहीत्वाऽऽगच्छतमित्यर्थः । **शवीरया** तृतीयान्तमेतत्, नाश्विनोः सम्बोधनम्, अनुदात्तत्वाप्रसङ्गाय । 'शु' (निघ.२,१५) इति क्षिप्रनाम । 'ईर गतौ' । क्षिप्रगतिः शवीरा । शवेर्गतिकर्मणो वा एतत् । शविर्वेगः तद्वती वा शवीरा । तया । वेगवत्या गत्येत्यर्थः । कथं च पुनरायातम् । गोमत् गोसंयुक्तम् । गा अपि गृहीत्वेत्यर्थः । हे दस्रा ! शत्रुपक्षक्षयकरौ!

तत्प्रकारः यूपे बद्धः शुनःशेपः कस्येत्यनुवाकेन क्रमेण एकया प्रजापतिं एकयाग्निं तृचेन सवितारं एकत्रिशंता वरुणं पुनर्द्वाविंशत्या अग्निम् एकया विश्वान् देवान् द्वाविंशत्येन्द्रं च स्तुत्वा त्रयोविंशत्या 'शश्वदिन्द्र' इत्यनया तुष्टाव इन्द्रश्च सौवर्णं रथं प्रादादित्युच्यते ।

तत्र ऋक्–

शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि ।। स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये स नोऽदात् ।। १६ ।।

शुनःशेप इन्द्रं त्रिष्टुभा स्तौति । **इन्द्रः शश्वत्** निरन्तरम् एवं **धनानि** वैरिसम्बन्धीनि **जिगाय** जितवान् । कैः अश्वैरिति शेषः । कीदृशैः । **पोप्रुथद्भिः** घासभक्षणानन्तरभाविनम् ओष्ठशब्दं कुर्वद्भिः । पुनः कीदृशैः । **नानदद्भिः** नादं आस्यगतं हेषादिशब्दं कुर्वद्भिः । पुनः कीदृशैः । **शाश्वसद्भिः** पुनःपुनः भृशं वा श्वसद्भिः । **सनिता** दाता । 'षणु दाने' । **सः** इन्द्रः **नः** अस्माकं **सनये** सम्भजनार्थं **हिरण्यरथं** सुवर्णेन निर्मितं रथं **अदात्** दत्तवान् । किं लक्षणः । **दंसनावान्** कर्मवान् ।

स नोऽदादिति अदादवर्त्रो० (ऋ० प्रा० २-३९ ) इत्यभिनिहितसन्धिः । स नो द्विरुक्तिरादरार्था । 'अभ्यासे भूयांसमर्थं मन्यन्त' इति यास्कः ।

## ऋक्संहिता पदपाठसहिता

**आश्विनावश्वावत्येषा यातं शवीरया । गोमद्दस्रा हिरण्यवत् ।। १७ ।।**

आ । अश्विना । अश्वऽवत्या । इषा । यातम् । शवीरया । गोऽमत् । दस्रा । हिरण्यऽवत् ।। १७ ।।

## ऋग्भाष्यम्

**गोमद्धिरण्यवच्च स्याद्यथाऽऽयातं तथैव नः ।**
**सुखपुत्रयुजा चाश्ववत्येषा शं सुखं यतः ।**
**इडैश्वर्यं तथा वीरं वीर्यं स्वान्यश्वनामतः ।**
**गौर्वाग्घितं च रमणं परं ब्रह्मगुणोच्छ्रितम् ।। १७ ।।**

**ऋग्भाष्यटीका– आश्विनौ** । तृच आश्विनः । **गोमत्** । हे **दस्रा!** अश्विनौ । **अश्ववत्या**ऽश्वयुक्तया । **शवीरया** सुखपुत्रयुजा च । **इषा** अन्नेन सह **गोमत्** हिरण्यवदिति क्रियाविशेषणे । यथा युवयोरागमनं गोमद्धिरण्यवच्च स्यात्तथैव । नोऽस्मान्प्रति **आ यातम्** । अश्वादिकं दातुमायातमिति यावत् । शवीरयेत्येतत्सुखपुत्रयुजेति व्याख्यातम् । तत्किश्चिद्विशदयति । **शमिति** ।। यतः शं सुखं वीरश्च पुत्रः तद्वान्मत्वर्थे द्वन्द्वान्मत्वर्थे अर्श आदिभ्योच् । अतो युक्तमुक्तम् । इडादिशब्दानामध्यात्ममर्थानाह ।। **इडिति** ।। ऐश्वर्यं मनोजयः । 'ईश ऐश्वर्य' इत्यस्येदं रूपम् । तथाशब्दः समुच्चये । वीर्यमविद्याजये पराक्रमः । नामतो नाम्नोच्यन्ते । हितं च रमणीयं चेति परं ब्रह्म हिरण्यम् । यथा लोहानां हिरण्यं श्रेष्ठं तथा सर्वतोऽपि गुणोच्छ्रितमिति वा हिरण्यम् ।। १७ ।।

**मन्त्रार्थमञ्जरी–** (हे) दस्रा, दस्रौ । अश्विनौ । अश्ववत्या, अश्वयुक्तया । शवीरया, सुखपुत्राभ्यां युजा, द्वन्द्वादर्श आद्यच् । इषा, अन्नेन सह । 'गोमत्, हिरण्यवत्' इति क्रियाविशेषणे, यथा युवयोरागमनं गोमद्धिरण्यवच्च स्यात्तथा । अस्मान्प्रति– आ यातम्, अश्वादिकं दातुमायातमिति यावत् । अध्यात्मं तु (हे) दस्रा, दस्रौ । अश्विनौ । अश्ववत्या, इन्द्रियैरुपेतया । शवीरया, भावप्रधानम् शवीर्यया, सुखेनाविद्यादिजयविषये पराक्रमयुक्तया । इषा, 'ईश ऐश्वर्ये' इत्यतः क्विपि शस्य षत्वे ह्रस्वत्वे च रूपत्वेनैश्वर्येण मनोजयरूपेण सह । गोमत् । वेदवाक्ययुक्तम् । हिरण्यवत्, हितरूपरमणरूपपरब्रह्मयुक्तम्– यथा तथा । आ यातम्– इति, तात्पर्यं प्राग्वत् ।। १७ ।।

**स्कन्द–** 'तमिन्द्र उवाचाश्विनौ नु स्तुहि । अथ त्वोत्स्रक्ष्याम इति । सोऽश्विनौ तुष्टावात उत्तरेण तृचेन' (ऐ.ब्रा.७-१६) । आ इत्युपसर्गो यातम् इत्याख्यातेन सम्बन्धयितव्यः । हे अश्विनौ! अश्ववत्या **इषा** 'इत्थम्भूतलक्षणे' (पा.सू.२-३-२१) इत्येवमेषा तृतीया । अश्ववतान्नेन सम्बद्धौ । **आ यातम्** आगच्छतम् । यदस्मभ्यमाश्वम् अन्नं च दातव्यं तद् गृहीत्वाऽऽगच्छतमित्यर्थः । **शवीरया** तृतीयान्तमेतत्, नाश्विनोः सम्बोधनम्, अनुदात्तत्वाप्रसङ्गाय । 'शु' (निघ.२,१५) इति क्षिप्रनाम । 'ईर गतौ' । क्षिप्रगतिः शवीरा । शवेर्गतिकर्मणो वा एतत् । शविर्वेगः तद्वती वा शवीरा । तया । वेगवत्या गत्येत्यर्थः । कथं च पुनरायातम् । गोमत् गोसंयुक्तम् । गा अपि गृहीत्वेत्यर्थः । हे दस्रा ! शत्रुपक्षक्षयकरौ!

दस्रनामानौ! । यद्यपि चाश्विनोरेको दस्रनामा, तथापि साहचर्यादुभयोर्व्यपदेशः । हिरण्यवत् हिरण्यसंयुक्तं च । हिरण्यं च गृहीत्वेत्यर्थः ।। १७ ।।

**वेङ्कटमाधव– आ यातम्** अश्विनौ । अश्वयुक्तेन अन्नेन क्षिप्रप्रेरणेन गोयुक्तम् । दर्शनीयौ! हिरण्ययुक्तं च ।। १७ ।।

**मुद्गल–** इन्द्रेण प्रेरितः शुनःशेपः अश्विनौ तुष्टाव । हे अश्विनौ! **अश्वावत्या** बहुभिरश्वैर्युक्तया **शवीरया** प्रेर्यमाणया **इषा** अन्नेन सह **आ यातम्** अस्मिन् कर्मणि आगच्छतम् । हे दस्रा! अश्विनौ! युवयोः प्रसादात् गोमत् बहुभिर्गोभिर्युक्तम् हिरण्यवत् बहुना हिरण्येन युक्तमस्मदीयं गृहमस्त्विति शेषः ।। १७ ।।

**सायण–** प्रातरनुवाके आश्विने क्रतौ गायत्रे छन्दसि 'आश्विनावश्वावत्या' इति तृचः । 'अथाश्विनः' इति खण्डे' अश्विना यज्वरीरिष आश्विनावश्वावत्या' (आश्व.श्रौ.४-१५) इति सूत्रितम् ।

इन्द्रेण प्रेरितः शुनःशेपः अश्विनौ तुष्टाव । तथा च ब्राह्मणम्- 'तमिन्द्र उवाचाश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽश्विनौ तुष्टावात उत्तरेण तृचेन' (ऐ.ब्रा.७.१६) इति । हे अश्विनौ! **अश्वावत्या** बहुभिरश्वैर्युक्तया **शवीरया** प्रेर्यमाणया **इषा** अन्नेन सह **आ यातम्** अस्मिन् कर्मणि आगच्छतम् । हे दस्रा! अश्विनौ! युवयोः प्रसादात् गोमत् बहुभिर्गोभिर्युक्तम् हिरण्यवत् बहुना हिरण्येन युक्तमस्मदीयं गृहमस्त्विति शेषः ।

अश्वावत्या । 'मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ' (पा.सू.६-३-१३१) इति दीर्घत्वम् । इषा । 'सावेकाचः' इति तृतीयाया उदात्तत्वम् । यातम् । 'या प्रापणे' । लोटि तसः तम् । अदादित्वात् शपो लुक् । शवीरया । 'शु गतौ' । 'कृशॄपृकटिपटिशौटिभ्य ईरन्' (उ.सू.४-४७०) इति ईरन्प्रत्ययो बहुलवचनात् अस्मादपि भवति । नित्त्वादाद्युदात्तत्वम् ।। १७ ।।

**सिद्धाञ्जनम्–** हे **दस्रा** कर्मनिष्पादकौ (गतम्) **अश्विनौ**, **अश्वावत्या** अश्ववत्या प्राणसङ्केतोऽश्वः स्मार्यः (आकारश्छान्दतः) **शवीरया** स्फुरद्बलया **इषा** एषणया वेगवत्प्रेरणयेत्यर्थः, **आयातं** आगच्छतम् । **गोमत्** प्रज्ञानरश्मिसमृद्धं **हिरण्यवत्** तेजः सम्पन्नं च अस्तु युवयोरागमनमिति शेषः ।। १७ ।।

## ऋक्संहिता पदपाठसहिता

**समानयोजनो हि वां रथो दस्रावमर्त्यः । समुद्रे अश्विनेयते ।। १८ ।।**
समानऽयोजनः । हि । वाम् । रथः । दस्रौ । अमर्त्यः । समुद्रे । अश्विना । ईयते ।। १८ ।।

## ऋग्भाष्यम्

**समानयोगयुक्तोऽयं रथो देहस्त्वदात्मनाम् ।**
**चित्सुखत्वादमर्त्यश्च ज्ञायते क्षीरसागरे ।**
**मोक्षस्य यावता प्राप्तिः समानो योग उच्यते ।। १८ ।।**

**ऋग्भाष्यटीका– समान** । समानयोग । हे **दस्रौ!** अश्विनौ । वां युवयोर्भक्तानाम् । त्वदात्मनां त्वच्चित्तानाम् । भगवत एकत्वादेकवचनम् । समानं योजनं योगो यस्यासौ तथोक्तः । समानयोगयुक्तः । युक्तत्वं च कारणत्वेन चित्सुखत्वादमर्त्यश्च हि अयं प्रसिद्धो **रथो** देहः । **समुद्रे** क्षीरसागरे । **ईयते** ज्ञायते । कोऽसौ समानो योग इत्यत आह ।। **मोक्षस्येति** ।। यावता योगेन तावान् । प्रसिद्धाश्विनोऽस्तु समानयोजनो योग्ययुग्यवान् । अमर्त्योऽलौकिकः । समुद्र ईयत आसमुद्रगामीति ।। १८ ।।

**मन्त्रार्थमञ्जरी–** (हे) दस्रौ, अश्विना, अश्विनौ । वाम्, युवयोः भक्तानाम्, भवच्चित्तानाम् । समानयोजनः, समानं यावता मोक्षप्राप्तिस्तावता योजनं योगो यस्यासौ तथोक्तः समानयोगयुक्तः युक्तत्वं च– कारणत्वेन । चित्सुखत्वात्– अमर्त्यः (च) (अयम्) प्रसिद्धः । रथः, देहः (च) समुद्रे, क्षीराब्धौ । ईयते, ज्ञायते । हि । प्रसिद्धाश्विनोस्तु (हे) दस्रौ । अश्विना, अश्विनौ । वाम्, वां सम्बन्धी । समानयोजनः, योग्ययुग्यवान् । अमर्त्यः, अलौकिकः । रथः समुद्रे, सामीप्ये सप्तमी, समुद्रपर्यन्तम् । ईयते, गम्यते । हि ।। १८ ।।

**स्कन्द–** समानः साधारणः द्वयोरप्येक एव यो युज्यते स समानयोजनः । हिशब्दस्तु पदपूरण । **वाम्** युवयोः **रथः** हे **दस्रौ!** अमर्त्यः मरणवर्जितः । अविनाशीत्यर्थः । **समुद्रे** अन्तरिक्षनामैतत् (निघ.१-२) । निरालम्बनेऽप्यन्तरिक्षे हे **अश्विना! ईयत** गच्छति ।। १८ ।।

**वेङ्कटमाधव–** युवयोः हि रथः द्वयोरप्येकभूतः दर्शनीयौ! अमरणः अन्तरिक्षमध्ये गच्छति । तत आयातमिति ।। १८ ।।

**मुद्गल–** हे **दस्रौ! अश्विनौ! हि** यस्मात् **वाम्** युवयोः सम्बन्धी **रथः समानयोजनः** तुल्ययोजनः । युवयोर्द्वयोरेकरथारूढत्वादुभयार्थं सकृदेव युज्यते । युक्तः स रथ **अमर्त्यः** विनाशरहितः । अप्रतिहतगतिरित्यर्थः । अत एव हे अश्विनौ! **समुद्रे** अन्तरिक्षे **ईयते** गच्छति ।। १८ ।।

**सायण–** हे **दस्रौ! अश्विनौ! हि** यस्मात् **वाम्** युवयोः सम्बन्धी **रथः समानयोजनः** तुल्ययोजनः । युवयोर्द्वयोरेकरथारूढत्वादुभयार्थं सकृदेव युज्यते । युक्तः स रथ **अमर्त्यः** विनाशरहितः । अप्रतिहतगतिरित्यर्थः । अत एव हे अश्विनौ! **समुद्रे** अन्तरिक्षे **ईयते** गच्छति ।

अन्तरिक्षनामसु पठितं समुद्रशब्दं यास्क एवं व्याचख्यौ- 'समुद्रः कस्मात्समुद्द्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः संमोदन्तेऽस्मिन्भूतानि समुदको भवति समुनत्तीति वा' (निरु.२-१०) इति । समानयोजनः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अमर्त्यः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । ईयते । 'ईङ् गतौ' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम् । 'हि च' इति निघातप्रतिषेधः ।। १८ ।।

**सिद्धाञ्जनम्–** हे **दस्रौ! अश्विनौ**, वां युवयोः **समानयोजनः** समानं योजनं अश्वयोजनं यस्य स **रथः** उभयोर्युवयोरेकरथारूढत्वात् सकृद्युक्तः **अमर्त्यः** विनाशरहितः अमृतधर्मा भवति । **हि** यस्मादेवं अविनाशी तस्मात् **समुद्रे** अन्तरिक्षलक्षिते अखण्डे परिच्छेदशून्ये आकाशे **ईयते** गच्छति ।। १८ ।।

## ऋक्संहिता पदपाठसहिता

**न्य१घ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः । परि द्यामन्यदीयते ।। १९ ।।**

नि । अघ्न्यस्य । मूर्धनि । चक्रम् । रथस्य । येमथुः । परि । द्याम् । अन्यत् । ईयते ।। १९ ।।

## ऋग्भाष्यम्

**एकं चक्रं गिरेर्मूर्ध्नि नियतं दिवि चापरम् ।**
**पापं चक्रं हरिघ्न्यस्य पुण्यं दिव्यस्य चोपरि ।। १९ ।।**

**ऋग्भाष्यटीका– न्यार्घ्न्यस्य** । एकं चक्रम् । हे अश्विनौ! सौरस्य **रथस्य** एकं **चक्रम्** **अघ्न्यस्य** पर्वतनामैतत् । मानसोत्तरस्य गिरेः **मूधनि** मूर्ध्नि । युवां **नि येमथुः** नियमितवन्तौ स्थः । युवाभ्यां नियमितं वर्तत इति यावत् । **अन्यत्** अपरं च चक्रं चक्रस्थानीयोक्षप्रदेशो **द्यां परि** दिवि मेरौ **ईयते** ज्ञायते भवन्नियमनेन । प्रकारान्तरेण व्याख्याति ।। **पापमिति** ।। हे अश्विनौ रथस्य जगदाख्यस्यैकं चक्रं प्रवृत्तिहेतुत्वसाम्यात्पापम् । अघ्न्यस्य अः विष्णुस्तेन हन्यत इति हरिघ्न्यस्य दैत्यजनस्य मूर्धनि । नियेमथुः युवां स्थापितवन्तौ स्थः । अन्यच्च चक्रं पुण्यम् । द्यां परि लक्षणया दिव्यस्य जनस्योपरि । भवद्ध्यामेवेयते ।। १९ ।।

**मन्त्रार्थमञ्जरी–** (हे अश्विनौ) सौरस्य रथस्य । एकम्– चक्रम् । अघ्न्यस्य, पर्वतनामैतत्, मानसोत्तरस्य गिरेः । मूर्धनि । युवाम्– नि येमथुः, नियमितवन्तौ स्थः, युवाभ्यां नियतं वर्तत इति यावत् । अन्यत्, अपरम्, चक्रस्थानीयाक्षप्रदेशः । द्याम् परि, दिवि, मेरौ । ईयते, ज्ञायते, भवन्नियमनेन इति । यद्वा (हे अश्विनौ) रथस्य जगदाख्यस्य एकम् चक्रम् । प्रवृत्तिहेतु-साम्यात्पापम् । अघ्न्यस्य, ओ विष्णुः, तेन हन्यत इति हरिघ्न्यस्य, दैत्यजनस्य । मूर्धनि । नि येमथुः, युवां स्थापितवन्तौ स्थः । अन्यत्, चक्रम्, पुण्यम् । द्याम् परि, लक्षणया दिवि स्थितस्य जनस्योपरि । भवद्भ्यामेव ईयते ।। १९ ।।

**स्कन्द– नि** इत्युपसर्गः **येमथुः** इत्याख्यातेन सम्बन्धयितव्यः । अघ्न्यः अहन्तव्यत्वात् प्रजापतिरादित्यो वा । तस्य **मूर्धनि** एकम् **चक्रम्** स्वरथस्य **नि येमथुः** नियमितवन्तौ स्थः । **परि द्याम्** परिशब्दो लक्षणया कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । दिवं प्रति **अन्यद्** द्वितीयम् **ईयते** गच्छति । नेमिचक्रस्य चिद्रथस्य सामर्थ्यमित्यर्थः ।। १९ ।।

**वेङ्कटमाधव–** अश्विनावेकं **चक्रम्** रथस्य पर्वतमूर्ध्नि स्थापयामासतु । **अन्यत्** तु चक्रं परित दिव गच्छति ।। १९ ।।

**मुद्गल–** हे अश्विनौ! युवाम् **अघ्न्यस्य** हन्तुं विनाशयितुमशक्यस्य दृढस्य पर्वतस्य **मूर्धनि** उपरि **रथस्य चक्रम्** भवदीयरथसम्बन्ध्येकं चक्रम् **नि येमथुः** नियमितवन्तौ । **अत्यत्** चक्रम् **परि द्याम्** द्युलोकस्य परित **ईयते** गच्छति ।। १९ ।।

**सायण–** हे अश्विनौ! युवाम् **अघ्न्यस्य** हन्तुं विनाशयितुमशक्यस्य दृढस्य पर्वतस्य **मूर्धनि**

उपरि **रथस्य चक्रम्** भवदीयरथसम्बन्ध्येकं चक्रम् **नि येमथुः** नियमितवन्तौ । **अत्यत्** चक्रम् **परि द्याम्** द्युलोकस्य परित **ईयते** गच्छति ।

अघ्न्यस्य । अहननम् अघ्नः । 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' ('ग्रहवृदृनिश्चिगमश् च' पा.सू.का.३-३-५८) इति हन्तेः कप्रत्ययः । अघ्नमर्हति अघ्न्यः । 'छन्दसि च' (पा.सू.५-१-६७) इति यप्रत्ययः । प्रत्ययस्वरेणान्तोदात्तत्वम् । येमथुः । 'यम उपरमे' । किति लिटि 'अत एकहल्मध्ये' (पा.सू.६-४-१२०) इति एत्वाभ्यासलोपौ ।।१९।।

**सिद्धाञ्जनम्**– हे अश्विनौ, **अघ्न्यस्य** पर्वतस्य **मूर्धनि** उच्चभागे **रथस्य** एकं **चक्रं नि येमथुः** नियमितवन्तौ । **अन्यत्** चक्रं **द्यां** द्युलोकं **परि** परितः **ईयते** गच्छति । अघ्न्यः-गौरित्येके, प्रजापतिरादित्य इति स्कन्दस्वामी । अहन्तव्यः, पर्वतः, दृढत्वात् इति सायणः । अत्र पर्वत एव ग्राह्यः, तात्पर्योपपत्तेः । अश्विनोः रथस्य एकं चक्रं पृथिव्या उच्चैः प्रदेशे, अन्यत् दिवि । रथश्च नियतो गतिविशेषः सङ्केतशब्दो ग्राह्यः । तस्य एकं चक्रं पर्वतस्य **मूर्धनि** नियमितम्, अन्यद् दिवं परितो गच्छति, दिवं प्रति गच्छति वा (परि कर्मप्रवचनीयः 'प्रति' इत्यर्थे ग्राह्य इति स्कन्दस्वामी) । इदमत्र रहस्यं बोध्यम् । अन्नमयप्रज्ञाभुवः उन्नते पदे, मानुषस्य परिपक्वे चेतःशिखरे आश्विनमेकं चक्रं नियमितम्, तादृशस्य पर्वतस्य मूर्धनि हि प्रज्ञानोदयरश्मेः प्रथमं स्वागतं भवति । तत्र ह्याश्विनं ज्योतिर्मयं रथं आस्थाय मधुमत्तमयोरश्विनोर्योषा दिवो दुहिता उषोदेवी दिवमारोहति, यत्र अन्यद्रथचक्रं दिव्यं स्थानं गच्छति । अश्विनोर्व्यापारमधिकृत्य अन्यत्र प्रोक्तमवधेयम् । दिवि पृथिव्यां अश्विनोः सञ्चारः 'पर्वतस्य मूर्धनि' इत्यन्यत्र मन्त्रवर्णः स्पष्टो भवति 'यानि स्थानानि अश्विना दधाथे दिवो यह्वीष्वोषधीषु विक्षु । नि पर्वतस्य मूर्धनि सदन्त' (७-७०-३) । अश्विनोः रथः ज्योतिर्मयः, 'आ यातं अश्विना रथेन सूर्यत्वचा' (८-८-२) 'हिरण्यबन्धुरं हिरण्याभीशुं दिविस्पृशम्' (८-५-२८) ऋतसम्बन्धद्योतकमेव हिरण्य-सूर्य-ज्योतिरादिकमवधेयम् । 'रथो ह वां ऋतजा अद्रिजूतः' (३-५८-८)। अश्विभ्यां सह तं रथमास्थितामुषसमधिकृत्यापि 'ता धा ता भद्रा उषसः पुरासुः अभिष्टिद्युम्ना ऋतजातसत्याः' (४-५१-७) इति बहुवचनेनोक्तम् ।। १९ ।।

## ऋक्संहिता पदपाठसहिता

**कस्तं उषः कधप्रिये भुजे मर्तो अमर्त्ये । कं नक्षसे विभावरि ।। २० ।।**

(प०)कः । ते । उषः । कधऽप्रिये । भुजे । मर्तः । अमर्त्ये । कम् । नक्षसे । विभाऽवरि ।।२०।।

## ऋग्भाष्यम्

**को मर्त्यस्तव भोगाय यतः सर्वप्रियो भवान् ।**
**किमपि प्रियमस्येति पूर्णानन्दात्कधप्रियः ।**
**आप्तकामत्वतः कं वा गच्छसि स्वार्थहेतुतः ।**
**विशेषाद्भावृतेर्विष्णुः कथितश्च विभावरी ।। २० ।।**

**ऋग्भाष्यटीका– कस्ते** । उषस्योयं तृचः ।। **को** मर्त्यः । हे **कधप्रिये अमर्त्ये विभावरि उषः को मर्तो** मर्त्यः । **ते** तव । **भुजे** भोगाय भवति । न कोऽपि । कधप्रिय इत्येतद्व्याचष्टे । **यत इति** ।। सर्वं प्रियमेव यस्य न किंचन दुःखकारणं स सर्वप्रियः । यतो भवान्सर्वप्रियोऽतः कधप्रियः । तस्य स्त्रीरूपस्य सम्बुद्धिः कधप्रिये । कथमेतल्लभ्यत इत्यत आह । **किमपीति** ।। कधशब्दः किमपीत्यस्यार्थे निपातः । सर्वमपीत्यर्थः । सर्वं प्रियमेव न त्वप्रियं किमपीत्येतत्कुत इत्यत आह । **पूर्णानन्दात्** पूर्णानन्दत्वादिति ।। यतस्त्वममर्त्या पूर्णानन्दा च अतस्तव भोगः कथं मर्त्याधीन इति । **कं नक्षसे** 'णक्ष गतौ' आप्तकामत्वतः कारणात्स्वार्थहेतुतः कमेव प्रतिगच्छसि । न कंचन प्रति । विभावरीति व्याचष्टे । **विशेषादिति** ।। विशेषाद्भा विशिष्टाभा । तया जगदावरणात् । विशिष्टा भा विभा । वृणोतेरकारः । स्त्रियामीकारः । विभयावरी विभावरी । विभावरी चेति सम्बन्धः ।। २० ।।

**मन्त्रार्थमञ्जरी–** (हे) कधप्रिये, 'कधम्' इति निपातः 'किमपि' इत्यर्थे, सर्वमित्यर्थः, कधं सर्वं प्रियमेव न त्वप्रियं यस्याः पूर्णानन्दत्वान्न किञ्चिद्दुःखकारणं सा कधप्रिया, तत्सम्बुद्धिः कधप्रिये । अमर्त्ये । विभावरि, विशिष्टया प्रभया आवरि जगदावृण्वाने, वृणोतेः अकारे स्त्रियामीकारः । उषः, उषोदेवि । कः । मर्तः, मर्त्यः । ते, तव भुजे, भोगाय– भवति, न कोऽपि, यतस्त्वं पूर्णानन्ददोऽमर्त्यश्चातस्तव भोगो मर्त्याधीनः कथम् ? इति । कम् । नक्षसे, 'णक्ष गतौ' आप्तकामत्वतः कारणात्स्वार्थनिमित्तं कमेव प्रति गच्छसि, न कञ्चन प्रति ।। २० ।।

**स्कन्द–** तमश्विनावूचतुः– उषसं नु स्तुहि, अथ त्वोत्स्रक्ष्याम इति । स उषसं तुष्टावात उत्तरेण तृचेन' (ऐ.ब्रा.७-१६) । 'उषस्यस्तृच उत्तरः' (बृ.दे.३-१०२) । उत्तरस्तृच उषो-देवतः । हे **उषः! कधप्रिये!** कम् उदकम्, तद् रश्मिभिराहितं यो दधाति धारयति स कधः प्रजापतिः । केन विधीयते प्रकाशनरसाद्याहरणार्थं स्थाप्यत इति वा कधः । कोऽसौ । आदित्यः । तस्य प्रिया स वा प्रियो यस्याः सा कधप्रिया । अत्यन्तसाहचर्याच्च तत्प्रियत्वाद् वा सा । तत्सम्बोधनं हे कधप्रिये! । **भुजे** भुजिरत्र पालनार्थः । पालनाय **कः मर्तः** मनुष्यः । **अमर्त्ये!** मरणवर्जिते! कं त्वं मनुष्यं पालयसीत्यर्थः । **कम्** वा **नक्षसे** । नक्ष इति व्याप्तिकर्मसु (निघ.२-१८) पाठाद् नक्षतिर्व्याप्त्यर्थः । आयुरादिप्रदानेन व्याप्तोऽपीत्यर्थः । अथवा तृक्ष स्तृक्ष 'णक्ष गतौ' । गत्यर्थो नक्षतिः । कं वा पालयितुं गच्छसीत्यर्थः । कथय । एतत् सुखं ज्ञात्वा वयमपि तादृशा एव भवेमेत्यर्थः । **विभावरि!** विविधा भा दीप्तिर्विभा तद्वति! ईवनिपौ छन्दसि । वनिर्मत्वर्थीयः ॥ २० ॥

**वेङ्कटमाधव– कः ते उषः!** कथनप्रिये! थकारधकारौ समानौ । भोगाय भवति **मर्तः** मरणवर्जिते! कीदृशं च त्वं व्याप्नोति दीप्तिमति ॥ २० ॥

**मुद्गल–** अश्विभ्यां प्रेरितः शुनःशेपः उषसं तुष्टाव । हे **कधप्रिये!** स्तुतिप्रिये! **अमर्त्ये** । मरणरहिते । उषः । एतच्छब्दाभिधेये उषःकालाभिमानिनि देवते! **ते भुजे** तव भोगाय **मर्तः** मनुष्यः **कः** विद्यते । हे **विभावरि!** विशेषप्रमायुक्ते उषोदेवि! **कम्** पुरुषम् **नक्षसे** आप्नोति । तवोचितं भोगं दातुं न कोऽपि समर्थः । अत एव त्वं कमपि पुरुषं भोगापेक्षया न प्राप्नोषि । ईदृशस्तव महिमेत्यर्थः ॥ २० ॥

**सायण–** प्रातरनुवाके आश्विनशस्त्रे उषस्ये क्रतौ गायत्रे छन्दसि 'कस्त उषः' इति तृचः । 'अथोषस्यः' इति खण्डे 'कस्त उष इति तिस्रः' (आश्व.श्रौ.४-१४) इति सूत्रितम् । अश्विभ्यां प्रेरितः शुनःशेपः उषसं तुष्टाव । तथा च ब्राह्मणम्– 'तमश्विनावूचतुः– उषसं नु स्तुहि, अथ त्वोत्स्रक्ष्याम इति । स उषसं तुष्टावात उत्तरेण तृचेन तस्य ह स्मर्च्युच्युक्तायां वि पाशो मुमुचे कनीय ऐक्ष्वाकस्योदरं भवत्युत्तमस्यामेवर्च्युक्तायां वि पाशो मुमुचेऽगद ऐक्ष्वाक आस' (ऐ.ब्रा.७-१६) इति ।

हे **कधप्रिये!** स्तुतिप्रिये! **अमर्त्ये** । मरणरहिते । उषः । एतच्छब्दाभिधेये उषःकालाभिमानिनि देवते! **ते भुजे** तव भोगाय **मर्तः** मनुष्यः **कः** विद्यते । हे **विभावरि!** विशेषप्रमायुक्ते उषोदेवि! **कम्** पुरुषम् **नक्षसे** आप्नोति । तवोचितं भोगं दातुं न कोऽपि समर्थः । अत एव त्वं कमपि पुरुषं भोगापेक्षया न प्राप्नोषि । ईदृशास्तव महिमेत्यर्थः ।

ते । 'तेमयावेकवचनस्य' (पा.सू.८-१-२२) इति युष्मच्छब्दस्य तेआदेशः सर्वानुदात्तः । कधप्रिये । 'कथ वाक्यप्रबन्धे' । चुरादिरदन्तः । णौ अतो लोपस्य स्थानिवद्भावात् उपधावृद्ध्यभावः । 'घिन्तिपूजिकथिकुम्बिचर्चश्च' (पा.सू.३-३-१०५) इति अप्रत्ययः । 'णेरनिटि' इति णिलोपः । ततः टाप् । षष्ठीसमासे 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' (पा.सू.६-३-६३) इति ह्रस्वत्वम् । थकारस्य धकारश्छान्दसः । आमन्त्रितानुदात्तत्वम् । भुजे । 'भुज पालनाभ्यवहारयोः' । संपदादिलक्षणः क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । मर्तः । 'असिहसि' इत्यादिना तन्प्रत्ययान्त आद्युदात्तः । नक्षसे । 'तृक्ष ष्टृक्ष णक्ष गतौ' । विभावरि । 'भा दीप्तौ' । विपूर्वात् अस्मात् 'आतो मनिन्क्वनिब्वनिपश्च' इति वनिप् । 'वनो र च' (पा.सू.४-१-७) इति ङीष्; तत्संनियोगेन नकारस्य रेफादेशः । 'अम्बार्थनद्योर्ह्रस्वः' (पा.सू.७-३-१०७) इति ह्रस्वत्वम् ।। २० ।।

**सिद्धाञ्जनम्**– हे **कधप्रिये!** स्तुतिप्रिये, (कथ वाक्यप्रबन्धे, थकारस्य घकारश्छान्दसः तथा आकारस्य ह्रस्वः) **उषः** उषःशब्दाभिधेये, ऋतस्य उत्तमज्योतिषः सूर्यस्य प्रादुर्भावात् प्राक् तं आगामिनं ज्ञापयन्ती या दिवो दुहिता दैव्या भा प्रसीदति सैवोषोदेवी भवति, तां सम्बोधयति । हे **अमर्त्ये!** मरणरहिते, नित्यसत्यत्वात्, **कः मर्तः** को मनुष्यः **ते भुजे** तव भोगाय त्वां भोक्तुं (भुजेः सम्पदादिलक्षणः क्विप्, 'भुक्' तस्मै) प्रभवतीति शेषः । हे विभावरि विशिष्टभासम्पन्ने, (विपूर्वाद् भातेर्वनिप् मत्वर्थीयः, नकारस्य रेफादेशः) **कं** कीदृशं मनुष्यं **नक्षसे** त्वं प्राप्नोषि ? (नक्षतिर्गत्यर्थः) उक्तलक्षणायाः उषसः प्रसादाय कीदृगधिकारी भवतीति पृच्छति । ईदृशेन प्रश्नेन 'मां अधिकारिणं कुरु देवि' इति प्रार्थना ध्वन्यते । ऋषयः पूर्वे हार्दैः स्तोत्रैर्देवताप्रसादं लेभिरे । नेह साधारण उपःकाल एवं स्तुतः । स सर्वस्यापि प्राणिजातस्य प्रत्यक्षो भवति प्रत्यहम् । तत्र मनुष्यस्य विशिष्टा योग्यता नावश्यकी, चक्षुष्मत्तैवालम् । यदि प्रभातसमये मनुष्याणां लोकव्यवहारप्रवृत्तिरेव उषसो भोग इत्यभिप्रेतः स्यात् तदा अविकलशरीरेन्द्रियादिकरणः सर्वोऽपि

प्राणिलोकः उषसो भोगाय प्रभवेत् प्रभवत्येव । प्रत्यूषसमयमभिलक्ष्य उन्मत्तजनमन्तरा न कोऽपि स्वस्थवृत्तः पुरुषः 'हे देवि, विभावरि, कस्त्वामुपभोक्तुं क्षमः' इति पृच्छेत् । न वा भ्रान्तो मन्त्रद्रष्टा, प्राकृतो वा जनः ।। २० ।।

## ऋक्संहिता पदपाठसहिता

**वयं हि ते अमन्महाऽऽन्तादा पराकात् । अश्वे न चित्रे अरुषि ।। २१ ।।**

वयम् । हि । ते । अमन्महि । आ । अन्तात् । आ । पराकात् । अश्वे । न । चित्रे । अरुषि ।।

## ऋग्भाष्यम्

**चिन्तयामस्तवैकस्य विश्वमांतपराकयोः ।**
**पराकः सुसुखैव श्रीरंतः कलिरुदाहृतः ।**
**नरकस्वर्गयोरेव देव्युषा उदिता यदा ।**
**जात्यश्ववत्सदा भद्रे चारुणे........।। २१ ।।**

**ऋग्भाष्यटीका–** **वयं हि** । चिन्तयामः । हे **अश्वे न** जात्यश्ववच्चित्रे सदाभद्रे । ईश्वरापेक्षया पुल्लिङ्गम् । इवादि युक्तमुपमानमुपमेयवृत्तीति ततोऽपि सम्बुद्धिः । **अरुषि** अरुणे वर्णतः । चशब्दो गुणसमुच्चये । **वयं अन्तात् आ पराकात्** । अन्तपराकयोरा । पञ्चम्यर्थे षष्ठी । आङभिविधौ । विश्वं ते तवैकस्य । इति **अमन्महि** चिन्तितवन्तो हि सदा चिन्तयामः । पराकान्तौ व्याचष्टे । **पराक इति** ।। श्रीरेव पराकः । कथम् । सुसुखेति कृत्वा । परं आ सम्यकं यस्येति । पुल्लिङ्गं पुंसामर्थ्योपेतत्वात् । अन्तः कलिः । सकलजीवान्त्यत्वात् । लक्ष्मीपूर्वं कलिपर्यन्तं विश्वं तवैव स्वमिति जानीम इत्यर्थः । प्रसिद्धायामुषस्येतदसम्भवादान्तादा पराकादिति प्रकारान्तरेण व्याख्याति । **नरकेति** ।। यदोषादेव्यत्रोदिता तदा नरकस्वर्गयोर्नरकस्वर्गाभ्यामित्येवं व्याख्येयम् । अन्तो विनाशः । दुःखं नरकः । परमसुखत्वात्पराकः स्वर्गः । नरकस्वर्गयोर्देवी स्वामिनीति स्वार्थ एव वा षष्ठी ।। २१ ।।

**मन्त्रार्थमञ्जरी–** अश्वे न, जात्यश्ववत् । चित्रे, सदा भद्रे । अरुषि, वर्णतोऽरुणे । वयम् । आ अन्तात्, सर्वजीवान्त्यात्, कलिपर्यन्तम् । आ पराकात्, परमुत्तममा समन्तात्कं सुखं यस्य श्रीतत्त्वस्य तस्मादा, लक्ष्मीपर्यन्तम् । (च) आङभिविधौ, कलिलक्ष्मीसहितं विश्वम् ।

ते, तव, एकस्य । 'स्वम्' इति अमन्महि, सदा चिन्तयामः । हि । प्रसिद्धोषः पक्षे अन्तपराक-शब्दयोर्नरकस्वर्गार्थता ज्ञेया, तत्सहितविश्वस्य 'स्वामिनी' इति ।। २१ ।।

**स्कन्द–** हिशब्दः पदपूरणः । ते इति द्वितीयार्थे षष्ठी । **वयम्** त्वाम् **अमन्महि** 'ईमहे यामि मन्महे' (निघ.३-१९) इति याश्चाकर्मसु पाठाद् याश्चार्थोऽयम् । याचामहे । किम् । सामर्थ्यात् स्वस्यायुषः । न वाल्पस्य । किं तर्हि । **आ अन्तात् आ पराकात्** 'पराके' (निघ.३-२६) इति दूरनाम । विप्रकृष्टत्वाच्च पुरुषायुषं वर्षशतमत्र दूरमभिप्रेतम् । आ अभिविधौ मर्यादायाम् । आ वर्षशतात् । यावद्वर्षशतं पूर्णमित्यर्थः । **अश्वे न चित्रे** अश्वा वडवा । सा यथा चित्रा विचित्रा पूज्या वा तद्वच्चित्रे! । अथवा श्रूयमाणोपमार्थीयो नायमुपमानशब्दः । उपमानाम् उपमानवृत्तितदुपमेयविषयसम्बोधनसम्बन्धासम्भवाद् अश्वाशब्दो नोपमानवृत्तिः । किं तर्हि । लुप्तोपम उपमेयवृत्तिः । क्रियाशब्दो वा । नशब्दस्तु 'उपरिष्टादुपचारः' (या.१-४) उपमार्थीयत्वाद् । 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' (या.७-३१) इति पदपूरणः । अश्वे! वडवासदृशे! व्याप्ते! वा । चित्रे चित्ररूपे पूज्ये वा । **अरुषि** ऋषतेर्दीप्तिकर्मणो दीप्तिवचनः । अर्यतेर्वा गतिकर्मणो गन्तृवचनः । दीप्ते! गन्त्रि! वा ।। २१ ।।

**वेङ्कटमाधव–** **वयम् हि** त्वाम् अज्ञासिष्म **आ अन्तात् आ च पराकात्** पराकशब्दो दूरवचनः । मूलादुपक्रम्याऽऽन्तादित्यर्थः । **अश्वे**! गमनशीले! पूज्ये! आरोचने! इति । नकारः सम्प्रत्यर्थीयः ।। ११ ।।

**मुद्गल–** हे **अश्वे**! व्यापनशीले! **चित्रे**! चायनीये! **अरुषि**! । आरोचमाने उषःकालाभिमानिनि देवते! तव स्वरूपम् **आ अन्तात्** समीपपर्यन्तम् **आ पराकात्** दूरपर्यन्तम् **वयम्** मनुष्याः **न अमन्महि** न बोद्धुं समर्थाः । **हिः** प्रसिद्धौ । देवतामहिम्नः पारावारयोर-ज्ञानमस्मासु प्रसिद्धमित्यर्थः ।। २१ ।।

**सायण–** हे **अश्वे**! व्यापनशीले! **चित्रे**! चायनीये! **अरुषि**! । आरोचमाने उषः-कालाभिमानिनि देवते! तव स्वरूपम् **आ अन्तात्** समीपपर्यन्तम् **आ पराकात्** दूरपर्यन्तम् **वयम्** मनुष्याः **न अमन्महि** न बोद्धुं समर्थाः । **हिः** प्रसिद्धौ । देवतामहिम्नः पारावारयोर-ज्ञानमस्मासु प्रसिद्धमित्यर्थः ।

अमन्महि । 'मन ज्ञाने' । 'बहुलं छन्दसि' इति बहुलवचनात् श्यनो लुक् । 'लुङ्लङ्-लृङ्क्ष्वडुदात्तः' । 'हि च' इति निघातप्रतिषेधः । अश्वे । 'अशू व्याप्तौ' । 'अशिप्रुषि' इत्यादिना कन्प्रत्ययः । आमन्त्रिताद्युदात्तत्वम् ।। २१ ।।

**सिद्धाञ्जनम्**– हे **अरुषि** आरोचमाने **चित्रे** विचित्रे विविधवर्णयुक्ते **अश्वे** न वडवा इव अवस्थिते (उपभोगं-द्रुतगतिकत्वादिद्योतनार्थेयमुपमा) हे उषः, **वयं** स्तोतारो मनुष्याः ते त्वां विभक्तिव्यत्ययः, **आ पराकात्** परस्ताद् दूरस्थानादारभ्य **आ अन्तात्** समीपपर्यन्तं, अथवा दूरे वा समीपे वा **अमन्महि** ध्यायामः । अस्माकं मतिमास्थिताऽसि त्वं दूरादेव न केवलं समीप एव (मन ज्ञाने, श्यनो लुक्, छन्दसि बहुलम्) **हि** अवधारणे । तृतीयपादे नञ् उपमार्थीयः । 'न अमन्महि' इति प्रथमचरणे संयोजितं सायणीये । न बोद्धुं समर्था इति निषेधार्थको नञ् इति व्याख्यातम् । अयुक्त एवंविधोऽन्वयः ।। २१ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं त्येभिरा गहि वाजेभिर्दुहितर्दिवः । अस्मे रयिं नि धारय ।। २२,३१,३०,६ ।।**

त्वम् । त्येभिः । आ । गहि । वाजेभिः । दुहितः । दिवः । अस्मेइति । रयिम् । नि । धारय ।।

## ऋग्भाष्यम्

**........................प्राणवाक्सुते ।**
**तद्व्यंग्यत्वाद्धरिश्चैव दिवस्पुत्र उदाहृतः ।। २२,३१,११,६ ।।**

**ऋग्भाष्यटीका**– त्वं त्येभिः । अत्र दिवो दुहितरित्येतत्प्रसिद्धायामुषसि व्याख्याति । **प्राणेति** ।। यद्यपि वागेव द्यौस्तथापि केवलायाः स्त्रियोऽपत्यसम्बन्धाभावात्प्राणग्रहणम् । परमेश्वरे दिवो दुहितृत्वं घटयति । **तदिति** ।। वाचा व्यंग्यत्वादेव हे दिवोदुहितरुषस्त्वम् । **त्येभिः** त्यैः प्रसिद्धैः । **वाजेभिः** वाजैः । अन्नानि दातुमिति यावत् । अस्मान्प्रति **आगाहि** आगच्छ । **अस्मे** अस्मासु । **रयिं** वित्तं च । **निधारय** निश्चितं स्थापय ।। २२,३१ ।।

**मन्त्रार्थमञ्जरी**– (हे) दिवः दुहितः, वाण्याः पुत्रि, विष्णोः स्तुतिव्यङ्ग्यत्वात्पुत्रीत्वं ज्ञेयम् । त्वम् । त्येभिः, त्यैः, प्रसिद्धैः । वाजेभिः, वाजैः, अन्नानि दातुमिति यावत् । अस्मान्प्रति

आ गहि, आगच्छ । अस्मे, अस्मासु, शे आदेशः । रयिम्, वित्तम् । (च) निधारय, निश्चितं यथा तथा स्थापय ।। २२ ।।

**स्कन्द– त्येभिः** इति 'इत्थम्भूतलक्षणे' (पा.सू.२-३-२१) तृतीया । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । **त्वम्** यानि वयमर्थयामहे तैः सम्बद्धा **आ गहि** आगच्छ: **वजेभिः** अन्नैः । यान्यस्मभ्यं दातव्यानि अन्नानि तानि गृहीत्वाऽऽगच्छेत्यर्थः । हे **दुहितः दिवः** आदित्यतेजसो दिवि जायमानत्वादुषा दिवो दुहिता, तेनैवमामन्त्र्यते– हे दुहितर्दिव इति । किञ्च **अस्मे रयिम् नि धारय** घनं चास्मभ्यं देहीत्यर्थः । स च शुनःशेपोऽस्यामृच्युक्ताया विपाशो मुमुचे इतीतिहासार्थः ।। २२ ।।

**वेङ्कटमाधव– त्वम्** एतैः प्रदित्सितैः अन्नैः आगच्छ दिवः दुहितः! अस्मासु **रयिम्** नियच्छेति ।। २२ ।।

**मुद्गल–** हे **दिवः दुहितः** । द्युदेवतायाः पुत्रि! उषोदेवि! **त्येभिः वाजेभिः** तैरन्नैः सह **त्वम् आ गहि** अत्राऽऽगच्छ । **अस्मे** अस्मासु रयिम् धनम् **नि धारय** नितरां स्थापय ।। २२ ।।

**सायण–** हे **दिवः दुहितः** । द्युदेवतायाः पुत्रि! उषोदेवि! **त्येभिः वाजेभिः** तैरन्नैः सह **त्वम् आ गहि** अत्राऽऽगच्छ । **अस्मे** अस्मासु रयिम् धनम् **नि धारय** नितरां स्थापय ।

त्येभिः । 'बहुलं छन्दसि' इति त्यद्शब्दात् भिस ऐसादेशाभावः । गहि । असकृदुक्तम् । दुहितर्दिवः । परस्यापि दिव इत्यस्य दिवः दुहितः इत्यन्वये सति पूर्वत्वात् 'सुबामन्त्रिते' इति पराङ्गवद्भावेन षष्ठ्यामन्त्रितसमुदायस्य सर्वानुदात्तत्वम् । यद्वा । 'कार्यकालं हि संज्ञापरिभाषम्' (परिभा.३) इति न्यायेन 'सुबामन्त्रिते' इत्यस्य 'आमन्त्रितस्य च'(पा.सू.८-१-१९) इति आष्टमिकेन योगेनैकवाक्यत्वे सति परत्वात् पराङ्गवद्भावे सति सर्वानुदात्तत्वम् । कृतस्वरयोः षष्ठ्यामन्त्रितयोः पश्चात् 'व्यत्ययो बहुलम्' इति व्यत्यस्तप्रयोगः । अस्मे । 'सुपां सुलुक्' इति सप्तम्याः शेआदेशः ।। २२,३१ ।।

**सिद्धाञ्जनम्– दिवः** द्युलोकस्य, सर्वस्यास्य पितुरूर्ध्वधाम्न इत्यर्थः । **दुहितः** पुत्रि, हे उषः! **त्येभिः** तैः **दिव्यैः** वाजैः दिव्याभिः समृद्धिभिः सहेत्यर्थः । **त्वं आ गहि** आगच्छ ।

**अस्मे** अस्मासु (सप्तम्याः शेआदेशः) **रयिं** धनं दिव्यां सम्पदं, **नि धारय** नितरां स्थापय, प्रतिष्ठापयेत्यर्थः ।। २२ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये एकत्रिंशो वर्गः ।।

## ।। अथ द्वात्रिंशो वर्गः ।।

(सूक्तम् ३१)

## ऋक्संहिता पदपाठसहिता

(१८ हिरण्यस्तूप आङ्गिरसः । अग्निः । जगती छन्दः ८,१६,१८ त्रिष्टुप्)

**त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा । तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ।। १ ।।**

त्वम् । अग्ने । प्रथमः । अङ्गिराः । ऋषिः । देवः । देवानाम् । अभवः । शिवः । सखा । तव । व्रते । कवयः । विद्मनाऽअपसः । अजायन्त । मरुतः । भ्राजत्ऽऋष्टयः ।। १ ।।

## ऋग्भाष्यम्

**अग्नीन्द्रादिगतं पृथक्स्थितमपि स्तौत्यच्युतं भक्तितः ।**
**स्वर्णस्तूप इति प्रसिद्धिमगमद्यः संस्तुवन्सूर्यगम् ।।**
**विष्णुं स्वर्णसमानचारुवपुषं स्वर्णाभिधं शाश्वतं ।**
**तं दृष्ट्वा परतोऽभवच्च महितः सुज्ञानमप्याप्तवान् ।।**
**अङ्गे रसो ज्ञानत एव चर्षिः सखाप्रियत्वेन दिवौकसां हरिः ।**
**तव व्रतेनैव सविद्यकर्मिणो महाविज्ञाना मरुतो बभूविरे ।। १ ।।**

ऋग्भाष्यटीका– शुनःशेपदृष्टा ऋचो व्याख्यायोत्तरासामृषिं देवताश्चाह । **अग्नीति** ।। यः सूर्यगं स्वर्णाभिधं हिरण्यनामानं विष्णुं संस्तुवन् स्वर्णस्तूप इति हिरण्यस्तूप इति प्रसिद्धिमगमत् । ष्टुञ् स्तुतावित्यस्मात् डूपप्रत्ययः । हिरण्यस्य स्तूपो हिरण्यस्तूप इति विष्णुः कुतो हिरण्यनामा । स्वर्णसमानचारुवपुषम् । तर्हि रूपवत्त्वादनित्यः शाश्वतम् । यश्च तं विष्णुं दृष्ट्वा परतः परैर्महितः पूजितश्चाभवत् । सुज्ञानमप्याप्तवान् । स हिरण्यस्तूप आङ्गिरस उत्तराभिर्ऋग्भिरग्नीन्द्रादिगतं पृथक्

स्थितमप्यग्न्यादिनामानमच्युतं भक्तितः स्तौति । अग्नीन्द्रादि देवतास्तत्र तत्र वक्ष्यामः । **त्वमग्ने प्रथमो अङ्गिराः** ऋषिः । अष्टादशर्चमिदमाग्नेयं सूक्तम् । अङ्गेरसः । हरिः अङ्गेरसः शरीरे सार इत्यङ्गिरा उच्यते । ज्ञानतो ज्ञानवत्त्वादृष्टिश्चोच्यते । नत्वङ्गिरसर्षिणैक्यादित्येवशब्दः । दिवौकसां प्रियत्वेन देवानां सखा चोच्यते । योजना तु । हे **अग्ने त्वं प्रथमः** सर्वोत्तमोऽसि । तथाङ्गिरा ऋषिर्देवः । **शिवः** सुखात्मको देवानां **सखा**ऽभवः सर्वदा भवसि । किञ्च भ्राजंत्यः ऋष्टयः आयुधविशेषा येषान्ते **भ्राजदृष्टयो** मरुतोऽतीतवर्तमाना वायवः **तव व्रते** व्रतेनैव त्वद्विषय-व्रतवत्वेनैव । **विद्मनाऽपसः** विदेःक्मन् । विद्मना विद्यया सहितमपः कर्म येषाम् । स विद्यकर्मिणः सन्तः कवयो महाविज्ञाना **अजायन्त** । बभूविरे बभूवुः । ईश्वरार्थेन ज्ञानसहितकर्मणा पुनः कथं ज्ञानावाप्तिरित्यतो महच्छब्देन वीति च ज्ञानं विशिनष्टि ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ सप्तमस्यानुवाकस्य ऋषिस्तु– सूर्यगतं हिरण्यवर्णं हिरण्यनामानं स्तुवन्हिरण्यस्तूपनामा प्रख्यातो मुनिः, हिरण्यं स्तौतीत्यर्थे 'ष्टुञ् स्तुतौ' इत्यतो डूपप्रत्ययः । तत्र 'त्वमग्ने' इत्यष्टादशर्चं वर्गचतुष्टयात्मकमग्निदेवताकमेकत्रिंशं सूक्तम् । (तत्र अष्टमी षोडश्यष्टादशी च त्रिष्टुभः, शिष्टा जगत्यः । जगतीछन्दो देवता वारुणी सर्वदेवस्त्रियश्च । (हे) अग्ने त्वम् । प्रथमः, सर्वोत्तमः । (असि) तथा, अङ्गिराः, निरुक्तमेतत्पदं हरावग्नौ च 'यदङ्ग-दाशुषे त्वमग्ने' इत्यत्र । ऋषिः, ज्ञानी । देवः, क्रीडादिगुणविशिष्टः । शिवः, सुखात्मकः । देवानाम् सखा (च) अभवः, सदा भवसि । किं च, भ्राजन्त्यो दीप्यमाना ऋष्टय आयुधविशेषा येषां ते भ्राजदृष्टयः । मरुतः, अतीतवर्तमाना वायवः । तव । व्रते, व्रतेनैव, त्वद्विषयव्रतेनैव । विद्मनापसः, विदेः क्मनिन्, विद्मना विद्यया सहितमपः कर्म येषां ते, तृतीयाया अलुक्, सविद्यकर्मिणः सन्तः । कवयः, महाविज्ञानाः । अजायन्त, बभूवुः ।। १ ।।

**स्कन्द–** 'हिरण्यस्तूप आङ्गिरसः त्वम्' । हिरण्यस्तूपो नामाङ्गिरसः पुत्रः 'त्वम् अग्ने' इत्यादि दृष्टवान् । 'आग्नेयं प्रथमं सूक्तम्' । हिरण्यस्तूपस्य प्रथमं सूक्तमग्निदेवतम् । **त्वम्** हे **अग्ने! प्रथमः** सर्वत उत्कृष्टः । **अङ्गिराः** अङ्गानि शरीरावयवाः तद्वदङ्गि शरीरम् तत्र स्थितिहेतुः अशितपीतरसोऽङ्गिरसः । तं करोत्यङ्गिरसयति 'तत् करोति तदाचष्टे' (पावा.३-१-२६) इति णिच् । तदन्तात् क्विप् । 'अत्वसन्तस्य चाधातोः' (पा.सू.३-४-१४) इति दीर्घत्वम् । अधातुभूतपूर्वमात्रस्य हीदमिष्यते । गोमान् यक्ष्मानिति यथा । दिवोदासादित्वाच्च

छान्दसमाद्युदात्तत्वम् । अङ्गिराः शरीरस्थितिहेतोः अशितपीतरसस्य कर्तेत्यर्थः । जाठरो ह्यग्निरन्नं रसीकरोति । रसो लोहितमांसस्नाय्वस्थिमज्जाशुक्रभावेन परिणममानः शरीरस्थितिहेतुर्भवति । **ऋषिः** द्रष्टा च सर्वस्य ।

अथवा योऽयं प्रथमोऽङ्गिरा नाम ऋषिः स त्वमेव त्वत्कारणत्वात् । तथा ह्यैतिहासिका आहु– ततोर्चिषि भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः' (बृ.दे.५-९९) इति । किञ्च **देवः** त्वं हविर्नयनाद्युपकारेण **देवानाम् अभवः** भवसि । **शिवः** सुखः सखा । किञ्च **तव व्रते** 'व्रतम्' (निघ.२-१) इति कर्मनाम । सप्तमीनिर्देशात् अवस्थिता इति वाक्यशेषः । तव कर्मणि परिचर्यायामवस्थिताः **कवयः** मेधाविनः **विद्मनापसः** विदितयागादिकर्माणो वेदितव्यकर्माणो वा । उत्कृष्टचेष्टिता इत्यर्थः । **अजायन्त मरुतः** देवाः । कीदृशाः । **भ्राजदृष्टयः** ऋष्टिः शक्त्याख्य आयुधविशेषः । दीप्तशक्तयः । देवत्वं हि धर्मायत्तम् । धर्मश्चाग्निपरिचर्यायत्तः । अथात एवमुच्यते– तव व्रते अजायन्त मरुत इति । केचित्तु मरुत इत्यृत्विङ्नामाचक्षते (निघ.३-१८) । अत्र चर्त्विक्ष्वेव वर्तते । सामर्थ्याच्चान्तर्णीतमत्वर्थः तद्वद्यजमानवधनो वा । अजायन्तेत्येतत् विद्मनापस इत्येतेन सम्बध्यते । अवस्थिता ऋत्विजो यजमाना वा विद्मनापसो वेदितव्यकर्माण उत्कृष्टचेष्टिता अजायन्तेति ।

अत्र चेतिहासमाचक्षते– 'त्रिशङ्कुर्नामैक्ष्वाको राजा वसिष्ठस्य याज्योऽभवत् । स वसिष्ठमब्रवीत्– येनाहं क्रतुना सुशरीरो दिवं यायां तेन मां याजयेति । तं वसिष्ठोऽब्रवीद् अशक्यमेतदिति । स किञ्चिदागतमन्युरेतदेव वसिष्ठपुत्रानब्रवीत् । त एनमब्रुवन् – भगवान् प्रवृत्तो यजने, किमर्थं वृक्षमुत्सृज्य शाखास्ववलम्बस इति । स तानब्रवीत्– अशक्यमेतदिति भगवताहमुक्त इति । त एनं प्रत्यब्रुवन्– यत् तस्याशक्यं कथं तदस्माकं शक्यं भविष्यतीति । स तानप्रवीत्– प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैश्च । अन्यां गतिं यास्यामीति । तं वसिष्ठपुत्रः शक्तिः क्रुद्धोऽशपत्– गुर्वतिक्रमाच्चण्डालो भवेति । स शापानन्तरमेव घोररूपश्चण्डालोऽभवत् । अथासौ पुत्रं राज्येऽभिषिच्य विश्वामित्राश्रमं गत्वा प्रोषितस्य तस्य भार्यां परिचरितवान् । अथागतो विश्वामित्रः स्वदारपरिचरणाहिततोषो यथावृत्तं तत्सर्वमुपलभ्य राजानमब्रवीत्– अहं त्वा तेन क्रतुना याजयिष्यामि येन सशरीरः स्वर्गं यास्यसीति– इत्युक्त्वा स्वयमेव सम्भारान् सम्भृत्य शिष्यानुवाच– आमन्त्र्यन्तामृषयः ।

यश्च यद् ब्रवीति तत् सर्वं मह्यमाख्यायतामिति । त ऋषीनुपामन्त्रयन्त । उपामन्त्र्यमाणाश्च ऋषयोऽब्रुवन्– आगमिष्याम इति । वासिष्ठास्त्वब्रुवन्– चण्डालो यत्र यजते क्षत्रियो याजयति च कथं तत्र देवताभिर्ग्रहा ग्रहीष्यन्ते । कथं तत्रागच्छाम इति । तत् सर्वं विश्वामित्राय तच्छिन्या आचक्षत । अथ सपुत्रवसिष्ठवर्जमागतेष्वृषिषु परिसमाप्त एव यज्ञे उत्पतेति विश्वामित्रस्त्रिशङ्कु-मब्रवीत् । अथासावुत्पत्य त्रिदिवमगच्छत् । तं देवाः पातयितुमैच्छत् । अतः क्रुद्धो विश्वामित्रोऽन्यान् देवानसृजत् । अथैनं भीता देवा अब्रुवन् यथा भवानिच्छति तथास्तु इति । सोऽयं त्रिशङ्कुरद्यापि दिवि रोचते' । तदेतदनेनार्धर्चेनोच्यते । ये भ्राजदृष्टयः क्षत्रियत्वाद् दीप्तशक्त्याद्यायुधाः ते तव व्रते अवस्थिता मरुत ऋत्विजो विश्वामित्रादयः तद्वन्तो वा त्रिशङ्क्वादयो यजमानाः विघ्नापसवेदितव्यकर्माणोऽत्यन्तोत्कृष्टसशरीरस्वर्गगमनादिकर्माणोऽजायन्तेति ॥ १ ॥

**वेङ्कटमाधव–** हिरण्यस्तूप आङ्गिरसः । **त्वम्** अग्ने! मुख्यः अङ्गिरसां च एकः सर्वस्य द्रष्टा **देवः देवानाम् अभवः** कल्याणः सखा । **तव** कर्मणि त्वया प्रेरिताः **कवयः** लब्धवेगा लब्धव्याप्तयो वा प्रादुर्भवन्ति **मरुतः** दीप्तस्वायुधाः ॥ १ ॥

**मुद्गल–** सप्तमेऽनुवाके पञ्च सूक्तानि । तत्र 'त्वमग्ने प्रथमः' इति अष्टादशर्चं प्रथमं सूक्तम् । आङ्गीरसः हिरण्यस्तूप ऋषिः । अष्टमीषोडश्यष्टादश्यः त्रिष्टुभः । शिष्टाः जगत्यः । अग्निर्देवता ।

हे अग्ने! **त्वम् प्रथमः** आद्यः **अङ्गिराः** आङ्गिरसानामृषीणां सर्वेषां जनकत्वात् तादृशोऽङ्गिरोनामक ऋषिः **अभवः** । तथा स्वयम् **देवः** भूत्वा **देवानाम्** अन्येषाम् **शिवः** शोभनः **सखा अभवः** । **तव व्रते** त्वदीये कर्मणि **कवयः** मेधाविनः **विद्मनापसः** ज्ञानेन व्याप्नुवानाः **भ्राजदृष्टयः** दीप्यमानायुधाः **मरुतः** मरुसंज्ञका देवाः **अजायन्त** ॥ १ ॥

**सायण–** सप्तमेऽनुवाके पञ्च सूक्तानि । तत्र 'त्वमग्ने प्रथमः' इति अष्टादशर्चं प्रथमं सूक्तम् । आङ्गीरसः हिरण्यस्तूप ऋषिः । अष्टमीषोडश्यष्टादश्यः त्रिष्टुभः । शिष्टाः जगत्यः । अग्निर्देवता । तथा च अनुक्रमणिका– 'त्वमग्ने व्यूना हिरण्यस्तूप आग्नेयं त्रिष्टुबन्त्याष्टमीषोळश्यौ च' इति । प्रातरनुवाके आग्नेये क्रतौ आश्विनशस्त्रे च 'त्वमग्ने प्रथमः' इति सूक्तम् । 'अथैतस्या रात्रेः' इति खण्डे 'त्वमग्ने प्रथमो अङ्गिरा ऋषिर्नू चित्सहोजा अमृतो नि तुन्दते' (आश्व.श्रौ.४-१३) इति सूत्रितम् । अभिप्लवषडहस्य तृतीयेऽहनि आग्निमारुते शस्त्रे इदं सूक्तं जातवेदस्यं

निविद्धानीयम् । तथा च 'तृतीयस्य त्र्यर्यमा' इति खण्डे सूत्रितं- 'त्वमग्ने प्रथमो अङ्गिरा इत्याग्निमारुतम्' (आश्व.श्रौ.७-७) इति । वाजपेये आग्निमारुते एतत्सूक्तं जातवेदस्यं निविद्धानीयं, 'तृतीयेनाभिल्लविकेनोक्तं तृतीयसवनम्' (आश्व.श्रौ.९-९) इत्यतिदिष्टत्वात् ।

हे अग्ने! **त्वम् प्रथमः** आद्यः **अङ्गिराः** आङ्गिरसानामृषीणां सर्वेषां जनकत्वात् तादृशोऽङ्गिरोनामक ऋषिः **अभवः** । तथा च ब्राह्मणम्– 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' (ऐ.ब्रा.३-३४) इति । तथा स्वयम् **देवः** भूत्वा **देवानाम्** अन्येषाम् **शिवः** शोभनः **सखा अभवः** । **तव व्रते** त्वदीये कर्मणि **कवयः** मेधाविनः **विद्मनापसः** ज्ञानेन व्याप्नुवानाः **भ्राजदृष्टयः** दीप्यमानायुधाः **मरुतः** मरुसंज्ञका देवाः **अजायन्त** ।

विद्मनापसः । 'विद ज्ञाने' । विद्मो वेदनम् । बहुलग्रहणात् औणादिको मक्प्रत्ययः । तदस्यास्तीति पामादिलक्षणो नः (पा.सू.५-२-१००) । प्रत्ययस्वरेणान्तोदात्तत्वम् । विद्मनानि अपांसि येषां ते विद्मनापसः । पूर्वपदस्य 'अन्येषामपि दृश्यते' इति दृशिग्रहणात् अवग्रहसमयेऽपि दीर्घत्वम् । अजायन्त । 'जनी प्रादुर्भावे' । तस्य श्यनि 'ज्ञाजनोर्जा' (पा.सू.७-३-७९) इति जादेशः । भ्राजदृष्टयः । 'भ्राजृ दीप्तौ' । व्यत्ययेन शतृ । तस्य लसार्वधातुकानुदात्तत्वे धातुस्वरः । 'ऋषी गतौ' इत्यस्मात् 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिजन्त ऋष्टिशब्दः । ततो बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** सप्तमेऽनुवाके पञ्च सूक्तानि । तत्र त्वमग्ने प्रथम इति प्रथमं सूक्तं अष्टादशर्चं आग्नेयम् । हिरण्यस्तूप आङ्गिरस ऋषिः । अष्टमीषोडश्यष्टादश्यस्त्रिष्टुभः, शिष्टा जगत्यः ।

हे **अग्ने, त्वं प्रथमः** आद्यः **अङ्गिरा** अङ्गिरोनामकः अङ्गिरसां सर्वेषां मूलभूतः **ऋषिः** द्रष्टा, **देवः** स्वयं देवः **देवानां** सर्वेषां देवानां **शिवः** शोभनः **सखा** सखिभूतः **अभवः** भवति, लडर्थे लङ् । **तव व्रते** त्वदीये कर्मणि, त्वत्कर्तृककर्मणा हेतुभूतेन **मरुतः** मरुत्संज्ञका देवाः **अजायन्त** जाताः, जायन्ते वा । कीदृशाः? **कवयः** द्रष्टारः **विद्मनापसः** विद्मनानि वेदनवन्ति अपांसि कर्माणि येषां ते ज्ञानवत्कर्माणो मरुत इति सायणानुसारतः । विद्मना ज्ञानेन अपांसि येषां त इति युक्तम् (विद ज्ञाने, अस्मात् मक्प्रत्ययः, विना इति तृतीया, अलुक्) । **भ्राजदृष्टयः** भ्राजमानाः दीप्ताः ऋष्टयः येषां ते दीप्तायुधा इत्यर्थः, भ्राजत् इति व्यत्ययेन शतृ ।

अग्निरङ्गिरसामाद्यः, तस्य व्यापारमहिम्ना उक्तलक्षणा मरुतोऽजायन्त इत्युक्तम् । अङ्गिरोविचारः अन्यत्र सविस्तरं क्रियते । तेन विशदं स्यादाङ्गिरसं तत्वम् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**त्वम॑ग्ने प्रथमो अङ्गि॑रस्तमः क॒विर्दे॒वानां॒ परि॑ भूषसि व्र॒तम् । वि॒भुर्विश्व॑स्मै॒ भुव॑नाय॒ मेधि॑रो द्वि॒मता श॒युः क॑ति॒धा चि॑दा॒यवे॑ ।। २ ।।**

त्वम् अ॒ग्ने॒ प्र॒थमः अङ्गि॑रःऽतमः । क॒विः । दे॒वाना॑म् । परि॑ । भू॒ष॒सि॒ । व्र॒तम् । वि॒ऽभुः । विश्व॑स्मै । भुव॑नाय । मेधि॑रः । द्वि॒ऽमा॒ता । श॒युः । क॒ति॒धा । चि॒त् । आ॒यवे॑ ।। २ ।।

## ऋग्भाष्यम्

**व्यापी च विश्वस्य सुमेधया युतो जडाजडे वेत्ति तथाऽब्धिशायी ।**
**कतिप्रकारोऽपि स हि प्रजायै स्वामी गुरुर्नित्यसखा पिता च ।। २ ।।**

**ऋग्भाष्यटीका– त्वमग्ने प्रथमो अङ्गिरस्तमः** । व्यापी च । हे **अग्ने! त्वं प्रथमः अङ्गिरस्तमो**ऽतिशयेनाङ्गानां रसः **कविः देवानां व्रतं** त्वद्विषयं कर्म । **परिभूषसि** परिभूषयसि । सफलं करोषि । किञ्च । **विश्वस्मै भुवनाय** विश्वस्य भुवनस्य । **विभुः** व्यापी च **मेधिरः** । इरो मतुबर्थे । 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः' । सुमेधया युतः । द्वे जडाजडे वेत्तीति **द्विमाता** । **शयुः** शेता पयोब्धिशायी । अग्नौ तु शेतिः स्थानार्थः । आमाशयो जलाशय इति यथा । स्थाता । स एवं भूतस्त्वं **आयवे** मनुष्यनामैतत् । प्रजायै प्रजानाम् । **कतिधाचित्** कतिभिरपि प्रकारैर्युक्तः । कतिप्रकारोऽपि भवसि हि । कथमिति । स्वामी गुरुर्नित्यसखा पिता च ।। २ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने त्वम् प्रथमः । अङ्गिरस्तमः, अतिशयेनाङ्गानां रसः । कविः । देवानाम् व्रतम्, तद्विषयं कर्म । परिभूषसि, सफलं करोषि । किं च, विश्वस्मै भुवनाय, विश्वस्य भुवनस्य । विभुः, व्यापी । (च) मेधिरः, 'मेधारथाभ्यामिरन्निरचौ' इति मतुबर्थे इरन्, अतिशायने मतुप् (इरन्) अयम्, सुमेधाविन् । द्वे जडाजडे माति वेत्तीति द्विमाता । शयुः, शेता, पयोब्धिशायी, अग्नौ तु– स्थातेत्यर्थः । स एवम्भूतस्त्वम् आयवे, मनुष्यनामैतत् (वै०नि०२।३) प्रजायै, प्रजानाम् । कतिधा चित्, कतिभिर्बहुभिः प्रकारैर्युक्तः, 'स्वामी गुरुर्नित्यसखा पिता च' (ऋ०भा०) इत्येवं कतिप्रकारोऽपि भवसि हीत्यर्थः ।। २ ।।

**स्कन्द–** **त्वम्** हे **अग्ने! प्रथमः अङ्गिरस्तमः** शरीरस्थितिहेतोः अशितपीतरसस्याऽतिशयेन कर्ता । अङ्गिरस ऋषेरविशयेनोत्पत्तिकारणं वा । **कविः** मेधावी **देवानाम्** स्वभूतम् **परि भूषसि** परिपूर्वो भवति सर्वत्र परिग्रहे । परिगृह्णासि । **व्रतम्** यागाख्यं कर्म । किञ्च **विभुः** ईश्वरः **विश्वस्मै भुवनाय** तादर्थ्य एषा चतुर्थी । सर्वस्य भूतजातस्याऽर्थाय **मेधिरः** यज्ञवान् । यज्ञस्य सम्पादयितेत्यर्थः । द्वे द्यावापृथिव्यौ वा अरणी वा मातरौ यस्य स **द्विमाता शयुः** शयतिरत्र स्थानार्थः, आमाशयो जलाशय इति यथा । व्यवस्थातेत्यर्थः । **कतिधा चित्** कतिभिरपि प्रकारैः । कस्यार्थाय । **आयवे** आयवो मनुष्याः तेषामर्थाय । और्वशेयो वा पुरूरवसः पुत्र आयुः, तस्यार्थाय । कतिधा पुनर्व्यवस्थाता । उच्यते । अग्निहोत्रदर्शपूर्णमासादिषु तावदाहवनीयत्वात् त्रिधा । पिण्डपितृयज्ञचातुर्मास्येषु चतुर्धा प्रणीतातिरेकात् । पशौ पञ्चधा शामित्रातिरेकात् । सोम आग्नीध्रस्य धिष्ण्यातिरेकात् यावत्तत्सङ्ख्यम् ।। २ ।।

**वेङ्कटमाधव– त्वम् अग्ने!** मुख्यः अङ्गिरसां च वरिष्ठः **कविः** यज्ञम् अलङ्करोषि । सर्वस्मै भुवनाय अनेकशरीरो भवत् प्राज्ञः द्वयोर्लोकयोर्निर्माता पुरूरवसः पुत्राय **आयवे** गार्हपत्यादिव्यूहेनानेकधा शयानः ।। २ ।।

**मुद्गल–** हे **अग्ने! त्वम् प्रथमः** आद्यः **अङ्गिरस्तमः** अतिशयेनाङ्गिरा भूत्वा **कविः** मेधावी सन् **देवानाम्** अन्येषाम् **व्रतम्** कर्म **परि भूयसि** परितोऽलङ्करोषि । कीदृशस्त्वम् । **विश्वस्मै भुवनाय** समस्तलोकानुग्रहार्थम् **विभुः** बहुविधः । आहवनीयाद्यनेकरूपधारीत्यर्थः । **मेधिरः** मेधावान् **द्विमाता** द्वयोररण्योरुत्पन्नः **आयवे** मनुष्यार्थम् **कतिधा चित्** कतिभिः प्रकारैः सर्वत्र **शयुः** शयानः । तत्तन्मनुष्यस्य गृहे अवस्थितस्य तव प्रकारा इयन्त इति न केनापि ज्ञायत इत्यर्थः ।। २ ।।

**सायण–** हे **अग्ने! त्वम् प्रथमः** आद्यः **अङ्गिरस्तमः** अतिशयेनाङ्गिरा भूत्वा **कविः** मेधावी सन् **देवानाम्** अन्येषाम् **व्रतम्** कर्म **परि भूयसि** परितोऽलङ्करोषि । कीदृशस्त्वम् । **विश्वस्मै भुवनाय** समस्तलोकानुग्रहार्थम् **विभुः** बहुविधः । आहवनीयाद्यनेकरूपधारीत्यर्थः । **मेधिरः** मेधावान् **द्विमाता** द्वयोररण्योरुत्पन्नः । यद्वा । द्वयोर्लोकयोः निर्माता । **आयवे** मनुष्यार्थम् **कतिधा चित्** कतिभिः प्रकारैः सर्वत्र **शयुः** शयानः । तत्तन्मनुष्यस्य गृहे अवस्थितस्य तव प्रकारा इयन्त इति न केनापि ज्ञायत इत्यर्थः ।।

भूषसि । 'भूष अलंकारे' । भौवादिकः । विभुः । 'विप्रसंभ्यो ड्वसंज्ञायाम्' (पा.सू.३-२-१८०) इति विपूर्वात् भवतेः डुप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । भुवनाय । 'भूसूध्र्-स्जिभ्यश्छन्दसि' (उ.सू.२-२३८) इति क्युन् । योः अनादेशे नित्स्वरेणाद्युदात्तत्वम् । मेधिरः । 'मेधृ संगमे च' । अस्माद्बाहुलक इरन्प्रत्ययः । नित्स्वरः । द्विमाता । द्वे मातरौ यस्यासौ द्विमाता । 'नद्यृतश्च' (पा.सू.५-४-१५३) इति कप्प्रत्ययो न भवति, मातृमातृकयोः भेदेनोपादानात् 'नद्यृतश्च' इति कबपि विभाष्यते इति तस्य मातृशब्दविषये पाक्षिकत्वोक्तिः । त्रिचक्रादित्वात् उत्तरपदान्तोदात्तत्वम् । यद्वा । द्वयोर्माता द्विमाता । 'समासस्य' इत्यन्तोदात्तत्वम् । शयुः । 'शीङ् स्वप्ने' । 'भृमृशी' (उ.सू.१-७) इत्यादिना उप्रत्ययः । कतिधा । डत्यन्तस्य किंशब्दस्य 'बहुगणवतुडति संख्या' (पा.सू.१-१-२३) इति संख्यासंज्ञायां 'संख्याया विधाऽर्थे धा' (पा.सू.५-३-४२) इति धाप्रत्ययः । आयवे । 'छन्दसीणः' (उ.सू.१-२) इति एतेः उण्प्रत्ययः ।। २ ।।

**सिद्धाञ्जनम्–** हे **अग्ने**, **त्वं प्रथमः** आद्यः **अङ्गिरस्तमः** अतिशयन अङ्गिराः अङ्गिरःश्रेष्ठ इत्यर्थः । अङ्गिरःशब्दस्य सत्त्ववचनत्वेन रूढावपि तमप्-प्रत्ययपरस्य तस्य गुणवचनतया प्रयोगो यौगिकत्वं ज्ञापयतीति बोध्यम् । **कविः** अतीन्द्रियार्थदर्शी सन् **देवानां** इतरेषां **व्रतं** कर्म **परि भूषसि** परितोऽलङ्करोषि । किं च त्वं **विश्वस्मै** सर्वस्मै **भुवनाय** लोकाय अनुग्रहार्थं **विभुः** विशिष्टो विविधो वा भवति (विपूर्वकात् भवतेर्डुप्रत्ययः)। **मेधिरः** मेधावान् **द्विमाता** द्वयोर्लोकयोर्माता निर्माता, यजमान दिव्यां भौमां च विततां द्विरूपां चितिशब्दवाच्यां प्रज्ञां आधत्तेऽग्निरित्यर्थः । द्यावापृथिव्यौ मातरौ यस्यास्तीति विग्रहे, उभयोश्रित्योः सङ्गतयोर्जायतेऽग्निः । उभयोः अरण्योरिति याज्ञिकाः । तादृशस्त्वं **आयवे** मनुष्यार्थं **कतिधा चित्** कतिभिः विधाभिर्वा **शयुः** शयानः, मानुष्येषु वससि? यावन्तो मनुष्यास्तावन्तस्तव प्रकारास्तेषु वर्तन्त इत्यर्थः । शयु-शीङ् स्वप्ने, अस्मात् उ-प्रत्ययः । आयवे- एतेः उण्-प्रत्ययः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते ।**
**अरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ।। ३ ।।**

मातरिश्वने । आविः । भव । सुक्रतुऽया । विवस्वते । अरेजेताम् । रोदसीइति । होतृऽवूर्ये । असघ्नोः । भारम् । अयजः । महः । वसोइति ।। ३ ।।

## ऋग्भाष्यम्

**त्वं विष्णो प्रथमो मातरिश्वन आविर्बभूवास्य सुबोधवत्त्वात् ।**
**वायुर्विवस्वान्विविधेषु वासादशोभेतां श्रीश्च भूः सर्वहोतुः ।**
**वरत्वतस्ते रदनाद्रोदसी ते सैका हि दीर्णा द्विविधा बभूव ।**
**सहंतेऽमुं नैव केचिद्ध्यसघ्नुर्वायुर्विरिंचोऽपि महांश्च तस्मै ।**
**विश्वस्य भारं प्रतिदिष्टवांस्त्वं वासाच्च सर्वत्र वसुर्भवानसि ।। ३ ।।**

**ऋग्भाष्यटीका–** त्वमग्ने प्रथमो मातरिश्वने । त्वं विष्णो । हे **अग्ने** विष्णो **त्वम्** । **विवस्वते मातरिश्वने** । **प्रथमो आविर्भव** । भूते लोट् । आविर्बभूव । आविर्बभूविथ । युष्मद्युपपदेपि त्वं देवशक्त्यामित्यादौ प्रथमपुरुषो दृष्टः । प्रथम इति सामर्थ्यादाविर्भावविशेषणम् । अतिशयेनाविर्बभूविथेति । कुतः । **सुक्रतूया** शोभनः क्रतुर्ज्ञानमस्येति सुक्रतुः । दैर्घ्यं छान्दसम् । भावप्रधानात्ततस्तृतीयाया यादेशः । सुक्रतुत्वेन । अस्य मातरिश्वनः सुबोधवत्त्वात् ।

यद्वा शोभनः क्रतुः सुक्रतुः तदिच्छा सुक्रतूया । इच्छया प्राप्तिर्लक्ष्यते । ततस्तृतीयाया आकारादेशः । वायुः कुतो विवस्वानित्यत आह । **वायुरिति** ।। विविधेषु पदार्थेषु वसतेर्भावे विच् । ततो मतुप् । किञ्च । **होतृवूर्ये रोदसी** द्यावापृथिव्यौ श्रीश्च भूश्च त्वयैव **अरेजेताम्** । रेजतिरत्र शोभार्थः । राजतेर्वैतद्रूपम् । अशोभेताम् । होतृवूर्ये कथमित्यत आह । **सर्वेति** ।। होतुः सर्वहोतुः परमेश्वरान्निमित्ताद्वरत्वतः सर्वोत्कृष्टत्वात्ते होतृवूर्ये इति शेषः । अनेन होत्रावूर्ये वर्ये होतृवूर्ये इत्युक्तं भवति । यद्वा सर्वहोतुरीश्वरस्यैकस्य ताभ्यां वरत्वतस्ते होतृवूर्ये इत्यर्थः । होतैव वूर्यो वर्यो याभ्यामिति । प्रगृह्यत्वाभावः छान्दसः । यद्वा निमित्तसप्तम्येषा । होतृवूर्यं वरत्वं पतित्वं तस्मादरेजेतामिति । तदिदमुक्तं सर्वहोतुस्ते तव वरत्वतः पतित्वादशोभेतामिति । रोदसी कथमित्यत आह । **रदनादिति** ।। विदारणात् । 'रद विलेखने' इत्यतः कर्मण्यसुन् । उपधायाश्चौकारः । तद्विवृणोति । **सेति** ।। सैका मूलप्रकृतिः । द्विविधा श्रीर्भूरिति ।

किञ्च । हे **वसो** । हि यस्मादमुं केचित्केपि प्रतिभटानैव सहन्तेऽतो वायुर्विरिञ्चोऽप्यसघ्नुः ।

'षह मर्षण' इत्यस्मात्कर्मणि नुः । कुत्वं च । ततो नञ्समासः । महांश्चासौ वायुर्विरिश्चोऽपि तस्य **असघ्नोः महो** महतश्च । चतुर्थ्यर्थे षष्ठी ! तस्मै त्वं **भारं** विश्वस्येति शेषः । **अयजः** प्रतिदिष्टवान्प्रत्येकं दत्तवानसीति वक्ष्यमाणेन सम्बन्धः । वसुः कस्मादित्यत आह । **वासाच्चेति** ।। वसत्यस्मिन्सर्वमिति चार्थः । भवानिति सम्बुद्धिव्याख्यानम् । असीत्यस्य पूर्वेणैव सम्बन्धान्न दोषः ।। ३ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने, विष्णो । त्वम् । विवस्वते, विविधवस्तुषु वासवते, वसतेः भावे विच्, ततो मतुप् । मातरिश्वने । प्रथमम् (मः) । आविः भव, भूते लोट्, आविर्बभूविथ, 'प्रथमम् (मः)' इति सामर्थ्यादाविर्भावविशेषणम्, 'अतिशयेन बभूविथ' इति । कुतः ? सुक्रतूया, शोभनं क्रतुर्ज्ञानमस्येति सुक्रतुः, संहितायाम्, दीर्घश्छान्दसः, भावप्रधानम्, तृतीयाया यादेशः, सुक्रतुत्वेन, अस्य मातरिश्वनः सुबोधवत्त्वात्, यद्वा– शोभनः क्रतुः सुक्रतुः, तदिच्छा सुक्रतूया, 'सुप आत्मनः क्यच्' (अ प्रत्ययात्' इत्यः) इच्छया प्राप्तिर्लक्ष्यते, ततस्तृतीयाया आकारादेशः, 'सुबोधवत्त्वात्' इत्येवार्थः । किं च, होतृवूर्ये, होत्रा परमेश्वरेण निमित्तेन वूर्ये वर्ये सर्वोत्तमे, यद्वा होतैव वूर्यो वर्यो याभ्यामिति होतृवूर्ये, प्रगृह्यत्वाभावश्छान्दसः, यद्वा निमित्तसप्तम्येषा, होतुर्वूर्यं वरत्वं पतित्वम्, तस्माद्धोतुः पतित्वहेतोः । रोदसी, द्यावाभूमी, श्रीश्च भूश्च । अरेजेताम्, अशोभेताम् । किं च, (हे) वसो । (हि) यस्मात्– अमुं केऽपि प्रतिभटा नैव सहन्ते । (अतः) वायुर्विरिश्चोऽपि असघ्नुः, 'षह मर्षणे' इत्यस्मात्कर्मणि नुः कुत्वं च, ततो नञ्समासः, तस्य असघ्नोः । महः, महतः, चतुर्थ्यर्थे षष्ठी, तस्मै । (त्वम्) भारम् (विश्वाख्यम्) इति शेषः । अयजः, प्रतिदिष्टवान्, 'प्रत्येकं दत्तवानसि' इति भावः ।। ३ ।।

**स्कन्द–** अत्रेतिहासमाचक्षते– ''सर्वम् इदम् अन्धंतम आसीत् । अथ मातरिश्वा आकाशे सूक्ष्ममग्निमपश्यत् । तम् अमथ्नाद् । अथर्वा च ऋषिः । तत् पराशरो भरद्वाजश्च वक्ष्यति– 'मथीद्यदीं विभृतो मातरिश्वा' (ऋ १-७१-४) 'त्वामग्ने पुष्करादधि' (ऋ.६-१६-१३) इति । तत्र मथ्यमाने ज्वालामाली नामाग्निरजायत । स प्रथमं मातरिश्वने आविरभवत् । अथ विवस्वते' । तदेतदिहोच्यते । **त्वम्** हे **अग्ने! प्रथमः** अग्रिमः **मातरिश्वने** मातरिश्वा वायुः तस्मै **आविर्भवः** लडर्थेऽयं लोट् । आविरभवः प्रकाशीभूत इत्यर्थः । **सुक्रतूया** शोभनं कर्म सुक्रतुः तदिच्छा सूक्रतूया । तृतीयैकवचनस्याऽजादेशः । शोभनयागादिकर्मेच्छयेत्यर्थः । मातरिश्वने

चाविर्भूय अनन्तरम् विवस्वते आविरभवः । किञ्च **अरेजेताम्** 'भ्यसते रेजत इति भयवेपनयोः' (या.३-२१) । अबिभीताम् भयाद् वा अकम्पेताम् । **रोदसी** द्यावापृथिव्यौ । **होतृवूर्ये** वृतो वूर्यः । होता वूर्यश्चेति होतृवूर्यः, तस्मिन् होतृवूर्ये । होतरि वृते त्वयि । यदा त्वं होता वृतो वेदिमध्यस्थोऽदीप्यथाः तदा अयमतिदीप्तोऽप्यावां दहेदित्येवं द्यावापृथिव्यावप्यबिभीतां भयाद्वा अकम्पेताम् । किं पुनरन्य इत्यर्थः । **असघ्नोः भारम्** अत्रेतिहासमाचक्षते– 'देवाः किल स्वयमेव स्वानि स्वानि हवींष्यूढ्वाऽभक्षयन् । तेषां केचिद् वोढुं नाशक्नुवन् । एकैकाहुतिस्त्रैलोक्य-भारादतिरिच्यते । कांश्चित्तु शक्नुवतोऽप्यसुरा अभ्यद्रवन् । ते सर्वेऽग्निमब्रुवन् – **हव्यं नो वहेति** । स तल्लीलायमानोऽवहत् । तदेतदिहोच्यते– असघ्नोर्भारमिति । सधिर्हिंसार्थः । सघतिर्हिंसायामिति । इह तु भारस्य हिंसाकर्मताऽसम्भवात् सधिः शक्नोत्यर्थे । सहेर्वा शक्नोत्यर्थस्य इदं रूपम् । न सधेः । शक्नोतेश्च नित्यकर्मभूतधात्वन्तरानुषक्तत्वाद् भारमिति च श्रुतेर्वोढुमिति वाक्यशेषः । आहुतिभारं वोढुमशक्नोरित्यर्थः । तेन चाऽऽहुतिभारेण **अयजः** । **महः** महतो देवान् । हे **वसो!** प्रशस्य! धनवन्! वा ।। ३ ।।

**वेङ्कटमाधव– त्वम् अग्ने!** पुराणः वायवे **आविः अभवः**, शोभनकर्मेच्छया **विवस्वते** । यद्वा तस्मै मातरिश्वा त्वामाजहार । त्वयि होतरि देवैर्वृते महान्तं त्वां दृष्ट्वा द्यावापृथिव्यौ अकम्पेताम् । त्वं देवानां हविर्वहनभारं सोढवान्, **अयजः** च महतस्तान् वासयितः ।। ३ ।।

**मुद्गल–** हे **अग्ने! त्वं मातरिश्वने प्रथमः** मुख्यो भूत्वा वर्तसे । 'अग्निर्वायुरादित्य'(निरु ७-७) इति वाय्वपेक्षया सर्वत्र मुख्यत्वावगमात् । तादृशस्त्वम् **सुक्रतूया** शोभनकर्मेच्छया **विवस्वते** परिचरते यजमानाय **आविर्भव** प्रकटो भव । तव सामर्थ्यं दृष्ट्वा **रोदसी** द्यावापृथिव्यौ **अरेजेताम्** अकम्पेताम् । **होतृवूर्ये** होतृवरणयुक्तं कर्मणि **भारम्** भरणम् **असघ्नो** ऊढवानसि । हे **वसो!** निवासहेतो वह्ने! **महः** पूज्यान् देवान् **अयजः** इष्टवानसि ।। ३ ।।

**सायण–** हे **अग्ने! त्वं मातरिश्वने प्रथमः** मुख्यो भूत्वा वर्तसे । 'अग्निर्वायुरादित्य'(निरु ७-७) इति वाय्वपेक्षया सर्वत्र मुख्यत्वावगमात् । तादृशस्त्वम् **सुक्रतूया** शोभनकर्मेच्छया **विवस्वते** परिचरते यजमानाय **आविर्भव** प्रकटो भव । तव सामर्थ्यं दृष्ट्वा **रोदसी** द्यावापृथिव्यौ **अरेजेताम्** अकम्पेताम् । 'भ्यसते रेजत इति भयवेपनयोः' (निरु.३-२१) इति यास्कः ।

**होतृवूर्ये** होतृवरणयुक्तं कर्मणि **भारम्** भरणम् **असघ्नो** ऊढवानसि । हे **वसो**! निवासहेतो वह्ने! **महः** पूज्यान् देवान् **अयजः** इष्टवानसि ।

मातरिश्वने । निर्माणहेतुत्वात् माता अन्तरिक्षम् । तत्र श्वसिति प्राणितीति मातरिश्वा वायुः । श्वन्नुक्षन्' (उ.सू.१-१५७) इत्यादौ मातरिश्वन्शब्दः कन्प्रत्ययान्तो निपातितः । सुक्रतूया । सुक्रतुमात्मन इच्छति । 'सुप आत्मनः क्यच्' । 'अकृत्सार्वधातुकयोः' (पा.सू.७-४-२५) इति दीर्घः । क्यजन्तस्य धातुसंज्ञायाम् 'अ प्रत्ययात्' (पा.सू.३-३-१०२) इति भावे अकारप्रत्ययः । ततः टाप् । 'सुपां सुलुक्' इति तृतीयैकवचनस्य डादेशः । टिलोपे उदात्तनिवृत्तिस्वरेण तस्य उदात्तत्वम् । संहितायाम् 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः । विवस्वते । विवासतिः परिचरणकर्मा । अस्मात् संपदादिलक्षणः विप् । व्यत्ययेन उपधा-ह्रस्वत्वम् । 'तदस्यास्ति' इति मतुप् । 'मादुपधायाः०' इति मतोः वत्वम् । 'तसौ मत्वर्थे' इति भत्वेन पदत्वाभावात् रुत्वाभावः । मतुपः पित्वादनुदात्तत्वम् । धातुस्वरः शिष्यते । रोदसी । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । होतृवूर्ये । होत्रा व्रियते इति होतृवूर्यो यज्ञः । 'वृञ् वरणे' । बहुलग्रहणात् औणादिकः क्यप् । 'उदोष्ट्यपूर्वस्य' इति उत्वम् । 'हलि च' इति दीर्घः । यद्वा । 'वृञ् वरणे' इत्यस्मात् एतिस्तुशास्वित्यादिना (पा.सू.३-११०९) क्यप् । 'अनित्यमागमशासनम्' इति तुगभावः । 'अकृत्सार्वधातुकयोः' इति दीर्घत्वे पूर्ववत् उत्वदीर्घौ । प्रत्ययस्य पित्वादनुदात्तत्वे धातुस्वरः । कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । असतोः । 'षध हिंसायाम्' । अत्र तु वहनार्थः । 'स्वादिभ्यः भुः' । पादादित्वादनिघातः । अयजः । भारम् इत्यस्य पूर्वपदस्य वाक्यान्तरगतत्वात् तदपेक्षया अस्य निघातो न भवति, 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' (पा.सू.८१-१८-५) इति वचनात् । महः । 'मह पूजायाम्' । 'क्विप् च' इति क्विप् । 'सुपां सुपो भवन्ति' इति शसो ङसादेशः । 'सावेकाचः' इति तस्य उदात्तत्वम् । यद्वा । शसि महच्छब्दस्य अच्छब्दलोपश्छान्दसः । 'बृहन्महतोल्पसंख्यानम्' इति शस उदात्तत्वम् ॥ ३ ॥

**सिद्धाञ्जनम्–** हे **अग्ने**, **त्वं मातरिश्वने** वायवे **प्रथमः** मुख्यः, यजमाने मातरिश्वनी वैभवविलासात् प्राक् कविक्रतोरग्नेः प्राकट्यमवश्यम्, तस्मान्मातरिश्वन प्रथमोऽग्निः । **विवस्वते** परिचर्यां कुर्वते (एवं सायणीयम्) यजमानाय तदनुग्रहार्थं **सुक्रतुया** शोभनकर्मेच्छया युक्तः सन्

**आविर्भव** प्रकाशो भव । अथवा सुक्रतूया शोभनकर्मेच्छया 'विवस्वते' प्रकाशमानाय आविर्भवेति उपपन्नम् । **होतृवूर्ये** होत्रा वरणीये कर्मणि, होतृभूतेन अग्निना वरणीयो यज्ञः तस्मिन् प्रवर्तमाने सति, **रोदसी** द्यौश्च पृथिवी च, ताभ्यां लक्षिता उर्ध्वा दिव्या चितिः अघस्तात् पृथ्वीगता चितिः उभे च **अरेजेतां** अकम्पेताम्, अग्नेर्यज्ञहोतृत्ववरणे तयोः स्तब्धयोर्निद्रितयोरिव स्थितयोः यजमाने विलसितारम्भावद्योतनार्थकं कम्पनं बोध्यम् । तादृङमहिमा होतुरग्नेः । **भारं** यज्ञस्य निर्वाहकार्यभारं **असघ्नोः** सोढवानसि । हे **वसो** विश्वस्य लोकस्य वसुभूत, **महः** महतो देवान् **अयजः** त्वं इष्टवानसि । मातरिश्वने– माता मानहेतुराकाशः अन्तरिक्षं तत्र श्वसिति, श्वन्नुक्षन्नित्यादौ मातरिश्वन्-शब्दः कन्प्रत्ययान्तो निपातितः । **सुक्रतुया** सुक्रतुमात्मन इच्छति, ततो 'भावे अकारप्रत्ययः, टाप्, डादेशः । विवस्वते– विवासतिः प्रकाशने परिचरणकर्मा वा । होतृवूर्ये– होत्रा व्रियत इति, उत्वं छन्दसि । **असघ्नोः**– 'षघ हिंसायां', अत्र सहनार्थः । महः महत इति अल्लोपः छान्दसः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**त्वम॑ग्ने॒ मन॑वे॒ द्याम॑वाशयः पु॒रू॒रव॑से सु॒कृते॑ सु॒कृत्त॑रः । श्वा॒त्रेण॒ यत्पि॒त्रोर्मुच्य॑से॒ पर्या त्वा॒ पूर्व॑मनय॒न्नाप॑रं पुन॑ः ।। ४ ।।**

त्वम् । अ॒ग्ने॒ । मन॑वे । द्याम् । अ॒वा॒श॒यः॒ । पु॒रू॒रव॑से । सु॒ऽकृते॑ । सु॒कृत्ऽत॑रः । श्वा॒त्रेण॑ । यत् । पि॒त्रोः । मुच्य॑से । परि॑ । आ । त्वा॒ । पूर्व॑म् । अ॒न॒य॒न् । आ । अप॑रम् । पुन॒रिति॑ ।। ४ ।।

## ऋग्भाष्यम्

**विशिष्टबोधान्मनवे वायवे त्वं प्रादा दिवं ज्ञानरूपां प्रियां च ।**
**यथा तदीयेति तु वाशनं स्याल्लोकस्य सर्वस्य तथैव देव ।**
**पुरूरवा वायुरेवोरुशब्दादन्यस्मै वा सुकृते सुकृत्तरः ।**
**श्वा वै वायुः श्वसनात्राणतोऽस्य नित्यं मुक्तः प्रकृतेः पूरुषाच्च ।**
**तेनैव त्वामानयन्पूर्वसन्तो नीतं पुनश्चाप्यपरे सुभक्त्या ।। ४ ।।**

ऋग्भाष्यटीका– त्वमग्ने मनवे । विशिष्ट । हे **अग्ने! सुकृत्तरः** अतिशयेन सत्कर्मणां कर्ता त्वं मनवे वायवे । कथम् । विशिष्टबोधात् । 'मनु अवबोधन' इत्यस्य हीदं रूपम् ।

अवबोधश्च सर्वप्राणिसाधारणस्तथापि वैशिष्ट्येन व्यपदेशा भवन्तीति । **द्यां** दिवं स्वर्गम् उपलक्षणमेतत् । स्वर्गादि स्वाम्यं **अवाशयः** प्रादाः । यद्वा ज्ञानरूपां ज्ञानाख्यां द्यां प्रादाः । अथवा द्यां द्युदेवतां भारतीं प्रियां भार्यां प्रादाः । अवाशय इत्येतत्कथं प्रादा इत्यस्य प्रतिपादकमित्यत आह । **यथेति** ।। 'वाशृ शब्दे' इति हि पठ्यते । तस्य णिजन्तस्येदं रूपम् । तत्र स्वतन्त्रकर्तुरपेक्षायां लोकेनेत्यध्याह्रियते । मनव इत्याद्या चतुर्थी षष्ठ्यर्थे । ततश्च द्यां मनोः सम्बन्धिनीं लोकेनावाशयोऽशब्दयः ।

हे देव द्यौः तदीया मनुसम्बन्धिनीति सर्वस्य लोकस्य वाशनं शब्दः यथा स्यात्तथैवाकार्षी-रित्यर्थो भवति । तस्य प्राक् प्रादा इति तात्पर्यमुक्तम् । प्रदानाभावे तथावाशनासम्भवात् । अयथावाशनं तुशब्देन व्यवच्छिनत्ति । तत्रोपपत्तिः सर्वस्येति । पुरूरवस इत्येतत्प्रकृतस्य मनोरेव विशेषणतया व्याख्याति । **पुरूरवा इति** ।। रुशब्द इत्यस्मादसुन् । पुरुः रवो यस्येति पुरूरवाः । दीर्घः सांहितः । सुकृते सत्कर्मणां कर्त्रे इति तस्यैव विशेषणमिति सिद्धमेव । मनवे पुरूरवस इत्येतत्प्रकारान्तरेण व्याख्याति । **अन्यस्मै वा सुकृत इति** ।। अन्यस्मै प्रसिद्धाय । सुकृते मनवे । द्यामवाशयः । तथा प्रसिद्धाय सुकृते पुरूरवसे च । द्यामवाशय इति योज्यम् । किञ्च । यद्यस्मात्त्वं **श्वात्रेण** श्वात्रत्वेन हेतुना । श्वा वायुः । कथम् । प्रसिद्धं हि तस्य श्वरूपमिति वैशब्दः । श्वसनादिति योगं चाह । 'श्वस प्राणने' । अतो डन् । अस्य त्राणत इत्यनेन श्वात्र-शब्दस्य तृतीयायाश्चार्थमाचष्टे । श्वानं त्रायत इति श्वात्रः । आतोऽनुपसर्गे कः । श्वाकर्णादिव-दीर्घः । तद्भावेन । अस्य श्वशब्दार्थस्य वायोः । त्राणतस्त्राणकर्तृत्वात् । **पित्रोः** जगतो माता-पितृभ्याम् । प्रकृतेः पुरुषाच्च **परिमुच्यसे** नित्यमुक्तो वर्तसे । न हि वायो रक्षकस्य प्रकृत्यादिबन्धः सम्भवति । तेनैव कारणेन । **त्वा** त्वाम् । **पूर्वं** पूर्वे सन्तः । **आ** सम्यक् सुभक्त्या । **अनयन्** उपदेशेन शिष्यान्प्रतिनीतवन्तः । पूर्वैर्नीतमुपदिष्टं **पुनरप्यपरम्** अपरे च स्वशिष्यान्प्रत्यानयन् । न हि बद्धं बन्धध्वंसायोपदिशन्तीति ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । सुकृत्तरः, अतिशयेन सत्कर्मणां कर्ता । त्वम् । सुकृते, सत्कर्मणां कर्त्रे । पुरूरवसे, पुरू रवोऽस्येति पुरूरवास्तस्मै, 'रु शब्दे' इत्यतोऽसुन्, पुरुस्पदे 'शम्भू राजते' (सिद्धान्तकौमुदी) इत्यादाविव दीर्घः सांहितः । मनवे, विशिष्टबोधाय, वायवे, मनुतेः उः । द्याम्, दिवम्, स्वर्गम्, उपलक्षणमेतत्– स्वर्गादिस्वाम्यम् । अवाशयः, प्रादाः,

यद्वा– ज्ञानाख्यां द्यां प्रादाः, अथ वा– द्यां द्युदेवतां भारतीं भार्यां प्रादाः यद्यपि 'वाशृ शब्दे, अवाशयः, लोकेनाशब्दयः' इत्यर्थो भवति, तथापि 'द्यौर्मनुशब्दितवायुसम्बन्धिनी' इति सर्वलोकस्य वाशनं शब्दनं यथा स्यात्तथाकार्षीदित्यर्थसम्पत्तेः 'प्रादात्' इति फलितोक्तिः, यद्वा– अन्यस्मै प्रसिद्धाय । सुकृते मनवे द्याम् अवाशयः, तथा– प्रसिद्धाय सुकृते मनवे पुरूरवसे (च) द्याम् अवाशयः । किं च, यत्, यस्मात् । (त्वम्) श्वात्रेण, श्वा वायुः, 'श्वस प्राणने' इत्यतो डनिन्, श्वानं त्रायत इति श्वात्रः, 'आतोऽनुपसर्गे कः' श्वाकर्णादिवद्दीर्घः, तद्भावेन श्वात्रत्वेन हेतुना । पित्रोः, जगतो मातापितृभ्याम्, प्रकृतेः पुरुषाच्च । परि मुच्यसे, नित्यं मुक्तो वर्तसे, नहि वायो रक्षकस्य प्रकृत्यादिबन्धः सम्भवति । आ, तेनैव कारणेन । त्वा, त्वाम् । पूर्वम्, पूर्वे सन्तः । आ, सम्यक्, सुभक्त्या । अनयन्, उपदेशेन शिष्यान्प्रति नीतवन्तः । पूर्वैर्नीतमुपदिष्टम्– पुनः (अपि) अपरम् (च)' अपरे च । स्वशिष्यान्प्रति (आ अनयन्) नहि बद्धं बन्धध्वंसायोपदिशन्ति । इति ॥ ४ ॥

**स्कन्द–** अत्रेतिहासमाचक्षते– 'स्वर्गकामो मनुरग्निमधत्त पुरूरवाश्चैलः । ताभ्यामग्निः स्वर्गमददादिति । तदेतदिहोच्यते । त्वम् हे **अग्ने! मनवे** तृतीयार्थे चतुर्थ्येषा । मनुना राज्ञा **द्याम् अवाशयः** । 'वश कान्तौ' । द्युलोकं कामितवान् । मनुं राजानं दिवं कामयमानं तत्प्रापणेन प्रयुक्तवान् इत्यर्थः । न च केवलेन मनुना । किं तर्हि । **पुरुरवसे सुकृते** इयमपि तृतीयार्थे एव चतुर्थी । पुरूरवसा च सुकृता शोभनानि कर्माणि कृतवता । **सुकृतरः** शोभनकर्मकृत्तरः । **श्वात्रेण यत्** । अत्रापीतिहासमाचक्षते– 'तयोर्ज्वालामाली नामाग्निः प्रथमं मातरिश्वने आविरभवत् । ततो विवस्ते आविर्भूतः । मातरिश्वा विवस्वतः सकाशात् पृथिव्यामानयदिति । वक्ष्यति– 'आ दूतो अग्निम्' (ऋ ६-८-४) इति । तदेतेनाऽर्धर्चेनोच्यते– श्वात्रेण यत् पित्रोरिति । 'श्वात्रमिति क्षिप्रनाम' (या.५-३) । वायोरत्यन्तक्षिप्रत्वात् इह मातरिश्वनि वर्तते । मातरिश्ववचन एव वा सामर्थ्यात् श्वात्रशब्दः । तेन यत् आ **प्रित्रोः मुच्यसे परि** पितरावत्र द्यावापृथिव्यावभिप्रेते । मुच्यस इति लङर्थे लट् । परिशब्द उपरिभावे । द्यावापृथिव्योरुपर्यमुच्यथाः । यद्यपि ज्वालामाली मातरिश्वना पृथिव्या एव केवलाया उपर्यमुच्यत, न दिवः, तथापि साहचर्यादन्यतरसम्बन्धिनो विमोचनाय उभे प्रति व्यपदेशः **आ त्वा पूर्वम् अनयन्** आङत्र मर्यादायाम् । यदिति च यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । ततः प्रभृति मर्यादया त्वां पूर्वमाहवनीयात्मना

नीतवन्तः । के । सामर्थ्याद् यजमानाः । **आ अपरम्** मर्यादयैव अपरं गार्हपत्यात्मना । पुनःशब्दस्त्वङ्गीकृतवीप्सार्थो द्रष्टव्यः । पुनःपुनस्तत्र कर्मणीत्यर्थः । यदा हि विवस्वतः सकाशात् मातरिश्वा पृथिव्यामानयत्, ततः प्रभृति त्वां यजमानाः कर्मसु त्रेधा व्यभजन्निति समस्तार्थः ॥ ४ ॥

**वेङ्कटमाधव– त्वम् अग्ने!** कथमयं मनुरभ्युदयेन युक्तः स्यादिति तस्मै स्वर्गमकामयाः । यथा पुरूरवसे च त्वं शोभनकर्मणः कर्त्रे सुकृत्तमः । क्षिप्रं यदा अरण्योस्त्वम् **परि मुच्यसे** तदानीमेव **पूर्वम् अनयन्** । **पुनः** च अपवृत्ते कर्मणि **अपरम्** च कुर्वन्ति– 'अयम् ते योनिर्ऋत्वियः (ऋ.३-२९-१०) इति ॥ ४ ॥

**मुद्गल–** हे **अग्ने! त्वम् मनवे** मनोरनुग्रहार्थम् **द्याम्** द्युलोकम् **अवाशयः** शब्दितवानसि पुण्यकर्मणि साध्यो द्युलोक इति प्रकटितवानसि । **सुकृते** तव परिचरणं कुर्वते **पुरूरवसे** एतन्नामकस्य राज्ञोऽनुग्रहार्थम् **सुकृत्तरः** अतिशयेन शोभनकारी अभूः । **यत्** यदा **पित्रोः** अरण्योः **श्वात्रेण** क्षिप्रमथनेन **परि मुच्यसे** परितो मुक्तो भवसि । उत्पद्यसे इत्यर्थः । तदानीम् **त्वा** अरण्योरुत्पन्नं त्वाम् **पूर्वम्** वेदेः पूर्वदिशम् **आ अनयन्** आहवनीयत्वेन स्थापितवन्तः । **पुनः** पश्चात् **अपरम्** पश्चिमदेशम् आ अनयन् । गार्हपत्यरूपेण धारितवन्त इत्यर्थः ॥ ४ ॥

**सायण–** हे **अग्ने! त्वम् मनवे** मनोरनुग्रहार्थम् **द्याम्** द्युलोकम् **अवाशयः** शब्दितवानसि पुण्यकर्मणि साध्यो द्युलोक इति प्रकटितवानसि । **सुकृते** तव परिचरणं कुर्वते **पुरूरवसे** एतन्नामकस्य राज्ञोऽनुग्रहार्थम् **सुकृत्तरः** अतिशयेन शोभनफलकार्यभूः । **यत्** यदा **पित्रोः** अरण्योः **श्वात्रेण** क्षिप्रमथनेन **परि मुच्यसे** परितो मुक्तो भवसि । उत्पद्यसे इत्यर्थः । तदानीम् **त्वा** अरण्योरुत्पन्नं त्वाम् **पूर्वम्** वेदेः पूर्वदिशम् **आ अनयन्** आहवनीयत्वेन स्थापितवन्तः । **पुनः** पश्चात् **अपरम्** पश्चिमदेशम् आ अनयन् । गार्हपत्यरूपेण धारितवन्त इत्यर्थः ।

अवाशयः। 'वाशृ शब्दे' । पुरूरवसे । पुरु रौतीति पुरूरवाः । 'रु शब्दे' । अस्मात् औणादिके असुनि 'पुरसि च पुरूरवाः' (उ.सू.४-६७१) इति पूर्वपदस्य दीर्घो निपात्यते । सुकृते । 'सुकर्मपापमन्त्रपुण्येषु कृञः' (पा.सू.३-२-८९) इति क्विप् । ततः तुक् । पित्रोः । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । मुच्यसे । अदुपदेशात् लसार्वधातुकानुदात्तत्वम् ।

यद्यपि 'सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वचनात् विकरणस्वरः सतिशिष्टोऽपि लसार्वधातुकस्वरस्य बाधको न भवति तथापि धातुस्वरं बाधते एव, 'धातुस्वरं श्नास्वरः' इत्युक्तत्वात् । अतो यक एव स्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् ॥ ४ ॥

**सिद्धाञ्जनम्–** हे **अग्ने! त्वं मनवे** मनोः मन्तुः मननसामर्थ्यं प्राप्तवतः पुरुषस्य अनुग्रहाय इत्यर्थः । **द्याम्** द्युलोकं दिव्यं धामेत्यर्थः, **अवाशयः** शब्दितवानसि प्रकटितवान्, साध्यं प्राप्तव्यं चोर्ध्वं दिव्यं स्थानमिति प्रकाशितवानसीत्यर्थः । तथा **सुकृते** शोभनकर्मकारिणे **पुरूरवसे** पुरु बहु रौति शब्दायत इति पुरूरवास्तस्मै उच्चैर्धामाधिगन्तुं बह्वाक्रन्दनकारिणे यजमानात्मने पुरुषाय **सुकृत्तरः** अतिशयेन शोभनकर्मकारी भूत्वा त्वं द्यां अवाशय इति सम्बन्धः । **यत्** यदा **पित्रोः** अरणिलक्षितयोः द्यावापृथिव्योः चिद्विशेषभूतयोरूर्ध्वाधःस्थानयोः शक्तयोः **श्वात्रेण** क्षिप्रमथनेन **परि मुच्यसे** परितो मुक्तो भवसि, शक्तिमथनाज्जायसे, तदा तथोत्पन्नं **त्वा पूर्वं** पुरस्तात् **आनयन्** आनीयाग्रतः अस्थापयन् । **पुनः** ततः परं **अपरं** पश्चात् आ आनयन्, प्रथमं पुरोहितं आहवनीयं विधाय ततः प्रत्यक्स्थितं अन्तरधीश्वरं गृहपतिं अकुर्वन्नित्यर्थः । अवाशयः– 'वाशृ शब्दे' । पुरूरवसे- पूर्वपदस्य दीर्घो निपात्यते, रु शब्दे इत्यस्मादौणादिकोऽसुन् । सुकृते- सुकर्मपापादिषु कृञ्क्त इति क्विप्, ततस्तुक् ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः । य आहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवाससि ॥ ५, ३२ ॥**

त्वम् । अग्ने । वृषभः । पुष्टिऽवर्धनः । उद्यतऽस्रुचे । भवसि । श्रवाय्यः । यः । आऽहुतिम् । परि । वेद । वषट्ऽकृतिम् । एकऽआयुः । अग्रे । विशः । आऽविवाससि ॥ ५, ३२ ॥

## ऋग्भाष्यम्

**श्रोतव्यस्त्वं यजमानेन नित्यं नित्यायुरग्रे जनताप्रविष्टः ।**
**ऐश्वर्याद्याः षड्गुणा नित्य(यत्र)वृत्ता वषट्कारस्यार्थ इत्याह वेदः ॥ ५,३२**

**ऋग्भाष्यटीका–** **त्वमग्ने वृषभः** । श्रोतव्यः । हे **अग्ने! त्वं वृषभो** वर्षणस्य कर्ता भक्तानां **पुष्टिवर्धनः** । एकं मुख्यं आयुरस्येति **एकायुः** नित्यायुः होमायोद्यतास्रुग्येनासावुद्यतस्रुक् ।

तस्मा **उद्यतस्रुचे** । तृतीयार्थे चतुर्थी । यजमानेन **श्रवाय्यो** नित्यं श्रोतव्यश्च **भवसि** । कथंभूतेन । यो यजमानः आहूयत इत्याहुतिः । **आहुतिं नषट्कृतिं** त्वां **परिवेद** सम्यग्वेद । किञ्च । **अग्ने**ऽनादित एव । **विशः** प्रजाः । **आ विवाससि** समन्ताद्विशेषेण वससि । उपान्वध्याङ्वस इत्यधिकरणस्य कर्मसंज्ञा । जनता प्रविष्टो वर्तसे । यद्यप्ययमर्चतिकर्मसु पठितः तथाप्यसम्भवादन्यथा व्याख्यातः । कथमीश्वरो वषट् कृतिरित्यत आह । **ऐश्वर्याद्या इति** ।। ऐश्वर्यवीर्ययशः श्रीज्ञानवैराग्याणि यत्र स इत्यध्याहार्यम् । वर्तन्ते षट् यस्मिन्नसौ वषट् । वषडित्याक्रियत इति वषट्कृतिः । स एव वषट्कारः । वषट्कारस्य वषट्कारशब्दस्य । इत्याह वेद इत्युक्तार्थे वेदवाक्यान्तरसंमतिरुच्यते ।। ५,३२ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने त्वम् । वृषभः, वर्षणस्य कर्ता । भक्तानाम्– पुष्टिवर्धनः । एकं मुख्यमायुर्यस्येति एकायुः । होमायोद्यता स्रुग्येनासावुद्यतस्रुक्तस्मै उद्यतस्रुचे, तृतीयार्थे चतुर्थी, यजमानेन । श्रवाय्यः, नित्यं श्रोतव्यः । (च) भवसि । कथम्भूतेन ? यः, यजमानः । आहूयत इति आहुतिम्, आहूयमानम् । वषट्कृतिम्, वर्तन्ते षट् समग्रैश्वर्यादयो गुणा यस्मिन्नसौ वषट् 'वषट्' इति क्रियत आक्रियत इति वषट्कृतिस्तम्, वृतः डः कृञः कर्मणि क्तिन् (त्वाम्) परि वेद, सम्यग्वेद । किं च, अग्ने, अनादित एव । विशः, प्रजाः । आविवाससि, समन्ताद्विशेषेण वससि, 'उपान्वध्याङ्वसः, इत्यधिकरणस्य कर्मसंज्ञा, जनताप्रविष्टो वर्तसे, यद्यपि 'वस अर्चायाम्' इति धातुपाठस्तथाप्यनेकार्थत्वादिह प्रवेशार्थो ज्ञेयः ।। ५ ।।

**स्कन्द– त्वम्** हे **अग्ने! वृषभः** कामानां वर्षिता । दातेत्यर्थः । हविर्नयनद्वारेण वा वृष्टेरेव कर्ता । **पुष्टिवर्धनः** वर्धयिता पुष्टेः । **उद्यतस्रुचे भवसि** यागार्थं नित्यमुद्यता स्रुग् यस्य स उद्यतस्रुक् । षष्ठ्यर्थे चात्र चतुर्थी । यष्टुः कामानां वृष्टेर्वा वर्षिता पुष्टेश्च वर्धयिता भवसीत्यर्थः । **श्रवाय्यः** श्रवणीयः अत्यन्तोत्कृष्टगुणः । कीदृश उद्यतस्रुक् । उच्यते– **यः आहुतिम् वषट्कृतिम्** वषट्कारं च **परि वद** । कर्मविधिज्ञ इत्यर्थः । **एकायुः** इत्यादि । अत्रेतिहासः– 'और्वशेय आयुर्गन्धर्वलोकादग्निमाहृत्याधत्त । सोऽस्य प्रथमः देवविशः पर्यचरत् । ततोऽन्येषामिति । तदेतदुच्यते– एक आयुः प्रथममाहर्ता यस्येत्येकायुस्त्वम् **अग्ने** प्रथमं देवविशः **आविवाससि** पर्यचर इत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** **त्वम् अग्ने!** कामानां वर्षिता पुष्टेर्वर्धकः यजमानाय **भवसि** श्रवणीयः । यः अग्निः स्वाहाकारहुतं वषट्कारहुतं च परितः लभते मनुष्येभ्य इति परोक्षः । स त्वमग्ने! **एकायुः** अविच्छिन्नायुरमृतः अग्रे स्थित्वा मनुष्यान् परिचरसि । यद्वा बहूनां प्रकाशं कुर्वाण एकगमनस्त्वं परिचरसीति ।। ५ ।।

**मुद्गल–** हे **अग्ने! त्वम् वृषभः** कामानां वर्षिता **पुष्टिवर्धनः** यजमानस्य धनादिपोषाभिवृद्धिहेतुः **उद्यतस्रुचे** उद्धतया स्रुचा युक्ताय यजमानाय तदनुग्रहार्थम् **श्रवाय्यः** मन्त्रैः श्रवणीयो भवसि । **यः** यजमानः **वषट्कृतिम्** वषट्कारयुक्ताम् **आहुतिम् परि वेद** परितो जानाति । समर्पयतीत्यर्थः । **एकायुः** मुख्यायुस्त्वम् **अग्रे** प्रथमं तं यजमानम् **विशः** तदनुकूलाः प्रजाः **आविवाससि** सर्वतः प्रकाशयसि ।। ५ ।।

**सायण–** हे **अग्ने! त्वम् वृषभः** कामानां वर्षिता **पुष्टिवर्धनः** यजमानस्य धनादिपोषाभिवृद्धिहेतुः **उद्यतस्रुचे** उद्धतया स्रुचा युक्ताय यजमानाय तदनुग्रहार्थम् **श्रवाय्यः** मन्त्रैः श्रवणीयो भवसि । **यः** यजमानः **वषट्कृतिम्** वषट्कारयुक्ताम् **आहुतिम् परि वेद** परितो जानाति । समर्पयतीत्यर्थः । **एकायुः** मुख्यायुस्त्वम् **अग्रे** प्रथमं तं यजमानम् **विशः** तदनुकूलाः प्रजाः **आविवाससि** सर्वतः प्रकाशयसि ।।

पुष्टिवर्धनः । 'वृधु वृद्धौ' । अस्मात् णिजन्तात् नन्द्यादित्वात् ल्युः । लित्स्वरेणोत्तरपदस्याद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । उद्यतस्रुचे । 'यम उपरमे' । अस्मात् उत्पूर्वात् 'निष्ठा' इति क्तप्रत्यये 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । उद्यता स्रुक् येनेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वेद । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् ।। ५,३२ ।।

**सिद्धाञ्जनम्–** हे **अग्ने! त्वं वृषभः** वर्षिता अभीष्टानाम्, **पुष्टिवर्धनः** पुष्टेः यजमानपोषस्य वर्धनो वर्धयिता **उद्यतस्रुचे** उद्यता उद्धता स्रुक् घृतस्राविणौ पात्री येन तस्मै धीगतदीप्तिस्रवोपकरणसम्पन्नाय यजमानाय तदनुग्रहायेत्यर्थः, **श्रवाय्यः** श्रवणीयः मन्त्रात्मकैराह्वानैरिति शेषः **भवसि** । **यः** यो यजमानः **आहुतिं** प्रधानाह्वानार्थां होमक्रियां **परि** परितः सर्वतः **वेद** जानाति, कीदृशीमाहुतिम् ? **वषट्कृतिं** वषट् इति कृतिः करणं यस्यां तां, देवेभ्यः सम्प्रदाने वषट्कारस्य

वैशिष्ट्यं श्रौतकर्मसु प्रसिद्धम्, तदनुरोधेन अन्तर्यजनेऽपि होतुः आह्वानात्परं देवेभ्यः सम्प्रदाने प्रवर्तमाने वीर्यवान् दार्ढ्यप्रदो वषट्कारशब्दो ज्ञेयः । य ईदृशीं वषट्कारयुक्तामाहुतिं निवर्तयितुं सर्वथा जानाति तं प्रथमं भगवानग्निः प्रकाशवन्तं करोति, अनन्तरं तेन द्वारा इतरानपीत्याह । अत्र यच्छब्दश्रवणात् 'तम्' इति तच्छब्दाध्याहारः । **एकायुः** एकः अद्वितीयः आयुः जीवनभूतः पुरुषः सर्वेषां मनुष्याणां समष्टिभूत एको मनुष्यस्त्वं हे अग्ने, **अग्रे** प्रथमं तं **आविवाससि** प्रकाशयसि, ततः **विशः** अन्यान् मनुष्यान् आविवाससीति योजना । अत्र तृतीयपादस्थो यच्छब्दः अग्निपरतया ग्रहीतुं शक्यः । तर्हि अयमर्थः । योऽग्निः वषट्कारयुक्तामाहुतिं **परि वेद** परितो मनुष्येभ्यो लभते, स त्वमग्ने एकायुः इत्यादि पूर्ववत् । एकायुः– द्वितीयर्चि 'कतिधा चिदायवे' इति पठितमिहावधार्यम् । बहुधा जीवन्नग्निरेकायुरुक्तः । एकायुर्मुख्यान्न इति सायणीयम् । अविच्छिन्नायुरमृत इति वेङ्कटमाधवः । वायुरेव आयुः वकारलोपश्छान्दस इति सायणीयो विकल्पः । गत्यर्थात् इण् धातोः गुणे उण्-प्रत्ययः । आयुशब्दः प्राणिसामान्ये विशेषतो मनुष्ये प्रसिद्धो वेदे, आयुशाब्दस्तु क्लीबलिङ्गः जीविते रूढः, एतेर्गत्यर्थादिव निष्पन्नः । आविवासति प्रकाशार्थे प्रयुक्तः प्रायशो वेदे । परिचरतिकर्मेति पठितः क्वचिदुपपद्येत ।। ५ ।।

**।। इति प्रथमाष्टके द्वितीयाध्याये द्वात्रिंशो वर्गः ।।**

## ।। अथ त्रयोविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**त्वमग्ने वृजिनवर्तनिं नरं सक्मन्पिपर्षि विदथे विचर्षणे ।**
**यः शूरसाता परितक्म्ये धने दभ्रेभिश्चित्समृता हंसि भूयसः ।। ६ ।।**

त्वम् । अग्ने । वृजिनऽवर्तनिम् । नरम् । सक्मन् । पिपर्षि । विदथे । विऽचर्षणे ।। यः । शूरऽसाता । परिऽतक्म्ये । धने । दभ्रेभिः । चित् । समऽऋता । हंसि । भूयसः ।। ६ ।।

## ऋग्भाष्यम्

**सद्विद्याख्ये विदथे सम्प्रजाते पापाचारं पुरुषं वा पिपर्षि ।**
**सक्मन् गृहे स्वे विविधप्रजेशो विचर्षणिः शूरसातौ च युद्धे ।**

**सातिर्लाभे यत्परितक्म्येऽधिगम्ये दभ्रा अपि त्वां शरणं यदि स्म ।**
**ऋता गतास्तत्र हि भूयसोऽपि तैर्हंसि शक्त्या सङ्घचया वाऽप्रयत्नात् ।।६।।**

**ऋग्भाष्यटीका– त्वमग्ने वृजिन** । सद्विद्या । विविधप्रजेशो विचर्षणिः । विविधाः नानाप्रकाराः देवाद्याश्चर्षणयः प्रजा अस्येति तस्य सम्बुद्धिः । हे **विचर्षणेऽग्ने** । **त्वं वृजिनवर्तनिं** वृजिनं पापं वर्तनिर्वर्तनं मार्गो वा यस्य तम् । पापाचारम् । चित् वा । पापाचारमपि नरं पुरुषम् । **सक्मन्** दकारस्य ककारः । सद्मन् सद्मनि स्वे गृहे तदीये गृहे त्वदीये वा स्वर्गे वैकुण्ठादौ । **पिपर्षि** 'पृ पालनपूरणयोः' पालयसि पूरयसि च । कथम् । **विदथे** विदथ इति यज्ञनाम । सद्विद्याख्ये विदथे यज्ञे सम्प्रजाते तेनानुष्ठिते सतीति शेषः । अथवा वेत्तेर्भावेऽथक् प्रत्यये कृते सद्विद्यैव विदथशब्दा इत्यनेनाचष्टे । कथंभूतोऽग्निः । यस्त्वं **शूरसाता** शूरसातौ युद्धे । कथम् । तन्नामसु पाठात् । निरुक्तिं च सूचयति । यद्यस्मात्सातिः सातिशब्दो लाभे वर्तते । अतः शूरसातिर्युद्धम् । तद्धि शूराणां लाभः । चशब्दो धर्मान्तरसमुच्चये । **धने परितक्म्ये**ऽधिगम्ये । गतिकर्मसु पाठात् । निमित्तसप्तम्येषा । अधिगन्तव्यधननिमित्ते सङ्ग्राम इति यावत् । सं सम्यक् । ऋताः गताः यदि दभ्राः अल्पा अपि योद्धारस्त्वां शरणं गताः । तत्र तर्हि तैः शक्त्या सङ्घचया वा । **दभ्रेभिश्चित्** अल्पैरपि । शक्त्या सङ्घचया **भूयसो**ऽपि प्रतिभटान् । अप्रयत्नादनायासेन । **हंसि** । हि स्मेति सुप्रसिद्धमेतदिति । सपिपर्षीति सम्बन्धः ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (हे) विश्वचर्षणे, विविधा नानाप्रकारा देवाद्याश्चर्षणयः प्रजा यस्येति तस्य सम्बुद्धिः । (हे) अग्ने त्वम् । वृजिनवर्तनिम्, वृजिनं पापं वर्तनिर्वर्तनं मार्गो यस्य तं पापाचारम् । (अपि) नरम्, पुरुषम् । सक्मन्, दकारस्य ककारः, सद्मन्, सद्मनि, तदीये, गृहे, त्वदीये गृहे वा, स्वर्गे वैकुण्ठादौ । पिपर्षि, 'पृ (पॄ) पालनपूरणयोः, पालयसि पूरयसि च । कथम् ? विदथे, 'विदथः' इति यज्ञनाम (वै०नि०३।१७) सद्विद्याख्ये यज्ञे । (तेनानुष्ठिते सति) इति शेषः, यद्वा– वेत्तेः भावेऽथङ् । यः, त्वम् । शूरसाता, शूरसातौ, शूराणां लाभरूपे युद्धे । परितक्म्ये, 'तक गतौ' म्यप्रत्ययः, अधि गन्तव्ये । धने, धननिमित्तम् । यदि (दभ्राः) अल्पा अपि योद्धारः । त्वाम् (समृता, समृताः) तं सम्यगृताः शरणं गताः । तर्हि तैः शक्त्या सङ्घचया (वा दभ्रेभिः चित्, अल्पैरपि । शक्त्या सङ्घचया) च भूयसः (अपि प्रतिभटान् । अप्रयत्नतः) अनायासेन । हंसि इति । (सः) 'पिपर्षि' इति सम्बन्धः ।। ६ ।।

**स्कन्द–** **त्वम्** हे **अग्ने! वृजिनवर्तनिम् नरम्** कुटिलवर्तनिम् । वर्तनिर्मार्गः । कुटिलमार्गम् । अन्यासु चेष्टासु सम्यक्चेष्टितमित्यर्थः । नरम् मनुष्यम् । हे **सक्मन्!** वच सेवायाम् । सेव्य! सेवितः! वा देवानाम् **पिपर्षि** पालयसि । क । **विदथे** यज्ञे । हे **विचर्षणे** विश्वद्रष्टः! । यः त्वं कीदृक् । उच्यते । **यः शूरसाता** सङ्ग्रामनामैतत् (निघ.२-१७) । सङ्ग्रामे । **परितक्म्ये घने** 'तकति, दीयति' (निघ.२-१४) इति तकिर्गतिकर्मा । 'निमित्तात् कर्मसंयोगे' (पा.सू.२-३-३६) इत्येवं चैषा सप्तमी, 'कर्मणि द्वीपिनं हन्ति' इति यथा । परिगन्तव्ये घने निमित्ते सङ्ग्रामे । यत् प्राप्तव्यं धनं तदर्थमित्यर्थः । **दभ्रेभिः चित् समृता** दभ्रशब्दोऽल्पनाम (निघ.३-२) । समृतिः सङ्गतिः । अल्पैरपि शत्रुभिः सङ्गतौ भयादसङ्गतान् दूरस्थानप्यन्यान् गत्वागत्वा **हंसि भूयसः** शत्रून् । देवतामाहात्म्यान्मध्यमकर्मणैषाऽग्नेः स्तुतिः । मध्यम एवात्राग्निः ॥ ६ ॥

**वेङ्कटमाधव–** **त्वम् अग्ने!** युद्धेऽशोभनमार्गम् **नरम्** पारयसि गृहे च विद्रष्टः! । **यः** त्वं युद्धे परिगन्तव्ये सति **धने** क्षुद्रैः अपि सङ्गतान् महतोऽपि स्तोतुः शत्रून् **हंसि** ॥ ६ ॥

**मुद्गल–** हे **विचर्षणे!** विशिष्टज्ञानयुक्त! **अग्ने! त्वम् वृजिनवर्तनिम्** विप्लुतमार्गं सदाचाररहितम् **नरम्** पुरुषम् **सक्मन्** सचनीये समवेतुं योग्ये **विदथे** कर्मणि **पिपर्षि** पालयसि । सत्कर्मानुष्ठानं करोषीत्यर्थः । **यः** त्वम् **परितक्म्ये** परितो गन्तव्ये **घने** घनवच्छूराणां प्रियतमे **शूरसाता** शूरैः सम्भजनीये युद्धे **दभ्रेभिश्चित्** अल्पैरपि शौर्यरहितैः पुरुषैः **समृता** सम्यग्योद्धुं प्राप्ते सति तदनुग्रहार्थम् **भूयसः** प्रौढान् शत्रून् **हंसि** मारयसि । ईदृशस्तव महिमेत्यर्थः ॥ ६ ॥

**सायण–** हे **विचर्षणे!** विशिष्टज्ञानयुक्त! **अग्ने! त्वम् वृजिनवर्तनिम्** विप्लुतमार्गं सदाचाररहितम् **नरम्** पुरुषम् **सक्मन्** सचनीये समवेतुं योग्ये **विदथे** कर्मणि **पिपर्षि** पालयसि । सत्कर्मानुष्ठानं करोषीत्यर्थः । **यः** त्वम् **परितक्म्ये** परितो गन्तव्ये **घने** घनवच्छूराणां प्रियतमे **शूरसाता** शूरैः सम्भजनीये युद्धे **दभ्रेभिश्चित्** अल्पैरपि शौर्यरहितैः पुरुषैः 'दभ्रमर्भकमित्यल्पस्य' (निरु.३-२०) इति यास्कः । **समृता** सम्यग्योद्धुं प्राप्ते सति तदनुग्रहार्थम् **भूयसः** प्रौढान् शत्रून् **हंसि** मारयसि । ईदृशस्तव महिमेत्यर्थः ।

वृजिनवर्तनिम् । वृजिना वर्तनिर्यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । सक्मन् । 'षच समवाये'। अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । 'नेड्वशि कृति' इति इट्प्रतिषेधः । न्यङ्क्वादित्वात् (पा.सू.७-३-५३) कुत्वम् । 'सुपां सुलुक्' इति सप्तम्या लुक् । पिपर्षि। 'पृ पालनपूरणयोः' । सिपि श्लौ द्विर्भावहस्वोरदत्वहलादिशेषाः । 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् । शूरसाता । 'शु गतौ' । 'शुसिचिमीनां दीर्घश्च' (उ.सू.२-१८३) इति शूरशब्दो रन्प्रत्ययान्त आद्युदात्तः । 'वन षण संभक्तौ' इत्यस्मात् क्तिनन्तः सातिशब्दः । 'जनसनखनां सञ्झलोः' इति आत्वम् । शूराणां सातिः संभजनमत्रेति बहुव्रीहौ पूर्वपदप्रकृति-स्वरत्वम् । 'सुपां सुलुक्' इति सप्तम्या डादेशः । परितक्म्ये । 'तक हसने' । अस्मात् औणादिको भावे मक् । तदर्हतीति 'छन्दसि च' (पा.सू.५-१-६७ ) इति यः । 'प्रादयो गताद्यर्थे प्रथमया' (पा.म.२-२-१८.४) इति समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । दभ्रेभिः । 'दम्भु दम्भे'। 'स्फायितञ्चि' इत्यादिना रक् । 'बहुलं छन्दसि' इति भिस ऐसादेशाभावः । समृता । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । पूर्ववत् आकारः । हंसि । हन्तेः सिपि 'नश्चपदान्तस्य झलि' (पा.सू.८-३-२४) इति अनुस्वारः । यद्वृत्तयोगादनिघातः । भूयसः । 'बहोर्लोपो भू च बहोः' (पा.सू.६-४-१५८) इति बहुशब्दात् उत्तरस्य ईयसुनः ईकारलोपो बहोः भूभावश्च । नित्त्वादाद्युदात्तत्वम् ।। ६ ।।

**सिद्धाञ्जनम्–** हे **विचर्षणे** विशिष्टदृष्टे, सर्वद्रष्टः! **अग्ने, त्वं वृजिनवर्तनि** वृजिना वर्जनीया कुटिला वर्तनिः पद्या यस्य तं कुटिलमार्गचरं (वृजेः किच्चेति इनच्, वृतेश्चेति अनिः) **नरं** पुरुषं **सक्मन्** सक्मनि सचनीये समवेतुं योग्ये (षच समवाये, मनिन् प्रत्ययः) **विदथे** ज्ञानगम्ये स्थाने 'विदथा वेदितव्यानि स्थानानि' इति सायणोऽन्यत्र (६-५१-२) (कर्मणि, यज्ञ इति कर्मठाः । अन्तर्यागोऽपि वेदनात्मको विदथ उच्यते । विदेर्ज्ञानार्थाद्, अथ-प्रत्ययः) । **पिपर्षि** पूरयसि पालयसि वा, त्वद्भक्तं कुटिलपदादपवर्त्य विदथशब्दवाच्यं वेदितव्यं दिव्यं स्थानं सदः नीत्वा पालयसि तं पूर्णकामं करोषीत्यर्थः । **यः** त्वं **शूरसाता** शूरसाती शूराणां सातिः सम्भजनं यत्र तत्र शूरपुरुषैः सेव्ये, **परितक्म्ये** सर्वतः गन्तव्ये परितः प्रयासेन चरित्वा प्राप्तव्ये (तकतिर्गतिकर्मा) **धने** निमित्ते, शोर्योपेतैः परिश्रमलभ्ये दिव्ये धने लब्धव्यतया निमित्तभूते सति 'चर्मणि द्वीपिनं हन्ति' इतिवत् **दभ्रेभिश्चित्** अल्पैरपि बलेन सङ्ख्यया वा न्यूनैरपि त्वद्भक्तैः

**समृता** समृतौ सङ्गतौ, सङ्ख्यबलाधिकः सह अल्पानां बलपरीक्षायां प्राप्तायामित्यर्थः (समृतिः सम्पूर्वक ऋतिर्गतिः)। **भूयसः** सङ्ख्याबलाधिकान् हंसि मारयसि, तावाननुग्रहस्तव भक्तेषु यावता स्वल्पबलैरपि त्वद्भक्तैर्लब्धव्ये दिव्यधने तद्विघातिभिः सह युद्ध्वा जेतव्ये, भूयांसोऽपि त्वद्भक्तवैरिणः पराभूता भवन्ति ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**त्वं तमग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे दिवेदिवे ॥ यस्तातृषाण उभयाय जन्मने मयः कृणोषि प्रय आ च सूरये ॥ ७ ॥**

त्वम् । तम् । अग्ने । अमृतऽत्वे । उत्ऽतमे । मर्तम् । दधासि । श्रवसे । दिवेऽदिवे । यः । ततृषाणः । उभयाय । जन्मने । मयः । कृणोषि । प्रयः । आ । च । सूरये ॥ ७ ॥

## ऋग्भाष्यम्

**दिने दिने तत्स्तुतिं श्रोतुकामस्तव स्तोतारममृतत्वे दधासि ।**
**प्रीत्याधिक्यात्ततृषाणो मनुष्यदेवोभयेषां सुखमातनोषि ।**
**आ समंताज्ज्ञानिने तत्र नित्यं प्रियं मोक्षाख्यं ततृषाणो विशेषात् ॥७॥**

**ऋग्भाष्यटीका–** **त्वन्तम्** । दिने दिने । हे **अग्ने** त्वं तम् । श्रवस इति वक्ष्यमाणत्वा-द्योग्यतया तव स्तोतारम् । **मर्तं** मर्त्यम् । **उत्तमे** मुख्ये **अमृतत्वे दधासि** मुक्तं करोषि । किमर्थम् । **दिवे दिवे** दिने दिने सदा । **श्रवसे** श्रवणाय । तत्कृतस्तुतेरिति शेषः । तत्स्तुतिं श्रोतुकाम इति यावत् । मुक्तौ हि सदा समीपस्थं स्तौति । कथं भूतः । यस्त्वं प्रीत्याधिक्यात्ता-तृषाणस्ततृषाणस्तृष्णातिशयवान् । **उभयाय जन्मने** द्विविधाय जन्मवते । मनुष्या देवाश्चे-त्युभयेषाम् । न तु दैत्यानामिति यावत् । मयः सुखं स्वर्गाख्यं **कृणोषि** करोषि आतनोषि । तत्र तेष्वपि मानुषादिषु **सूरये च** ज्ञानिने तु । **आ** समन्तात् नित्यमिति यावत् । **प्रयः** प्रियं मोक्षाख्यं सुखं कृणोषि । आ इत्येतत् प्रय इत्यनेन सम्बध्यत इत्युक्तम् । यद्वा ततृषाण इत्येतदनुवर्त्य तेन सम्बन्धनीयमित्याह ॥ **ततृषाण इति** ॥ सूरये तु आविशेषात्ततृषाणो मयः कृणोषि सन्दधासीति सम्बन्धः ॥ ७ ॥

**मन्त्रार्थमञ्जरी–** (हे) अग्ने त्वम् । तम्, स्तोतारम् । मर्तम्, मर्त्यम् । उत्तमे, मुख्ये ।

अमृतत्वे दधासि, मुक्तं करोषि । किमर्थम् ? दिवेदिवे, दिनेदिने, सदा । श्रवसे । श्रवणाय । (तत्कृतस्तुतेः) इति शेषः, तत्स्तुतिं श्रोतुकाम इति यावत्, मुक्तो हि सदा त्वत्समीपस्थः स्तौति । कथम्भूतः ? यः, त्वम् प्रीत्याधिक्यात्– ततृषाणः, तृष्णातिशयवान् । उभयाय जन्मने, द्विविधजन्मवते, 'मनुष्या देवाश्च' इत्युभयेषाम् । मयः, सुखम्, स्वर्गाख्यम् । कृणोषि, आतनोषि (यः) च, त्वम् । विशेषात् (ततृषाणः), तृष्णातिशयवान् । आ, समन्तात् । सूरये, ज्ञानिने, प्रयः, प्रियम्, मोक्षाख्यम् । (कृणोषि) । (सः) दधासि इति सम्बन्धः ।। ७ ।।

**स्कन्द–** यस्तातृषाण इति श्रुतस्य यच्छब्दस्याग्निनिर्देशार्थत्वात् त्वं समानाधिकरणतच्छब्द-श्रुतेश्च तद्विषयो योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यः त्वां परिचरति **तम् त्वम् हे अग्ने! अमृतत्वे उत्तमे** देवत्वे उत्कृष्टे **मर्तम्** मनुष्यम् **दधासि** स्थापयसि । न चामृतत्व एव । किं तर्हि । **श्रवसे** 'श्रवः' (निघ.२-७) इत्यन्ननाम वा । कीर्तिपर्यायो वा । सप्तम्यर्थे चतुर्थी । अग्नादीनां चान्यतमे । न च कदाचित् । किं तर्हि । **दिवे दिवे** अहन्यहनि । सार्वकालमित्यर्थः । यस्त्वां परिचरति, तं देव! त्वं परलोके प्रापयसि देवत्वम्, इह लोकेऽपि सार्वकाल-मन्नादीनामन्यतममित्यर्थः । अथवा श्रव इति कीर्तिपर्यायः । स्वार्थ एव च तादर्थ्ये चतुर्थी । यस्त्वां परिचरति तं देवत्वं प्रापयसीत्यर्थः । किमर्थम् । श्रवसे दिवेदिवे । तस्यैवात्मनो वा कीर्त्त्यै सार्वकालमिति । यः कीदृशः । उच्यते– **तातृषाणः** स्तुतिहविस्तृष्णया बाध्यमानः । **उभयाय जन्मने** सप्तम्यर्थे चतुर्थ्येषा । उभयस्मिन् जन्मनि । इह च परत्र च । **मयः कृणोषि** 'मयः' (निघ.३-६) इति सुखनाम । करोतिरपि सूरय इति सम्प्रदानचतुर्थीश्रुतेर्दानार्थः । सुखं ददासि । **प्रयः आ च** प्रय इत्यपठितमप्यन्ननाम । आङ् मर्यादायाम् प्रयःशब्दात् परो द्रष्टव्यः । अन्नं च मर्यादया । कस्मै **सूरये** स्तोत्रम् ।। ७ ।।

**वेङ्कटमाधव– त्वम् तम् अग्ने! अमृतत्वे** उत्कृष्टे मनुष्यं निदधासि **दिवेदिवे** अन्नाय । **यः** त्वम् सूरेः स्तोतुः उभयविधाय **जन्मने** तृष्यन्नुभयं करोषि । सुखं च अस्य भूयात् अन्नं चास्त्वित्युभयोरुपत्तिमिच्छन्नुभयं करोषीति ।। ७ ।।

**मुद्गल–** हे **अग्ने! त्वम् तम् मर्तम्** तथाविधं त्वत्सेविनं मनुष्यम् **दिवेदिवे** प्रतिदिनम् **श्रवमे** अन्नार्थम् **उत्तमे अमृतत्वे** उत्कृष्टे मरणरहिते पदे **दधासि, यः** यजमानः **उभयाय जन्मने** द्विविधजन्मार्थम् । द्विपदां चतुष्पदां च लाभायेत्यर्थः । **ततृषाणाः** अतिशयेन तृष्णायुक्तो भवति।

तस्मै **सूरये** अभिज्ञाय यजमानाय **मयः** सुखम् **प्रयः च** अन्नमपि **आ कृणोषि** सर्वतः करोषि ॥ ७ ॥

**सायण–** हे **अग्ने! त्वम् तम् मर्तम्** तथाविधं त्वत्सेविनं मनुष्यम् **दिवेदिवे** प्रतिदिनम् **श्रवमे** अन्नार्थम् **उत्तमे अमृतत्वे** उत्कृष्टे मरणरहिते पदे **दधासि, यः** यजमानः **उभयाय जन्मने** द्विविधजन्मार्थम् । द्विपदां चतुष्पदां च लाभायेत्यर्थः । **ततृषाणाः** अतिशयेन तृष्णायुक्तो भवति । तस्मै **सूरये** अभिज्ञाय यजमानाय **मयः** सुखम् 'यद्वै सुखं तन्मयः' इति श्रुत्यन्तरात् । **प्रयः च** अन्नमपि **आ कृणोषि** सर्वतः करोषि ।

ततृषाणः । 'ञि तृषा पिपासायाम्' । लिटः कानच् । चित्त्वादन्तोदात्तत्वम् । संहितायां दीर्घश्छान्दसः । कृणोषि । 'कृवि हिंसाकरणयोश्च । 'धिन्विकृण्व्योर च' इति उप्रत्ययः । 'चादिलोपे विभाषा' इति निघातप्रतिषेधः ॥ ७ ॥

**सिद्धाञ्जनम्–** हे **अग्ने**, त्वं तं तथाविधं त्वद्भक्तं **मर्तं** मनुष्यं **उत्तमे** उत्कृष्टे **अमृतत्वे** अमृतधर्मे **दधासि** धारयसि मरणशीलं नरं मरणरहिते उत्तमे पदे स्थापयसीत्यर्थः । किमर्थम्? दिवेदिवे प्रत्यहं **श्रवसे** श्रुतिसम्पत्तये दिव्यावेशश्रवणायेत्यर्थः । अन्नार्थ इति कर्मठाः । प्रतिदिनं पुरुषस्य अन्नलाभाय उत्तमे अमृतत्वे स्थानमवश्यं किल! 'श्रवसे' कीर्तये ख्यापनायेति चेत् कर्मपरार्थस्य न स्यात् क्षतिः । **यः** यजमानः **उभयाय** द्विविधाय जन्मने मानुषं दैव्यमिति द्विविधमपि जन्म एकत्र इहैव प्राप्तुं **ततृषाणः** अतिशयेन तृष्णायुक्तो भवति ('ञि तृषा पिपासायां लिटः कानच्) तस्मै **सूरये** प्राज्ञाय **मयः** सुखं **प्रयः च** प्रियं च (प्रयोभिरित्यत्र गतम्-१-२-४), **आकृणोषि** सर्वतः करोषि । सत्येव मानुषे जन्मनि साध्याय दिव्याय जन्मने तृष्णा विवक्षिता, अत एव 'उभयाय जन्मने' इत्यत्र मनुष्यस्य निर्याणात्परं दिव्यं जन्मेह न काङ्क्षितम् । 'द्विपदां चतुष्पदां च लाभाय' इति कर्मठाः ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**त्वं नो अग्ने सनये धनानां यशसं कारुं कृणुहि स्तवानः । ऋध्याम कर्मापसा नवेन देवैर्द्यावापृथिवी प्रावतं नः ॥ ८ ॥**

त्वम् । नः । अग्ने । सनये । धनानाम् । यशसम् । कारुम् । कृणुहि । स्तवानः । ऋध्याम । कर्म । अपसा । नवेन । देवैः । द्यावापृथिवी इति । प्र । अवतम् ॥ नः ॥ ८ ॥

## ऋग्भाष्यम्

**प्रज्ञाधनानां लब्धये नः कृधि त्वं यशस्विनं कारिणं ज्ञानदं च ।**
**कर्ताऽऽपरोक्ष्यं यावदुपासनादीन्कारुस्तेन प्रोच्यते तत्त्वदर्शी ।**
**संस्तूयमानः कर्मणा नूतनेन समृद्धिं च प्राप्नुमः प्राक्तनस्य ॥ ८ ॥**

**ऋग्भाष्यटीका– त्वन्नो अग्ने सनये** ॥ प्रज्ञा । हे **अग्ने! स्तवानो**ऽस्माभिः संस्तूयमानस्त्वम् । **नः** अस्मान् **धनानां** प्रज्ञाख्यानां धनानाम् । **सनये** लब्धये समर्थानिति शेषः । **कुणुहि** कृधि कुरु । किंचास्मान् **यशसं** यशस्विनं यशस्विनः । **कारुं** कारिणं च कारिणश्च । ज्ञानदं ज्ञानदानिति यावत् । कृणुहि । ननु च करोतेरुणि कृते कारुरिति भवति ततश्च कारुं कारिणमिति स्यात् । ज्ञानदमिति तु कथं लभ्यत इत्यत आह । **कर्तेति** ॥ यावदापरोक्ष्यं ब्रह्मणस्तावदुपासनादीन्कर्ता यतस्तेन कारणेन । तत्वदर्शी कारुः प्रोच्यते । एतदुक्तं भवति । उणादयो हि संज्ञायां विधीयन्ते अतो विद्वद्रूढिपर्यालोचनया प्रकर्षगतिविज्ञानाद्वा कारुरिति तत्वदर्शी ग्राह्यः । अत एव वृत्तिकारः करोतीति कारुर्विश्वकर्मेन्द्रो वेति । तथा च पुनरुक्तिप्रसङ्गाज्ज्ञानिकार्यं ज्ञानदानं लक्ष्यत इति । यदा तु धनानि प्रज्ञातिरिक्तानि तदा यथाश्रुतव्याख्यानेऽपि न दोषः । किञ्च । वयं **नवेन** नूतनेन । **अपसा** कर्मणा । **कर्म ऋध्याम** समृद्धं सफलं करवाम । प्राक्तनस्य कर्मणः समृद्धिं साफल्यं प्राप्नुमः । प्राक्तनानां पुण्यानां त्वत्सेवैव फलं भवत्विति यावत् । किञ्च । हे **द्यावापृथिवी देवैः** सहिते युवाम् । **नः** अस्मांस्तथैव **प्रावतं** यथा वयमग्नेः सेवकाः स्याम ॥ ८ ॥

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । स्तवानः, अस्माभिः स्तूयमानः । त्वम् । नः, अस्मान् । धनानाम्, प्रज्ञाख्यानां धनानाम्, प्रसिद्धधनानां वा । सनये, लब्धये । (समर्थान्) इति शेषः । कृणुहि, कुरु । किं च, (नः) अस्मान् । यशसम्, यशस्विनम्, यशस्विनः । कारुम्, कारिणम्, कृञः उण्, कारिणश्च, ज्ञानदानिति यावत् । (कृणुहि) यावद्ब्रह्मापरोक्षमुपासनादिकरणात्कारुपदेन लक्षणया ज्ञानदातृग्रहः, अन्यथा 'ज्ञानिनः' इत्युक्तौ पुनरुक्तिप्रसङ्गात् (धनानाम् इत्यस्य प्रसिद्धधनार्थत्वे तु) ज्ञानिनः इत्येवार्थो ग्राह्यः । किं च, (वयम्) नवेन, नूतनेन । अपसा,

त्वत्सेवाकर्मणा । कर्म, प्राचीनं कर्म । ऋध्याम, समृद्धं सफलं करवाम, प्राक्तनस्य कर्मणः समृद्धिं साफल्यं प्राप्नुमः, प्राक्तनानां पुण्यानां त्वत्सेवैव फलं भवत्विति यावत् । किं च, (हे) (द्यावापृथिवी) द्यावापृथिव्यौ श्रीभूमी । देवैः (सहिते) युवाम्– नः, अस्मान् । तथैव प्र अवतम्, रक्षतम् । यथा वयमग्नेः सेवकाः स्याम ॥ ८ ॥

**स्कन्द– नः** इति द्वितीयैकवचनस्य स्ताने बहुवचनम् । त्वम् मां हे **अग्ने! सनये** लाभाय **धनानाम् यशसम् कारुम्** 'यशः' (निघ.२-७) इति अन्ननाम । हविर्लक्षणेनान्नेन तद्वन्तं स्तोतारं च **कृणुहि** कुरु । नित्यं यष्टारं कुर्वित्यर्थः । **स्तवानः** स्तूयमानः । अथवा न इति षष्ठी कारुमित्येतेन सम्बध्यते । यशसमित्यपि यशःशब्दः कीर्तिपर्यायः । अस्माकं सम्बन्धिन-मन्तरात्मानं यजमानं वा स्तोतारं धनलाभार्थं यशस्विनं कुरु स्तूयमानः । किञ्च **ऋध्याम** त्वत्प्रसादादेवर्द्धिं प्राप्नुयाम । किञ्चाग्निप्रसादादेव यागाख्यं कर्म इदम् **अपसा** कर्मणा पालनाख्येन **नवेन** अन्यैरकृतपूर्वेण **देवैः** सहयोगलक्षणैषा तृतीया । अन्यैरपि देवैः सह हे **द्यावापृथिवी! प्र अवतम्** प्रकर्षेण अवतं रक्षतम् **नः** अस्माकं स्वभूतम् । अग्निप्रसादादेव युवामपि प्रावतमित्येवं द्यावापृथिव्योर्गुणभावादेवाग्नेयत्वस्याविरोधः ॥ ८ ॥

**वेङ्कटमाधव– त्वम् अग्ने!** अस्माकं लाभाय **धनानाम्** यशस्विनं स्तोतारं पुत्रं कुरु स्तूयमानः । प्राप्नुयाम वयं कर्म यज्ञम् **नवेन** स्तुतिलक्षणेनानेन कर्मणा । तानस्मान् स्तुतिप्रवृत्तान् **देवैः** सह **द्यावापृथिवी!** रक्षतम् ॥ ८ ॥

**मुद्गल–** हे **अग्ने! स्तवानः** स्तूयमानः **त्वम् नः** अस्माकम् **धनानाम् सनये** दानार्थम् **यशसम्** यशोयुक्तम् **कारुम्** कर्मणां कर्तारं पुत्रम् **कृणुहि** कुरु । **नवेन** नूतनेन **अपसा** प्राप्तेन त्वद्दत्तेन पुत्रेण **कर्म** यागदानादिरूपम् **ऋध्याम** । हे **द्यावापृथिवी!** उभे देवते! **देवैः** अन्यैः सह **नः** अस्मान् **प्रावतम्** प्रकर्षेण रक्षतम् ॥ ८ ॥

**सायण–** हे **अग्ने! स्तवानः** स्तूयमानः **त्वम् नः** अस्माकम् **धनानाम् सनये** दानार्थम् **यशसम्** यशोयुक्तम् **कारुम्** कर्मणां कर्तारं पुत्रम् **कृणुहि** कुरु । **नवेन** नूतनेन **अपसा** प्राप्तेन त्वद्दत्तेन पुत्रेण **कर्म** यागदानादिरूपम् **ऋध्याम** । हे **द्यावापृथिवी!** उभे देवते! **देवैः** अन्यैः सह **नः** अस्मान् **प्रावतम्** प्रकर्षेण रक्षतम् ।

यशसम् । अर्शआदित्वात् अच्प्रत्ययः । व्यत्ययेन प्रत्ययात् पूर्वस्योदात्तत्वम् । यद्वा । 'सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्यः' (पा.सू.३-१-११) इति यशस्शब्दात् क्विप् । तस्य प्रत्ययान्तस्य सनाद्यन्तत्वात् धातुसंज्ञायां 'क्विप् च' इति क्विप्प्रत्ययान्तधातोः सतिशिष्टत्वात् 'धातोः' इत्यन्तोदात्तत्वम् । कृणुहि । 'उतश्च प्रत्ययाच्छन्दोवावचनम्' ('उतश् च प्रत्ययाद-संयोगपूर्वात्' पा.सू.६-४-१०६ का) इति हेर्लुगभावः । स्तवानः । 'सम्यानच् स्तुवः' (उ.सू. २-२४६) इति बहुलवचनात् केवलस्यापि स्तौतेः आनच्प्रत्ययः । वृषादित्वादाद्युदात्तत्वम् । ऋध्याम । 'ऋधु वृद्धौ' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । यासुट उदात्तत्वम् । द्यावापृथिवी । 'दिवो द्यावा' (पा.सू.६-३-२९) इति यावादेशः । आमन्त्रितानुदात्तत्वम् ॥ ८ ॥

**सिद्धाञ्जनम्–** हे **अग्ने**, **त्वं नः** अस्मान् मामित्यर्थे वचनव्यत्ययः, अथवा सम्बन्धे षष्ठी अस्माकं अन्तरात्मानं (स्कन्दस्वामीयम्) **यशसं** यशोयुक्तं **कारुं** कर्तारं स्तोत्राणां, स्तोतारमित्यर्थः । **कृणुहि** कुरु । मां अस्मदीयमन्तरात्मानं वा वैभवोपेतं स्तोतारं कुरु इत्यर्थः । किमर्थम् ? **धनानां सनये** दिव्यधनलाभाय । कीदृशस्त्वम् ? **स्तवानः** स्तूयमानः (स्तौतेरानच्-प्रत्ययः)। **ऋध्याम** ऋद्धिं प्राप्नुयाम त्वत्प्रसादात् । **नवेन** नूतनेन अकृतपूर्वेण **अपसा** कर्मणा **नः कर्म** इदमस्मदीयं यजनं **देवैः** अन्यदेवैः सह हे **द्यावापृथिवी** उभे देवते **प्रावतं** प्रकर्षेण वर्धयेथाम् ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**त्वं नो अग्ने पित्रोरुपस्थ आ देवो देवेष्वनवद्य जागृविः ।**
**तनूकृद्बोधि प्रमतिश्च कारवे त्वं कल्याण वसु विश्वमोपिषे ॥ ९ ॥**

त्वम् । नः । अग्ने । पित्रोः । उपऽस्थे । आ । देवः । देवेषु । अनवद्य । जागृविः । तनूऽकृत् । बोधि । प्रऽमतिः । च । कारवे । त्वम् । कल्याण । वसु । विश्वम् । आ । ऊपिषे ॥ ९ ॥

## ऋग्भाष्यम्

**त्वं नः पित्रोः प्रकृतेः पूरुषस्य समीपस्थस्तन्नियन्ता सदैव ।**
**देवेषु त्वं जागृविर्नित्यवेत्ता तनूकृन्नो बोधय प्राज्ञवर्यः ।**
**विश्वं वसु प्रार्पयसे च कारवे........................॥ ९ ॥**

**ऋग्भाष्यटीका– त्वन्नो अग्ने पित्रोः** । त्वं नः । हे **अग्ने त्वं नो**ऽस्माकं सर्वेषां प्राणिनाम् । **पित्रोः** मातापित्रोः । प्रकृतेः पूरुषस्य च **उपस्थे** उपतिष्ठन्तेऽत्रेत्युपस्थं समीपं तत्र वर्तसे । सदैव तयोर्नियन्तेति यावत् । हे **अनवद्य देवस्त्वम्** । देवेषु निर्धारणे सप्तमी । **आ जागृविः** नित्यवेत्ताऽसि । त्वं **तनूकृत्** सर्वशरीराणां कर्ता । **प्रमतिश्च** प्रकृष्टा मतिरस्येति प्राज्ञवर्यश्चासि । एवंभूतो **नो**ऽस्मान् **बोधि** बोधय । ज्ञानिनः कुरु । कुतः । हे **कल्याण** भद्र । त्वं **कारवे** ज्ञानिने । **विश्वं** समस्तम् । **वसु** मोक्षादिकं **ऊपिषे** आपयसि । प्रार्पयसे चस्तस्मादित्यर्थे ॥ ९ ॥

**मन्त्रार्थमञ्जरी–** (हे) अग्ने त्वम् । नः, अस्माकम्, सर्वेषां प्राणिनाम् । पित्रोः, मातापित्रोः, प्रकृतेर्विरिश्चाख्यपुरुषस्य च । उपस्थे, उपतिष्ठन्ते स्तुवन्त्यत्रेत्युपस्थं समीपम्, तत्र वर्तसे, सदैतयोर्नियन्तेति यावत् । (हे) अनवद्य, निर्दोष । देवः (त्वम्) देवेषु, निर्धारणे सप्तमी, आ जागृविः, नित्यवेदितासि । (त्वम्) तनूकृत्, सर्वशरीराणां कर्ता । प्रमतिः च, प्रकृष्टा मतिरस्य, प्राज्ञवर्यश्च । (असि) एवं भूतः (नः) अस्मान् बोधि, बोधय, ज्ञानिनः कुरु । कुतः ? (हे) कल्याण, भद्र । त्वम् । कारवे, ज्ञानिने । विश्वम्, समस्तम् । वसु, मोक्षादिकम् । आ ऊपिषे, प्रार्पयसि । च तस्मादित्यर्थे ॥ ९ ॥

**स्कन्द– त्वम् नः** अस्माकं स्वभूते **पित्रोः उपस्थे** पितरौ द्यावापृथिव्यौ । उपगम्य ऋत्विग्यजमानास्तिष्ठन्ति अस्मिन् उपस्थीयन्ते वा देवता इत्युपस्थो यज्ञः । कः पुनर्द्यावा-पृथिव्योर्यज्ञेन सम्बन्धः । द्युस्थानां देवानामर्थाय पृथिव्यां यज्ञः क्रियते । कीदृशोऽहम् । उच्यते । **देवः** देवेषु निर्धारण एषा सप्तमी । देवानां मध्ये दानादिगुणः । हे **अनवद्य!** प्रशस्य! **जागृविः** जागरणशीलश्च सर्वकार्येष्वप्रमादी चेत्यर्थः । देवेष्वित्येतज्जागृविरित्येतेन सम्बध्यते । देवेषु चाप्रमादी । देवांश्च यष्टुमुत्साहीत्यर्थः । **तनूकृत्** अशितपीतरसादिभावापादनेन शरीराणां च कर्ता **प्रमतिः च** प्रकृष्टज्ञानश्च । किं करवाणि । उच्यते । **बोधि** बुध्यस्व । किम् । सामर्थ्यात् स्तुतीः । अस्मदीये द्युस्थानां देवानामर्थाय पृथिव्यां कृते यज्ञे स्तुतीः शृण्वित्यर्थः । किञ्च **कारवे** स्तोत्रे **त्वम्** हे **कल्याण**! स्तोतॄणामुपरि भद्र! सानुग्रह! कमनीय! वा **वसु** धनम् **विश्वम्** बहुनामैतन् (निघ.३-३) । बहु आ ऊपिषे वपेरिदं रूपम् । आवपसि प्रक्षिपसि ददासीत्यर्थः ॥ ९ ॥

**वेङ्कटमाधव– त्वम्** अस्माकम् **अनवद्य**! अग्ने! द्यावापृथिव्योः **उपस्थे** वेद्याम् **आ** सीद। **देवः** देवानां मध्ये जागरणशीलः सः त्वम् स्तोत्रे अङ्गानां कर्ता भवामीति बुध्यस्व। भव च तस्मै प्रमतिः। **त्वम्** हि **विश्वम्** धनम् **कारवे आ** वपसीति ॥ ९ ॥

**मुद्गल–** हे **अनवद्य**! दोषरहित अग्ने! देवेषु सर्वेषु मध्ये **जागृविः** जागरूकः **त्वम् पित्रोः** मातापितृरूपयोर्द्यावापृथिव्यो **उपस्थे** समीपस्थाने वर्तमानः सन् **नः** अस्माकम् **तनूकृत्** पुत्ररूप-शरीरकारी भूत्वा **बोधि** बुध्यस्व अनुगृहाणेत्यर्थः। तथा **कारवे** कर्मकर्त्रे यजमानाय **प्रमतिः** च अनुग्रहरूपप्रकृष्टमतियुक्तश्च भवेति शेषः। हे **कल्याण**! मङ्गलरूपाग्ने! **त्वम् विश्वम् वसु** सर्वमपि धनम् **आ ऊपिषे** यजमानार्थम् आ वपसि ॥ ९ ॥

**सायण–** हे **अनवद्य**! दोषरहित अग्ने! देवेषु सर्वेषु मध्ये **जागृविः** जागरूकः **त्वम् पित्रोः** मातापितृरूपयोर्द्यावापृथिव्यो **उपस्थे** समीपस्थाने वर्तमानः सन् **नः** अस्माकम् **तनूकृत्** पुत्ररूपशरीरकारी भूत्वा **बोधि** बुध्यस्व अनुगृहाणेत्यर्थः। तथा **कारवे** कर्मकर्त्रे यजमानाय **प्रमतिश्च** अनुग्रहरूपप्रकृष्टमतियुक्तश्च भवेति शेषः। हे **कल्याण**! मङ्गलरूपाग्ने! **त्वम् विश्वम् वसु** सर्वमपि धनम् **आ ऊपिषे** यजमानार्थम् आ वपसि।

उपस्थे। 'सुपि स्थः' (पा.सू.३-२-४) इति तिष्ठतेः कः प्रत्ययः। 'आतो लोप इटि च' इति आकारलोपः। 'मरुद्वृधादीनां छन्दस्युपसंख्यानम्' (पा.सू.६-२-१०६.२) इति पूर्वपदान्तोदात्तत्वम्। जागृविः। 'जागृ निद्राक्षये'। 'जॄशॄस्तजागृभ्यः क्विन्' (उ.सू.४-४९४) इति क्विन्। नित्त्वादाद्युदात्तत्वम्। बोधि। 'बुध अवगमने'। 'बहुलं छन्दसि' इति शपो लुक्। 'वा छन्दसि' इति हेः अपित्त्वस्य विकल्पितत्वेन पित्त्वात् अङित्वे सति 'अङितश्च' (पा.सू.६-४-१०३) इति हेर्धिरादेशः। लघूपधगुणः। धातोरन्त्यलोपश्छान्दसः। प्रमतिः। 'मन ज्ञाने'। क्तिनि 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः। प्रकृष्टा मतिः यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अपिषे। 'डुवप् बीजसन्ताने'। छान्दसे लिटि 'थासः से'। 'वचित्वपि' इत्यादिना संप्रसारणपरपूर्वत्वे। द्विर्भावहलादिशेषौ। कादिनियमात् इट् ॥ ९ ॥

**सिद्धाञ्जनम्– अनवद्य** निर्दोष हे **अग्ने, देवेषु** सर्वेषु मध्ये **जागृविः** जागरणशीलः (जागृ निद्राक्षये, क्विन्) **देवः** त्वं **पित्रोः** द्यावापृथिव्योः, द्युस्थानचितेः पृथिवीस्थानचितेः उभयोश्च

**उपस्थे** समीपे (उपपूर्वकात् तिष्ठतेः कः) **आ** आसीनः वर्तमानः सन् **नः** अस्माकं **तनूकृत्** नवशरीरकारी भूत्वा, अत्र नवं दिव्यजन्मयोग्यं शरीरं यजमानस्य विधातुं प्रभुरग्निरिति बोध्यम् । **बोधि** बुध्यस्व, अनुग्रह एव बोधः । **कारवे** स्तोत्रकृते **प्रमतिश्च** प्रकृष्टज्ञानश्च भव । हे **कल्याण** भद्रस्वरूप, त्वं **विश्वं** सर्वं **वसु** धनं **आ ऊपिषे** आवपसि यजमाने (टु वप् बीजसन्ताने, छान्दसो लिट् लडर्थे) ॥ ९ ॥

## ऋक्संहिता पदपाठसहिता

**त्वम॑ग्ने प्रम॑तिस्त्वं पि॒तासि॑ न॒स्त्वं व॑य॒स्कृत्तव॑ जा॒मयो॑ व॒यम् ।**
**सं त्वा॒ राय॑: श॒तिन॒: सं स॑ह॒स्रिण॑: सु॒वीरं॑ यन्ति व्रत॒पाम॑दाभ्य ॥ १०, ३३ ॥**

त्वम् । अ॒ग्ने॒ । प्रऽम॑तिः । त्वम् । पि॒ता । अ॒सि॒ । न॒ः । त्वम् । व॒य॒ःऽकृत् । तव॑ । जा॒मय॑ः । व॒यम् । सम् । त्वा॒ । राय॑ः । श॒तिन॑ः । सम् । स॒ह॒स्रिण॑ः । सु॒ऽवीर॑म् । य॒न्ति॒ । व्र॒त॒ऽपाम् । अ॒दा॒भ्य॒ ॥

## ऋग्भाष्यम्

**..................................आयुष्करो भ्रातरस्ते वयं च ।**
**देहे त्वेकस्मिन् गर्भवद्वासतश्च भ्राताऽस्य जीवः परमस्य नित्यम्**
**॥ १०, ३३ ॥**

**ऋग्भाष्यटीका– त्वमग्ने** । आयुः । हे **अग्ने त्वम्** । **प्रमतिः** प्रकृष्टज्ञानोऽसि । त्वं **नो**ऽस्माकं **पितासि** शरीरकर्तृत्वात् । त्वं **वयस्कृत्** । कालकृता शरीरावस्था वयः । तयाऽऽयुरुपलक्ष्यते । आयुष्करः । न केवलं त्वं नः पिता । किन्तु वयं तव तेजामयो भ्रातरश्च । अङ्गिरसो ज्येष्ठः पुत्रोऽग्निः । अतो हिरण्यस्तूपस्य भ्राता ज्येष्ठत्वात्पिता चेति युज्यते । परमेश्वरे तु कथं जीवो भ्रातेत्यत आह । **देहे त्विति** ॥ गर्भवदेकगर्भस्थितप्राणिद्वयवत् । वासतो द्वयोरपि । चशब्द एवार्थे । परमस्य त्विति सम्बन्धः । किञ्च हे **अदाभ्य** अहिंस्य! । **सुवीरं** अतिविक्रान्तम् । **व्रतपां** व्रतानां कर्मणां रक्षकं त्वाम् । **शतिनः** शतसङ्ख्यावत्योरायः **संयन्ति** प्राप्नुवन्ति । सन्ति । न केवलं शतिनः **सहस्रिणः** सहस्रसङ्ख्यावत्यश्च संयन्ति । वयं त्वत्सम्बन्धिनस्त्वं च धनिकोऽतोऽस्मान् धनवतः कुर्विति ॥ १०, ३३ ॥

**मन्त्रार्थमञ्जरी–** (हे) अग्ने त्वम् । प्रमतिः, प्रकृष्टज्ञानः (असि) त्वम् । नः, अस्माकम् । पिता असि, शरीरकर्तृत्वात् । त्वम् । वयस्कृत्, कालकृतशरीरावस्था वयः, तया– आयुरुपलक्ष्यते, आयुष्कृत् ।। न केवलं त्वं नः पिता, किं तु– वयम् । तव, ते । जामयः, भ्रातरः । (च), अङ्गिरसो ज्येष्ठपुत्रोऽग्निः, अतो हिरण्यस्तूपस्य भ्राता ज्येष्ठत्वात्पिता चेति युज्यते, हरेस्तु– एकगर्भे तेन सह वासाद्भ्रातृत्वं ज्ञेयम् । किं च, (हे) अदाभ्य, अहिंस्य । सुवीरम्, अतिविक्रान्तम् । व्रतपाम्, व्रतानां कर्मणां रक्षकम् । त्वा, त्वाम् । शतिनः, शतसङ्ख्यावत्यः । रायः । सम् (यन्ति) प्राप्नुवन्ति । संयन्ति न केवलं शतिनः, (किं तु) सहस्रिणः, सहस्रसङ्ख्यावत्यः । (रायः) सम् यन्ति, प्राप्नुवन्ति । वयं त्वत्सम्बन्धिनस्त्वं च धनिकोऽतोऽस्मान्धनवतः कुर्विति (भावः) ।। १० ।।

**स्कन्द– त्वम्** हे **अग्ने! प्रमतिः** प्रकृष्टज्ञानः । **त्वम् पिता असि** न पितृकार्यकरत्वात् । अथवा पितृशब्दोऽयं साक्षात् पारम्पर्येणेत्यस्य भेदस्याविवक्षितत्वान् । पितामहे प्रयुक्तः । त्वं पितामहोऽस्माकमित्यर्थः । अग्नेः पुत्रोऽङ्गिराः, अङ्गिरसो हिरण्यस्तूपः । **त्वम् वयस्कृत्** पाकद्वारेणान्नानां कर्ता । दानार्थो वा करोतिः । स्तोतुरन्नानां दातेत्यर्थः । **तव जामयः** सजातीयाः **वयम्** पौत्रत्वात् । किञ्च **सम् त्वा** समित्युपसर्गो यन्तीत्याख्यातेन सम्बन्धयितव्यः । **सम् यन्ति** सम्यग् गच्छन्ति त्वाम् । तव स्वभूतं मां सम्प्रतिपद्यन्त इत्यर्थः । कानि । **रायः** धनानि । कियन्ति । **शतिनः** शतसङ्ख्यावन्ति । न च शतसङ्ख्यावन्त्येव केवलानि । **सहस्रिणः** सहस्रसङ्ख्यावन्ति च सम् यन्ति । कीदृशम् । उच्यते । **सुवीरम्** वीरो विक्रान्तः । यः सुष्टु वीरः, शोभना वा यस्य सम्बन्धिनः । केन सम्बन्धेन । सामर्थ्यात् स्तोतृतया । स सुवीरः, तम् सुवीरम् । **व्रतपाम्** कर्मणां पालयितारम् । हे **अदाभ्य!** अहिंस्य! ।। १० ।।

**वेङ्कटमाधव– त्वम् अग्ने!** प्रकृष्टमतिः । **त्वम् पिता** इव च भवसि अस्माकम् । त्वम् अन्नस्य कर्ता । तव बन्धवः वयम् । सङ्गच्छन्ते त्वां शतसहस्रसङ्ख्याः **रायः** शोभनवीरं कर्मणां रक्षितारम् **अदाभ्य!** ।। १० ।।

**मुद्गल–** हे **अग्ने! त्वम् प्रमतिः** अस्मदनुग्रहरूपप्रकृष्टमतियुक्तोऽसि । तथा **त्वम् नः** अस्माकम् **पिता** पालकः **असि** । तथा **त्वम् वयस्कृत्** आयुष्यप्रदोऽस्ति । **वयम्** अनुष्ठातारः **तव जामयः** बन्धवः । हे **अदाभ्य!** केनापि अहिंसनीय! अग्ने! **सुवीरम्** शोभनपुरुषयुक्तम्

**व्रतपाम्** कर्मणः पालकम् **त्वा** त्वाम् **शतिनः** शतसङ्ख्यायुक्ताः **रायः** धनानि **सम् यन्ति** सम्यक् प्राप्नुवन्ति । तथा **सहस्रिणः** सहस्रसङ्ख्याकाः रायः सम् यन्ति ।। १० ।।

**सायण–** हे **अग्ने! त्वम् प्रमतिः** अस्मदनुग्रहरूपप्रकृष्टमतियुक्तोऽसि । तथा **त्वम् नः** अस्माकम् **पिता** पालकः **असि** । तथा **त्वम् वयस्कृत्** आयुष्यप्रदोऽस्ति । **वयम्** अनुष्ठातारः **तव जामयः** बन्धवः । हे **अदाभ्य!** केनापि अहिंसनीय! अग्ने! **सुवीरम्** शोभनपुरुषयुक्तम् **व्रतपाम्** कर्मणः पालकम् **त्वा** त्वाम् **शतिनः** शतसङ्ख्यायुक्ताः **रायः** धनानि **सम् यन्ति** सम्यक् प्राप्नुवन्ति । तथा **सहस्रिणः** सहस्रसङ्ख्याकाः रायः **सम् यन्ति** ।।

सुवीरम् । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'वीरवीर्यौ च' (पा.सू.६-२-१२०) इत्युत्तरपदाद्युदात्तत्वम् । अदाभ्य । दभिः प्रकृत्यन्तरमस्तीति केचिदाहुः । 'दभेश्चेति वक्तव्यम्' । 'ऋहलोर्ण्यत्'(पा.सू.३-१-१२४) इति ण्यत् ।। १० ।।

**सिद्धाञ्जनम्–** हे **अग्ने!, त्वं प्रमतिः** प्रकृष्टज्ञानोऽसि, **त्वं नः** अस्माकं **पिता** पालकोऽसि, **त्वं वयस्कृत्** वयः बलं शारीरं मानसं च करोतीति वयस्कृत् सोऽसि (वेति, लुग्विकरणी गतिव्याप्त्यादिवह्वर्थो धातुः, वयः आयुष्यपि वर्तते, अत्र आयुष्यप्रद इति सायणीयम् । पाकद्वारेण अन्नानां कर्ता इति स्कन्दस्वामी)। **वयं** उपासकाः **तव जामयः** बन्धवः । हे **अदाभ्य** न केनापि दम्भयितुं शक्य, अप्रतिहतबल, **त्वा** त्वां **शतिनः रायः** शतसङ्ख्याकानि धनानि **संयन्ति** सम्यक् प्राप्नुवन्ति, तथा **सहस्रिणः** रायः **संयन्तीति** सम्बन्धः । कीदृशं त्वाम्? **सुवीरं** शोभना वीरा यस्य तं शुभवीर्यसम्पन्नमित्यर्थः । किंच **व्रतपां** व्रतं दिव्यं पाति रक्षतीति व्रतपाः तम् ।। १० ।।

।। इति प्रथमाष्टके द्वितीयाध्याये त्रयस्त्रिंशो वर्गः ।।

## ।। अथ चतुस्त्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**त्वाम॑ग्ने प्रथ॒मम॒ायुमा॒यवे॑ दे॒वा अ॑कृण्व॒न्नहु॑षस्य वि॒श्पति॑म् । इळा॑मकृण्व॒न्मनु॑षस्य॒ शास॑नीं पि॒तुर्यत्पु॒त्रो मम॑कस्य॒ जाय॑ते ।। ११ ।।**

त्वाम् । अ॒ग्ने॒ । प्र॒थ॒मम् । आ॒युम् । आ॒यवे॑ । दे॒वाः । अ॒कृ॒ण्व॒न् । नहु॑षस्य । वि॒श्पति॑म् । इळा॑म् । अ॒कृ॒ण्व॒न् । मनु॑षस्य । शास॑नीम् । पि॒तुः । यत् । पु॒त्रः । मम॑कस्य । जाय॑ते ।। ११ ।।

### ऋग्भाष्यम्

**आयो राज्ञो हृदये प्रेरकत्वादायोरायुर्नहुषस्याधिपश्च ।**
**चक्रुर्देवा देहसृष्ट्यैव तस्य यन्नामांतर्यामिणो जीवगं च ।**
**नामार्थभाग्वासुदेवो हि शक्त्या तेन ह्यायुः प्रथमोऽसाविहोक्तः ।**
**मनुर्नाम्ना मनुषस्तस्य चेलापुत्री नामास्या अपि विष्णोः सदैव ।**
**इळेड्यत्वादुपजीव्यत्वतश्च स एवायुरयनाज्ज्ञानतश्च ।**
**तच्छास्यत्वाच्छासनी मानवीळा तच्छासकत्वाच्छासनी वासुदेवः ।**
**ममत्वकर्तुर्हि पितुः स पुत्रः स्वातंत्र्यं च ममता नान्यदस्ति ।। ११ ।।**

**ऋग्भाष्यटीका– त्वामग्ने** । अत्रायव इति चतुर्थी षष्ठ्यर्थे । नहुषस्येत्यादि प्रकरणात् । न च षष्ठ्यर्थः सम्बन्धोऽत्रास्ति । क्रियाहेतुकत्वात्तस्य । न चात्र क्रिया श्रूयते । तथा च घटस्य पट इतिवदायोरायुरित्यसम्बद्धमित्यत आह । **आयोरिति** ।। राज्ञो राजविशेषस्येत्यायोरित्यस्य व्याख्यानम् । हृदये स्थित्वा प्रेरकत्वादित्यध्याहृतक्रियागर्भसम्बन्धार्था षष्ठीत्युक्तं भवति । आयोरायुरित्यनेनापि षष्ठ्याः साधुत्वमेवोच्यते । न त्वायुत्वम् । तत्समाधानस्याद्याप्यनुक्तत्वात् । वक्ष्यमाणत्वाच्च । नहुषस्य विश्पतिमित्ययुक्तं राजा हि विश्पतिः न चाग्निर्नहुषस्य राजेत्यत आह । **नहुषस्येति** ।। विश्पतिशब्दोऽधिपतिमात्रार्थ इति भावः । अधिपत्वं च हृदये प्रेरकत्वेन विवक्षितम् । तथापि **देवा अकृण्वन्निति** कथं न हीश्वरं वा तदीयं प्रेरकत्वं वा देवाः कृतवन्त इत्यत आह । **चक्रुरिति** ।। आप्वादीनां देहसृष्ट्यैव देवाश्चक्रुरित्युच्यते । न त्वीश्वरस्य तदीयप्रेरणाशक्तेर्वा सृष्ट्येत्यर्थः । एतदुक्तं भवति । आप्वादि शरीरप्रेरकत्वमत्र षष्ठ्योक्तम् ।

अत एव हि हृदय इत्यभिहितम् । शरीरप्रेरणं चासति शरीरे न सम्भवति । अतः शरीरं सृष्टवन्तो देवाः प्रेरकं सृष्टवन्त इत्युपचारेणोच्यत इति । तथाप्यायुमिति कथमित्यत आह । **तस्येति** ।। जीवगं यन्नाम तदन्तर्यामिणस्तस्येश्वरस्य च भवतीत्यायोः प्रेरकोऽप्यायुर्भवति । प्रथमत्वं कस्य विशेषणं कथं चेत्यत आह । **नामार्थेति** ।। यस्माद्वासुदेवः शक्त्या स्वातन्त्र्येण नामार्थभागायुशब्द-प्रवृत्तिनिमित्तवांस्तेनासाविह प्रथम आयुरुक्तः । द्वितीयो हिशब्दः प्रसिद्धौ ।

ननु द्वितीयान्त आयुशब्दे क्रियावचने व्याख्याते सर्वं सुस्थम् । किमनेनाध्याहारादिना । मैवम् । एवं व्याख्याने माहात्म्याधिक्यलाभात् । मनुषस्येळामित्युच्यते तत्र को मनुषः का चेळेत्यत आह । **मनुरिति** ।। अत्र तस्य पुत्रीळेति निर्देशार्थं स्वरूपकथनं न तु सम्बन्धकथनम् । शासनीशब्देनैव सम्बन्धस्योक्तत्वात् । नन्वत्र त्वामिति सम्बध्यते न वा नेति चेदाग्रेयत्वानुपपत्तिः । द्वितीये कथमीश्वरस्येळात्वमित्यत आह । **नामेति** ।। अस्याः मनुपुत्र्याः यदिळेति नाम तत्सदा विष्णोरेवातस्त्वामिळामिति युक्तम् । कथमिळाशब्दो विष्णोर्नामेत्यत आह । **इळेति** ।। विष्णुरिति सम्बन्धः । ईड्यत्वादित्यनेनेडस्तुतौ अस्मात् घञर्थे कविधानमिति कर्मणि को ह्रस्वता चेत्युक्तं भवति । डस्य लत्वं स्त्रीरूपत्वात्स्त्रीलिङ्गं च प्रसिद्धमेव । इळा पृथिवी सा यथा सर्वेषामुपजीव्या तथोपजीव्यत्वतश्चेळा । प्रागायुशब्दो विष्णोर्नामेत्युक्तं प्रसङ्गात्तमिदानीं निर्वक्ति । स एवेति । अयनात् गमनात् । गत्यर्थानां ज्ञानार्थत्वात् । ज्ञानतो ज्ञानवत्त्वतश्च । इणः छन्दसीत्युण् । **मनुषस्य** शासनीत्येतद्व्याचष्टे । **तदिति** ।। यदेळा मानवी मनोः पुत्री विवक्षिता तदा तच्छास्यत्वात्तेन मनुना शास्यत्वान्मनुषस्य शासनीति व्याख्येयम् । यदा तु वासुदेवः तदा तच्छासकत्वात्तस्य मनोः शासकत्वान्मनुषस्य शासनीति व्याख्यातव्यम् ।

एतदुक्तं भवति । 'कर्तृकर्मणोः कृती' इति कृद्योगे कर्तरि कर्मणि च षष्ठी स्मर्यते । तथा 'कृत्यल्युटो बहुलम्' इति कर्तरि कर्मणि च ल्युट् । तत्राद्ये कर्तरि षष्ठी । कर्मणि ल्युट् । द्वितीये तु विपर्यय इति । चतुर्थपादतात्पर्यमाह । **ममत्वेति** ।। अनेन ममत्ववाचिन्यव्यये मम शब्द उपपदे करोतेर्ड इत्युक्तं भवति । **पितुः** मनोः । स वासुदेवः । हीत्यस्यार्थस्य पुराणप्रसिद्धतामाह । परमेश्वरं प्रति मनोः कथं पितृत्वमित्यत आह । **स्वातन्त्र्यं चेति** ।। मनोरीश्वरं प्रति स्वातंत्र्यं पितृत्वमिति यावत् । ममतैव । नान्यज्जनकत्वमस्ति । गौण्यैव वृत्त्या पितेत्यर्थः । अनेन ममकस्येत्येतदुक्तप्रयोजनं भवति ।

ततश्चायमृगर्थः । हे **अग्ने! देवाः** भूताद्यभिमानिनः । **प्रथममायुं** मुख्यया वृत्त्यायुशब्दवाच्यं **त्वाम्** आयोरौर्वशे यस्य राज्ञः । प्रेरकं **अकृण्वन्** । आयुदेहं सृष्ट्याऽकुर्वन्निव । किञ्च **नहुषस्य** राज्ञो **विश्पतिं** प्रेरकं च त्वामुक्तविधयाऽकुर्वन् । अपि च । **मनुषस्य शासनीं** मनुना या शिक्षणीया या तत्पुत्रीळा तदन्तर्यामिणं च मनोः शिक्षकं त्वामकृण्वन् । कथंभूतामिळाम् । **यत्** या इळा **ममकस्य** ममापत्यमिति भावं कुर्वाणस्य **पितुः पुत्रो जायते** । त्वत्प्रेरणयैवैषां राज्ञां प्रभाव इति भावः ।। ११ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । भूताद्यभिमानिनः देवाः । प्रथमम् । आयुम्, मुख्यया वृत्त्यायुशब्दवाच्यम्, अयतेः उणन्ततया (एतेः उणन्ततया) ज्ञानित्वार्थकत्वात्) त्वाम् । आयवे, षष्ठ्यर्थे चतुर्थी, आयोः, और्वशेयस्य राज्ञः । विश्पतिम्, प्रेरकम् । अकृण्वन्, आयुदेहसृष्ट्या-कुर्वन्निव । किं च, नहुषस्य, राज्ञः । (विश्पतिम्) प्रेरकम् । (च) (त्वाम्) । तद्देहनिर्माणेन (अकृण्वन्) अकुर्वन्निव । अपि च, मनुषस्य, मनोः । शासनी शिक्षणीया येळा तदन्तर्यामितया मनोः शासकतया च शासनीम् इळाम् अकृण्वन् । कथं भूतामिळाम् ? यत्, येळा । ममकस्य, ममत्वार्थे 'मम' इत्यव्यय उपपदे करोतेः डः, 'ममापत्यम्' इत्यभिमानं कुर्वतः । पितुः पुत्रः जायते । 'मम पुत्रः' इत्यभिमानमात्रम्, न वस्तुतः पुत्र इति ।। ११ ।।

**स्कन्द–** अत्रेतिहासमाचक्षते– 'उर्वश्यामुत्पन्नः पुरूरवसः पुत्र आयुः नाम । तं कदाचिदसुरैरुपद्रूयमाणा देवा अब्रुवन्– जह्येनानसुरानिति । सोऽब्रवीत्– सेनापतिर्मे युष्माकमेको भवत्विति । तस्य देवा अग्निं सेनापतिमकुर्वन् तथा नहुषस्य । तदेतदनेनार्धर्चेनोच्यते– हे **अग्ने! त्वाम् प्रथमम्** उत्कृष्टम् । क्रियाविशेषणं वा प्रथमशब्दः । प्रथममग्ने **आयुम्** एतेर्गत्यर्थस्येदं रूपम् । असुरान् प्रति गन्तारम् । **आयवे** षष्ठ्यर्थे चतुर्थ्येषा । आयो राज्ञः । **देवाः अकृण्वन्** कृतवन्तः । **नहुषस्य च विश्पतिम्** मनुष्यपतिमित्यर्थः । किञ्च **इळाम् अकृण्वन्** इति । अत्रापीतिहासः– 'मनु प्रजाकामोऽग्नावाहुतिमजुहोत् । अग्निमेवेळारूपिणं कृत्वा प्रायच्छन् । एषा ते सर्वान् कामान् दास्यतीति । तां मनुरन्वशादिदमिदं च मे कुर्विति । सा तस्मै सर्वमकरोत् । पुरूरवसम् ऐळं पुत्रमजनयदिति । तदेतदनेनार्धर्चेनोच्यत– त्वामेव इळाम् अकृण्वन् **मनुषस्य** मनुष्यस्य **शासनीम्** शासनीयां वशवर्तिनीमित्यर्थः । कदा । **पितुः यत्** यदा **पुत्रः** पुरूरवा नाम **ममकस्य** मामकस्य मदीयस्याग्नेरिळायां **जायते** । लङर्थेऽयं लट् । अजायत । इळाया

अपि पुत्रः पुरूरवाः । इळारूपी चाग्निरेव । तेन योऽस्याः पुत्रः सोऽग्नेरेव पुत्रः । अग्निश्च हिरण्यस्तूपस्य पिता । पितृकार्यकरत्वात् पितामहो वा पितेति व्यपदिश्यत इति व्याख्यातम् । अत उपपन्नमेतत् । मदीयस्य पितुरग्नेरिळारूपिणो यदा पुत्रः पुरूरवा नामाजायतेति ॥११॥

**वेङ्कटमाधव–** **त्वाम् अग्ने! पूर्वम् आयुम् अकृण्वन् आयवे** मनुष्याय पुरूरवसे । पुरूरवसः पुत्र आयुः । तथा **देवाः अकृण्वन् नहुषस्य** च राज्ञः **विश्पतिम्** नाम पुत्रम् । तथा मनोश्च त्वाम् **इळाम्** नाम दुहितरम् अकृण्वन् । या जाता सती पितरम् मनुम् अन्वशात् । यज्ञे प्रयाजानुयाजयोर्मध्ये मामवकल्पय, मया सर्वानेत्र कामान् प्राप्स्यसीति । यदा ममकस्य पितुः अङ्गिरसः पुत्रः **जायते** तदानीं तम् च त्वामकृण्वन्नङ्गिरसामेकमिति ॥ ११ ॥

**मुद्गल–** हे **अग्ने! त्वाम् प्रथमम्** पुरा **देवाः आयवे** आयोः मनुष्यरूपस्य **नहुषस्य** एतन्नामकस्य राजविशेषस्य **आयुम्** मनुष्यरूपम् **विश्पतिम्** सेनापतिम् **अकृण्वन्** कृतवन्तः । तथा **मनुषस्य** मनोः **इळाम्** एतन्नामधेयां पुत्रीम् **शासनीम्** धर्मोपदेशकर्त्रीम् **अकृण्वन्** कृतवन्तः । **यत्** यदा **ममकस्य** मदीयस्य हिरण्यस्तूपसम्बन्धिनः यः पिता अङ्गिराः तस्य **पितुः पुत्रः जायते** तदानीं हे **अग्ने!** त्वमेव पुत्ररूप आसीरिति शेषः ॥ ११ ॥

**सायण–** हे **अग्ने! त्वाम् प्रथमम्** पुरा **देवाः आयवे** आयोः मनुष्यरूपस्य **नहुषस्य** एतन्नामकस्य राजविशेषस्य **आयुम्** मनुष्यरूपम् **विश्पतिम्** सेनापतिम् **अकृण्वन्** कृतवन्तः । तथा **मनुषस्य** मनोः **इळाम्** एतन्नामधेयां पुत्रीम् **शासनीम्** धर्मोपदेशकर्त्रीम् **अकृण्वन्** कृतवन्तः । तथा च तैत्तिरीयैराम्नायते– 'इळा वै मानवी यज्ञानूकाशिन्यासीत्' (तै.ब्रा.१-१-४) इति । वाजसनेयिनोऽप्येवमामनन्ति– 'प्रयाजानुयाजानां मध्ये मामवकल्पय मया सर्वा-नवाप्स्यसि कामानिति सा मनुमन्वशादिति यत् शात्' इति । **यत्** यदा **ममकस्य** मदीयस्य हिरण्यस्तूपसम्बन्धिनः यः पिता अङ्गिराः तस्य **पितुः पुत्रः जायते** तदानीं हे अग्ने! त्वमेव पुत्ररूप आसीरिति शेषः ॥

आयवे । पष्ठ्यर्थे चतुर्थी वक्तव्या । 'चतुर्थ्यर्थे बहुलं छन्दसि'(पा.सू.२-३-६२) इति चतुर्थी । नहुषस्य । 'णह बन्धने' । 'नहिकलिहन्यर्तिलसिभ्य उषच्' (उ.सू.४-५१५)। वृषादित्वादाद्युदात्तत्वम् । विश्पतिम् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् ।

मनुषस्य । 'मनेर्नित्' इति उषच् । नित्वादाद्युदात्तत्वम् । शासनीम् । शिष्यतेऽनयेति शासनी । 'करणाधिकरणयोश्च' इति ल्युट् । 'टिड्ढाणञ्' (पा.सू.४-१-१५) इत्यादिना ङीप् । लित्स्वरेणाद्युदात्तत्वम् । ममकस्य । ममेदमित्यर्थे 'तस्येदम्' (पा.सू.४-३-१२०) इति अणि, 'तवकममकावेकवचने' (पा.सू.४-३-३) इति अस्मच्छब्दस्य ममकादेशः । 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः । व्यत्ययेनाद्युदात्तत्वम् ॥ ११ ॥

**सिद्धाञ्जनम्**– हे **अग्ने! देवाः आयवे** मनुष्यस्य अर्थाय तादर्थ्ये चतुर्थी, **नहुषस्य** मनुष्यस्य **विश्पतिं** राजानं **प्रथमं** प्रधानं आद्यं वा **आयुं** मनुष्यं जीवभूतं **अकृण्वन्** अकुर्वन् । **यत्** यदा **ममकस्य** मामकस्य **पितुः** पालकस्य द्युस्थानपुरुषस्य **पुत्रः** तदंशः **जायते** मनुष्ये प्रादुर्भवति, तदा **त्वाम्** अग्निमेव **मनुषस्य** मनुष्यस्य **शासनीं** उपदेष्ट्रीं **इळां** पश्यन्तीं वाचं **अकृण्वन्** अकुर्वन् कुर्वन्तीति लङर्थो युक्तः । आयुम्– गत्यर्थात् एतेः, गतम् । नहुषस्य-'णह बन्धने', उषच् । मनुषस्य– ज्ञानार्थात् मनेः उषच् । शासनीम्– शिष्यतेऽनयेति शासनी करणे ल्युट् । ममकस्य– अस्मच्छब्दस्य ममकादेशः, 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः ॥

अस्मिन् मन्त्रे आयु-नहुष-मनुषशब्दाः मनुष्यपर्यायाः साकूतास्तात्पर्यावगतयो कल्पन्ते । यद्यपि पुराणकथाप्रसिद्धानि ययाति-नहुषादीनि सूक्तेऽस्मिन् श्रूयन्ते, यद्यपि ऐतिहासिकपुरुषव्यक्तयो निदिष्टा इति स्थूलदृशां ग्रहणं शक्यम्, यद्यपि च पुराणकथोदाहरणेन ईदृशानि सूक्तानि कथञ्चित् पूर्वव्याख्यातानि पुराणकथापारमार्थिकत्वनिरूपणानीव संवृत्तानि, तथाऽपि नहुष-मनुषादेः पर्यायशब्दस्य, यौगिकार्थमवधार्य मन्त्रार्थविचारे कृते तात्पर्यं सुगमं भवति । देवाः जगद्व्यापारयुक्ताः सर्वेश्वरविभवभूताः अग्निं प्राणबलसम्पन्नस्य नरस्य तदर्थं वा प्राणबलभूतं प्रथमं जीवं विदधते 'आयवे प्रथमं आयुम्' षष्ठ्यर्थे चतुर्थी चेत् 'प्राणस्य प्राणः' इतिवत् जीवस्य जीवः, आयोरायुः । ततस्ते परस्परस्नेहबन्धोपेतस्य मनुष्यस्य राजानं कुर्वन्ति नहुषस्य विश्पतिम् । यदा अग्नेर्मनुष्यस्य च स्नेहबन्धः सिद्ध्यति, तदा स एव नेता प्रभुर्भवति । अत्र नहुषशब्दार्थविवरणे सायणीयमुपयुक्तं द्रष्टव्यम् (१-१२२-८) । यदा मनुष्ये दिव्यस्य पितुः अंशजः पुत्रः अग्निः लब्धजन्मा भवति, तदा तमग्निमेव 'मनुषः' मतिमतो मनुष्यस्य 'इळां' पश्यन्तीं वाचं कुर्वन्ति । उदितज्ञानस्य पुंसः अग्निरेव इळा भवति । आप्रीसूक्ते इळा-सरस्वत्योर्विवेचनाय इळायास्तत्र दृष्टिप्राबल्यमुक्तम् । इळा वाक् प्रसिद्धा वेदे, सा पश्यन्ती वागिति बोध्यम् । 'ममकस्य

पितुः' अत्र दिव्यः पिता सर्वस्य जगतः पितैव मदीयः पितेति ऋषिणा व्यवहारे स्वसम्बन्धो भक्त्यतिशयश्च बोध्यौ ॥ ११ ॥

## ऋक्संहिता पदपाठसहिता

**त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य ।**
**त्राता तोकस्य तनये गवामस्यनिमेषं रक्षमाणस्तव व्रते ॥ १२ ॥**

त्वम् । नः । अग्ने । तव । देव । पायुऽभिः । मघोनः । रक्ष । तन्वः । च । वन्द्य । त्राता । तोकस्य । तनये । गवाम् । असि । अनिऽमेषम् । रक्षमाणः । तव । व्रते ॥ १२ ॥

## ऋग्भाष्यम्

**त्वं नो मघोनो यजमानस्य तन्वस्तवैव रक्षाशक्तिभी रक्ष देव ।**
**चशब्देन ज्ञानभक्त्यादिकं च सदाऽस्माकं यजमानस्य चाद्धा ।**
**त्राता तोकस्य पुत्रस्य च त्वं सन्ततित्वात्तनयस्यास्य सूनोः ।**
**गवां च त्वं रक्षिता ज्ञानसौख्यवाचां वाऽद्धैवानिमेषान् सुरांश्च ।**
**संरक्षमाणस्त्वद्व्रते तैः प्रवृत्ते..........................॥ १२ ॥**

**ऋग्भाष्यटीका–** त्वं नः । हे वंद्य अग्ने देव त्वं नोऽस्मदीयस्य । **मघोनो** धनवतो यजमानस्येति यावत् । **तन्वः** द्वितीयार्थे षष्ठ्येषा । तनुम् । तनूशब्दस्य तदवयववृत्तिताभ्युपगमेन द्वितीयाबहुवचनं वा । तव **पायुभिः** पातेरुण् । तवैव रक्षाशक्तिभी रक्षाकरणीभिः शक्तिभी **रक्ष** । तन्वश्चेति चशब्देन यजमानस्य ज्ञानभक्त्यादिकं च समुच्चिनोति । यद्वा । नोऽस्माकं तन्वो मघोनो यजमानस्य च तन्व इति व्याख्येयम् । यावदायुः अवस्थानं स्वतः सिद्धं किं प्रार्थनेनेत्यत उक्तम् । सदा अपमृत्युपरिहारेणेति यावत् । अद्धाऽऽमयादिपरिहारेणेति । किञ्च । त्वं **तोकस्य** अस्मात्पुत्रस्य च **त्रातासि** भवेति यावत् । न केवलं पुत्रस्य किन्तु **तनये** तनयस्य । अस्य पुत्रस्य सूनोरपि त्राता भव । ननु तनयशब्दः पुत्रनाम । स कथं पौत्रार्थतया व्याख्यायत इत्यत आह । **सन्ततित्वादिति** ॥ न तनयशब्दः पुत्रस्यैव नाम किन्तु 'तनु विस्तार' इत्येतद्रूपत्वात् सन्ततेर्वाचकः पौत्रस्यापि सन्ततित्वाद्युक्तं तदर्थतया व्याख्यानम् । ननु पुत्रोऽपि तनयो भवति तथापि तोकशब्देन तस्योक्तत्वान्न तदर्थो व्याख्यातः ।

ननु तोकशब्दोऽप्यपत्यसामान्यनाम । सत्यं पुनरुक्तिपरिहाराय विभिन्नविषयत्वे वक्तव्ये प्रथमप्राप्तः पुत्रार्थो द्वितीयः पौत्रार्थो व्याख्यात इति । किञ्च । **गवां** चास्मदादिसम्बन्धिनीनां धेनूनां च त्वं त्राता रक्षिता भव । एवं तोकस्य तनयस्य गवामिति पदत्रयं बाह्ये व्याख्यातम् । अध्यात्मं व्याख्याति । **ज्ञानेति** ।। तोकस्य तनयस्य गवामिति पदत्रयं यथासङ्ख्यं ज्ञानसौख्यवाचामिति व्याख्यातव्यम् । अद्वैवेत्ययं मुख्यार्थ इत्युक्तम् । पुत्रो हि तोकशब्दः ज्ञानं चात्मनो जायत इति पुत्रः । 'ज्योतिर्हि पुत्रः परमे व्योमन्' इति च श्रुतिः । ज्ञानजन्यत्वात्सौख्यं पौत्रशब्दं गावो वाच इति तु प्रसिद्धम् । कथंभूतः । यस्त्वमनिमेषम-निमेषान्सुरांश्च । रक्षमाणः संरक्षमाणो रक्षसि । कुतः । **तव व्रते** त्वद्व्रते त्वद्विषये कर्मणि । तैर्देवैः प्रवृत्तेऽनुष्ठिते सतीति शेषः ।। १२ ।।

**मन्त्रार्थमञ्जरी–** (हे) वन्द्य अग्ने देव त्वम् । नः, अस्मदीयस्य । मघोनः, धनवतः, यजमानस्येति यावत् । तन्वः, तन्वाः, द्वितीयार्थे षष्ठी, तनूशब्दस्य तदवयववृत्तिताभ्युपगमेन द्वितीयाबहुवचनान्तं वा तव पायुभिः, पातेः उण्, तवैव रक्षाशक्तिभिः । रक्ष, अपमृत्युनिरासेन पालय । 'तन्वश्च' इति चशब्देन यजमानस्य ज्ञानभक्त्यादिकं समुच्चिनोति । यद्वा नः, अस्माकम्, । मघोनः, यजमानस्य । च तन्वः इति व्याख्येयम् । किं च, (त्वम्) तोकस्य, अस्मत्पुत्रस्य । (च) त्राता । (असि), भवेति यावत् । न केवलं पुत्रस्य, किं तु तनये, तनयस्य, अस्य पुत्रस्य) सूनोरपि, पौत्रस्यापि । (त्राता) (असि), भव । अन्यथा– तोकपदेन पौनरुक्त्यात् । किं च, गवाम्, (च) अस्मदादिसम्बन्धिनां गवां धेनूनां च । (त्राता) रक्षिता । (असि) भव । यस्त्वम् अनिमेषम् अनिमेषान्, सुरान् । (च) रक्षमाणः असि । कुतः ? तव व्रते, त्वद्विषयकर्मणि । (तैर्देवैरनुष्ठिते सति) इति शेषः । अध्यात्मं तु तोकस्य, (तनये) तनयस्य, गवाम्' इति पदत्रयं क्रमाज्ज्ञानसौख्यवाग्वाचकम्, ज्ञानस्यात्मतोकत्वात्, सुखस्य च ज्ञानजत्वात् (वाचां गोपदवाच्यत्वेन प्रसिद्धत्वाच्च) अन्यत्समानम् ।। १२ ।।

**स्कन्द–** **त्वम् नः** अस्मान् हे **अग्ने!** तव योग्यैः हे **देव! पायुभिः** पालनैः **मघोनः** मघवतः हविर्लक्षणेन धनेन धनवतः । हविष्मतः सत इत्यर्थः । **रक्ष** त्रायस्व । न चास्मानेव केवलान् । किं तर्हि । **तन्वः** च शरीराणि च । कस्य । सामर्थ्यादस्मत्पुत्रस्य पौत्रस्य च । अस्मान् पुत्रान् पौत्रांश्चेत्यर्थः । हे **वन्द्य!** स्तुत्य! किं कारणम् । उच्यते । **त्राता तोकस्य** ।

**तनये** षष्ठ्यर्थे सप्तम्येषा । द्वयोश्चानयोरपौनरुक्त्यायापत्यनाम्नोः पुत्रविषयमेकं पौत्रविषयकमन्यत् । पुत्रस्य पौत्रस्य च इत्यर्थः । **गवां** च **त्राता** रक्षिता **असि** त्वम् निमेषवर्जितं यत्नेन परिरक्षन् **तव व्रते** यागकर्मणि व्यवस्थितानां च यजतां पुत्रपौत्राणां गवां च रक्षिता असि त्वम् ।। १२ ।।

**वेङ्कटमाधव–** **त्वम्** अस्मान् **अग्ने**! तव **देव**! रक्षणैः हविष्मतः रक्ष पुत्रान् च **वन्द्य**! । त्वं हि **पुत्रस्य** पुत्रेऽपि **गवाम्** रक्षकः भवसि त्वदीये कर्मणि प्रवृत्तं मनुम् अनवरतम् रक्षमाणः ।। १२ ।।

**मुद्गल–** हे **वन्द्य**! वन्दनीय! **अग्ने**! **देव**! **त्वम्** तव **पायुभिः** त्वदीयैः पालनैः **मघोनः** घनयुक्तान् **नः** अस्मान् **रक्ष** । तथा **तन्वः** च तनूः पुत्रदेहानपि रक्ष । **तोकस्य** अस्मदीयस्य पुत्रस्य यः तनयोऽस्मत्पौत्रादिः **तव व्रते** त्वदीये कर्मणि **अनिमेषाम्** निरन्तरम् रक्षमाणः सावधानो वर्तते, तस्मिन् **तनये** या गावः सन्ति तासाम् **गवाम् त्राता** रक्षकः **असि** । ईदृशस्य तव अस्मद्रक्षणे किमु वक्तव्यमित्यर्थः ।। १२ ।।

**सायण–** हे **वन्द्य**! वन्दनीय! **अग्ने**! **देव**! **त्वम्** तव **पायुभिः** त्वदीयैः पालनैः **मघोनः** घनयुक्तान् **नः** अस्मान् **रक्ष** । तथा **तन्वः** च तनूः पुत्रदेहानपि रक्ष । **तोकस्य** अस्मदीयस्य पुत्रस्य यः तनयोऽस्मत्पौत्रादिः **तव व्रते** त्वदीये कर्मणि **अनिमेषाम्** निरन्तरम् रक्षमाणः सावधानो वर्तते, तस्मिन् **तनये** या गावः सन्ति तासाम् **गवाम् त्राता** रक्षकः **असि** । ईदृशस्य तव अस्मद्रक्षणे किमु वक्तव्यमित्यर्थः ।

मघोनः । शसि 'श्वयुवमघोनामतद्धिते' (पा.सू.६-४-१३३) इति संप्रसारणम् । तन्वः । 'सुपा सुपो भवन्ति' इति शसो जसादेशः । पूर्वसवर्णदीर्घस्य- 'दीर्घाज्जसि च' इति प्रतिषेधः । 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् । शसि हि 'उदात्तयणो हल्पूर्वात्' इति विभक्त्युदात्तत्वं स्यात् ।। १२ ।।

**सिद्धाञ्जनम्–** हे **वन्द्य**! स्तुत्य, **आग्ने**! **देव**!, **मघोनः** मघवतः, मघं धननाम तद्वतः **नः** अस्मान् तव **पायुभिः** पालनैः **रक्ष**, **तन्वश्च** तनूश्च शरीराणि च अस्मत्सम्बन्धीनि त्वं **रक्ष** (तन्वः, शसो जसादेशः)। **तव व्रते** नित्ये कर्मणि, कर्तव्ये त्वदीये देवकार्ये स्थितस्त्वं

**अनिमेषं** निमेषवर्जं विच्छेदमन्तरा रक्षमाणः रक्षितव्यं सर्वं शत्रुभ्यो रक्षन् **गवां** गोपदवाच्यचिद्रश्मिधनानां **तोकस्य** सन्तानस्य **तनये** तनयस्य, (षष्ठ्यर्थे सप्तमी) तत्प्रभवस्य सन्ततिविशेषस्य च **त्राता असि** रक्षको भवसि, न केवलं दिव्यधनरक्षा, शरीररक्षा वा प्रार्थ्यते, आग्नेये व्रते चिद्रश्मिभूतगोधनसन्ततिश्च रक्षिता भवतीति अग्निदेवप्रभावोऽपि वर्णितः ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**त्वम॑ग्ने यज्य॑वे पा॒युरन्त॑रोऽनिष॒ङ्गाय॑ चतुर॒क्ष इ॑ध्यसे ।**
**यो रा॒तह॑व्योऽवृ॒काय॒ धाय॑से की॒रेश्चि॒न्मन्त्रं॒ मन॑सा व॒नोषि॒ तम् ।। १३ ।।**

त्वम् । अ॒ग्ने॒ । यज्य॑वे । पा॒युः । अन्त॑रः । अ॒नि॒ष॒ङ्गाय॑ । च॒तुः॒ऽअ॒क्षः । इ॒ध्य॒से॒ । यः । रा॒तऽह॑व्यः । अ॒वृ॒काय॑ । धाय॑से । की॒रेः । चि॒त् । मन्त्र॑म् । मन॑सा । व॒नोषि॑ । तम् ।। १३ ।।

## ऋग्भाष्यम्

**........................यज्योश्च त्वं पालको ह्यन्तरश्च ।**
**नितरां यः सङ्गहीनोऽनिषङ्गस्तस्मै भक्त्या दीप्यसे ज्ञानदृष्ट्या ।**
**द्विशीर्षत्वाच्चतुरक्षोऽधियज्ञो 'द्वे शीर्षे' इति वागुत्तरत्र ।**
**यो दत्तहव्यस्तेऽतिसौम्याय पीत्यै कर्तुर्मन्त्रं सम्भजसे हि तस्य ।। १३ ।।**

**ऋग्भाष्यटीका– त्वमग्ने यज्यवे** । यज्योश्च । हे **अग्ने! त्वं यज्यवे** यज्योर्यष्टुः । **पायुः** पालकश्च **अन्तरः** अन्तर्यामी चासि । अन्तः क्रियाः प्रवर्तयसि बहिः फलं ददासीति प्रसिद्ध-मित्यर्थः । किञ्च । यो यज्युरनिषङ्गो नितरां सङ्गहीनः । सामर्थ्यान्नेर्नञा सम्बन्धः । तस्मा **अनिषङ्गाय** यजनफलतया स्वर्गादिकमकामयमानाय । तादर्थ्ये चतुर्थी । **चतुरक्षः** त्वं भक्त्याराधितो ज्ञानदृष्ट्या ज्ञानदृष्टिं दत्वेति यावत् । **इध्यसे** । 'इन्धी दीप्तौ' । दीप्यसे प्रतीयसे । चतुरक्षत्वमग्नेः कथमित्यत आह । **द्विशीर्षत्वादिति** ।। प्रतिशीर्षं द्व्यक्षत्वाच्चेति शेषः । अधियज्ञोऽग्निः । स हि यज्ञमधिकरोति । द्विशीर्षत्वं कुत इत्यत आह । **द्वे इति** ।। 'च॒त्वारि॒ शृङ्गा॒ त्रयो॑ अस्य॒ पादा॒ द्वे शी॒र्षे स॒प्त हस्ता॑सो अस्य' इत्युत्तरत्र वागस्ति । कथं भूतो यष्टा । यो **अवृकाय** वृक इति क्रूरस्य प्राणिविशेषस्य नाम । क्रूरे तदुपचर्यते । तस्य नञा समासः । अतिसौम्याय ते तुभ्यं **धायसे** धेट् पाने भावेऽसुन् । पीत्यै पानाय । **रातहव्यः** रा दाने ।

दत्तहव्यः । हव्यं च सोमाज्यक्षीरादिकम् । न केवलं तदीयेन हविषा प्रीयसे । किन्तु **कीरेः** त्वत्सेवायाः कर्तुः । ऋत्विक् नामत्वेऽपि कर्तृत्वमेव निमित्तम् । तस्य अनिषङ्गस्य । तं भक्त्योच्चारितं **मन्त्रं चित्** मन्त्रमपि । **मनसा** तुष्ट्या । **वनोषि** सम्भजसे हि ॥ १३ ॥

**मन्त्रार्थमञ्जरी–** (हे) अग्ने त्वम् । यज्यवे, यज्योः, यष्टुः । पायुः, पालकः । (च) । अन्तरः, अन्तर्यामी । (चासि), अन्तः क्रियाः प्रवर्तयसि, बहिः फलं ददासि । किं च, (यः) यज्युः । अनिषङ्गो नितरां सङ्गहीनः, सामर्थ्यान्नेर्नञा सम्बन्धः, तस्मै अनिषङ्गाय, यजनफलतया स्वर्गादिकमकामयमानाय, तादर्थ्ये चतुर्थी । 'चत्वारि शृङ्गा' (ऋ०म०४।५८।३) इत्यादेर्द्विशीर्षत्वात् चतुरक्षः (त्वम्) । भक्त्या (आराधितः) (ज्ञानदृष्ट्या) ज्ञानदृष्टिं दत्त्वेति यावत् । इध्यसे, 'ञिइन्धी दीप्तौ', दीप्यसे, प्रतीयसे । कथं भूतो यष्टा ? यः, वृकाय, 'वृकः' इति क्रूरस्य प्राणिविशेषस्य (ईहा मृगस्य) नाम, क्रूरे तदुपचर्यते, तस्य नञा समासः, अतिसौम्याय । (ते), तुभ्यम् । धायसे, 'धेट् पाने' भावेऽसुन्, पानाय । रातहव्यः, दत्तहव्यः, हव्यं च– सोमाज्यक्षीरादिकम् । (तस्मै) 'यज्यवे इध्यसे' इति पूर्वेणान्वयः । न केवलं तदीयेन हविषा प्रीयसे, किं तु कीरेः, त्वत्सेवायाः कर्तुः । (तस्य) अनिषङ्गस्य । तम्, भक्त्योच्चारितम् । मन्त्रम् चित्, मन्त्रमपि । मनसा, तुष्ट्या । वनोषि, सम्भजसे । (हि) ॥ १३ ॥

**स्कन्द– त्वम्** हे **अग्ने! यज्यवे** तादर्थ्ये एषा चतुर्थी । यष्टुरर्थाय । **पायुः** स्तोतृणां यजमानानां च पालयिता । **अन्तरः** सन्निकृष्टश्च । ज्ञातिस्थानीयश्चेत्यर्थः । कीदृशाय यज्यवे । **अनिषङ्गाय** न निषज्यतेऽन्यदेवतापरिचर्यायां कामभोगेषु वेत्यनिषङ्गः, तस्मै । त्वत्स्तुतियागपराय अभोगप्रधानाय वेत्यर्थः । किं करोषि । उच्यते । **चतुरक्षः इध्यसे** चत्वार्यक्षीणि यस्य स चतुरक्षः । अक्षिभिश्चात्र मुखानि लक्ष्यन्ते । चतुर्मुखः दिक्चतुष्टयाभिमुखो दीप्यसे । समन्ताद् यज्ञे दीप्यस इत्यर्थः । कीदृशो यज्युः । उच्यते । यः **रातहव्यः** पूर्वमपि दत्तहविष्कः । कस्मै । **अवृकाय** वृकशब्देनात्र हिंस्रप्राणिवचनत्वाद्धिंस्रत्वं लक्ष्यते । अहिंस्राय तुल्यम् । अथवा 'कुक वृक आदाने' इत्यस्यैतद्रूपम् । आदातव्यानामनादात्रे स्तोतॄणां यजमानानां च देवहार्यं यद्धनं तस्याप्यनपहर्त्र इत्यर्थः । **धायसे** 'धेट् पाने' इत्यस्यैतद्रूपम् । आज्यसोमपयः प्रभृतीनां पात्रे । अथवा वृश्चतेः छेदनार्थस्य भावे वृकः । धायस इत्यपि पानवचनः । तेन च भोगो लक्ष्यते । तादर्थ्ये चोभयत्र चतुर्थी । अच्छिन्नाय पानाय । अध्यवच्छिन्नस्य भोगस्यार्थाय यो

दत्तहविष्क इत्यर्थः । **कीरेः चित्** 'कीरिः' (निघ.३-१६) इति स्तोतृनाम । चिच्छब्दोऽप्यर्थे । यो दारिद्र्यात्र यजते स्तौत्येव केवलं तस्यापि स्वभूतं स्तुतिलक्षणम् **मन्त्रम् मनसा** हृदयेन सादर एव भूत्वा त्वम् **वनोषि** तम् । वनिरत्र याच्ञार्थः । सम्भक्त्यर्थे वा । तच्छब्दश्रुतेश्च यच्छब्दोऽध्याहार्यः । यः करोति, याचसे प्रार्थयसे तम्, सम्भजसे वा तमित्यर्थः ।। १३ ।।

**वेङ्कटमाधव– त्वम् अग्ने!** यजमानार्थं कर्मणोऽन्तरङ्गो रक्षको रक्षोभिः **अनिषङ्गाय** रक्षसामनन्ववचाराय सर्वतो ज्वालाभिः पश्यन् समिध्यसे । यः दत्तहविष्कः रक्षोवर्जिताय तस्मै प्रीणनाय सोमं पिबसि । यश्च तस्य स्तोतुः मन्त्रः **तम्** च **मनसा** कामयसे ।। १३ ।।

**मुद्गल–** हे **अग्ने! त्वम् यज्यवे** यज्योः यजमानस्य **पायुः** पालकः **अन्तरः** समीपवर्ती सन् **अनिषङ्गाय** रक्षोभिरसंबद्धाय यज्ञाय **चतुरक्षः** दिक् चतुष्टयेऽपि इन्द्रियस्तानीयज्वालायुक्तः **इध्यसे** दीप्यसे । **अवृकाय** अहिंसकाय **धायसे** पोषकाय तुभ्यम् **रातहव्यः** दत्तहविष्कः यः यजमानोऽस्ति तम् **कारेः चित्** स्तोतुरेव सतः तस्य सम्बन्धिनम् **मन्त्रम्** त्वदीयस्तोत्ररूपम् **मनसा** त्वदीयेन चित्तेन **वनोषि** याचसि ।। १३ ।।

**सायण–** हे **अग्ने! त्वम् यज्यवे** यज्योः यजमानस्य **पायुः** पालकः **अन्तरः** समीपवर्ती सन् **अनिषङ्गाय** रक्षोभिरसंबद्धाय यज्ञाय **चतुरक्षः** दिक् चतुष्टयेऽपि इन्द्रियस्तानीयज्वालायुक्तः **इध्यसे** दीप्यसे । **अवृकाय** अहिंसकाय **धायसे** पोषकाय तुभ्यम् **रातहव्यः** दत्तहविष्कः यः यजमानोऽस्ति तम् **कारेः चित्** स्तोतुरेव सतः तस्य सम्बन्धिनम् **मन्त्रम्** त्वदीयस्तोत्ररूपम् **मनसा** त्वदीयेन चित्तेन **वनोषि** याचसि ।।

यज्यवे । 'यजिमनिशुन्धि' (उ.सू.३-३००) इत्यादिना यजतेः युप्रत्ययः । पायुः । 'कृवापाजि' इत्यादिना उण् । 'आतो युक् चिण्कृतोः' (पा.सू.७-३-३३) इति युगागमः । अनिषङ्गाय । 'षञ्ज सङ्गे' । न विद्यते निषङ्गोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । चतुरक्षः । चत्वार्यक्षीणि ज्वालारूपाणि यस्यासौ चतुरक्षः । 'बहुव्रीहौ सक्थ्यक्ष्णोः' (पा.सू.५-४-११३) इति समासान्तः षच्प्रत्ययः । 'चितः' इत्यन्तोदात्तत्वम् । धायसे । 'वहिहाधाञ्भ्यश्छन्दसि' इति असुन् । 'णित्' इत्यनुवृत्तेः 'आतो युक् चिण्कृतोः' इति युगागमः । कीरेः । 'कॄत संशब्दने' । अस्मात् ण्यन्तात् 'अच इः' इति इप्रत्यये णिलोपे धातोरन्त्य-

लोपश्छान्दसः । मन्त्रम् । 'मत्रि गुप्तभाषणे' । पचाद्यचि वृषादिषु पाठादाद्युदात्तत्वम् । वनोषि । 'वनु याचने' । 'तनादिकृञ्भ्य उः' । प्रत्ययस्वरः ।। १३ ।।

**सिद्धाञ्जनम्**– हे **अग्ने! त्वं यज्यवे** यजमानस्य अर्थाय तादर्थ्ये चतुर्थी, यजतेर्युप्रत्ययः, **पायुः** पालयिता (कृ वा पा जि-इत्यादिना उण्) **अन्तरः** अन्ततरः, सन्निकृष्टः पालको यजमानस्येत्यर्थः । **अनिषङ्गाय** न विद्यते निषङ्ग नितान्तं सङ्गो यस्य तस्मै यजमानस्यार्थाय त्वं **चतुरक्षः** चत्वारि अक्षीणि यस्य सः, त्रिलोक्यां तुरीयं धामनि च अग्नेर्दृष्टिर्यजमानार्थं वर्तते, तथाभूतः **इध्यसे** दीप्यसे, चतसृषु दिक्षु अग्नेर्ज्वालारूपाणि अक्षीणि तल्लक्षिता दृष्टयः पतन्ति इत्यभिप्रेत्य दिक्चतुष्टये ज्वालायुक्त इति स्थूलव्याख्या । **यः** यजमान **रातहव्यः** रातं दत्तं हव्यं हविर्येन स दत्तहविष्कः, कस्मै? **अवृकाय** अहिंस्राय (छेदनार्थाद् वृश्चतेः भावे कः) **धायसे** पोषकाय (धान घातोः आतो युक्, छन्दसि असुन्) तुभ्यम् । एवं यो यजमानोऽस्ति **कीरेः चित्** स्तोतुरेव सतस्तस्य (कीरिः स्तोतृनाम) तं तत्सम्बन्धिनं **मन्त्रं** त्वदीयं स्तोत्ररूपं **मनसा** हृदयेन रहसीत्यर्थः, **वनोषि** याचसि, तथाविधस्य यजमानस्य स्तोतुः मन्त्रात्मकं स्तोत्रं तव तथा प्रियं यथा त्वमेव तत् प्रार्थयसे ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**त्वमग्न उरुशंसाय वाघते स्पार्हं यद्रेक्णः परमं वनोषि तत् । आध्रस्य चित्प्रमतिरुच्यसे पिता प्र पाकं शास्सि प्र दिशो विदुष्टरः ।। १४ ।।**

त्वम् । अग्ने । उरुऽशंसाय । वाघते । स्पार्हम् । यत् । रेक्णः । परमम् । वनोषि । तत् । आध्रस्य । चित् । प्रऽमतिः । उच्यसे । पिता । प्र । पाकम् । शास्सि । प्र । दिशः । विदुःऽतरः ।। १४ ।।

## ऋग्भाष्यम्

**महास्तोत्राय वदते स्पार्हमिष्टं रेक्णः सुखं परमं तद्ददासि ।**
**आ समन्ताद्धारकस्यापि वायोः प्रज्ञानदः प्रोच्यसे त्वं पिता च ।**
**प्रशास्सि त्वं परिपक्वाधिकारं प्रदेशकत्वादखिलं त्वं सुवेत्ता ।। १४ ।।**

**ऋग्भाष्यटीका**– त्वमग्न उरु । महास्तोत्राय । हे **अग्ने** त्वं उरुः शंसो यस्यासावुरुशंसस्तस्मै महास्तोत्राय । **वाघते** वदते । स्तोत्रे ऋत्विङ्नामत्वेऽप्येतदेव निमित्तं **यत्स्पार्हं** स्पृहणीयमिष्टं

**परमं रेक्णः** धननामैतत् । सुखमेव च परमं धनमिति सुखं **तद्वनोषि** । दानार्थोयमत्रेति ददासि । कथंभूतः यस्त्वं **आध्रस्य चित्** आसमन्ताद्धारकस्यापि । महीध्र इति यथा । वायोः स हि सप्तस्कन्धगतो लोकान् यो बिभर्ति महाबल इत्यादिना समन्ताद्धारकः प्रसिद्धः । **प्रमतिः** प्रकृष्टा मतिर्यस्मादिति प्रज्ञानदः **पिता चोच्यसे** सद्भिः प्रोच्यसे । यश्च त्वं **प्रपाकं** प्रकृष्टपाकवन्तं परिपकाधिकारम् । आविर्भूतज्ञानयोग्यत्वं पुरुषं **प्रशास्सि** प्रकर्षेण शिक्षयसि । **प्रदिशः** प्रदेशकः । इगुपधलक्षणः कः । इदं च प्रपाकं शास्सीत्यनेन पुनरुक्तमित्यतो हेतुत्वेन व्याख्याति ।। **प्रदेशकत्वादिति** ।। सामान्यं विशेषे हेतुः । अत एवाखिलम् अखिलस्येत्युक्तम् । यश्च त्वं **विदुष्टरो** विद्वत्तरः । अखिलं सुवेत्ता तृन्नंतत्वाद्द्वितीया ।। १४ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने त्वम् (उरुशंसाय) उरुः शंसो यस्यासावुरुशंसस्तस्मै महास्तोत्राय । वाघते, वदते, स्तोत्रं कुर्वते, (वै०नि०३।१८) ऋत्विङ्नामत्वेऽप्येतदेव निमित्तम् । यत् । स्पार्हम्, स्पृहणीयम्, इष्टम् । परमम् । रेक्णः, धननामैतत् (वै० नि० २।१०) सुखमेव च 'परमं धनम्' इति सुखम् । तत् । वनोषि, ददासि, दानार्थोऽत्र वनतिः, उविकरणम् । कथं भूतः ? (यः) त्वम् । आध्रस्य चित्, आ समन्ताद्धारकस्यापि, 'महीध्रे' (अम० २।३।२) इत्यत्रेव दधातेः ड्रप्रत्ययः, वायोः, स हि 'सप्तस्कन्धगतो लोकान्यो बिभर्ति महाबलः' इत्यादिना धारकः प्रसिद्धः । प्रमतिः, प्रकृष्टा मतिर्यस्मादिति प्रज्ञानदः । पिता (च) उच्यसे । (यश्च) त्वम् । प्र पाकम्, प्रकृष्टपाकवन्तम्, परिपकाधिकारम्, आविर्भूतज्ञानयोग्यताकं पुरुषम् । (प्र) शास्सि, प्रकर्षेण शिक्षयसि । कुतः? प्रदिशः, प्रदेशकः, 'इगुपधज्ञाप्रीकिरः कः' हेतुगर्भम्, उपदेष्टृत्वादित्यर्थः । (यश्च), त्वम् । विदुष्टरः, विद्वत्तरः, अखिलज्ञ इत्यर्थः । (सः) 'वनोषि' इति पूर्वेणान्वयः ।। १४ ।।

**स्कन्द– त्वम्** हे **अग्ने! उरुशंसाय** 'शंसु स्तुतौ' । बहुस्तुतये । कस्मै । **वाघते** 'वाघतः' (निघ.३-१८) इति ऋत्विङ्नाम । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः । यजमाने वर्तते । ऋत्विग्वतते यजमानाय **स्पार्हम्** स्पृहणीयमत्यन्तोत्कृष्टम् **यद् रेक्णः** धनम् **परमम् वनोषि तत्** परममिति क्रियाविशेषणम्, न धनविशेषणम्, स्पार्हमित्यनेन पौनरुक्त्यप्रसङ्गात् । वनोषीति वनिर्दानार्थः । 'वंस्वा नो नार्या पुरु' (ऋ.सं.८-२३-७) इति यथा । सुष्ठु ददासि तदित्यर्थः । **आध्रस्य चित्** 'आध्र आढ्यालुर्दरिद्रः' (तु.या.१२-१४) । चिच्छब्दोऽप्यर्थे । दरिद्रस्यापि यष्टुं समर्थस्य

**प्रमतिः उच्यसे** प्रकृष्टमतिरनुग्रहपर **उच्यसे** कथ्यसे त्वं जनैः । कीदृशः । **पिता** पितृसदृशः । **पाकम् शास्सि** पाकः अविपक्वप्रज्ञः परिपक्तव्यप्रज्ञत्वात् । तमपि प्रकर्षेणानुशास्सि । प्रज्ञामस्य जनयसीत्यर्थः । **प्र दिशः** च प्रकर्षेणानुशास्सि । दिकृछब्देनात्र तन्निवासिभूतानि लक्ष्यन्ते । सर्वभूतान्यनुशास्सीत्यर्थः । **विदुष्टरः** विद्वत्तरः ।। १४ ।।

**वेङ्कटमाधव– त्वम् अग्ने!** । बहुस्तुतये यजमानाय स्पृहणीयम् **यत्** धनम् उत्तमम् **तत्** प्रयच्छसि । तथा दानाधारभूतस्य दरिद्रस्य **प्रमतिः पिता उच्यसे । प्र शास्सि** च विद्वत्तरस्त्वं पक्तव्यप्रज्ञमज्ञम् **प्र दिशः** चतस्रो दिशः ।। १४ ।।

**मुद्गल–** हे **अग्ने! त्वम् उरुशंसाय** बहुभिः स्तोतव्याय **वाघते** ऋत्विजे तदुपकारार्थम् **स्पार्हम्** स्पृहणीयम् **परमम्** उत्तमम् **यत् रेक्णः** धनमस्ति **तत्** धनम् **वनोषि** अनुष्ठाता लभतामिति कामयसे । तथा त्वम् **आध्रस्य चित्** सर्वतो धारणीयस्य यजमानस्यापि **प्रमतिः** प्रकृष्टबुद्धियुक्तः **पिता** पालक इत्यभिज्ञैः **उच्यसे** । तथा **विदुष्टरः** अतिशयेनाभिज्ञस्त्वम् **पाकम्** शिशुं तादृशं यजमानं **प्र शास्सि** प्रकर्षेणानुशिष्टं करोषि । तथा **दिशः** प्राच्यादिकाः प्र शास्सि । त्वदीयशासनाभावे अनुष्ठातृणां विभ्रमः स्यात् ।। १४ ।।

**सायण–** हे **अग्ने! त्वम् उरुशंसाय** बहुभिः स्तोतव्याय **वाघते** ऋत्विजे तदुपकारार्थम् **स्पार्हम्** स्पृहणीयम् **परमम्** उत्तमम् **यत् रेक्णः** धनमस्ति **तत्** धनम् **वनोषि** अनुष्ठाता लभतामिति कामयसे । तथा त्वम् **आध्रस्य चित्** सर्वतो धारणीयस्य यजमानस्यापि **प्रमतिः** प्रकृष्टबुद्धियुक्तः **पिता** पालक इत्यभिज्ञैः **उच्यसे** । तथा **विदुष्टरः** अतिशयेनाभिज्ञस्त्वम् **पाकम्** शिशुं । 'पोतः पाकोऽर्भको डिम्भः' (भम.२-५-३०) इत्यभिधानात् । यास्कोऽप्येवमाह-'पाकः पक्तव्यो भवति' (निरु.३-१२)। तथाविधं यजमानं **प्र शास्सि** प्रकर्षेणानुशिष्टं करोषि । तथा **दिशः** प्राच्यादिकाः प्र शास्सि । त्वदीयशासनाभावे अनुष्ठातृणां विभ्रमः स्यात् ।

तथा च श्रयते- 'देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्' इति । स भ्रमो दक्षिणादिग्गत अग्निना निवर्तते । तदपि तत्रैवाम्नातम्– 'पथ्यां स्वस्तिमयजन् प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणा' (तै.सं.६.१.५.१-२) इति । ऐतरेयिणापि तथैवाम्नातम्–'अथो एतं वरमवृणीत मयैव प्राचीं दिशं प्रजानाथाग्निना दक्षिणाम्' (ऐ.ब्रा.१-७) इति । उरुशंसाय ।

'शंसु स्तुतौ' । शस्यते इति शंसः । कर्मणि घञ् । ञित्स्वरेणाद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । स्पार्हम् । स्पृहासंबन्धि । 'तस्येदम्' इति अण् । रेक्णः । 'रिचिर् विरेचने' । 'रिचेर्धने घिच्च' (उ.सू.४-६३८) इति असुन् । चकारात् नुडागमः । 'चजोः कु घिण्ण्यतोः' (पा.सू.७-३-५२) इति कुत्वम् । आध्रस्य । 'ध्रै तृप्तौ' । 'आदेच उपदेशेऽशिति' (पा.सू.६-१-४५) इति आत्वम् । 'आतश्चोपसर्गे' (पा.सू.३-१-१३६) इति कप्रत्ययः । शास्सि । 'शासु अनुशिष्टौ' । अदादित्वात् शपो लुक् । सिपः पित्त्वादनुदात्तत्वे धातुस्वरः । पाकं च प्र शास्सि दिशश्च प्र शास्सि इत्यत्र चार्थो गम्यते । अतः 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । विदुष्टरः । विद्वच्छब्दात् तरपि 'अयस्मयादीनि च्छन्दसि (पा.सू.१-४-२०) इति भसंज्ञायां 'वसोः संप्रसारणम्' इति संप्रसारणं परपूर्वत्वम् । 'शासिवसि' इति षत्वम् । तरपः पित्त्वादनुदात्तत्वे वसोः स्वरेण उकार उदात्तः ।। १४ ।।

**सिद्धाञ्जनम्**– हे **अग्ने!**, **त्वम् उरुशंसाय** बहुस्तुतये **वाघते** मेधाविने (यजननिर्वाहित्वाद् ऋत्विङ्नामसु पठितम्) तदर्थं **स्पार्हं** स्पृहणीयं (स्पृहासम्बन्धि तस्येदमित्यण्) **परमं** उत्तमं **यत् रेक्णः** (रिचिर् विरेचने, नुडागमः, असुन् छन्दसि) धनमस्ति (परमत्वात् नेदं लौकिकम्, स्पष्टम्) **तत्** धनं **वनोषि** कामयसे, मेधाविने बहुस्तोत्राय उत्तमं धनं तस्य प्राप्तव्यतया कामयसे । **आध्रस्य चित्** सर्वतो धारणीयस्य दुर्बलस्यापि यजमानस्य (ध्रै तृप्तौ, उपदेशे शिति इति धातोः आत्वे, 'आतश्चोपसर्गे' इति कप्रत्ययः) **प्रमतिः** प्रकृष्टप्रज्ञः **पिता** पालकः इति **उच्यसे** विज्ञैरिति शेषः । **पाकं** पक्तव्यः पाकः, अविपक्वप्रज्ञ इत्यर्थः, अत एव शिशुः पाको भवति, तं **प्र शास्सि** अनुशिष्टं करोषि, **विदुष्टरः** अतिशयेन विद्वान् त्वं (विद्वच्छब्दात् तरप्, वसोः सम्प्रसारणं छान्दसम्) **दिशः** सर्वाश्च दिशः प्र शास्सि दिक्छब्दलक्षितानि दिक्षु सर्वत्र वेदितव्यानि प्रकर्षेण अनुशास्सीत्यर्थः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**त्वम॑ग्ने प्रय॑तदक्षिणं नरं॒ वर्मे॑व स्यू॒तं परि॑ पासि वि॒श्वतः॑ । स्वा॒दु॒क्ष॒द्मा यो व॑स॒तौ स्यो॑न॒कृज्जी॑वया॒जं यज॑ते॒ सो॑प॒मा दि॒वः ।। १९, ३४ ।।**

त्वम् । अ॒ग्ने॒ । प्रय॑तऽदक्षिणम् । नर॑म् । वर्म॑ऽइव । स्यू॒तम् । परि॑ । पा॒सि॒ । वि॒श्वतः॑ । स्वा॒दुऽक्ष॒द्मा । यः॒ । व॒स॒तौ । स्यो॒न॒ऽकृत् । जी॒व॒ऽया॒जम् । यज॑ते । सः॒ । उ॒प॒ऽमा । दि॒वः ।। १९, ३४ ।।

## ऋग्भाष्यम्

**धृतं वर्मेव परिपासि नित्यं प्रयत्नाचो दक्षिणादो मखेषु ।**
**स्वादुक्षद्मा सुखगेहो गृहे च स्योनं सुखं यः परेषां करोति ।**
**यावज्जीवं यजने सुप्रतिज्ञो भूत्वा च यो यजते तस्य सैव ।**
**द्युप्राप्तिभावे ह्युपमा देह एव क्षमेति वा वसतिर्ज्ञानमार्गे ।। १५, ३४ ।।**

**ऋग्भाष्यटीका– त्वमग्ने प्रयत** । धृतम् । हे **अग्ने! त्वम्** । **प्रयतदक्षिणं** प्रयतो दक्षिणायाम् । प्रयतदक्षिणः । **यो** मखेषु प्रयत्नाद्दक्षिणादस्तं **नरं** मनुष्यम् । **विश्वतो** विश्वस्मिन्काले नित्यम् । **परिपासि** परितो रक्षसि । किमिव । **स्यूतम्** अनुस्यूतम् । धृतं **वर्मेव** कवचमिव । पुनः कथंभूतं नरं यः **स्वादुक्षद्मा** स्वाद्विति सुखहेतुत्वमुच्यते । ककारागमेन क्षद्मेति सद्म । सुखगेहः सुखसाधनानि गेहानि यस्मात्परेषां भवन्तीति । सुग्रहाणां दातेति यावत् । यश्च **वसतौ** गृहे स्वीये । **स्योनकृत्** । स्योनं सुखं परेषाम् अतिथीनामन्नदानादिना करोति । अत एव पुनरुक्तिभिया स्वादुक्षद्मा स्वाद्वन्नदातेति न व्याख्यातम् । यश्च **जीवयाजं** यजते जीवस्य जीवतो याजो यज्ञो जीवयाजः जीवनेन व्याप्तो यज्ञः । तं यजते अनुतिष्ठतीत्यर्थः । यावन्मरणं यो यज्ञं करोति तमग्निः कदा रक्षिष्यतीत्यतस्तात्पर्यमाह । **यावदिति** ।। यश्च यावज्जीवं यजने सुप्रतिज्ञो दृढदीक्षो भूत्वा यजत इति । यथोक्तसकलविशेषणस्य नरस्य किमैहिकी रक्षैव प्रयोजनम् । नेत्युच्यते किं तु स्वर्गादिकं पारत्रिकमपि फलं भवति । कुतः । आगमात् । तत्रैव कुतो विश्वास इत्यत उक्तं सोपमादिवः । तस्योक्तविशेषणस्य नरस्य दिवः प्राप्ताविति शेषः । द्युप्राप्तिभावे सैवोपमा हि । सेतिका देहे सत्येव या क्षमेति वा । या ज्ञानमार्गे वसतिर्निष्ठिति वा स्त्रीलिङ्गेनाकाङ्क्षापूर्णीयेति । एतदुक्तं भवति । आगमोक्तेन साधनेनैहैव क्षमादिकं फलमुपलभ्यते तदुपमानेन पारत्रिकमप्यनुमीयत इति ।। १५, ३४ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने त्वम् । प्रयतदक्षिणम्, प्रयतो दक्षिणायां प्रयतदक्षिणः, यो मखेषु प्रयत्नाद्दक्षिणादस्तम् । नरम्, मनुष्यम् । विश्वतः, विश्वस्मिन्काले, नित्यम् । परिपासि, परितो रक्षसि । किमिव? स्यूतम्, 'षिवु बन्धने', अनुस्यूतम्, धृतम् । वर्मेव, कवचमिव । पुनः कथं भूतं नरम् ? यः । स्वादुक्षद्मा, 'स्वादु' इति सुखहेतुत्वमुच्यते, ककारागमेन 'क्षद्म' इति सद्मोच्यते, स्वादूनि सुखसाधनानि क्षद्मानि सद्मानि यस्मात्परेषां भवन्तीति, सुगृहाणां दातेति

यावत् । (यः) (च) वसतौ, स्वगृहे । स्योनकृत्, स्योनं सुखं परेषामतिथीनामन्नदानादिना करोति । (यः) (च) जीवयाजम् यजते, जीवस्य जीवतो याजो यज्ञो जीवयाजः, जीवनव्याप्तो यज्ञः, तं यजतेऽनुतिष्ठति, यावज्जीवं यो यज्ञं करोति । (तम्) इति पूर्वेणान्वयः । एवम्भूतस्य किमैहिकरक्षैव प्रयोजनम् ? न इत्युच्यते, किं तु स्वर्गादिकं पारत्रिकं च भवति, कथम् ? दिवः, स्वर्गादेः प्राप्तौ । सः, भगवज्ज्ञानमार्गेऽभिनिवेशः । (एव) उपमा, दृष्टान्तः, शास्त्रोक्तसाधनानुष्ठानेनेष्टादिफलोपलम्भोऽधुनोपलभ्यमानः 'पारत्रिकसुखमस्ति' इत्यत्रानुमानं भविष्यतीत्यर्थः ॥ १५ ॥

**स्कन्द– त्वम्** हे **अग्ने** । **प्रयतदक्षिणम्** प्रयच्छतिर्दानार्थः । दत्तदक्षिणम् । अथवा यमु बन्धने । प्रबद्धदक्षिणम् । सन्ततदक्षिणादानमित्यर्थः । **नरम्** मनुष्यम् **वर्मेव स्यूतम्** वर्म कवचम् । यथा कवचमनुस्यूतं हृदयेऽवबद्धं योद्धारं परिपाति, तद्वत् **परि पासि** पालयसि **विश्वतः** सर्वतः । **स्वादुक्षद्मा** 'क्षद्म' (निघ.२-७) इति अन्ननाम । स्वाद्वन्नः । **यः वसतौ** निवासे च **स्योनकृत्** सुखस्य कर्ता । कस्य । सामर्थ्यादतिथे । अतिथिं स्वाद्वन्नं भोजयति सुखाय च शय्यायां शाययतीत्यर्थः । यश्च **जीवयाजम्** यजते जीवो जन्तुः, तेन यो यागः स जीवयागः । यज्ञियपशुलक्षणेन जन्तुना यथेष्टं भवति तथा यः यजत इत्यर्थः । **स उपमा दिवः** 'उपमे' (निघ.२-१६) इति अन्तिकनामः । तात्स्थ्यात् ताच्छाब्द्यम् । प्रथमैकवचनस्यायमाकारः । अन्तिकस्थः सन्निकृष्टो दिवः । स त्वत्प्रसादात् स्वर्गं प्राप्नोतीत्यर्थः । अथवा दिवः स्वर्गस्योपमा उपमानं स भवति । सर्वैः प्राणिभिर्मृष्टाहारसन्तुष्टैः स्वर्गोऽयमिति स्तूयत इत्यर्थः ॥ १५ ॥

**वेङ्कटमाधव– त्वम् अग्ने!** दरिद्रेभ्यः प्रदत्तधनं मनुष्यं कवचमिव उरसि बद्धमिषुभ्यः सर्वेभ्यो दुरितेभ्यः परिरक्षसि । स्वाद्वन्नः **यः** गृहे दरिद्राणां सुखकृत् जीवानामन्नप्रदानाद् यज्ञं करोति, **सः** स्वर्गस्य **उपमा** अन्तिके वर्तते ॥ १५ ॥

**मुद्गल–** हे **अग्ने! त्वम् प्रयतदक्षिणम्** येन यजमानेन ऋत्विग्भ्यो दक्षिणा दत्ता तादृशम् **नरम्** पुरुषं यजमानम् **विश्वतः** सर्वतः **परि पासि** सम्यक् पालयसि । दृष्टान्तः । **स्यूतम्** निश्छिद्रत्वेन सूचीभिः सम्यक् निष्पादितम् **वर्मेव** यथा कवचं युद्धे पाल्यति तद्वत् । **स्वादुक्षद्मा** स्वाद्वन्नः **वसतौ** निवासभूते स्वगृहे **स्योनकृत्** अतिथीनां सुखकारी यः यजमानः **जीवयाजम्**

जीवयजनसहितं यज्ञम् यजते अनुतिष्ठति । **सः** यजमानः **दिवः** स्वर्गस्य **उपमा** दृष्टान्तो भवति । यथा स्वर्गोऽनुष्ठातॄन् सुखयति तथा त्वमपि ऋत्विगादीनित्यर्थः ।। १८ ।।

**सायण–** हे **अग्ने! त्वम् प्रयतदक्षिणम्** येन यजमानेन ऋत्विग्भ्यो दक्षिणा दत्ता तादृशम् **नरम्** पुरुषं यजमानम् **विश्वतः** सर्वतः **परि पासि** सम्यक् पालयसि । दृष्टान्तः । **स्यूतम्** निश्छिद्रत्वेन सूचीभिः सम्यक् निष्पादितम् **वर्मेव** यथा कवचं युद्धे पाल्यति तद्वत् । **स्वादुक्षद्मा** स्वाद्वन्नः **वसतौ** निवासभूते स्वगृहे **स्योनकृत्** अतिथीनां सुखकारी यः यजमानः **जीवयाजम्** जीवयजनसहितं यज्ञम् यजते अनुतिष्ठति । **सः** यजमानः **दिवः** स्वर्गस्य **उपमा** दृष्टान्तो भवति । यथा स्वर्गोऽनुष्ठातॄन् सुखयति तथा त्वमपि ऋत्विगादीनित्यर्थः ।।

स्यूतम् । 'षिवु तन्तुसंताने' । 'निष्ठा' इति क्तः । 'यस्य विभाषा' इति इट्प्रतिषेधः । 'छ्वोः शूडनुनासिके च' (पा.सू.६-४-१९) इति वकारस्य ऊडादेशः । स्वादून् क्षदतीति स्वादुक्षद्मा । क्षदतिः अत्तिकर्मा । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । नित्त्वादाद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । बहुव्रीहौ तु व्यत्ययेन । जीवयाजम् । जीवाः ऋत्विजः इज्यन्ते दक्षिणाभिः पूज्यन्ते अत्रेति अधिकरणे घञ् । कुत्वाभावश्छान्दसः । यद्वा । जीवैः पशुभिः याजनं जीवयाजः । याजयते । 'णेरनिटि' इति णिलोपस्य 'अचः परस्मिन्' इति स्थानिवद्भावात् 'चजोः कु घिण्ण्यतोः' इति कुत्वाभावः । थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् । सोपमा । 'सोऽचि लोपे चेत्पादपूरणम्' इति संहितायां सोर्लोपः । दिवः । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् ।। १८,३४ ।।

**सिद्धाञ्जनम्–** हे **अग्ने!** त्वम् **प्रयतदक्षिणं** प्रयता प्रबद्धा (यमु बन्धने) दक्षिणा युक्तायुक्तविवेकपूर्विका दानक्रिया येन तम् । पात्रमुद्दिश्य द्रव्यत्यागो दानं भवति, तच्च पात्रं देवताप्रतिनिधिभूतं बोध्यम्, अत एव दानं पावनं देवताप्रीणनं भवतीति कीर्त्यते । अथ तथाभूतं नरं **विश्वतः** सर्वतः **परि पासि** परिरक्षसि । तत्र दृष्टान्तः । **वर्मेव स्यूतं** स्यूतं निश्छिद्रतया निष्पादितं (षिवु बन्धने) वर्मेव कवचमिव, यथा कवचं रक्षति मानुषं देहं तथा त्वं विश्वतः तं नरं परिपासि । **यः** यजमानः **स्वादुक्षद्मा** स्वाद्वन्नः अतिथिं स्वाद्वन्नेन प्रीणयतीत्यर्थः, अग्निरतिथिः प्रसिद्धो वेदे । **वसतौ** स्ववासगृहे (अन्तर्यागे स्वगृहं शरीरं भवति) **स्योनकृत्** सुखकारी अतिथीनामिति शेषः । 'स्योनशीरतिथिर्न प्रीणानः' इत्यन्यत्रापि मन्त्रवर्णोऽवधेयः

(१.७३.१.)। यश्च **जीवयाजं यजते** जीवस्य जीवतः याजं यजनं (कुत्वाभावश्छान्दसः) यावज्जीवं अनुतिष्ठति, यद्वा जीवाः प्राणिनः इज्यन्ते पूज्यन्तेऽत्रेति जीवयाजः तं अनुतिष्ठति, **सः** यजमानः **दिवः** द्युलोकस्य **उपमा** समीपवर्ती भवति, इहैव स्वर्गान्तिकस्थो भवति । उपम इत्यन्तिकनाम । सोपमा संहितायां सोर्लोपः पादपूरणाय । उपमा उपमानं, दिवो दृष्टान्त इति एकेषां व्याख्या । जीवयाजमित्यत्र जीवः पशुभिः यजनमिति बाह्यपक्षीयाः ।। १५ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये चतुस्त्रिंशो वर्गः ।।

## ।। अथ पञ्चत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् ।**
**आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम् ।। १६ ।।**

इमाम् । अग्ने । शरणिम् । मीमृषः । नः । इमम् । अध्वानम् । यम् । अगाम । दूरात् । आपिः । पिता । प्रऽमतिः । सोम्यानाम् । भृमिः । असि । ऋषिऽकृत् । मर्त्यानाम् ।। १६ ।।

## ऋग्भाष्यम्

**या मे भवच्छरणप्राप्तिरेषा मर्षस्व तामल्प इति क्रुधो मा ।**
**त्वत्प्राप्त्यर्थं दूरमगाश्च यत्तत्प्राप्यः पिता ज्ञानदो देवतानाम् ।**
**त्वं भ्रामको मानुषाणामृषीणां कर्ता तथा ज्ञानदानेन देव ।। १६ ।।**

**ऋग्भाष्यटीका–** इमाम् । या मे । हे **अग्ने** यैषा **त्वमग्न** इत्यादिनोक्ता । मे भवच्छरणप्राप्तिरिमां ताम् । **नो** मे । **शरणिं** शरणं भवच्छरणप्राप्तिम् । **मी मृषः** अमीमृषः । व्यत्ययेन मर्षस्व सहस्व । प्रार्थनस्याभिप्रायमाह ।। **अल्प इति** ।। अल्पोऽयमतिमहान्तं मां कथं शरणं यातीति धिया मा क्रुधः । क्रोधं मा कार्षीः । कुतः । **इमं अध्वानं** अवधारय दूरात् यं यस्मिन्नगामेत्यस्य तात्पर्यमाह । यद्यस्मात्त्वत्प्राप्त्यर्थं दूरमेवाऽगां तत्तस्मात् । अनादौ भवाध्वनि परिखिन्नः कथञ्चिदिदानीं त्वां प्राप्तोऽस्मि यतस्तस्मान्मीमृष इति भावः । कथम्भूतः ।

यस्त्वं **सोम्यानां** सोममर्हति यः । सोमार्हाणां देवतानाम् । **आपिः** प्राप्यः । **पिता** जनकः । **प्रमतिः** प्रकृष्टा मतिर्यस्माज्ज्ञानदोऽसि । **मर्त्यानां** मानुषाणां **भृमिः** संसारे भ्रामकोऽसि । हे देव तथा **ऋषिकृत्** ऋषीणां कर्तासि । ज्ञानदानेन भक्तानृषीन्करोषीति यावत् ।। १६ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । (या) एषा, 'त्वमग्ने' इत्यादिनोक्ता मे भवच्छरणप्राप्तिः । इमाम्, ताम् । (नः, मे । शरणिम्, शरणम्, भवतु) शरणप्राप्तिम् । मीमृषः, व्यत्ययेन मर्षस्व, सहस्व, 'मृष सहने', 'अल्पोऽयं महान्तं मां कथं शरणं याति?' इनि धिया मा क्रुध इति भावः । कुतः ? यम् इमम् अध्वानम् । अवधार्य यस्मात्त्वत्प्राप्त्यर्थम् दूरात्, दूरम् । (एव) अगाम । तस्मादनादौ भवाध्वनि परिखिन्नाः कथञ्चिदिदानीं त्वां प्राप्ताः स्मो यतस्तस्मात् 'मीमृषः' इति भावः । कथं भूतः ? (यः) त्वम् । सोम्यानाम्, सोमार्हाणाम्, देवानाम् । आपिः, प्राप्यः, आप्नोतेः कर्मणीकारः । पिता, जनकः । प्रमतिः, प्रकृष्टा मतिर्यस्माज्ज्ञानदः । (असि) मर्त्यानाम्, मनुष्याणाम् । भृमिः, भ्रामकः । असि । (हे देव) तथा ऋषिकृत्, ऋषीणां कर्ता । (असि) ज्ञानदानेन भक्तानृषीन्करोषीति यावत् ।। १६ ।।

**स्कन्द–** अत्रेतिहासः– 'हिरण्यस्तूपो यागायाग्निं विहृत्य रक्षोभयाद् दूरं गत्वा गतेषु रक्षस्सु प्रत्यागतः कृतापराधत्वाभिप्रायेणाग्निमाह– **इमाम्** हे **अग्ने! शरणिम्** शॄ हिंसायाम् । आत्मनो हिंसाम् । **मीमृषः** मृष तितिक्षायामिति स्वार्थिको णिच् । लोडर्थे लुङ् । **मीमृषः** क्षमस्व । **नः** अस्माकम् । कतमा । उच्यते । **इमम् अध्वानम् यम् अगाम** त्वां विहृत्यानिष्ट्वा रक्षोभयाद् गताः स्मः **दूरात्** दूरम् । किं कारणम् । उच्यते । यस्मात् **आपिः** ज्ञातिः त्वम् । कीदृशः । **पिता** पितृस्थानीयः । **प्रमतिः** प्रकृष्टमतिः अनुग्रहपरः । केषाम् । **सोम्यानाम्** सोमसम्पादिनां सर्वयजमानानाम् । किञ्च **भृमिः असि** लोकजयेऽपि भ्रमितासि । त्रिष्वपि लोकेष्वप्रतिहत-गतिरित्यर्थः । तमोपघातद्वारेण च दर्शनकृन्मनुष्याणाम् । अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना– इमां हे अग्ने! **शरणिं** संसारप्राप्तिलक्षणां हिंसां मीमृषो नः । मृजेरिदं जकारस्य षकारं कृत्वा छान्दसं रूपम्, न मृषेः । मार्जय अपनयास्माकं संसाराध्वानमिमं यमगाम प्राप्ताः स्मः । दूरात् सृष्टेः प्रभृति । किं कारणम् । यस्मात् त्वम् आपिः पिता प्रमतिः सोम्यानां यस्माच्च भृमिरसि । भ्राम्यतेर्ण्यन्तस्येदं रूपम् । भ्रमयितासि भ्रान्तेः कर्तासि । **ऋषिकृत्** दर्शनकृत् सम्यग्ज्ञानकरश्च मनुष्याणाम् । एतदुक्तं भवति– भ्रान्तेः सम्यग्ज्ञानस्य च त्वं कर्ता । त्वदायत्तौ च संसारप्राप्ति-

मोक्षौ । त्वं च पितृवत् सर्वयजमानानामनुग्रहपरः । अतोऽस्मात् सम्यग्ज्ञानोत्पादनेन मोचयास्मात् संसारादिति ।। १६ ।।

**वेङ्कटमाधव–** अरण्ये तपोऽर्थं गतोऽग्निमाशास्ते– **इमाम् अग्ने!** तपोजनितां हिंसां यथा सहामहे तथा फलप्रदानेन अस्मान् कुरु । तथा **इमम् अध्वानम्** च यम् वयं त्वां द्रष्टुकामाः **दूरात् अगामः** । ज्ञातिः पालयिता **प्रमतिः** च सोमार्हाणां भ्रमणशीलस्त्वमन्धकाराऽपनयनात् मनुष्याणां दर्शनकृत् ।। १६ ।।

**मुद्गल–** हे **अग्ने!** त्वम् **नः** अस्मत्सम्बन्धिनीम् **इमाम्** इदानीं सम्पादिताम् **शरणिम्** हिंसां व्रतलोपरूपाम् **मीमृषः** क्षमस्व । तथा त्वदीयसेवाम् अग्निहोत्रादिरूपां परित्यज्य **दूरान्** दूरदेशम् **यम् इमम् अध्वानम् अगाम** वयं गतयन्तः तमपि क्षमस्वेति शेषः । **सोम्यानाम्** सोमार्हाणाम् अनुष्ठातॄणाम् मर्त्यानाम् त्वम् आप्यादिगुणयुक्तः असि । आपिः प्रापणीयः । पिता पालकः । प्रमतिः प्रकृष्टमननयुक्तः । भूमिः भ्रामकः कर्मनिर्वाहक इत्यर्थः । **ऋषिकृत्** दर्शनकारी अनुजिघृक्षया प्रत्यक्षो भवसीत्यर्थः ।। १६ ।।

**सायण–** 'इमामग्ने' इत्यनया अनाहिताग्निः आविज्यं कृत्वा स्वानावाहुतिं जुहुयात् । ऋत्विजो वृणीते' इति खण्डे 'एवमनाहिताग्निर्गुह्य इमामग्ने शरणिं मीमपो नः' (आश्व. गृ.१.२३.२३) इति सूत्रितम् ।

हे **अग्ने!** त्वम् **नः** अस्मत्सम्बन्धिनीम् **इमाम्** इदानीं सम्पादिताम् **शरणिम्** हिंसां व्रतलोपरूपाम् **मीमृषः** क्षमस्व । तथा त्वदीयसेवाम् अग्निहोत्रादिरूपां परित्यज्य **दूरान्** दूरदेशम् **यम् इमम् अध्वानम् अगाम** वयं गतयन्तः तमपि क्षमस्वेति शेषः । **सोम्यानाम्** सोमार्हाणाम् अनुष्ठातॄणाम् मर्त्यानाम् त्वम् आप्यादिगुणयुक्तः असि । आपिः प्रापणीयः । पिता पालकः । प्रमतिः प्रकृष्टमननयुक्तः । भूमिः भ्रामकः कर्मनिर्वाहक इत्यर्थः । **ऋषिकृत्** दर्शनकारी अनुजिघृक्षया प्रत्यक्षो भवसीत्यर्थः ।

शरणिम् । 'शॄ हिंसायाम्' इत्यस्मात् औणादिकः अनिप्रत्ययः । मीमृषः । 'मृष तितिक्षायाम्' । अस्मात् णौ चङि गुणे प्राप्ते 'नित्यं छन्दसि'(पा.सू.७-४-८) इति उपधर्कारस्य ऋकारादेशः । णिलोपद्विर्भावहलादिशेषोरदत्वसन्वद्भावेत्वदीर्घत्वानि । 'तिङ्ङतिङः' इति निघातः ।

अगाम । 'इण् गतौ' । 'इणो गा लुङि'(पा.सू.२-४-४५) इति गादेशः । 'गातिस्था' इति सिचो लुक् । अडागम उदात्तः । भूमिः । 'भ्रमु अनवस्थाने' । 'भ्रमेः संप्रसारणं च'(उ.सू.४-५६०) इति इन्प्रत्ययः । संप्रसारणे परपूर्णत्वम् । 'इगुणधात्कित्' इत्यनुवृत्तेः कित्वाद्गुणप्रतिषेधः । नित्त्वादाद्युदात्तत्वम् ॥ १६ ॥

**सिद्धाञ्जनम्**– हे **अग्ने**, **नः** अस्मदीयां **इमां** वक्ष्यमाणस्वरूपां **शरणिं** हिंसां (शृणोतेः हिंसार्थादौणादिकः अनिप्रत्ययः) **मीमृषः** क्षमस्व (मृषस्तितिक्षायां स्वार्थिको णिच् लोडर्थे लुङ्) हिंसा च अग्निदेवविषये कृतोऽपराधः, भगवन्तमग्निं अलक्षयित्वा अपथं गत्वा तस्माद्दूरतो गमनमेव सोऽपराधो व्रतलोपरूपः । तदाह । **दूरात्** दूरदेशं **यं इमं अध्वानं** मार्गं **अगाम** गतवन्तो वयम्, सः त्वद्दूरवर्तित्वात् अस्मदपराधविषयः त्वयि नः सर्वथा हितकरे सिद्धे सति, विशेषतोऽपचार एवेति उत्तरार्धेन स्पष्टं भवति । त्वं **आपिः** आपयिता बन्धुः इष्टप्राप्तिकृदित्यर्थः । **पिता** पालकः पितृस्थानीयः **प्रमतिः** प्रकृष्टज्ञानयुक्तः **सोम्यानां** सोमार्हाणां देवानां सोमपायिनां **भूमिः** भ्रामकः, चालक इत्यर्थः, यजने देवान् आहूय सन्निधापयति ह्यग्निः, तस्माच्चालकः **असि** । **मर्त्यानां** मनुष्याणां **ऋषिकृत्** दर्शनकृत् असि । सोम्यानां अमर्त्यानां मर्त्यानां च उपकारी अग्निः । सोम्यानां अनुष्ठातृणां मर्त्यानां आप्यादिगुणयुक्तोऽग्निरिति सायणीयम् । भूमिः– 'भ्रम अनवस्थाने', भ्रमेः सम्प्रसारणं चेति इन्-प्रत्ययः ॥ १६ ॥

## ऋक्संहिता पदपाठसहिता

**मनुष्वदग्ने अङ्गिरस्वदङ्गिरो ययातिवत्सदने पूर्ववच्छुचे ।**
**अच्छ याह्या वहा दैव्यं जनमा सादय बर्हिषि यक्षि च प्रियम् ॥ १७ ॥**

मनुष्वत् । अग्ने । अङ्गिरस्वत् । अङ्गिरः । ययातिऽवत् । सदने । पूर्वऽवत् । शुचे । अच्छ । याहि । आ । वह । दैव्यम् । जनम् । आ । सादय । बर्हिषि । यक्षि । च । प्रियम् ॥ १७ ॥

## ऋग्भाष्यम्

**यथा मनुश्चाङ्गिरा वा ययातिर्गृहे प्राप्तस्त्वां तथा मद्गृहं च ।**
**अभ्यायाह्यावह देवसङ्घमासादय बर्हिषि यक्षि च प्रियम् ।**
**यष्टा त्वमेवाखिलजीवगो यत्....................॥ १७ ॥**

**ऋग्भाष्यटीका– मनुष्वत्** । हे **शुचे अङ्गिरोऽग्ने** । **मनुष्वत्** मनोर्यथा । **अङ्गिरस्वत्** अङ्गिरसो यथा । **ययातिवत्** ययातेर्यथा । **पूर्ववत्** अन्येषामपि पूर्वपुरुषाणां यथा । तथा **सदने** मदीयं सदनमच्छ याहीत्येतत्तात्पर्यतो व्याख्याति । **यथेति** ।। वाशब्दः समुच्चये । गृहे स्वीये । तथा मद्गृहं मम त्वत्प्राप्त्यर्थमिति शेषः । अच्छेत्यभेरर्थे निपातः । अत्र अच्छगत्यर्थवदेष्विति गतिः । यद्वा । प्रथमान्तेभ्य एव वतिमभिप्रेत्य व्याख्यानमेवेदं कृतम् । आगत्य च **दैव्यं** देवतात्मकं **जनं** देवसङ्घं **आवह** आनय । आगतं च बर्हिषि **आ सादय** उपवेशय । उपविष्टं च तं तव **प्रियं** देवसङ्घम् । **यक्षि** यज **च** । ऋत्विजां कार्यमेतत्कथं मया क्रियतामित्यतोऽभिप्रायमाह । **यष्टेति** ।। यद्यस्मात्त्वमेवाखिलजीवगोऽखिलजीवानां प्रेरकः तस्मादृत्विक्षु स्थित्वा यष्टा त्वमेवेति ।। १७ ।।

**मन्त्रार्थमञ्जरी–** (हे) शुचे अङ्गिरः अग्ने । मनुष्वत्, मनोर्यथा । अङ्गिरस्वत्, अङ्गिरसो यथा । ययातिवत्, ययातेर्यथा । पूर्ववत्, अन्येषामपि पूर्वपुरुषाणां यथा । (तथा) सदने, मदीयं सदनम् । अच्छ याहि, 'अच्छ' इत्यभेरर्थे निपातोऽयम्, 'अच्छ गत्यर्थवदेषु' इति गतिसंज्ञः, अभियाहि, आयाहि । आगत्य च दैव्यम्, देवतात्मकम् । जनम्, देवसङ्घम् । आ वह, आनय । आगतं च बर्हिषि । आ सादय, उपवेशय । उपविष्टं च तम् (तव) प्रियम्, देवसङ्घम् । यक्षि यज च । लुग्विकरणं छान्दसम्, व्रश्चादिना षत्वम्, 'षढोः कः सि' इति कत्वम्, 'इण्कोः' इति षत्वम्, अखिलजीवप्रेरकत्वादृत्विक्ष्वपि स्थितत्वात्तान्प्रेर्य यजेति भावः, 'न ऋते त्वत्क्रियते' (ऋ० म० १०।११२।९) ॐ व्यतिरेकानवस्थितेश्च' (२।२।४) इत्यादिश्रुतिसूत्रसिद्धोऽयमर्थः इति भावः ।। १७ ।।

**स्कन्द– मनुष्वत्** मनोरिव हे **अग्ने!**, **अङ्गिरस्वत्** अङ्गिरस इव हे अङ्गिरः! **ययातिवत्** ययातेरिव, **पूर्ववत्** पूर्वेषामिव च ऋषीणां, ममापि **सदने शुचे!** दीप्त! **अच्छ याहि** अच्छाभेरर्थे । अभिगच्छ, अभिगम्य च **आ वह दैव्यम् जनम्** देवेषु भवं लोकम्, सर्वदेवजनमित्यर्थः । आवाह्य च **आ सादय** अस्मदीये बर्हिषि **यक्षि च** । कीदृशम् । **प्रियम्** इष्टमात्मनो मत्वा ।। १७ ।।

**वेङ्कटमाधव–** अङ्गिरसामेक! मन्वादीनामिव ममापि गृहेऽधुनाभिमुखम् याहि । **आ वह च दैव्यम् जनम्** । **आ सादय** च बर्हिषि । यज च **प्रियम्** देवगणम् ।। १७ ।।

**मुद्गल–** हे **शुचे!** शुद्धियुक्त! **अङ्गिरः!** अङ्गनशील! हविरादानाय तत्र तत्र गमनशील! **अग्ने! अच्छ** आभिमुख्येन **सदने** देवयजनदेशे **याहि** गच्छ । चत्वारो दृष्टान्ताः– **मनुष्वत्** यथा मनुरनुष्ठानदेशे गच्छति । **अङ्गिरस्वत्** यथा चाङ्गिरा गच्छति । **ययातिवत्** यथा ययातिर्नाम राजा गच्छति । **पूर्ववत्** अन्ये च पूर्वपुरुषाः यथा गच्छन्ति । यथा मन्वादयो यज्ञे गच्छन्ति तद्वत् । गत्वा **दैव्यम्** देवतासमूहरूपम् **जनम् आ वह** अस्मिन् कर्मण्यानय । आनीय च **बर्हिषि** आस्तीर्णे दर्भे **आ सादय** तान् देवान् उपवेशय । उपवेश्य च **प्रियम्** अभीष्टं हविः **यक्षि च** देहि ।। १७ ।।

**सायण–** हे **शुचे!** शुद्धियुक्त! **अङ्गिरः!** अङ्गनशील! हविरादानाय तत्र तत्र गमनशील! **अग्ने! अच्छ** आभिमुख्येन **सदने** देवयजनदेशे **याहि** गच्छ । चत्वारो दृष्टान्ताः– **मनुष्वत्** यथा मनुरनुष्ठानदेशे गच्छति । **अङ्गिरस्वत्** यथा चाङ्गिरा गच्छति । **ययातिवत्** यथा ययातिर्नाम राजा गच्छति । **पूर्ववत्** अन्ये च पूर्वपुरुषाः यथा गच्छन्ति । यथा मन्वादयो यज्ञे गच्छन्ति तद्वत् । गत्वा **दैव्यम्** देवतासमूहरूपम् **जनम् आ वह** अस्मिन् कर्मण्यानय । आनीय च **बर्हिषि** आस्तीर्णे दर्भे **आ सादय** तान् देवान् उपवेशय । उपवेश्य च **प्रियम्** अभीष्टं हविः **यक्षि च** देहि ।

मनुष्वत् । 'तेन तुल्यम्' इति प्रथमार्थे वा 'तत्र तस्येव' इति षष्ठ्यर्थे वा वतिः (पा.सू. ५.१.११५-११६) । अयस्मयादित्वेन भवात् रुत्वाद्यभावः । प्रत्ययस्वरः । एवम् अङ्गिरस्वत् इत्यादिषु । वह । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । यक्षि । लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'सेर्ह्यपिच्च' इति हेः अभावश्छान्दसः । षत्वकत्वे । साग्निचयने क्रतौ उखासंभरणीयायाम् इष्टौ अग्नेर्ब्रह्मण्वतः पुरोनुवाक्या 'एतेनाग्ने' इत्येषा । 'दर्शपूर्णमासाभ्यामिष्ट्वा' इति खण्डे 'एतेनाग्ने ब्रह्मणा वावृधस्व ब्रह्म च ते जातवेदो नमश्च' (आश्व.श्रौ.४-१) इति सूत्रितम् ।। १७ ।।

**सिद्धाञ्जनम्–** हे **शुचे** दीप्त! **अङ्गिरः** एतन्नामक देव! **अग्ने! सदने** अस्मदीये यजनगृहे (बहिरन्तश्च योजनीयम्) अच्छ अभिमुखं, अभेरर्थे अच्छेति निपातः । याहि गच्छ । तत्र दृष्टान्तः । **मनुष्वत्** मनोरिव, मनुरिव वा (तस्य तवेति षष्ठ्यर्थे, तेन तुल्यं क्रिया चेदिति प्रथमाय वा वतिः) अयमर्थः । मनोः ऋष यज्ञसदनं यथा त्वं गच्छसि तथेहापि गच्छ, यथा

वा मन्तृणां मनुष्याणामाद्यो देवः मनुर्यज्ञसदनं गच्छति तथा गच्छेति भावः । एवं **अङ्गिरस्वत्** अङ्गिरसऋषेरिव, अङ्गिरादेव इव वा, **ययातिवत्** ऋषेर्ययातेरिव, ययातिर्देवभावं प्राप्तो देव इव वा, **पूर्ववत्** पूर्वे इव, पूर्वेषां इव वा, 'याहि' इति सम्बन्धः । अथ यजनसदनं गत्वा **दैव्यं** देवेषु भवं **जनं** लोकं **आ वह** आनय, सर्वदेवबृन्दं आनयेत्यर्थः । **प्रियं** इष्टं तं **बर्हिषि** आस्तीर्ण आसने **आ सादय** उपवेशय, **यक्षि च** यज च, लोटि शपो लुक्, अन्यच्च छान्दसम् । अत्रेदमवधेयम् । मनुः, अङ्गिराः, ययातिः इति त्रयोऽपि मन्त्रद्रष्टारः । राजा नाहुष इति प्रसिद्धोऽपि ययातिः 'सुतासो मधुमत्तमाः' इति तृचस्य द्रष्टेत्यनुक्रमणिका (ऋ.सं.९-१०१-४-६)। एवं दृष्टान्तभूतानां त्रयाणामृषीणां यजने प्रसन्नो भवत्यग्निरिति षष्ठ्यर्थे वतिः । अथ त्रयोऽपि देवाः देवभूता वा । मनुर्मन्ता देव आद्यो मनुजानाम्, अङ्गिरा अङ्गनशीलोऽग्निर्वैभवशाली देवः, ययातिश्च देवभूतः, (यस्य यातिः गतिः सर्वत्र वायोरिव रथगतिरिति तत्त्वबोधिनीकारः,'यती प्रयत्ने' इति धातोरिति नव्यानामेके, सर्वथा गतिवेगवान् उद्यमी दैवतविभव इति वयम्) एवं नयोऽपि यजने प्रसन्ना इति प्रथमार्थे वतिः ।। १७ ।।

## ऋक्संहिता पदपाठसहिता

**एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ।**
**उत प्र णेष्यभि वस्यो अस्मान्त्संनः सृज सुमत्या वाजवत्या ।। १८,३५ ।।**

एतेन । अग्ने । ब्रह्मणा । ववृधस्व । शक्ती । वा । यत् । ते । चकृम । विदा । वा । उत । प्र । नेषि । अभि । वस्यः । अस्मान् । सम् । नः । सृज । सुऽमत्या । वाजऽवत्या ।। १८,३५,३१ ।।

## ऋग्भाष्यम्

**स्पष्टत्वं च प्राप्नुहि वेदवाचा ।**
**शक्त्या यत्ते चकृम ज्ञानतो वा ।**
**वस्यो भद्रं प्रणयास्मान्सुमत्या ।**
**भोगेतया संसृज नित्यमेव ।**
**यस्माच्छक्त्या चकृम त्वत्सुकर्म ।। १८,३५ ।।**

ऋग्भाष्यटीका– एतेन । स्पष्टत्वं च । हे **अग्ने** एतेन **ब्रह्मणा** एतया वेदवाचा ।

**वावृधस्व** अतिशयेन वर्धस्व । स्पष्टत्वं च व्यक्तत्वमेव न तु वृद्धिं प्राप्नुहि । कथं भूतेन ब्रह्मणा । **शक्ती वा** शक्त्या वा । **विदा वा** ज्ञानतो वा । **यत् ते** त्वद्विषये **चकृम** यथाशक्ति यथाज्ञानं च कृतया वैदिक्याऽनया स्तुत्याऽस्माकं प्रत्यक्षो भवेत्यर्थः । भाष्ये ब्रह्मापेक्षं यदिति नपुंसकम् । व्यत्ययेन यामिति वा । यस्माच्छक्त्याद्यनतिक्रमेण चकृम तस्मादिति वा । **उत** किञ्च । **अस्मान् वस्यो** भद्रम् । **अभि प्र णेषि** प्रापयसि । प्रणय प्रापय । तस्यैव विवरणं **नो**ऽस्मान् **वाजवत्या** अन्नवत्या उपलक्षणमेतत् । भोगेतया सर्वभोगोपेतया । **सुमत्या संसृज** संयोजय । समोऽर्थमाह । **नित्यमेवेति** ।। प्राक् शक्ती वेत्यादि ब्रह्मविषयं व्याख्यातम् । इदानीं प्रकारान्तरेण व्याख्याति । **यस्मादिति** ।। यद्यस्माच्छक्त्या च विदा च । ते त्वदीयं कर्मेति शेषः । त्वत्सुकर्म चकृम तस्मादुतप्रणेषीत्यादि ।। १८ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । एतेन ब्रह्मणा, एतया वेदवाचा । ववृधस्व, अतिशयेन वर्धस्व, त्वदीयां वृद्धिं व्यक्तीकुरु । कथं भूतेन ब्रह्मणा ? शक्ती वा, शक्त्या वा, पूर्वसवर्णदीर्घः । विदा वा, ज्ञानतो वा, वेत्तेः भावे क्विप् । यत् । ते, त्वद्विषये । चकृम । यथाशक्ति यथाज्ञानं च कृतया वैदिक्या स्तुत्यास्माकं प्रत्यक्षो भवेत्यर्थः ।। उत, किं च । अस्मान् । वस्यः, भद्रम् । अभि प्र णे (ने) षि, प्रणयसि, विकरणं लुक्, प्रापयेति यावत् । तदेव विव्रियते नः, अस्मान् । वाजवत्या, अन्नवत्या, सर्वभोगोपलक्षणम् सर्वभोगोपेतया । सुमत्या । सम् सृज, नित्यं संयोजय । यद्वा 'यत्, यस्मात् । शक्ती वा विदा वा । ते, त्वदीयम् । (कर्म) चकृम (तत्) उत अभि प्र णे (ने) षि' इत्यर्थः ।। १८ ।।

**स्कन्द– एतेन** हे **अग्ने**! स्तुतिलक्षणेन **ब्रह्मणा वावृधस्व** अत्यर्थं वर्धस्व । स्तूयमाना हि देवता वीर्येण वर्धते । अत एतदुच्यते– एतेन ब्रह्मणाऽत्यर्थं वर्धस्वेति । कतमेन । उच्यते । **शक्तो वा** तृतीयैकवचनस्यार्थं पूर्वसवर्णः । शक्त्या वा **यत् ते चकृम, विदा वा** ज्ञानेन वा । यथाशक्ति यथाज्ञानं च यद् अयं चकृम कृतवन्त इत्यर्थः । **उत** अपि च त्वमेव **प्र णेषि अभि** अभिप्रणयसि । स्तुतिकरणे प्रवर्तयसीत्यर्थः । कीदृशः । **वस्यः** वसीयः वसुमत्तमः । कान् । **अस्मान्** । एतदुक्तं भवति । त्वां स्तोतुं कुतो **नः** शक्तिः ज्ञानं वा । त्वदनुग्रहादेव वयं तव स्तुतिं कृतवन्तः, न स्वमहिम्नेति । अथवा उतशब्दः अभि प्र णेषीत्येतस्मात् परो द्रष्टव्यः । लट् च लेडर्थे । अभि प्र णेष्युत अभिप्रणयापि । एतेन ब्रह्मणाऽत्यर्थं वर्धस्व प्रापयस्व

वा मन्तॄणां मनुष्याणामाद्यो देवः मनुर्यज्ञसदनं गच्छति तथा गच्छेति भावः । एवं **अङ्गिरस्वत्** अङ्गिरसऋषेरिव, अङ्गिरादेव इव वा, **ययातिवत्** ऋषेर्ययातेरिव, ययातिर्देवभावं प्राप्तो देव इव वा, **पूर्ववत्** पूर्वे इव, पूर्वेषां इव वा, 'याहि' इति सम्बन्धः । अथ यजनसदनं गत्वा **दैव्यं** देवेषु भवं **जनं** लोकं **आ वह** आनय, सर्वदेवबृन्दं आनयेत्यर्थः । **प्रियं** इष्टं तं **बर्हिषि** आस्तीर्ण आसने **आ सादय** उपवेशय, **यक्षि च** यज च, लोटि शपो लुक्, अन्यच्च छान्दसम् । अत्रेदमवधेयम् । मनुः, अङ्गिराः, ययातिः इति त्रयोऽपि मन्त्रद्रष्टारः । राजा नाहुष इति प्रसिद्धोऽपि ययातिः 'सुतासो मधुमत्तमाः' इति तृचस्य द्रष्टेत्यनुक्रमणिका (ऋ.सं.९-१०१-४-६)। एवं दृष्टान्तभूतानां त्रयाणामृषीणां यजने प्रसन्नो भवत्यग्निरिति षष्ठ्यर्थे वतिः । अथ त्रयोऽपि देवाः देवभूता वा । मनुर्मन्ता देव आद्यो मनुजानाम्, अङ्गिरा अङ्गनशीलोऽग्निर्वैभवशाली देवः, ययातिश्च देवभूतः, (यस्य यातिः गतिः सर्वत्र वायोरिव रथगतिरिति तत्त्वबोधिनीकारः,'यती प्रयत्न' इति धातोरिति नव्यानामेके, सर्वथा गतिवेगवान् उद्यमी दैवतविभव इति वयम्) एवं नयोऽपि यजने प्रसन्ना इति प्रथमार्थे वतिः ।। १७ ।।

## ऋक्संहिता पदपाठसहिता

**एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ।**
**उत प्र णेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या ।। १८,३५ ।।**
एतेन । अग्ने । ब्रह्मणा । ववृधस्व । शक्ती । वा । यत् । ते । चकृम । विदा । वा । उत । प्र । नेषि । अभि । वस्यः । अस्मान् । सम् । नः । सृज । सुऽमत्या । वाजऽवत्या ।। १८,३५,३१ ।।

## ऋग्भाष्यम्

**स्पष्टत्वं च प्राप्नुहि वेदवाचा ।**
**शक्त्या यत्ते चकृम ज्ञानतो वा ।**
**वस्यो भद्रं प्रणयास्मान्सुमत्या ।**
**भोगेतया संसृज नित्यमेव ।**
**यस्माच्छक्त्या चकृम त्वत्सुकर्म ।। १८,३५ ।।**

ऋग्भाष्यटीका– एतेन । स्पष्टत्वं च । हे **अग्ने** एतेन **ब्रह्मणा** एतया वेदवाचा ।

**वावृधस्व** अतिशयेन वर्धस्व । स्पष्टत्वं च व्यक्तत्वमेव न तु वृद्धिं प्राप्नुहि । कथं भूतेन ब्रह्मणा । **शक्ती वा** शक्त्या वा । **विदा वा** ज्ञानतो वा । **यत् ते** त्वद्विषये **चकृम** यथाशक्ति यथाज्ञानं च कृतया वैदिक्याऽनया स्तुत्याऽस्माकं प्रत्यक्षो भवेत्यर्थः । भाष्ये ब्रह्मापेक्षं यदिति नपुंसकम् । व्यत्ययेन यामिति वा । यस्माच्छक्त्याद्यनतिक्रमेण चकृम तस्मादिति वा । **उत** किञ्च । **अस्मान् वस्यो** भद्रम् । **अभि प्र णेषि** प्रापयसि । प्रणय प्रापय । तस्यैव विवरणं **नो**ऽस्मान् **वाजवत्या** अन्नवत्या उपलक्षणमेतत् । भोगेतया सर्वभोगोपेतया । **सुमत्या संसृज** संयोजय । समोऽर्थमाह । **नित्यमेवेति** ।। प्राक् शक्ती वेत्यादि ब्रह्मविषयं व्याख्यातम् । इदानीं प्रकारान्तरेण व्याख्याति । **यस्मादिति** ।। यद्यस्माच्छक्त्या च विदा च । ते त्वदीयं कर्मेति शेषः । त्वत्सुकर्म चकृम तस्मादुतप्रणेषीत्यादि ।। १८ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । एतेन ब्रह्मणा, एतया वेदवाचा । ववृधस्व, अतिशयेन वर्धस्व, त्वदीयां वृद्धिं व्यक्तीकुरु । कथं भूतेन ब्रह्मणा ? शक्ती वा, शक्त्या वा, पूर्वसवर्णदीर्घः । विदा वा, ज्ञानतो वा, वेत्तेः भावे क्विप् । यत् । ते, त्वद्विषये । चकृम । यथाशक्ति यथाज्ञानं च कृतया वैदिक्या स्तुत्यास्माकं प्रत्यक्षो भवेत्यर्थः ।। उत, किं च । अस्मान् । वस्यः, भद्रम् । अभि प्र णे (ने) षि, प्रणयसि, विकरणं लुक्, प्रापयेति यावत् । तदेव विव्रियते नः, अस्मान् । वाजवत्या, अन्नवत्या, सर्वभोगोपलक्षणम् सर्वभोगोपेतया । सुमत्या । सम् सृज, नित्यं संयोजय । यद्वा 'यत्, यस्मात् । शक्ती वा विदा वा । ते, त्वदीयम् । (कर्म) चकृम (तत्) उत अभि प्र णे (ने) षि' इत्यर्थः ।। १८ ।।

**स्कन्द– एतेन** हे **अग्ने!** स्तुतिलक्षणेन **ब्रह्मणा वावृधस्व** अत्यर्थं वर्धस्व । स्तूयमाना हि देवता वीर्येण वर्धते । अत एतदुच्यते– एतेन ब्रह्मणाऽत्यर्थं वर्धस्वेति । कतमेन । उच्यते । **शक्तो वा** तृतीयैकवचनस्यार्थं पूर्वसवर्णः । शक्त्या वा **यत् ते चकृम, विदा वा** ज्ञानेन वा । यथाशक्ति यथाज्ञानं च यद् अयं चकृम कृतवन्त इत्यर्थः । **उत** अपि च त्वमेव **प्र णेषि अभि** अभिप्रणयसि । स्तुतिकरणे प्रवर्तयसीत्यर्थः । कीदृशः । **वस्यः** वसीयः वसुमत्तमः । कान् । **अस्मान्** । एतदुक्तं भवति । त्वां स्तोतुं कुतो **नः** शक्तिः ज्ञानं वा । त्वदनुग्रहादेव वयं तव स्तुतिं कृतवन्तः, न स्वमहिम्नेति । अथवा उतशब्दः अभि प्र णेषीत्येतस्मात् परो द्रष्टव्यः । लट् च लेडर्थे । अभि प्र णेष्युत अभिप्रणयापि । एतेन ब्रह्मणाऽत्यर्थं वर्धस्व प्रापयस्व

चेत्यर्थः । किम् । वस्यः द्वितीयाबहुवचनमेव । वसूनि धनानि चास्मभ्यं देहीत्यर्थः । **सम् नः सृज** सम्सृज सम्बन्धय नः अस्मान् **सुमत्या** शोभनया बुद्ध्या **वाजवत्या** अन्नसहितया । ज्ञानमन्नं च नो जनयेत्यर्थः ।। १८ ।।

**वेङ्कटमाधव– एतेन अग्ने!** स्तोत्रेण वृद्धो भव । यथा कश्चिच्छक्त्या महता प्रयत्ने स्तोत्रं करोति तथा **यत् ते चकृम विदा वा** ज्ञानेन वा यद् ब्रह्म वयं चकृम । अपि च अस्मान् श्रेयश्च **अभि प्र णेषि** । अन्नवत्या त्वदीयया **सुमत्या** च अस्मान् **सम् सृज** इति ।। १८ ।।

**मुद्गल–** हे **अग्ने! एतेन** अस्मत्प्रयुक्तेन **ब्रह्मणा वावृधस्व** अभिवृद्धो भव, **शक्ती वा विदा वा** अस्मदीयशक्त्या चाऽस्मदीयज्ञानेन च **ते** तव **यत्** स्तोत्रम् **चकृम** वयं कृतवन्तः । एतेन ब्रह्मणेति पूर्वत्रान्वयः । **उत** अपि च **अस्मान्** अनुष्ठातॄन् **वस्यः** वसुमत्तरत्वलक्षणं श्रेयः **प्र णेषि** प्रकर्षेण प्रापय । **नः** अस्मान् **वाजवत्या** प्रभूतान्नयुक्तया **सुमत्या** अनुष्ठानविषयया शोभनबुद्ध्या **सम् सृज** संयोजय ।। १८ ।।

**सायण–** हे **अग्ने! एतेन** अस्मत्प्रयुक्तेन **ब्रह्मणा** मन्त्रेण **वावृधस्व** अभिवृद्धो भव, **शक्ती वा विदा वा** अस्मदीयशक्त्या चाऽस्मदीयज्ञानेन च **ते** तव **यत्** स्तोत्रम् **चकृम** वयं कृतवन्तः । एतेन ब्रह्मणेति पूर्वत्रान्वयः । **उत** अपि च **अस्मान्** अनुष्ठातॄन् **वस्यः** वसुमत्तरत्वलक्षणं श्रेयः **प्र णेषि** प्रकर्षेण प्रापय । **नः** अस्मान् **वाजवत्या** प्रभूतान्नयुक्तया **सुमत्या** अनुष्ठानविषयया शोभनबुद्ध्या **सम् सृज** संयोजय ।।

वावृधस्व । 'वृधु वृद्धौ' । लेटि अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः । द्विर्भाव-हलादिशेषोरदत्वानि । अभ्यासस्य संहितायां दीर्घश्छान्दसः । शक्ती । 'सुपां सुलुक्' इति तृतीयायाः पूर्वसवर्णदीर्घत्वम् । क्तिनो नित्त्वादाद्युदात्तत्वम् । विदा । 'सावेकाचः' इति तृतीयाया उदात्तत्वम् । नेषि । 'णीञ् प्रापणे' । 'बहुलं छन्दसि' इति शपो लुक् । 'उपसर्गादसमासे' इति णत्वम् । सुमत्या । 'मन्क्तिन्' इत्यादिनोत्तरपदान्तोदात्तत्वं प्रथमाध्याये प्रपञ्चितम् (ऋ.सं.१-७-७)। 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ।। १८,३५ ।।

**सिद्धाञ्जनम्–** हे **अग्ने, एतेन** अस्मदीयेन **ब्रह्मणा** स्तुतिलक्षणेन मन्त्रेण **वावृधस्व** वर्धस्व, (वृधु वृद्धौ, बहुलं छन्दसीति शपः श्लुः, अभ्यासस्य संहितायां दीर्घः) **शक्ती वा** शक्त्या (सुपां

सुलुक् इति तृतीयायाः पूर्वसवर्णदीर्घत्वम्) **विदा वा** ज्ञानेन वा **यत् ते** तव स्तोत्रं **चकृम** वयं कृतवन्तः, एतेन ब्रह्मणेति पूर्वत्रान्वयः । यथाशक्ति यथाज्ञानं यत् स्तोत्रं अकार्ष्म तेन वर्धस्वेत्युक्तम् । स्तूयमाना देवताः स्तोतरि वर्धन्ते । **उत** अपि च **अस्मान्** त्वामाश्रितान् स्तोतॄन् **अभि** अभिलक्ष्य **वस्यः** वसीयः वसुमत्तरं श्रेयः **प्र णेषि** प्रणयसि, प्रकर्षेण प्रापयसीत्यर्थः (णीञ् प्रापणे, नेषि शपो लुक्) । **नः** अस्मान् **वाजवत्या** समृद्धिमत्या **सुमत्या** शोभनबुद्ध्या **संसृज** सम्बन्धय ।। १८ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये पञ्चत्रिंशो वर्गः ।।

## ।। अथ षट्त्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ३२)

(१५ हिरण्यस्तूप आङ्गिरसः ऋषिः । इन्द्रः । त्रिष्टुप् छन्दः)

**इन्द्र॑स्य॒ नु वी॒र्या॑णि॒ प्र वो॑चं॒ यानि॑ च॒कार॑ प्रथ॒मानि॑ व॒ज्री ।**
**अह॒न्नहि॒मन्व॒पस्त॑तर्द॒ प्र व॒क्षणा॑ अभिन॒त् पर्व॑तानाम् ।। १ ।।**

इन्द्र॑स्य । नु । वी॒र्या॑णि । प्र । वो॒च॒म् । यानि॑ । च॒कार॑ । प्र॒थ॒मानि॑ । व॒ज्री । अह॑न् । अहि॑म् । अनु॑ । अ॒पः । त॒त॒र्द॒ । प्र । व॒क्षणाः॑ । अ॒भि॒न॒त् । पर्व॑तानाम् ।। १ ।।

## ऋग्भाष्यम्

**इन्द्रस्य वा वासुदेवस्य वीर्याण्याचक्षेऽहं यानि मुख्यानि चक्रे ।**
**अहिं दैत्यं संशयं वा जघान जलानुसारेण चखान मार्गम् ।**
**ततर्द विघ्नान् कर्मणां वाऽनुसाराद्वहनात्पक्षा वक्षणा दुर्वचांसि ।**
**जीवानां चेद्वक्षणा जन्मपर्ववतां बिभेदैव सुयुक्तिभिस्ताः ।। १ ।।**

**ऋग्भाष्यटीका–** **इन्द्रस्य** । पञ्चदशर्चमेतदैन्द्रं सूक्तम् । इन्द्रस्य वा । **नु** इति क्षिप्रनाम । इदानीमेवाहं **इन्द्रस्य** प्रसिद्धस्य वासुदेवस्य वा । **वीर्याणि** कर्माणि । **प्र वोचं** प्रावोचम् । लडर्थे लुङ् । आचक्षे । कथंभूतानि **वज्री** अयमिन्द्रो **यानि प्रथमानि** मुख्यानि । **चकार**

चक्रे । अनन्तत्वेऽपि तच्चरित्राणां प्रधानानि ब्रवीमीति यावत् । तान्युच्यन्ते । इन्द्रो वज्रीत्युक्तत्वाद्वज्रेण **अहिं** दैत्यं दैत्यविशेषम् **अहन्** जघान । 'वासुदेवस्त्वहिं हीति निश्चयवाची स्यात्' इति वचनान्निश्चयविरोधिनं भक्तानां संशयं ज्ञानेनाहन् जघान । विनाशितवानिति व्यवस्थितो विकल्पः । एवमुत्तरत्रापि । किञ्च । **अन्वपः** लक्षणेत्थम्भूताख्यानेति लक्षणे कर्मप्रवचनीयः । जलानुसारेण **ततर्द** । 'तर्द हिंसायाम्' । हिंसितवान् । किं मार्गमिति शेषः । मार्गस्य हिंसानाम खननमेवेति चखान । अहिर्नामदैत्यो लोकोपद्रवाय पर्वतेषु नदीद्वाराणि रुध्वा मेघपतितं चोदकमन्तरिक्षे प्रतिबद्धच स्थितः । तं हत्वेन्द्रो नदीद्वाराणि विवृत्य तत्प्रवाहायोदकमार्गं खनितवान् । वासुदेवस्त्वन्वपः अनुर्लक्षण इति हेतौ कर्मप्रवचनीयः । अप् शब्दः कर्मवाची । कर्मणामनुसारात् । भक्तैः कृतानि कर्माणि निमित्तानि कृत्वा ततर्द हिंसितवान् । तदीयान् ज्ञानस्य विघ्नानिति शेषः । अपि च । इन्द्रः पर्वतानां **वक्षणाः प्राभिनत्** । वक्षणाशब्दार्थमाह । **वहनादिति** ।। 'वह प्रापणे' । अस्मात्करणे सनः स्त्रीलिङ्गता शब्दस्वाभाव्यात् । परमेश्वरे वाक्यं व्याख्याति । **दुर्वचांसीति** ।। जन्मपर्ववतां जीवानां विवक्षा चेत्तदा दुर्वचांसि वक्षणा उच्यते । ता वक्षणाः सुयुक्तिभिरेव बिभेदेश्वरः ।

एतदुक्तं भवति । जन्माख्यपर्ववत्त्वाज्जीवाः पर्वताः । तेषां पर्वतानां कुवादिनां वक्षणाः 'वच परिभाषण' इत्यतः सनप्रत्ययः । प्रसङ्गात् दुष्टानि वचांसि प्राभिनत् । भक्तेभ्यः सुयुक्तीर्दत्वा ताभिर्निराकृतवानिति ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'इन्द्रस्य नु' इति पञ्चदशर्चं वर्गत्रयात्मकमैन्द्रं त्रैष्टुभं द्वात्रिंशं सूक्तम् । 'नु' इति क्षिप्रनाम (वै० नि० २।१५) इदानीमेव । (अहम्) इन्द्रस्य, प्रसिद्धस्य, वासुदेवस्य वा । वीर्याणि, कर्माणि । प्र वोचम्, लडर्थे लुङ्, आचक्षे । कथम्भूतानि ? वज्री, अयमिन्द्रः । यानि प्रथमानि, मुख्यानि । चकार, चक्रे । अनन्तत्वेऽपि तव चरित्राणां प्रथमानि ब्रवीमीति यावत् । तान्युच्यन्ते 'इन्द्रो वज्री' इत्युक्तत्वाद्वज्रेण अहिम्, दैत्यविशेषम् । अहन्, जघान, वासुदेवे तु 'ॐ शास्त्रदृष्ट्या' (१।१।३०) इति न्यायेनाहेर्हननं ज्ञेयम् । यद्वा 'हीति निश्चयवाचि स्यात्' इति वचनान्निश्चयविरोधिनम् अहिम्, भक्तानां संशयम् । ज्ञानेन अहन्, विनाशितवान् इति व्याख्येयम् । किं च, अनु अपः, 'लक्षणेत्थम्भूताख्यान' इति लक्षणेऽनुः कर्मप्रवचनीयः, जलानुसारेण । ततर्द, 'तर्द हिंसायाम्', हिंसितवान् । (मार्गम्) इति शेषः, मार्गस्य हिंसा

तु खननमेवेति (भाष्ये) 'चखान' इत्यर्थः, अहिनामा दैत्यो लोकोपद्रवाय पर्वतेषु नदीद्वाराणि रुद्ध्वा मेघपतितं चोदकमन्तरिक्षे प्रतिबध्य स्थितः, तं हत्वेन्द्रो नदीद्वाराणि विवृत्य प्रवाहायोदकमार्गं खनितवान् । वासुदेवस्तु अनु अपः, 'अनुर्लक्षणे' इति हेतौ कर्मप्रवचनीयः, अप्शब्दः कर्मवाची, कर्मणामनुसारात्, भक्तकृतकर्माणि निमित्तीकृत्य । ततर्द, हिंसितवान् । (तदीयज्ञानविघ्नान्) इति शेषः । अपि चेन्द्रः पर्वतानाम् । वक्षणाः, पक्षान् । प्र अभिनत् । 'वह प्रापणे' इत्यतः करणे सनप्रत्यये 'हो ढः' इति ढत्वे 'षढोः' इति कत्वे षत्वे च वक्षणाः, इति रूपम्, स्त्रीलिङ्गं तु शब्दस्वाभाव्यात् । वासुदेवस्तु पर्वतानाम्, जन्माख्यपर्ववताम्, जीवानाम् । वक्षणाः, दुर्वचांसि । प्र अभिनत्, भक्तेभ्यः सुयुक्तीर्दत्त्वा ताभिर्निराकृतवान् इति ॥ १ ॥

**स्कन्द–** 'द्वे ऐन्द्रे' । एते सूक्ते इन्द्रदेवते । **इन्द्रस्य नु** क्षिप्रम् **वीर्याणि** वीरकर्माणि **प्र वोचम्** ब्रवीमि । **यानि चकार प्रथमानि** अन्येन केनचिदप्यकृतपूर्वाणि अत्यन्तप्रकृष्टानि वा **वज्री** वज्रवान् । सवज्र इत्यर्थः । कतमानि तानि । उच्यते । **अहन् अहिम्** हतवान् मेघम् । **अनु अपः ततर्द** अन्वित्यपरभावे । अपरभावः पश्चाद्भावः । तर्दतिर्हिंसार्थः । मेघवधोत्तरकालं तदीया अपो हिंसितवान् । भूमौ पातितवानित्यर्थः । सा हि तासां हिंसा । केचित्तु तर्दनं विस्तारणं व्याचक्षते । पृथिव्यामपो विस्तारितवानित्यर्थः । ताभिश्च पातिताभिर्विस्तारिताभिर्वा **प्र वक्षणाः अभिनत्** 'वक्षणाः' (निघ.१-१३) इति नदीनाम । नदीः प्रभिन्नवान् । बहूदकत्वाद् भित्वा तत्कूलानि सर्वतः प्रवाहितवानित्यर्थः । **पर्वतानाम्** महीधराणां सम्बन्धिनीः । कः पुनः पर्वतानां नदीनां च सम्बन्धः । प्रभवलक्षणः । पर्वतेभ्यो हि नद्यः प्रभवन्ति । अथवा वक्षणाः पशव उच्यन्ते । पर्वतशब्दो हि मेघनाम (निघ.१-१०) । तेषाम् एकं मेघं हतवान् । अन्येषामपि पशून् हनवानित्यर्थः । अथवा पशुवचनेन वक्षणाशब्देन तत्सामीप्यात् पक्षा अत्र प्रतिपाद्यन्ते । पर्वतशब्दस्तु महीधरवचन एव । महीधराणां पक्षान् **प्राभिनत्** । छिन्नवानित्यर्थः । एवं हि चरकाध्वर्यूणां ब्राह्मण इतिहासः श्रूयते– 'प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत् पर्वताः । ते पक्षिण आसन् । ते यत्र यत्राकामयन्त तत्परापातमासत । अथ वा इयं तर्हि शिथिलाऽऽसीत् । तेषामिन्द्रः पक्षानच्छिनत् । तैरिमामदृहत्' । (काठ.३६-७) इति ॥ १ ॥

**वेङ्कटमाधव–** अथ **इन्द्रस्य** अहं क्षिप्रम् **वीर्याणि** प्रवक्ष्यामि **यानि चकारः** पुरातनानि

**वज्री** । तान्याह– **अहिम्** असुरम् **अहन्** हत्वा च तेन रुद्धाः **अपः** सूच्येव रश्मिभिः **ततर्दः** । **प्र अभिनत्** च शिलोच्चयानां नदीः पृथिव्यां पातयितुम् ।। १ ।।

**मुद्गल**– 'इन्द्रस्य नु वीर्याणि' इति पञ्चदशर्चं द्वितीयं सूक्तम् । आङ्गिरसो हिरण्यस्तूप ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता ।

**वज्री** वज्रयुक्त इन्द्रः **प्रथमानि** पूर्वसिद्धानि **यानि वीर्याणि** पराक्रमयुक्तानि कर्माणि **चकार तस्य इन्द्रस्य** तानि वीर्याणि **नु** क्षिप्रम् **प्र वोचम्** प्रब्रवीमि । कानि वीर्याणीति तदुच्यते । **अहिम्** मेघम् **अहन्** हतवान् । तदेकं वीर्यम् । **अनु** पश्चात् **अपः** जलानि **ततर्द** हिंसितवान् । भूमौ पातितवानित्यर्थः । इदं द्वितीयं वीर्यम् । **पर्वतानाम्** सम्बन्धिनीः **वक्षणाः** प्रवहणशीलाः नदीः **प्र अभिनत्** भिन्नवान् । कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः । इदं तृतीयं वीर्यम् । एवमुत्तरत्रापि द्रष्टव्यम् ।। १ ।।

**सायण**– 'इन्द्रस्य नु वीर्याणि' इति पञ्चदशर्चं द्वितीयं सूक्तम् । आङ्गिरसो हिरण्यस्तूप ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । 'इन्द्रस्य पञ्चोना' इत्यनुक्रमणिका । अग्निष्टोमे माध्यंदिने सवने निष्केवल्यशस्त्रे 'इन्द्रस्य नु वीर्याणि' इति निविद्धानीयं सूक्तम् । 'निष्केवल्यस्य' इति खण्डे– 'इन्द्रस्य नु वीर्याणीत्येतस्मिन्नैन्द्रीं निविदं दध्यात्' (आश्व.श्रौ.५-१५) इति । विषुवत्यपि तस्मिन् शस्त्रे एतत् विनियुक्तम् । 'विषुवान्दिवा कीर्त्यः' इति खण्डे सूत्रितम्– 'इन्द्रस्य नु वीर्याणीति एतस्मिन्नैन्द्रीं निविदं शस्त्वा' (आश्व.श्रौ.८-६) इति । महाव्रते निष्केवल्येऽप्येतदेव विनियुक्तम् । 'राथन्तरो दक्षिणः पक्षः' इति खण्डे 'चतस्रः सतीः षड् बृहतीः करोतीन्द्रस्य नु वीर्याणि प्र वोचम्' (ऐ.आ.५-२-२) इति ।।

**वज्री** वज्रयुक्त इन्द्रः **प्रथमानि** पूर्वसिद्धानि **यानि वीर्याणि** पराक्रमयुक्तानि कर्माणि **चकार तस्य इन्द्रस्य** तानि वीर्याणि **नु** क्षिप्रम् **प्र वोचम्** प्रब्रवीमि । कानि वीर्याणीति तदुच्यते । **अहिम्** मेघम् **अहन्** हतवान् । तदेकं वीर्यम् । **अनु** पश्चात् **अपः** जलानि **ततर्द** हिंसितवान् । भूमौ पातितवानित्यर्थः । इदं द्वितीयं वीर्यम् । **पर्वतानाम्** सम्बन्धिनीः **वक्षणाः** प्रवहणशीलाः नदीः **प्र अभिनत्** भिन्नवान् । कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः । इदं तृतीयं वीर्यम् । एवमुत्तरत्रापि द्रष्टव्यम् ।।

वीर्याणि । 'शूर वीर विक्रान्तौ' । ण्यन्तात् 'अचो यत्' इति यत् । 'णेरनिटि' इति णिलोपः । 'तित्स्वरितम्' इति स्वरितत्वम् । यतोऽनावः' इत्याद्युदात्तत्वं न भवति । आद्युदात्तत्वे हि सुशब्देन बहुव्रीहौ 'आद्युदात्तं यच्छन्दसि' इत्यनेनैवोत्तरपदाद्युदात्तत्वस्य सिद्धत्वात् 'वीरवीर्यौ च' इति पुनस्तद्विधानमनर्थकं स्यात् । अतोऽवगम्यते 'यतोऽनावः' इत्याद्युदात्तत्वं वीरशब्दे न प्रवर्तते इति । अतः परिशेषात् 'तित्स्वरितम्' इति प्रत्ययस्य स्वरितत्वमेव । वोचम् । 'अस्यतिवक्तिख्यातिभ्योऽङ्' (पा.सू.३-१-५२) इति च्लेः अङादेशः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । चकार । णलि लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् । यद्वृत्तयोगादनिघातः । अहन् । लङि 'इतश्च' इति इकारलोपे 'हल्ङ्याब्भ्यः' इति तकारलोपः । अहिम् । आङ्पूर्वात् हन्तेः 'आङि श्रिहनिभ्यां ह्रस्वश्च' (उ.सू.४-५७७) इति इप्रत्ययः, आङो ह्रस्वत्वं च । चशब्देन 'वेञो डित्, समाने ख्यश्चोदात्तः' इति डित्त्वं पूर्वपदोदात्तत्वं चानुकृष्यते । ततः टिलोपे पूर्वपदस्योदात्तत्वम् । ततर्द । 'उतृदिर् हिंसानादरयोः' । 'तिङ्ङतिङः' इति निघातः । वक्षणाः । 'वक्ष रोषे' । 'क्रुधमण्डार्थेभ्यश्च' (पा.सू.३-२-१५१) इति युच् । चित्स्वरं बाधित्वा व्यत्ययेन प्रत्ययस्वरः ।। १ ।।

**सिद्धाञ्जनम्–** सप्तमेऽनुवाके 'इन्द्रस्य नु वीर्याणि' इति पञ्चदशर्चं द्वितीयं सूक्तम् । आङ्गिरसो हिरण्यस्तूप ऋषिः, त्रिष्टुप् छन्दः, इन्द्रो देवता ।

इदं एतायामेति सूक्तं उभयं च ऐन्द्रं हिरण्यस्तूपस्य । अत्र वृत्रवधवृत्तान्तः परत्र वृत्रनवग्वादयः प्रस्तुताः । उभयोः समासतस्तात्पर्यं सूक्तद्वयान्ते प्रतिपादयिष्यते । प्रसक्तिवशाद् वृत्रवधेतिहासरहस्यं अङ्गिरस्तत्त्वं च समालोचयिष्यामः । तस्मात् स्थूलार्थाविरोधेनेह पदार्थमात्रमाचक्ष्महे मन्त्राणाम् । ऋषिराह पराक्रमानिन्द्रस्य- **इन्द्रस्य** देवराजस्य **वीर्याणि** वीरकर्माणि **प्रवोचं नु** प्रब्रवीमि तावत् (नु क्षिप्रनामेति व्याख्यातारः, वोचम् अडभावः, लुङ् लडर्थे) **यानि** वीरकर्माणि **प्रथमानि** प्रधानानि न केनापि कृतपूर्वाणि वा **वज्री** वज्रवान् इन्द्रः **चकार** कृतवान् । त्रीणि तानि कर्माण्याह । **अहिं** मेघं (सर्पे वृत्रेऽपि अहिः, हन्तेः आङि इण् आङो ह्रस्वः) **अहन्** हतवान् । **अनु** पश्चात् **अपः ततर्द** अपो हिंसितवान्, भूमौ अपां पातनमेव हिंसा (तर्दतिर्हिंसार्थः) **पर्वतानां** सम्बन्धिनीः तदुद्भवा **वक्षणाः** प्रवहणशीलाः नदीः (वक्षणा वहतेः, नदीनाम) **प्राभिनत्** प्रभिन्नवान् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।**
**वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः ।। २ ।।**

अहन् । अहिम् । पर्वते । शिश्रियाणम् । त्वष्टा । अस्मै । वज्रम् । स्वर्यम् । ततक्ष । वाश्राःऽइव । धेनवः । स्यन्दमानाः । अञ्जः । समुद्रम् । अव । जग्मुः । आपः ।। २ ।।

## ऋग्भाष्यम्

**त्वष्टा त्वेतज्ज्ञानवज्रं विरिश्चस्ततक्षै तद्विषयं यत् त्विडात्मा ।**
**स्वर्यं वज्रं निशितं शब्दजं वा शिशुवत्सा गाव इवैतदीरिताः ।**
**अञ्जः समुद्रं जग्मुरापः क्रिया वा समुद्रिक्तं देवमेनं व्रजन्ति ।। २ ।।**

**ऋग्भाष्यटीका– अहन्** । इन्द्रः **पर्वते** पर्वतेषु । **शिश्रियाणं** कानजन्तमेतत् । श्रितवन्तं **अहिं** दैत्यं **अहन्** हतवान् । ईश्वरोऽपि पर्वते भक्तजीवजाते । शिश्रियाणम् अहिंसं शयमहन्निति प्रथमपादार्थः स्पष्ट एव । द्वितीयपादं विष्णौ व्याख्याति ।। **त्वष्टेति** ।। यद्यस्मात्त्विडात्मा । तस्मात् **त्वष्टा** विरिश्चोऽ**स्मै** परमेश्वरायैतद्विषय इति यावत् । **वज्रं** ज्ञानवज्रम् । ज्ञानाख्यं वज्रं भक्तानां **ततक्ष** निर्मितवान् । एतत्त्विति प्रकृतेन सम्बन्धार्थं येन वज्रेणाहिमहन्नेतत्त्विति । एतेन प्रसिद्धेन्द्रेऽपि योजना सूचिता । त्वष्टा देववर्धकिः । अस्मा इन्द्राय इन्द्रस्यार्थे वज्रं ततक्षेति । **स्वर्य**मिति वज्रविशेषणम् । तत्प्रसिद्धे ज्ञाने च व्याख्याति । **स्वर्यमिति** ।। 'स्वृ शब्दोपतापयोः' इत्यस्येदं रूपम् । तत्प्रसिद्धं वज्रं स्वर्यमुपतप्तम् । शस्त्राणि तापपूर्वकं निशितानि भवन्तीति निशितत्वस्योपलक्षणमेतत् । निशितम् । ज्ञानाख्यन्तु स्वर्यं शब्दसम्बन्धि । शब्दजं वेदजम् । उत्तरार्धमिन्द्रे विष्णौ च क्रमेण व्याख्याति । **शिशुवत्सा इति** ।। अत्रैतदीरिता इत्यैन्द्रत्व-सिद्ध्येऽध्याहृतम् । अहौ दैत्ये हते सत्येतेनेन्द्रेणेरिता **आपो** नद्य इति यावत् । **स्यन्दमाना वाश्राः** शिशुवत्सा **धेनवः** गाव **इव** । शिशूनं जः आर्जवेन । **समुद्रमवजग्मुः** अवाजग्मुः । यद्वा । एतेनेश्वरेणेरिता आपः क्रियाः स्यन्दमानाः अप्रतिहतवृत्तयः समुद्रं समुद्रिक्तम् एनं देवं प्रति व्रजन्ति । संशये नष्टे भक्ता भगवन्तमेव यजन्त इति ।। २ ।।

**मन्त्रार्थमञ्जरी–** (इन्द्रः) पर्वते, पर्वतेषु । शिश्रियाणम्, श्रयतेः लिटि 'लिटः कानज्वा'

इति लिडादेशकानजन्तमेतत्, श्रितवन्तम् । अहिम्, दैत्यम् । अहन्, हतवान् । ईश्वरस्तु पर्वते, जन्माख्यपर्वोपेते, भक्तजीवजाते । शिश्रियाणम् । अहिम्, संशयम् । अहन् । त्वष्टा, देववर्धकिः । अस्मै, इन्द्राय, इन्द्रस्यार्थम् । स्वर्यम्, 'स्वृ शब्दोपतापयोः' इत्यतो यत्, उपतप्तम्, निशितमिति यावत् । वज्रम् । ततक्ष, निर्मितवान् । ईश्वरपक्षे तु त्वष्टा, 'त्विष दीप्तौ' प्रकाशात्मा, विरिञ्चः । अस्मै, परमेश्वराय, तद्विषय इति यावत् । स्वर्यम्, शब्दजम् । वज्रम्, ज्ञानाख्यवज्रम् । भक्तानाम् ततक्ष । अहौ दैत्ये हते सति किं जातम् ? इत्यत उच्यते आपः, नद्य इति यावत् । (इन्द्रेणेरिताः) इति शेषः । स्यन्दमानाः । (वाश्रा इव धेनवः) वाश्राः शिशुवत्सा धेनवो गाव इव शिशून् । अञ्जः, जवेन । समुद्रम् । अव जग्मुः, प्राप्तवत्यः । यद्वा (एतेनेश्वरेणेरिताः) आपः, क्रियाः । स्यन्दमानाः, अप्रतिहतवृत्तयः । (वाश्रा इव धेनव) समुद्रम्, समुद्रिक्तम्, एनं देवं प्रति । अव जग्मुः, व्रजन्ति, संशये नष्टे भक्ता भगवन्तमेव यजन्ते इति भावः ॥ २ ॥

**स्कन्द– अहन् अहिम् पर्वते शिश्रियाणम्** आश्रयन्तम् । लीयमानमित्यर्थः । मेघा हि स्वभावेन पर्वतेषु लीयन्ते । केन अहन् । उच्यते । **त्वष्टा** देवशिल्पी । **अस्मै** तादर्थ्ये चतुर्थी । अस्येन्द्रस्यार्थाय । **वज्रम् स्वर्यम्** 'स्वृ शब्दोपतापयोः' । प्रहारवेलायां शब्दकरमुपतापयितारं वाऽसुराणाम् । **ततक्ष** 'तक्षतिः करोतिकर्मा' (या ४-१९) । कृतवान् । अत्र चैकवाक्यता-प्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यं त्वष्टाऽ**स्मै** वज्रं स्वर्यं ततक्ष तेनाहन्निति योग्यत्व-सन्निधानाभ्यां वज्रस्य करणत्वप्रतीतिः, 'प्रहर शीघ्रमयं दण्डः' इत्यादिषु यथा । हते चाहौ **वाश्राः इव धेनवः** यथा वाशनशीला अभिनवप्रसूता धेनवः वत्सान् प्रति गच्छेयुः, एवम् **स्यन्दमानाः** स्रवन्त्यः **अञ्जः** ऋजुपर्यायोऽयम् । क्रियाविशेषणं चेदम् । तृतीयार्थे या प्रथमा । ऋजुना वा मार्गेण । **समुद्रम्** अन्तरिक्षनामैतत् (तु.निघ.१-३) । पञ्चम्यर्थे चात्र द्वितीया । समुद्रादन्तरिक्षात् **अव** भूमिं प्रति **जग्मुः** गता **आपः** । अथवा समुद्रमिति पार्थिव एव समुद्रोऽभिप्रेतः । स्वार्थं एव द्वितीया । हतेऽहौ तस्याधः पार्थिवं समुद्रं प्रति जग्मुराप इति ॥ २ ॥

**वेङ्कटमाधव– अहन् अहिम्** महीधरे लीयमानम् । **त्वष्टा अस्मै वज्रम्** स्वरणशीलम् अकरोत् तीक्ष्णधारम् । शब्दकारिण्योऽभिनवप्रसूता, **इव धेनवः** वत्सान् प्रति **स्यन्दमानाः** अञ्जसा अन्तरिक्षं प्रति अवगताः **आपः** । यद्वोदधिं प्रति गता इति ॥ २ ॥

**मुद्गल– पर्वते शिश्रियाणम्** आश्रितम् **अहिम्** मेघम् **अहन्** हतवान् । **अस्मै** इन्द्राय **स्वर्यम्** सुष्ठु प्रेरणीयम् **त्वष्टा** विश्वकर्मा **वज्रम् ततक्ष** तनूकृतवान् । तेन वज्रेण मेघे भिन्ने सति **स्यन्दमानाः** प्रस्रवणयुक्ताः **आपः समुद्रम् अञ्जः** सम्यक् **अव जग्मुः** प्राप्ताः । दृष्टान्तः । **वाश्राः इव** वत्सान् प्रति हम्भारवोपेताः धेनवः यथा सहसा वत्सगृहे गच्छन्ति तद्वत् ॥ २ ॥

**सायण– पर्वते शिश्रियाणम्** आश्रितम् **अहिम्** मेघम् **अहन्** हतवान् । **अस्मै** इन्द्राय **स्वर्यम्** सुष्ठु प्रेरणीयम् **त्वष्टा** विश्वकर्मा **वज्रम् ततक्ष** तनूकृतवान् । तेन वज्रेण मेघे भिन्ने सति **स्यन्दमानाः** प्रस्रवणयुक्ताः **आपः समुद्रम् अञ्जः** सम्यक् **अव जग्मुः** प्राप्ताः । दृष्टान्तः । **वाश्राः इव** वत्सान् प्रति हम्भारवोपेताः धेनवः यथा सहसा वत्सगृहे गच्छन्ति तद्वत् ॥

शिश्रियाणम् । 'श्रिञ् सेवायाम्' । लिटः कानच् । द्विर्भावहलादिशेषे यङादेशाः । 'चितः' इत्यन्तोदात्तत्वम् । स्वर्यम् । 'रु गतौ' । अस्मात् सुपूर्वात् 'ऋहलोर्ण्यत्' इति ण्यत् । 'संज्ञा-पूर्वको विधिरनित्यः' इति वृद्ध्यभावः । यद्वा । 'स्वृ शब्दोपतापयोः' इत्यस्मात् ण्यति पूर्ववत् वृद्ध्यभावः । 'तित्स्वरितम्' इति स्वरितत्वम् । वाश्यन्ते इति वाश्राः । 'वाशृ शब्दे' । 'स्फायितञ्चि' इत्यादिना रक् । जग्मुः । उसि 'गमहन' इति उपधालोपः ॥ २ ॥

**सिद्धाञ्जनम्–** पर्वते शिश्रियाणं आश्रितं, पर्वतं, पर्वते निलीयमानमित्यर्थः (श्रिञ् धातोः लिटः कानच्) **अहिं** मेघं **अहन्** हतवान् । केन साधनेन? **अस्मै** इन्द्राय **त्वष्टा** तक्षा देवशिल्पी **स्वर्यं** स्वःसम्बन्धिनं स्वर्लोकीयमित्यर्थः, सुष्ठु अर्यं प्रेरणीयं इति सायणः । **वज्रं** आयुधं **ततक्ष** तनूकृतवान् । तेन त्वष्टृतष्टेन स्वर्येण वज्रेण हतवान् अहिम् । मेघे तथा भिन्ने **स्यन्दमाना** स्रवन्त्यः **आपः समुद्रं** अपां राशिं **अञ्जः** ऋजुना मार्गेण क्रियाविशेषणमिदम्, **अवजग्मुः** प्राप्ताः । तत्र दृष्टान्तः । **वाश्रा इव** यथा हम्भारवोपेताः **धेनवः** वत्सान् प्राप्नुवन्ति तयेति ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य ।**
**आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम् ॥ ३ ॥**

वृषऽयमाणः । अवृणीत । सोमम् । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य । आ । सायकम् । मघऽवा । अदत्त । वज्रम् । अहन् । एनम् । प्रथमऽजाम् । अहीनाम् ॥ ३ ॥

## ऋग्भाष्यम्

**वव्रे सोमं तृषितो यद्वदेव वृषाऽपिबत्सवनेषु त्रिषु स्म ।**
**सवनानां कद्रुकत्वं द्रुतं यत्कमत्र सोमा ध्यानयोगे मनो वा ।**
**सायंकरं लयकृज्ज्ञानमेव समाददे संशयमीशवद्वा ।। ३ ।।**

**ऋग्भाष्यटीका– वृषा** ।। वव्रे । इन्द्रो **वृषायमाणो** वृषेवाचरन् । तृषितो वृषा यद्वदुदकं तथैव **सोममवृणीत** वव्रे स्वीकृतवान् । स्वीकृत्य च **त्रिकद्रुकेषु** त्रिषु सवनेषु । **सुतस्य** सुतं सोमं **अपिबत्** । स्मेति कद्रुकशब्दस्त्रिकद्रुकेषु महिषोयवाशिरमित्यादौ सवनेषु प्रसिद्ध इति सूचयति । कद्रुकशब्दं सवनेषु निर्वक्ति । **सवनानामिति** ।। यद्यस्मादत्र सवनेषु कं सुखं द्रुतं प्राप्तं तस्मात्सवनानां कद्रुकत्वं कद्रुकशब्दवाच्यत्वम् । कं द्रुकं द्रुतमत्रेति । अध्यात्मं व्याख्यानं सूचयति । **सोम इति** ।। मनो वा सोमः व्यवस्थितविकल्पोऽयमिति स्वयमेवाह । **ध्यानयोग इति** ।। अध्यात्ममाधारत्रयं त्रिकद्रुकशब्दमिति ज्ञेयम् । एवशब्देन पुनरुक्तिभयेन व्यधिकरणं व्याख्येयमित्याचष्टे । **सायमिति** ।। षोन्तकर्मणीत्यस्य रूपम् । सायमन्तं करोतीति डः । सायंकरम् । प्रसिद्धवज्रं दैत्यादीनां लयकृत् । ज्ञानं त्वविद्यादीनाम् । **आदत्ते**त्यस्यार्थः समादद इति । एनमित्यस्य विष्णुपक्षेऽर्थमाह । **संशयमिति** ।। इन्द्रपक्षे त्वहिमिति स्पष्टम् । वृषायमाण इत्यस्यार्थान्तरमाह । **ईशवद्वेति** ।। वृषावर्षिता ईशः स इवाचरन् अवृणीत सोममिति ।

ततश्चायमर्थः । **मघवा** धनादिमानिन्द्रः **सायकं** सायंकरं **वज्रमादत्त** समाददे । तेन च **अहीनाम्** अहिनामकानां दैत्यानां मध्ये **प्रथमजां** जनसनेति विट् । प्रथमजं मुख्यमेनमहिम् **अहन्** । तथा परमेश्वरः सायकं वज्रं ज्ञानमादत्त । भक्तानां मनस्युत्पादितवान् । तेन चाहीनाम् । 'हि गतौ' । ततः क्विः । नञ्समासः । अहयो ज्ञानविरोधिनः पापादयस्तेषां मध्ये प्रथमजां मुख्यमेनं संशयमहन्निति ।। ३ ।।

**मन्त्रार्थमञ्जरी–** (इन्द्रः) वृषायमाणः, वृषेवाचरन्, तृषितो वृषा यद्वदुदकम् । (तथैव) सोमम् । अवृणीत, वव्रे, स्वीकृतवान् । स्वीकृत्य च त्रिकद्रुकेषु, त्रिषु कं सुखं द्रुतं प्राप्तमत्रेति त्रिकद्रुकाख्यसवनेषु । सुतस्य, सुतम्, सोमम् । अपिबत् । अध्यात्मं तु 'उच्छिष्टं चम्वोर्भर' इत्यत्रोक्तदिशा त्रिकद्रुकेषु, बुद्ध्यादिस्थानेषु स्थितम् । (सुतस्य, सुतम्) सोमं मनः । अपिबत्,

बुद्ध्यादिस्थानत्रयस्थभगवद्विषयकं मनोऽपिबत्, तद्विषयकध्यानेन प्रीतोऽभवदिति यावत् । मघवा, धनादिमान्, इन्द्रः । सायकम्, 'षो अन्तकर्मणि' यत्, 'आदे च उपदेशे' इति धातोरात्त्वम्, करोतेः डः, सायकं दैत्यानां लयकृत्, ज्ञानं चेत् अविद्यादीनां लयकृत् । वज्रम्, आयुधम्, ज्ञानं वा । आ अदत्त, समाददे । तेन च अहीनाम्, अहिनामकानां दैत्यानां मध्ये । प्रथमजाम्, 'जनसनखनक्रमगमो विट्' इति विट्, 'विड्वनोरनुनासिकस्य' इत्यात्त्वम्, प्रथमम्, मुख्यम् । एनम्, अहिम् । अहन् । तथा परमेश्वरः सायकम्, अज्ञानादिनाशकम् । वज्रम्, ज्ञानम् । आ अदत्त, भक्तानां मनस्युत्पादितवान् । तेन च अहीनाम्, 'हि गतौ' ततो डिः, नञ्समासः, ज्ञानविरोधिनाम्, पापादीनां मध्ये । प्रथमजाम्, मुख्यम् । एनम्, (अहिम्) संशयम् । अहन् इति ।। ३ ।।

**स्कन्द–** वृषायमाणः 'अत्र पितरो मादयध्वं यथाभारगमावृषायध्वम्' इत्यस्य 'यथाभागमश्नीतेत्यैवैतदाह' (माश.२,४,२,२०) तथा 'अमीमदन्त पितरो यथाभागमावृषायिषत' इत्यस्य 'यथाभागमाशिषुरित्येवैतदाह' (माश.२,४,२,२२) इति शतपथब्राह्मणे विवरणाद् वृषायतिरशनार्थ इति गम्यते । अश्नन् । अथवा वृषशब्दोऽत्र उपलक्षणद्वितीयान्तो व्यत्ययेन भावे द्रष्टव्यः, न कर्तरि । क्यङ् चेच्छायां नाचारे । इच्छाक्यच्येव वा छान्दसत्वाद् दीर्घत्वम् आत्मनेपदत्वं च । **वृषायमाणः** वर्षणमिच्छन् । वर्षयितुमिच्छन्नित्यर्थः । किं कृतवान् । उच्यते । **अवृणीत** वृतवान् प्रार्थितवान् **सोमम्** । वृत्वा च **त्रिकद्रुकेषु अपिबत्** अभिप्लवन्यहं पूर्वं त्रिकद्रुका इत्याचक्षते । पीतवान् । सुतस्य द्वितीयार्थे षष्ठ्येषा । षष्ठीश्रुतेर्वैकदेशमिति शेषः । सुतं सोमं सुतस्य वा सोमस्यैकदेशं स्वांशलक्षणम् । **आ सायकम्** आ इत्युपसर्गः अदत्त इत्याख्यातेन सम्बन्धयितव्यः । सायकशब्दोऽपि षोऽन्तकर्मणि इत्यस्य क्रियाशब्दो विशेषणम् न वज्रनाम वज्रशब्देनोपात्तत्वात् । सायकं शत्रूणामन्तकरम्, **मघवा** घनवानिन्द्रः **आ अदत्त** गृहीतवान् वज्रम् । गृहीत्वा च **अहन् एनम्** एनमिति पूर्वस्यामृच्यादिष्टस्य मेघस्या-न्वादेशः समनन्तरस्य वा । वज्रमिति तृतीयार्थे द्वितीया । हतवानेनं मेघमनेन वा वज्रेण । कीदृशम् । **प्रथमजाम्** अग्रे जातम् **अहीनाम्** निर्धारण एषा षष्ठी । मेघानां मध्ये ।। ३ ।।

**वेङ्कटमाधव–** वृषभ इवाचरन् **अवृणीत सोमम्** आभिप्लविकस्य पूर्वस्त्र्यहस्त्रिकद्रुकस्तस्मिन्

सुतम् **अपिबत्** सोमम् । **आ अदत्त** अन्तकरम् आयुधम् **मघवा** । तेन **एनम्** मेघशिरसम् **अहिम्** असुरं मेघानां मुख्यम् **अहन्** ।। ३ ।।

**मुद्गल– वृषायमाणः** वृष इव आचरन् इन्द्रः **सोमम् अवृणीत** वृतवान् । **त्रिकद्रुकेषु** ज्योतिर्गौरायु इत्येतन्नामकास्त्रयो यागाः त्रिकद्रुका उच्यन्ते । तेषु **सुतस्य** अभिषुतस्य सोमस्यांशम् **अपिबत्** पीतवान् । **मघवा** धनवान् इन्द्रः **सायकम्** बन्धकम् **वज्रम् आ अदत्त** स्वीकृतवान् । वज्रेण **अहीनाम्** मेघानां मध्ये **प्रथमजाम्** प्रथमोत्पन्नम् **एनम्** मेघम् **अहन्** हतवान् ।।३।।

**सायण– वृषायमाणः** वृष इव आचरन् इन्द्रः **सोमम् अवृणीत** वृतवान् । **त्रिकद्रुकेषु** ज्योतिर्गौरायु इत्येतन्नामकास्त्रयो यागाः त्रिकद्रुका उच्यन्ते । तेषु **सुतस्य** अभिषुतस्य सोमस्यांशम् **अपिबत्** पीतवान् । **मघवा** धनवान् इन्द्रः **सायकम्** बन्धकम् **वज्रम् आ अदत्त** स्वीकृतवान् । वज्रेण **अहीनाम्** मेघानां मध्ये **प्रथमजाम्** प्रथमोत्पन्नम् **एनम्** मेघम् **अहन्** हतवान् ।।

वृषायमाणः । वृष इवाचरन् । 'कर्तुः क्यङ् सलोपश्च' (पा.सू.३-१-११) इति क्यङ् । 'अकृत्सार्वधातुकयोः' इति दीर्घः । अदुपदेशात् धातोः अन्तोदात्तत्वे क्यङन्तात् धातोः अन्तोदात्तत्वम् । सायकम् । 'षिञ् बन्धने' । सिनोतीति सायकः । ण्वुल् । लित्स्वरेणाद्युदात्तत्वम् । प्रथमजाम् । प्रथमं जायते इति प्रथमजाः । 'जनसनखनक्रमगमो विट्' । 'विड्वनोः' इति आत्वम् ।। ३ ।।

**सिद्धाञ्जनम्– वृषायमाणः** वृष इव वर्षितेवाचरन्निन्द्रः (पदपाठे वृष इति ह्रस्व-अकारश्छान्दसः) **सोमं अवृणीत** वृतवान् । **त्रिकद्रुकेषु** अभिप्लवत्र्यहं त्रिकद्रुका इति आचक्षते याज्ञिकाः । ज्योतिर्गौरायुरिति एतन्नामका यागास्त्रिकद्रुका उच्यन्ते । तर्हि अन्तर्यागपरेऽर्थे सूपपादम् । ज्योतिरादित्रिके **सुतस्य** सोमस्य अंशं **अपिबत्** पीतवान् । अथ **मघवा** सोमपानेन धनवान् **सायकं** अन्तकरं शत्रूणां (षो अन्तकर्मणि ण्वुल्) **वज्रं आदत** गृहीतवान् । तेन **अहीनां** मेघानां **प्रथमजां** प्रथमं जायत इति प्रथमजाः (जनादिभ्यो विट्, विड्वनोरिति आत्वम्) तं **एनम् अहन्** हतवान् । अथवा 'एनम्' तृतीयार्थे विभक्तिव्यत्ययः, एतेन वज्रणेत्यर्थः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः ।**
**आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ॥ ४ ॥**

यत् । इन्द्र । अहन् । प्रथमऽजाम् । अहीनाम् । आत् । मायिनाम् । अमिनाः । प्र । उत । मायाः ।
आत् । सूर्यम् । जनयन् । द्याम् । उषसम् । तादीत्ना । शत्रुम् । न । किल । विवित्से ॥ ४ ॥

## ऋग्भाष्यम्

**अहन्नेनं प्रथमं मायिनां च व्यनाशयो व्याजरूपाश्च मायाः ।**
**ततः सूर्यद्युदिनादेश्च कर्ता त्वमेव तावद् बलतो न शत्रुम् ।**
**लभसे मायावादिनां वाऽथ माया व्यनाशयः स्वजनैस्तज्जयेन ॥ ४ ॥**

**ऋग्भाष्यटीका–** **यदिन्द्र** । अहन्नेनम् । अत्राद्यश्चशब्दो यस्मादित्यर्थे । हे **इन्द्र!** त्वं **यत्** यस्मात् **अहीनां प्रथमजां** प्रथममेनमहिं **अहन्** हतवानसि । **आत्** ततःकरणात् **मायिनां** मायाविनामन्येषां दैत्यानां **माया उत** व्याजरूपाः छद्मरूपा मायाश्च **प्रामिणाः** 'मीञ् हिंसायाम्' । व्यनाशयः । किं च । **आत्** तत एव त्वं **सूर्यं द्यामुषसं** च **जनयन्** उत्पादकः सूर्यद्युदिनादेश्च कर्ता जातोऽसि । पुरा सूर्यादिव्यापारा अहिना दैत्येन निरुद्धाः । तद्वधेन पुनस्तद्व्यापाराणां कारयिताभूरित्यर्थः । तथापि तद्वधेनेतरमायानाशः कथम् । तस्य मुख्यत्वेनेतरदैत्याश्रयत्वात् । मुख्यत्वं कुतः । **तादीत्ना** तावता । बलेनेति शेषः । तावद्बलतस्तावद्बलेनोपेतमिति शेषः । अहिना समानबलमन्यं **शत्रुं न विवित्से किल** न लभसे खलु । 'विद्लृ लाभे' । परमेश्वरे लेशेन व्याख्याति । **मायेति** ॥ अथवेति सम्बन्धः । यतो ज्ञानविरोधिनां प्रथमं भक्तानां संशयं त्वं विनाशितवान् तस्मान्मायिनां मायावादिनां विरुद्धवादिनां मायाः कुटिलोक्तीः तैर्नष्टसंशयैः स्वजनैः तज्जयेन व्यनाशयः । ततश्च सूर्यं ज्ञानहेतुमाचार्यं तत्सङ्गतिम् । द्यां मोक्षमुषसं ज्ञानं च भक्तानां कृतवानसीति । शेषं समानम् ॥ ४ ॥

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र (त्वम्) यत्, यस्मात् । अहीनाम् । प्रथमजाम्, प्रथमम्, एनमहिम् । अहन्, हतवानसि । आत्, ततः कारणात् । मायिनाम्, मायाविनाम्, अन्येषां दैत्यानाम् । मायाः उत, व्यात्तरूपाश्छद्मरूपा मायाश्च । प्र अमिनाः, 'मीञ् हिंसायाम्'

व्यनाशयः । किं च, आत्, तत एव । (त्वम्) सूर्यम् । द्याम् उषसम् । (च) जनयन्, उत्पादकः, सूर्यद्युदिनादेश्च कर्ता जातोऽसि, पुरा सूर्यादिव्यापारा अहिना दैत्येन निरुद्धास्तद्वधेन पुनस्तद्व्यापाराणां कारयिताभूदित्यर्थः । तथापि तद्वधेनैव मायाविनाशः कथम् ? तस्य मुख्यत्वेनेतरदैत्याश्रयत्वात्, मुख्यत्वं कुत उच्यते ? तादीत्ना तावता । (बलेन) इति शेषः । अहिना समानबलमन्यम् शत्रुम्, न विवित्से किल न लभसे खलु, 'विद्लृ लाभे' श्लुविकरणम् । ईश्वरे तु (हे) इन्द्र, परमेश्वर । यत्, यस्मात् । अहीनाम्, ज्ञानविरोधिनाम् । (प्रथमजाम्) प्रथमम्, (एनमहिम्) भक्तानां संशयम् । (त्वम्) (अहन्) नाशितवान् । (आत्) तस्मात् । मायिनाम्, मायावादिनाम् । मायाः (उत), कुटिलोक्तीश्च । तैर्नष्टसंशयैः स्वजनैस्तज्जयेन (प्र अमिनाः) व्यनाशयः । (आत्) ततश्च । सूर्यम्, ज्ञानहेतुमाचार्यम् । तत्सङ्गतम् द्याम्, मोक्षम् । उषसम्, ज्ञानम् । (च) (जनयन्) भक्तानां कृतवानसि । शेषं समानम् ॥ ४ ॥

**स्कन्द–** **यत्** यदा हे **इन्द्र! अहन्** हतवानसि **प्रथमजाम् अहीनाम्, आत्** यदार्थे यच्छब्दश्रुतेरादिति निपातस्तदार्थे वर्तते । तदा तत्सहायानां **मायिनाम्** अतिसन्धानमायिनाम् **अमिनाः प्र** 'मीञ् हिंसायाम्' । **प्रामिनाः** प्रकर्षेण हिंसितवानसि । **उत मायाः** उतशब्दोः मायाशब्दात् परो द्रष्टव्यः । माया अपि । न बलमदात् हठेनैवाहिं हतवान् असि । किं तर्हि । तत्सहायानां मायावतां प्रज्ञामतिसन्धायेत्यर्थः । तदैव वृष्टिमूलत्वात् सर्वजन्मनः **सूर्यम् जनयन् द्याम्** च **उषसम्** च । तादीत्नाशब्दस्तादृशपर्यायः तावच्छब्दपर्यायो वा । तादृशं मायावत्सहायं तावन्तं वा महापरिमाणम् अन्यं मेघं **शत्रुम्** शातयितव्यं वैरिणं वा **न किल विवित्से** विन्दतेरिदं रूपम् । न किलाविन्दः । नालभथा इत्यर्थः । यादृगसौ मायावत्सहायो महापरिमाणो वा तादृगन्यो नैवास्तीत्यर्थः । किलशब्द एव तदानींशब्दपर्यायस्तदेत्यैतस्मिन्नर्थे वर्तते । सूर्यादीन् जनयंस्तदानीमिति । **आत्** शब्दस्तु पदपूरणः ॥ ४ ॥

**वेङ्कटमाधव–** यदा **इन्द्र!** हतवानसि **प्रथमजातम् अहीनाम्** । यदा च तदनन्तरं तत्सहायानां मायावताम् मायाः प्रकर्षेण हिंसितवानसि । तदनन्तरमहिना तिरोभूतम् **सूर्यम् द्याम् उषसम्** च प्रादुर्भावयन् त्वं तदानीं जगति न कंचन **शत्रुम्** हतशिष्टम् अन्वविन्दः ॥४॥

**मुद्गल–** उत अपि च हे **इन्द्र! यत्** यदा **अहीनाम्** मेघानाम् **प्रथमजाम्** प्रथमोत्पन्नं मेघम् **अहन्** हतवान् असि । **आत्** तदनन्तरम् **मायिनाम्** मायोपेतानामसुराणां सम्बन्धिनीः

**मायाः प्र अमिनाः** प्रकर्षेण नाशितवानसि । अनन्तरम् **सूर्यम् उषसम्** उषःकालम् **द्याम्** आकाशं च **जनयन्** उत्पादयन् आवरकमेघनिवारणेन प्रकाशयन् वर्तते । **तादीत्ना** तदानीम् आवरकान्धकाराभावात् **शत्रुम्** घातकं वैरिणम् **न विवित्से किल** त्वं न लब्धवान् खलु ॥ ४ ॥

**सायण– उत** अपि च हे **इन्द्र! यत्** यदा **अहीनाम्** मेघानाम् **प्रथमजाम्** प्रथमोत्पन्नं मेघम् **अहन्** हतवान् असि । **आत्** तदनन्तरम् **मायिनाम्** मायोपेतानामसुराणां सम्बन्धिनीः **मायाः प्र अमिनाः** प्रकर्षेण नाशितवानसि । अनन्तरम् **सूर्यम् उषसम्** उषःकालम् **द्याम्** आकाशं च **जनयन्** उत्पादयन् आवरकमेघनिवारणेन प्रकाशयन् वर्तते । **तादीत्ना** तदानीम् आवरकान्धकाराभावात् **शत्रुम्** घातकं वैरिणम् **न विवित्से किल** त्वं न लब्धवान् खलु ।

अहन् । हन्तेः लङि 'हल्ङ्याभ्यः' इति सिलोपः । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । मायिनाम् । मायाशब्दस्य व्रीह्यादिषु पाठात् 'व्रीह्यादिभ्यश्च' (पा.सू.५-२-११६ ) इति मत्वर्थीय इनिः । अमिनाः । 'मीञ् हिंसायाम्' । क्रैयादिकः । 'मीनातेर्निगमे' (पा.सू.७-३-८१) इति ह्रस्वत्वम् । तादीत्ना । तदानीमित्यस्य पृषोदरादित्वात् वर्णविपर्ययः । किल । 'निपातस्य' इति दीर्घत्वम् । विवित्से । 'विद्लृ लाभे' । क्रादिनियमात् प्राप्तः इट् व्यत्ययेन न भवति ॥ ४ ॥

**सिद्धाञ्जनम्–** हे **इन्द्र! यत्** यदा **अहीनां** मेघानां प्रथमजां **प्रथमजातं** मेघं **अहन्** हतवानसि (लङ्, मध्यमपुरुषैकवचनम्), **आत्** ततः परं **मायिनां** मायाविनां **मायाः उत** कपटप्रज्ञा अपि **प्रमिनाः** प्रणाशितवानसि ('मीञ् हिंसायाम्', मीनातेः निगमे ह्रस्वत्वम्) **आत्** तदनन्तरं **सूर्यं उषसं द्यां** द्युस्थानं च **जनयन्** आवरकमेधप्रहाणेन प्रकाशयन् वर्तसे **तादीत्ना** तदानीं (तदानीमित्यस्य पृषोदरादित्वाद्वर्णव्यत्ययः) **शत्रुं** वैरिणं **न विवित्से किल** न लब्धवानसि खलु । किल-निपातस्य चेति दीर्घत्वम् । विवित्से– 'विद्लृ लाभे' लिट् ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।**
**स्कन्धांसीव कुलिशेना विवृक्णाऽहिः शयत उपपृक्पृथिव्याः ॥ ५,३६,३२ ॥**

अहन् । वृत्रम् । वृत्रऽतरम् । विऽअंसम् । इन्द्रः । वज्रेण । महता । वधेन । स्कन्धांसिऽइव । कुलिशेन । विऽवृक्णा । अहिः । शयते । उपऽपृक् । पृथिव्याः ।। ५,३६,३२ ।।

## ऋग्भाष्यम्

**अहन्वृत्रं व्यंसमतोऽधिकं च तमोमिथ्याप्रत्ययौ व्यंसनाद्वा ।**
**स्कन्धास्तरोर्यद्वदथो विवृक्णा अहिश्च वज्रेण कुलस्य शङ्कतेः ।**
**विद्यानाम्ना कुलिशो बुद्धिरेव पृथिव्याख्या संशयस्तद्गतो यत् ।**
**अतः पृथिव्या उपपृक्...........................।। ५,३६ ।।**

**ऋग्भाष्यटीका– अहन्वृत्रम्** । **इन्द्रो महता वधेन** वधसाधनेन **वज्रेण** वृत्रं नाम दैत्यं वृत्रतरमतो वृत्रादधिकं वृत्रतरनामकं च दैत्यं **व्यंसं** विगतांससन्धिं शिरश्छित्त्वेति यावत् । **अहन्** वृत्रशब्दो वृणोतेरूपम् । तस्य यौगिकमर्थमादायातोऽधिकमिति वृत्रतरशब्दो निरुक्तः । अध्यात्म-माह । **तम इति** ।। व्यंसनाद्विसंवादनाद्व्यंसशब्दौ तमोमिथ्याप्रत्ययौ वा वृत्रवृत्रतरौ । तावीश्वरो ज्ञानेनाहन् । एवं वृत्रं वृत्रतरमहिं च त्रीनिन्द्रो हतवान् । अथो **विवृक्णा** विवृक्णानि **स्कन्धांसीव** विवृक्णविशेषेण छिन्नास्तरोः स्कन्धा यद्वत्तथा **कुलिशेन** वज्रेण छिन्ना **अहिः** उपलक्षणमेतत् । वृत्रवृत्रतरावहिश्च **पृथिव्या उपपृक्** 'पृची सम्पर्के' पूर्ववदेकवचनम् । पृथिवीसम्पर्कवन्तः शयते अशेरत । पृथिव्यां पतिता इति यावत् । अध्यात्मं कुलिशः क इत्यत आह । **कुलस्येति** ।। यस्मिन्पुरुषे जाताविद्यातत्कुलस्यापि सुखकरणात् । कुलमस्यास्तीति कुली तस्य सन्ततेः शं यस्मात्स कुलिश इत्यर्थः । पृथिवीमाह । **बुद्धिरेवेति** ।। एवशब्देन निर्वचनं स्फुटमिति सूचयति । अहेः संशयस्य पृथिव्या उपपृक्त्वं कथमित्यत आह । **तद्गत इति** ।। यद्यस्मात्संशयो बुद्धिगतोऽतः पृथिव्या उपपृगुच्यते । अज्ञानमिथ्याज्ञानयोरप्येवम् । अत्र पक्षे पृथिव्या उपपृगित्यनुवादः । शयत इत्येतदेव विधेयम् ।। ५,३६ ।।

**मन्त्रार्थमञ्जरी–** इन्द्रः महता । वधेन, वधसाधनेन । वज्रेण । वृत्रम्, वृत्रं नाम दैत्यम्, अज्ञानं वा । वृत्रतरम्, अतो वृत्रादप्यधिकं वृत्रतरनामकं च दैत्यम्, मिथ्याज्ञानं वा । व्यंसम्, विगतां ससंधिम्, शिरश्छित्त्वेति यावत् । अहन् । (व्यंसनात्) विसंवादनाद्व्यंसाख्यं वृत्रादि-शब्दितमज्ञानादिकमीश्वरो ज्ञानेनाहन्, एवं वृत्रं वृत्रतरमहिं च त्रीनिन्द्रो हतवान् । अतः विवृक्णा, विवृक्णानि, विशेषेण च्छिन्नाः । स्कन्धांसीव, तरोः स्कन्धा यद्वत् । (तथा) कुलिशेन, वज्रेण

(छिन्नाः) 'अहिः' इत्युपलक्षणम् अहिवृत्रवृत्रतराः । पृथिव्याः । उपपृक्, 'पृची सम्पर्के', पूर्ववदेकवचनम्, पृथिवीसम्पर्कवन्तः । शयते, अशेरत, पृथिव्यां पतिता इति यावत् । अध्यात्मं तु कुलिशेन, कुलमस्यास्तीति कुली ब्रह्मज्ञानी, स्वकुलस्य सुखहेतुतया 'कुली' इत्युच्यते, तस्य कुलिनः शं सुखं यस्माद्भवति तेन कुलिशेन ज्ञानेन । अहिः, अहिप्रभृतयः, ज्ञानविरोधिपापा-ज्ञानसंशयमिथ्याप्रत्ययाः । पृथिव्याः, बुद्धेः । उपपृक्, बुद्धिसम्पृक्ताः, बुद्धिगता एते । (विवृक्णा), आविवृक्णाः । (स्कन्धांसीव) शयते । इति ॥ ५ ॥

**स्कन्द– अहन्** हतवान् **वृत्रम्** मेघं वृत्रनामानमसुरं वा **वृत्रतरम्** वर्ततेर्गत्यर्थस्येदं रूपम् । गन्तृतरम् अतिशयेन गन्तारमित्यर्थः । **व्यंसम्** विगतांसं विच्छिन्नांसम् व्यंसनामानमपरमसुरं वा । कः । **इन्द्रः** । केन । **वज्रेण** । कीदृशेन । **महता वधेन** नित्यं हन्त्रा । अथवा हनननामैव वधः । प्रहारः । वज्रं च तत् करणम् । वज्रेण महता प्रहारेण हतवान् । हतश्च सन् स्कन्धांसीव वृक्षाणां स्थूला अधोभागाः स्कन्धांसि । तानि यथा **कुलिशेन** वज्रनामैतत् (निघ.२-२०) । इह तु आयुधसामान्याद्वा कुठारे प्रयुक्तः । कुठारेण **विवृक्णा** विविधं छिन्नानि शयीरन् तद्वत् । **अहिः** मेघः । अंहतेर्वा अहिर्गन्ता वृत्राख्यो व्यंसाख्यश्चासुरः । **शयते** शेतिरिह स्थानार्थः । आमाशयो जलाशय इति यथा, 'द्विमाता शयुः' (ऋ १-३१-२) इति यथा । कथं तिष्ठति । **उपपृक् पृथिव्याः** उपेत्येष समित्येतस्य स्थाने । सम्पर्चितः पृथिव्यां भूमौ । पतितः योऽवसन् मेघे उदकरूपेण भूमौ पतितः तिष्ठति शरीरेणैवासुरः ॥ ५ ॥

**वेङ्कटमाधव–** हतवान् **वृत्रम्** अतिशयेन निवेष्टयितारम् **व्यंसम्** चापरमसुरम् **इन्द्रः महता** आयुधेन हन्त्रा । यथा वृक्षस्य **स्कन्धांसि** कुठारेण विविधं छिन्नानि **शेरते** एवम् अहिः शेते छिन्नपादहस्तः **पृथिव्याः** उपपर्चनः ॥ ५ ॥

**मुद्गल–** अयम् **इन्द्रः महता वधेन** सम्पादितो यो महान् वधः तेन **वज्रेण वृत्रतरम्** अतिशयेन लोकानां आवरकम् अन्धकाररूपम् तम् **वृत्रम्** एतन्नामकमसुरम् **व्यंसम्** विगतांसं छिन्नबाहुर्यथा भवति तथा **अहन्** हतवान् । अंसच्छेदे दृष्टान्तः । कुलिशेन कुठारेण **विवृक्णा** विशेषतश्छिन्नानि स्कन्धांसीव । यथा वृक्षस्कन्दाश्छिन्ना भवन्ति तद्वत् । तथा सति **अहिः** वृत्रः **पृथिव्याः** उपरि **उपपृक्** सामीप्येन संपृक्तः **शयते** शयनं करोति । छिन्नकाष्ठवत् भूमौ पततीत्यर्थः ॥ ५ ॥

**सायण–** अयम् **इन्द्रः महता वधेन** सम्पादितो यो महान् वधः तेन **वज्रेण वृत्रतरम्** अतिशयेन लोकानां आवरकम् अन्धकाररूपम् । यद्वा । वृत्रैः आवरणैः सर्वान् शत्रून् तरति तम् **वृत्रम्** एतन्नामकमसुरम् **व्यंसम्** विगतांसं छिन्नबाहुर्यथा भवति तथा **अहन्** हतवान् । अंसच्छेदे दृष्टान्तः । कुलिशेन कुठारेण **विवृक्णा** विशेषतश्छिन्नानि स्कन्धांसीव । यथा वृक्षस्कन्दाश्छिन्ना भवन्ति तद्वत् । तथा सति **अहिः** वृत्रः **पृथिव्याः** उपरि **उपपृक्** सामीप्येन संपृक्तः **शयते** शयनं करोति । छिन्नकाष्ठवत् भूमौ पततीत्यर्थः ।।

वृत्रतरम् । 'वृतु वर्तने' । 'स्फायितञ्चि' इत्यादिना भावे रक्प्रत्ययान्तो वृत्रशब्दः । वृत्रेण आवरणेन सर्वं तरतीति वृत्रतरः । तरतेः पचाद्यच् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । तरपि तु व्यत्ययेन व्यंसम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् । वधेन । 'हनश्च वधः' इति भावे अप्; तत्संनियोगेन धातोः वधादेशः । स च अन्तोदात्तः । अन्त्यस्य अकारस्य 'अतो लोपः' इति लोपः । उदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वम् । विवृक्णा । 'ओव्रस्चू छेदने' । कर्मणि निष्ठा । 'यस्य विभाषा' इति इट्प्रतिषेधः । 'ओदितश्च' (पा.सू.८-२-४५) इति परत्वात् निष्ठानत्वम् । ततो 'व्रश्चभ्रस्ज' इति षत्वे प्राप्ते 'निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः' (पा.सू.८-२-१५) इति नत्वस्य सिद्धत्वेन झल्परत्वाभावात् षत्वं न भवति । कुत्वे तु कर्तव्ये तदसिद्धमेव (पा.सू.८-२-१) इति 'चोः कुः' इति कुत्वम् । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । शयते । 'बहुलं छन्दसि' इति शपो लुगभावः । पृथिव्याः । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ।। ५,३६ ।।

**सिद्धाञ्जनम्– इन्द्रः वृत्रतरं** अतिशयेन वृत्रं आवरकं लोकस्य, वृत्रं आवरकं असुरं मेघरूपं **वज्रेण** आयुधेन **महता** बलीयसा **वधेन** प्रहारेण (हनश्च वध इति भावे अप्) **व्यंसं** विगतांसं यथा बाहुच्छेदो भवति तथा **अहन्** हतवान् । तथा छेदे दृष्टान्तः । **कुलिशेन** कुठारेण **विवृक्णा** विशेषेण छिन्नानि **स्कन्धांसि** इव वृक्षस्कन्धाः यथा भूमौ पतिता भवन्ति तथा सति, **अहिः** वृत्रः **पृथिव्याः** भूमेः **उपपृक्** सामीप्येन सम्पृक्तः **शयते** शेते । **विवृक्णा–** 'ओव्रस्चू छेदने', निष्ठानत्वम् । शयते– शेः परस्य शषः लुगभावः ।। ५ ।।

**।। इति प्रथमाष्टके द्वितीयाध्याये षट्त्रिंशो वर्गः ।।**

## ।। अथ सप्तत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।**
**नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ।। ६ ।।**

अयोद्धाऽइव । दुःऽमदः । आ । हि । जुह्वे । महाऽवीरम् । तुविऽबाधम् । ऋजीषम् । न । अतारीत् । अस्य । सम्ऽऋतिम् । वधानाम् । सम् । रुजानाः । पिपिषे । इन्द्रऽशत्रुः ।। ६ ।।

## ऋग्भाष्यम्

**यस्य योद्धा नायोद्धाऽसौ तद्वदेवेन्द्रशत्रुः ।**
**दर्पोद्रिक्तो ह्याह्वयामास शक्रं**
**विष्णुं वाऽज्ञानं वीरतमं रिपूणाम् ।**
**महोच्चानां बाधकं दार्ढ्यहेतोः**
**ऋजीषाख्यं नास्य विष्णोर्वधानाम् ।**
**सम्प्राप्तिमज्ञानमथापि वृत्रः**
**शक्रस्यातारीत्संपिपिषे प्रजाश्च ।**
**रुजायुक्ता मानुषीर्वा सृतिस्था इन्द्रः शत्रुर्यस्य स हींद्रशत्रुः ।**
**पुंसोः पूर्वस्मिन्स्वरितान्ते समासो बहुव्रीहिर्हीति सूत्रं पुराणम् ।। ६ ।।**

**ऋग्भाष्यटीका– अयोद्धेव** । यस्य । अहन्वृत्रमित्युक्तमेव प्रपञ्च्यते । **इन्द्रशत्रुः** वृत्रो **अयोद्धेव** न विद्यते योद्धा प्रतिभटो यस्यासावयोद्धा तद्वदेव । **दुर्मदो** दर्पोद्रिक्तो **महावीरं** वीरतमं **तुविबाधं** महोच्चानां रिपूणां बाधकं **ऋजीषं** सोमस्य सुतस्य योंशोऽवशिष्यते स ऋजीष इति वल्क इति चोच्यते । अत्र तु गौणीवृत्तिः स यथा दृढो भवति तथा दार्ढ्यहेतोः ऋजीषाख्यं शक्रं **आ जुह्वे हि** । आह्वयामास हि । युद्धायेति शेषः । हिशब्दः किलार्थे । उक्तरूप-मज्ञानमुक्तलक्षणं विष्णुमाह्वयामासेवेति वा । कृताह्वानश्च वृत्रोऽस्य शक्रस्य **वधानां** प्रहाराणां **समृतिं** सम्प्राप्तिम् । **नातारीन्** न तीर्णवान् । शक्रकृतप्रहारवचनक्षमो नाभूत् । अथापि अथवाऽ-

ज्ञानमस्य विष्णोर्वधानां सम्प्राप्तिं नातारीत् । किं तु प्रहारपीडितः पतन्निंद्रशत्रुः वृत्रो **रुजानाः** रुजायुक्ता दुर्बलाः मानुषीः प्रजाः संपिपिषे चूर्णितवान् । यद्वेश्वरेण भक्तेभ्यो निराकृतमज्ञानम् । रुजानाः संसाररोगयुक्ताः सृतिस्थाः प्रजाः संपिपिषे बबाधे । ईद्रशत्रुशब्दस्य बहुव्रीहितत्पुरषत्वसंशयं विग्रहप्रदर्शनेन निराकरोति । **इन्द्र इति** ।। न हीन्द्रस्य वृत्रः शत्रुः शातयिता किं त्विन्द्र एव वृत्रस्येति बहुव्रीहिपरिग्रहे युक्तिं हिशब्देन सूचयति । किश्चेन्द्रशत्रुप्रातिपदिके इन्द्रेति पूर्वपदं स्वरितान्तम् । अतोऽपीदं बहुव्रीहिरूपम् । तथात्वेऽपि कुतो बहुव्रीहित्वमित्यत आह । **पुंसो-रिति** ।। पुंसोः पुल्लिङ्गयोः समस्यमानयोर्मध्ये पूर्वस्मिन्पदे स्वरितान्ते सति स समासो बहुव्रीहि-र्ज्ञातव्य इत्यस्यार्थस्य प्रतिपादकं पुराणं चिरन्तनव्याकरणस्थं सूत्रमस्ति हीत्यर्थः । तथाच शिक्षाकारः । यथेन्द्रशत्रुः स्वरतोपराधादिति । पूर्वपदप्रकृतिस्वरत्वस्येदमुपलक्षणमिति न कश्चिद्दोषः । यथाह पाणिनिः । बहुव्रीहौ प्रकृत्या पूर्वपदमिति । अन्यथा समासान्तोदात्तत्वं स्यादिति ।। ६ ।।

**मन्त्रार्थमञ्जरी–** अहन्नहिम् इत्युक्तमेव प्रपञ्च्यते (इन्द्रशत्रुः) वृत्रः । अयोद्धेव, न विद्यते योद्धा प्रतिभटो यस्यासावयोद्धा, तद्वदेव । दुर्मदः, दर्पोद्रिक्तः । महावीरम्, वीरतमम् । तुविबाधम्, तुवीनां महोच्चानां रिपूणां बाधकम् । ऋजीषम्, सोमस्य सुतस्य योंऽशोऽवशिष्यते सः 'ऋजीषः' 'वल्कः' इति चोच्यते, अत्र तु गौणी वृत्तिः स यथा दृढो भवति यथा दार्ढ्याद्धेतोर्ऋजीषाख्यं शत्रुम् । आ जुह्वे हि, आह्वयामास हि । (युद्धाय) इति शेषः । हिशब्दः किलार्थे, उक्तरूपमज्ञानमुक्तलक्षणं विष्णुमाह्वयामास हि इति वा । कृताह्वानश्च वृत्रः अस्य, शक्रस्य । वधानाम्, प्रहाराणाम् । समृतिम्, सम्प्राप्तिम् । न अतारीत्, न तीर्णवान्, शक्रकृतप्रहारवञ्चनक्षमो नाभूत् । अथ वा अज्ञानम् अस्य, विष्णोः । वधानाम् । (समृतिम्) सम्प्राप्तिम् । न अतारीत् । प्रहारपीडितः पतन् इन्द्रशत्रुः, इन्द्र एव शत्रुः शातयिता यस्येतीन्द्रवध्यो वृत्रः । रुजानाः, रुजा युक्ताः, दुर्बला मानुषीः प्रजाः । सम् पिपिषे, चूर्णितवान् । यद्वा (इन्द्रशत्रुः, ईश्वरशत्रुकम्, अत एव) ईश्वरेण भक्तेभ्यो निराकृतमज्ञानम् । रुजानाः, संसाररोगयुक्ताः, सृतिस्थाः प्रजाः । सम् पिपिषे, बबाधे ।। ६ ।।

**स्कन्द–** योद्धुमसमर्थः **अयोद्धा** । यथा सः **दुर्मदः** कुत्सितमदः सुरया मत्तः सन्नसमर्थोऽपि कश्चिद् युद्धायाह्वयेत, एवं वृत्रः **आ हि जुह्वे** हिशब्दः पदपूरणः । युद्धाय आहूतवानिन्द्रम् ।

कीदृशम् । **महावीरम् तुविबाधम्** महाविक्रान्तं बहूनां शत्रूणां बाधितारम् । **ऋजीषम्** अर्जयितारं शत्रुधनानाम् । अथवा यत् सोमस्य पूयमानस्य अतिरिच्यते तदृजीषमुच्यते । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थकः । ऋजीषिणमित्यर्थः । कः । पुनरिन्द्रस्य ऋजीषेण सम्बन्धः । हर्योरस्य स भागो धानाश्चेति । आहूय च युद्धायेन्द्रं वृत्रः **न अतारीत्** तरतिरत्र शक्नोत्यर्थे । शक्नोतेश्च नित्यं कर्मभूतधात्वन्तरसापेक्षत्वात् सोढुमिति वाक्यशेषः । नाशकत् । **अस्य** इन्द्रस्य स्वभूतानाम् **समृतिम्** सङ्गतिम् **वधानाम्** प्रहाराणाम् । नासहतेत्यर्थः । अथ असहमानः किं कृतवान् । उच्यते । **सम् रुजानाः पिपिषे** ग्रीवाः किल रुजाना उच्यन्ते । आत्मीया ग्रीवाः संपिष्टवान् चूर्णितवान् । प्रहारैर्वध्यमानश्चूर्णीकृतग्रीव इत्यर्थः । अथवा 'रुजानाः' (निघ.१,१३) इति नदीनाम् । मेघश्च वृत्रः । नदीः सम्पिष्टवान् । बहुनोदकेन नदीनां कूलानि सम्पिष्य स्रोतसि प्रवाहितवानित्यर्थः । सामर्थ्याद् वा गत्यर्थः सम्पिषिः । उदकरूपेण नदीः प्रति जगामेत्यर्थः । इन्द्रः शातयिता यस्य स इन्द्रशत्रुः ।। ६ ।।

**वेङ्कटमाधव–** युद्धासमर्थः मानी यथा समर्थमाह्वयन्त्येवम् आहूतवान् इन्द्रम् **महावीरम्** बहूनां बाधितारम् ऋजीषिणम् । न च **अतारीत्** इन्द्रस्यायुधानां सङ्गतिम् । अथ पृथिव्यां निपातितोऽवशः सन् नदीः सम्पिष्टवान् । इन्द्रो यस्य शातयिताऽऽसीदिति ।। ६ ।।

**मुद्गल–** **दुर्मदः** दुष्टमदोपेतो दर्पयुक्तो वृत्रः **अयोद्धेव** योद्धृरहित इव इन्द्रम् **आ जुह्वे हि** आहूतवान् खलु । कीदृशमिन्द्रम् । **महावीरम्** गुणैर्महान् भूत्वा शौर्योपेतम् **तुविबाधम्** बहूनां बाधकम् **ऋजीषम्** शत्रूणामपार्जकम् । **अस्य** ईदृशस्येन्द्रस्य सम्बन्धिनो ये शत्रुवधाः सन्ति तेषाम् **वधानाम् समृतिम्** सङ्गमम् **न अतारीत्** पूर्वोक्तो दुर्मदः तरितुं नाशक्नोत् । **इन्द्रशत्रुः** इन्द्रः शत्रुघातको यस्य वृत्रस्य तादृशो वृत्र इन्द्रेण हतो नदीषु पतितः सन् **रुजानाः** नदीः **सम् पिपिषे** सम्यक् पिष्टवान् । सर्वान् लोकानावृण्वतो वृत्रदेहस्य पातेन नदीनां कूलानि तत्रत्यपाषाणादिकं च चूर्णीभूतमित्यर्थः ।। ६ ।।

**सायण–** **दुर्मदः** दुष्टमदोपेतो दर्पयुक्तो वृत्रः **अयोद्धेव** योद्धृरहित इव इन्द्रम् **आ जुह्वे हि** आहूतवान् खलु । कीदृशमिन्द्रम् । **महावीरम्** गुणैर्महान् भूत्वा शौर्योपेतम् **तुविबाधम्** बहूनां बाधकम् **ऋजीषम्** शत्रूणामपार्जकम् । **अस्य** ईदृशस्येन्द्रस्य सम्बन्धिनो ये शत्रुवधाः सन्ति तेषाम् **वधानाम् समृतिम्** सङ्गमम् **न अतारीत्** पूर्वोक्तो दुर्मदः तरितुं नाशक्नोत् ।

**इन्द्रशत्रुः** इन्द्रः शत्रुर्घातको यस्य वृत्रस्य तादृशो वृत्र इन्द्रेण हतो नदीषु पतितः सन् **रुजानाः** नदीः **सम् पिपिषे** सम्यक् पिष्टवान् । सर्वान् लोकानावृण्वतो वृत्रदेहस्य पातेन नदीनां कूलानि तत्रत्यपाषाणादिकं च चूर्णीभूतमित्यर्थः ॥

अयोद्धा इव । न विद्यते योद्धास्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । समासान्तविधेरनित्यत्वात् (परिभा.८४) 'नद्यृतश्च' (पा.सू.५-४-१५३) इति कबभावः । जुह्वे । 'ह्वेञ् स्पर्धायां शब्दे च' । 'अभ्यस्तस्य च' (पा.सू.६-१-३३) इति संप्रसारणम् । उवङादेशाभावश्छान्दसः । यद्वा । 'छन्दस्युभयथा' इति सार्वधातुकसंज्ञायां 'हुश्नुवोः सार्वधातुके' (पा.सू.६-४-८७) इति यणादेशः । अत्र लक्षणप्रतिपदोक्तपरिभाषा (परिभा.१०५) लक्ष्यानुरोधान्नाश्रीयते । इतरथा हि आजुहानः इत्यादिषु यणादेशो न स्यात् । न चैवं सति 'सातये हुवे वाम्' (ऋ.सं.६-६०-१३) इत्यादावपि तथा स्यादिति वाच्यं अनेकाच्त्वाभावात् । अनेकाच इति हि तत्रानुवर्तते । प्रत्ययस्वरेणान्तोदात्तत्वम् । 'हि च' इति निघातप्रतिषेधः । महावीरम् । महांश्चासौ वीरश्च महावीरः । 'आन्महतः' (पा.सू.६-३-४६) इति आत्वम् । तुविबाधम् । 'बाधृ विलोडने' । तुवीन् प्रभूतान् बाधते इति तुविबाधः । पचाद्यच् । कृदुत्तरपदप्रकृतिस्वरत्वम् । समृतिम् । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । रुजानाः । 'रुजो भङ्गे' । रुजन्ति कूलानीति रुजाना नद्यः । 'रुजाना नद्यो भवन्ति रुजन्ति कूलानि' (निरु.६-४) इति यास्कः । व्यत्ययेन शानच् । 'तुदादिभ्यः शः' । नुमभावश्छान्दसः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः । पिपिषे । 'पिष्लृ संचूर्णने' । व्यत्ययेन लिट् । इन्द्रशत्रुः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ६ ॥

**सिद्धाञ्जनम्– अयोद्धा इव** न विद्यते योद्धा यस्य स इव **दुर्मदः** दुष्टहर्षः दर्पात् **महावीरं** महान्तं वीरं **तुविबाधं** तुवीन् प्रभूतान् शत्रून् बाधमानं **ऋजीषं** अपार्जकं शत्रूणां **इन्द्रं आ जुह्वे हि** आहूतवान् खलु । **अस्य** इन्द्रस्य **वधानां** प्रहाराणां **समृतिं** सङ्गमं **नातारीत्** तरितुं नाशक्नोत् स दुर्मदः । सः **इन्द्रशत्रु** इन्द्रः शत्रुः यस्य स वृत्रः **रुजानाः** नदीः **सम्पिपिषे** संपिष्टवान् । सर्वान् लोकानावृण्वतो वृत्रदेहस्य पातेन तत्रत्यं पाषाणादिकं चूर्णीभूतं इति सायणः । 'रुजानाः किल ग्रीवा उच्यन्ते । आत्मीया ग्रीवाः सम्पिष्टवान् । प्रहारैर्वध्यमानश्चूर्णीकृत इत्यर्थः' इति स्कन्दस्वामी । ऋजीषम्– 'अर्ज ऋज चेति ईषन् । यत् सोमस्य पूयमानस्य अतिरिच्यते

तद् ऋजीषम्, तद्वान्' इति सायणः । रुजाना– 'रुज भङ्गे, व्यत्ययेन शानच् । 'पिपिषे– 'पिष्लृ सञ्चूर्णने, व्यत्ययेन लिट् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान ।**
**वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ।। ७ ।।**

अपात् । अहस्तः । अपृतन्यत् । इन्द्रम् । आ । अस्य । वज्रम् । अधि । सानौ । जघान । वृष्णः । वध्रिः । प्रतिऽमानम् । बुभूषन् । पुरुऽत्रा । वृत्रः । अशयत् । विऽअस्तः ।। ७ ।।

## ऋग्भाष्यम्

**संछिन्नपाद्बाहुरपीन्द्रमेव युयोध वज्रं व्यसृजत् स तस्य ।**
**गिरेः सानुप्रतिमे कण्ठदेशे तर्कागमाभ्यां रहितं तमो वा ।**
**संयुध्यमानं मानवज्रेण विष्णुर्जघान वध्रिर्वधयोग्योऽथ नीचः ।**
**ईशस्य शत्रुर्भवितुं स इच्छन्व्यस्तोशयद् बहुधेशेन तेन ।। ७ ।।**

**ऋग्भाष्यटीका– अपात्** । सञ्छिन्न । **अपात्** पादरहितो **अहस्तो** हस्तरहितः सञ्छिन्नपाद्बाहुरपि वृत्रः केवलेन देहेन **इन्द्रमपृतन्यत्** युयोधैव । युध्यतिकर्मसु पाठात् । तदा स इन्द्रः **अस्य** तस्य वृत्रस्य **सानौ** गौण्या वृत्त्या गिरेः सानुप्रतिमेऽत्यन्तस्थूले कण्ठदेशे **वज्रं अधि आ जघान** प्रहृतवान् । व्यसृजत् । अध्यात्मं त्वपादहस्तो वृत्रः प्रवृत्तिसाधनत्वात्तर्कागमाभ्यां रहितं तमोऽज्ञानमिन्द्रमीश्वरमपृतन्यत् परमेश्वरश्चास्याज्ञानस्य सानौ सानुवदुरुतरे स्वरूपे वज्रमध्याजघान । विष्णुः संयुध्यमानमज्ञानं मानवज्रेण जघान प्रहृतवानिति । स एवं वृष्णोवर्षितुरीश्वरस्य विष्णोरिन्द्रस्य वा प्रतिमानं प्रतिरूपं शत्रुरिति यावत् । बुभूषन् भवितुमिच्छन् वध्रिः कर्मणि रिप्रत्यये कृते वधयोग्यः । अथवा रूढ्या नीचो वृत्रो सुरोऽज्ञानाख्यश्च तेनेशेन पुरुत्रा बहुधा बहुषु स्थानेषु व्यस्तो निरस्तोऽशयत् अशेत । अपतत् ।। ७ ।।

**मन्त्रार्थमञ्जरी–** अपात्, पादरहितः । अहस्तः, हस्तरहितः, संछिन्नपादबाहुरपि । वृत्रः । केवलेन देहेन इन्द्रम् । अपृतन्यत्, युयोधैव । तदा स इन्द्रः अस्य । सानौ, गौण्या वृत्त्या गिरेः सानुसदृशेऽत्यन्तस्थूले कण्ठदेशे । वज्रम् । अधि आ जघान, प्रहृतवान्, व्यसृजत् ।

अध्यात्मं तु अपात् अहस्तः, प्रवृत्तिहेतुत्वसाम्येन पादहस्तशब्दिततर्कागमरहितः । वृत्रः, अज्ञानम् इन्द्रम्, ईश्वरम् । अपृतन्यत्, युयोध । परमेश्वरश्च अस्य, अज्ञानस्य । सानौ, सानुवद्रुत्तरे स्वरूपे । वज्रम्, ज्ञानम् । अधि आ जघान, विष्णुः संयुध्यमानमज्ञानं ज्ञानवज्रेण प्रहृतवान् इति । स एवम् वृष्णः, वर्षितुः, इन्द्रस्य, विष्णोर्वा । प्रतिमानम्, प्रतिरूपम्, शत्रुमिति यावत् । बुभूषन्, भवितुमिच्छन् । वध्रिः कर्मणि (क्रिन्) रिप्रत्ययः, वधयोग्यः, यद्वा रूढ्या नीचो वृत्रासुरः, अज्ञानाख्यश्च । तेनेशेन पुरुत्रा, बहुधा, बहुषु स्थानेषु । व्यस्तः, निरस्तः । अशयत्, अशेत, अपतत् ।। ७ ।।

**स्कन्द– अपात् अहस्तः** इति लुप्तोपमौ । अपाद इव अहस्त इव । यथा कश्चित् पादवर्जितः कश्चिदहस्तोऽप्यचेष्टमानः किञ्चित् पृतन्यति, एवम् **अपृतन्यत्** असङ्ग्रामयत् योधितवान् **इन्द्रम्** । योध्यमानश्चेन्द्रः **आ अस्य वज्रम् अधि** आ इत्युपसर्गो जघानेत्याख्यातेन सम्बन्धयितव्यः । **अस्य** वृत्रस्य **अधि** उपरि **सानौ** समुच्छ्रिते प्रदेशे **आ जघान** हन्तिर्गत्यर्थः । सामर्थ्याच्चात्रातर्णीतण्यर्थः । आगमितवान् वज्रम् । **वृष्णः** वर्षितुरिन्द्रस्य **वध्रिः** वध्योऽपि **प्रतिमानम् बुभूषन्** प्रतिद्वन्द्वित्वमाप्तुमिच्छन् **पुरुत्रा** बहुत्राणकृद् **वृत्रः अशयत्** अतिष्ठत् । **व्यस्तः** विखण्ड्य भूमौ क्षिप्त इत्यर्थः । अथवा वृत्रः मेघः, स बहुषु नदीतडाकादिषु प्रदेशेषूदकरूपेणातिष्ठत् विक्षिप्त इति केचित्तु वध्रिशब्दस्य रूढिबलाद् वृषशब्दोऽत्र प्रजननसमर्थे बलवति वृषभे वर्तते । वध्रिः कृत्तवृषणे प्रजननासमर्थे दुर्बले बलीवर्दे वर्तत इति व्याचक्षते । यथा प्रजननसमर्थस्य बलवतो वृषभस्य दुर्बलः प्रजननासमर्थः प्रतिमानम् बुभूषन् विक्षिप्तस्तिष्ठेत् एवं वृत्र इन्द्रस्येति ।। ७ ।।

**वेङ्कटमाधव–** हस्तपादवर्जितोऽपि इन्द्रम् **अपृतन्यत्** । **आ जघान अस्य** उच्छ्रिते देशे वज्रम् इन्द्रः । वर्षितुर्वृषभस्य छिन्नवृषणः प्रतिद्वन्द्वीभवितुमिच्छन्नित्यौपमिकम् । अनेकेषु देशेषु **वृत्रः अशयन्** शकलीकृतः ।। ७ ।।

**मुद्गल– अपात्** वज्रेण छिन्नत्वात् पादरहितः **अहस्तः** हस्तरहितः वृत्रः इन्द्रम् उद्दिश्य **अपृतन्यत्** पृतनां युद्धमैच्छत् । द्वेषाधिक्येन बहुधा विद्धोऽपि युद्धं न परित्यक्तवानित्यर्थः । **अस्य** हस्तपादहीनस्य वृत्रस्य **सानौ** पर्वतसानौ पर्वतसानुसदृशे प्रौढस्कन्धे **अधि** उपरि **वज्रम्**

**आ जघान** इन्द्रः आभिमुख्येन प्रक्षिप्तवान् । अशक्तस्यापि युद्धेच्छायां दृष्टान्तः । **वध्रिः** छिन्नमुष्कः पुरुषः **वृष्णः** रेतस्सेचनसमर्थस्य पुरुषान्तरस्य **प्रतिमानम्** सादृश्यम् **बुभूषन्** प्राप्तुमिच्छन् यथा न शक्नोति तद्वदयमिति शेषः । सः **वृत्रः पुरुत्रा** बहुष्ववयवेषु **व्यस्तः** विविधं क्षिप्तः ताडितः सन् **अशयन्** भूमौ पतितवान् ॥ ७ ॥

**सायण– अपात्** वज्रेण छिन्नत्वात् पादरहितः **अहस्तः** हस्तरहितः वृत्रः इन्द्रम् उद्दिश्य **अपृतन्यत्** पृतनां युद्धमैच्छत् । द्वेषाधिक्येन बहुधा विद्धोऽपि युद्धं न परित्यक्तवानित्यर्थः । **अस्य** हस्तपादहीनस्य वृत्रस्य **सानौ** पर्वतसानौ पर्वतसानुसदृशे प्रौढस्कन्धे **अधि** उपरि **वज्रम् आ जघान** इन्द्रः आभिमुख्येन प्रक्षिप्तवान् । अशक्तस्यापि युद्धेच्छायां दृष्टान्तः । **वध्रिः** छिन्नमुष्कः पुरुषः **वृष्णः** रेतस्सेचनसमर्थस्य पुरुषान्तरस्य **प्रतिमानम्** सादृश्यम् **बुभूषन्** प्राप्तुमिच्छन् यथा न शक्नोति तद्वदयमिति शेषः । सः **वृत्रः पुरुत्रा** बहुष्ववयवेषु **व्यस्तः** विविधं क्षिप्तः ताडितः **सन् अशयन्** भूमौ पतितवान ।

अपात् । बहुव्रीहौ पादशब्दस्य अन्त्यलोपश्छान्दसः । अहस्तः । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अपृतन्यत् । 'सुप आत्मनः क्यच्' । 'कव्यध्वरपृतनस्य' इति अन्त्यलोपः । बुभूषन् । 'सनि ग्रहगुहोश्च' (प्रा.सू.७-२-१२) इति इट्प्रतिषेधः । पुरुत्रा । 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (पा.सू.५-४-५६) इति सप्तम्यर्थे त्राप्रत्ययः । अशयत् । व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति शपो लुगभावः । व्यस्तः । 'असु क्षेपणे' इत्यस्मात् कर्मणि क्तः । 'यस्य विभाषा' इति इट्प्रतिषेधः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । संहितायाम् 'उदात्तस्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् ॥७॥

**सिद्धाञ्जनम्– अपात्** पादरहितः (बहुव्रीहौ पादशब्दस्यान्त्यलोपः छान्दसः) **अहस्तः** हस्तरहितः, एवं सर्वथा छिन्नाङ्गः वृत्रः **इन्द्रं** उद्दिश्य **अपृतन्यत्** पृतनामैच्छत्, युद्धं न त्यक्तवान् । **अस्य** वृत्रस्य **सानौ** उच्छ्रितप्रदेशे **अधि** उपरि **वज्रं** इन्द्रः **आ जघान** आभिमुख्येन प्रक्षिप्तवान् । अशक्तस्य युद्धेच्छोर्वृत्रस्य दृष्टान्तमाह । **वध्रिः** छिन्नमुष्कः पुंस्त्वहीन इत्यर्थः **वृष्णः** ('वृष सेचने') सेचनसमर्थस्य पुंस्त्वशालिन इत्यर्थः, **प्रतिमानम्** प्रतिरूपं **बुभूषन्** भवितुमिच्छन्, पुंसः सादृश्यं जिगमिषुर्नपुंसक इव इत्यर्थः । स वृत्रः **पुरुत्रा** बहुषु अङ्गेषु (सप्तम्यर्थे त्राप्रत्ययः)

**व्यस्तः** विशेषतः क्षिप्तः विकीर्णाङ्ग इत्यर्थः, **अशयत्** अशेत, भूमौ अपतत् (शीङ् स्वप्ने, व्यत्ययेन परस्मैपदम्, छन्दसि शपो लुगभावः) ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः ।**
**याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ॥ ८ ॥**

नदम् । न । भिन्नम् । अमुया । शयानम् । मनः । रुहाणाः । अति । यन्ति । आपः । याः । चित् । वृत्रः । महिना । परिऽअतिष्ठत् । तासाम् । अहिः । पत्सुतःऽशीः । बभूव ॥ ८ ॥

## ऋग्भाष्यम्

**अपां रोद्धारममुया स्वमात्रा सहैव शक्रेण हतं शयानम् ।**
**भिन्नं नदं यद्वदतीत्य चापो मनःपूर्वं चारुहाणाः प्रयांति ।**
**वृत्रो याः पूर्वं स्वमहिम्ना परीत्य पुराऽतिष्ठत्तत्सुतोऽहिश्च तासाम् ।**
**पत्सुतश्शीः पादतोऽनन्तरं तु शेताऽभवत्तद्वदेवाभिरुन्धन् ।**
**तमःपुत्रः संशयो वाऽभिरुन्धन् शुभान्यास्ते निहतः सोऽपि तेन ॥ ८ ॥**

**ऋग्भाष्यटीका– नदम्** । अपाम् । अत्रापां रोद्धारमित्यादिकं कथासङ्घटनार्थमुक्तम् । अपां नादेयानामुदकानां रोद्धारं निरोधकत्वेन स्थितम् । **अमुया** उत्तरस्यामृचि वक्ष्यमाणया स्वमात्रा सहैव शक्रेण हतं **शयानं** पतितं वृत्रं **भिन्नं नदं न** भिन्नं नदं यद्वत् नदशब्देनात्र तत्तीरमुपलक्ष्यते । भिन्नं नदस्य तीरमिव **अति** अतीत्य च । अतीत्यैव **आपो मनोरुहाणाः** मनसोऽपि पूर्वं वेगेनेति यावत् । आरुहाणाः स्थलान्यारोहन्त्यो **यन्ति** प्रयान्ति । कास्ता आपः **वृत्रः** पुरा पूर्वस्मिन् काले **याश्चित्** यास्त्वपो **महिना** स्वमहिम्ना पूर्वं पुत्रापेक्षया पूर्वस्मिन्स्थाने **पर्यतिष्ठत्** । परीत्य निरुध्यातिष्ठत् । किञ्च तत्सुतो वृत्रस्य सुतोऽहिश्च **तासां** अपां गतिं तद्वदेव वृत्रवदेव । अभिरुन्धन्निति शेषः । **पत्सुतःशीर्बभूव** पितुः पादतोनन्तरमेव शेताभवत् । पादशब्दात्पञ्चम्यर्थे सप्तमीबहुवचनम् । पादशब्दस्य च पद्वन्नित्यादिना पदादेशः । ततस्तसिः । सप्तम्यलोपः छान्दसः । तदुपपदाच्छेतेः क्विप् । अनन्तरमिति सामर्थ्यसम्भवार्थमुक्तम् । वृत्रो नदीद्वारेषु शिरो निधायापां मार्गे पतितो गतिं निरुणद्धि । अहस्तितमप्यतिक्रम्यापो यास्यन्तीति तत्पादतोऽनन्तरं शयित्वा

निरुणद्धीति । अध्यात्मं तात्पर्यमाह । **तम इति** ।। आस्ते स्थितः । तेन भक्तशरीरे स्थितेनेश्वरेण । पदयोजना तु पूर्वैव । पत्सुतःशीरित्यानन्तर्यमात्रपरम् ।। ८ ।।

**मन्त्रार्थमञ्जरी–** (अपाम्) नादेयानामुदकानाम् (रोद्धारम्) निरोधकत्वेन स्थितम् । अमुया, उत्तरस्यामृचि वक्ष्यमाणया स्वमात्रा सहैव शक्रेण हतम् शयानम्, पतितम् । (वृत्रम्) भिन्नम् नदम् न, नदशब्देन नदस्य तीरमुपलक्ष्यते भिन्नं नदस्य तीरमिव । अति, अतीत्यैव । आपः । मनः, मनसोऽपि पूर्वम्, वेगेनेति यावत् । रुहाणाः, आरुहाणाः, स्थलान्यारुहन्त्यः । यन्ति, प्रयान्ति । कास्ता आपः? वृत्रः । (पुरा), पूर्वस्मिन् काले याः चित्, यास्तु, अपः । महिना, स्वमहिम्ना । पूर्वपुत्रापेक्षया पूर्वस्मिन्स्थाने पर्यतिष्ठत्, परीत्य निरुध्यातिष्ठत् । किं च, (तत्सुतः) वृत्रस्य सुतः । अहिः (च) यासाम् तासाम्, अपाम् । (गतिं तद्वदेवाभिरुन्धन्) इति शेषः । पत्सुतः शीः बभूव, पितुः पादतोऽनन्तरमेव शेता बभूव, 'पत्सुतः शीः' इति पादशब्दात्पञ्चम्यर्थे सप्तमी बहुवचनम्, पादशब्दस्य 'पद्न्' इति पदादेशः, ततस्तसिः, सप्तम्यलोपश्च च्छान्दसः, तदुपपदाच्छेतेः क्विप्, 'पत्सुतःशीः' इति रूपम्, वृत्रो नदीद्वारेषु शिरोनिधायापां मार्गे पतितो गतिं न्यरुणत् अहिस्तु तमप्यतिक्रम्यापो यास्यन्तीति तत्पादतोऽनन्तरं शयित्वा न्यरुणत्' इति भावः । अध्यात्मं तु वृत्रोऽज्ञानम्, तत्पुत्रोऽत्र संशयः, 'पत्सुतःशीः' इत्यानन्तर्यमात्रमत्राभिप्रेतम्, अप्शब्देन च क्रियाः, योजना तु पूर्ववदेव ।। ८ ।।

**स्कन्द–** यथा महान्तम् **नदम् भिन्नम्** भग्नकूलमापोऽतीत्य गच्छेयुः, तद्वत् **अमुया** इत्थंभूतलक्षणया तृतीयया अयं सामर्थ्यात् प्रतिनिर्देशः । अनया महत्या वृद्ध्या सम्बद्धम् **शयानम्** तिष्टन्तम् **मनः रुहाणाः** आरोहन्त्यः । मनुष्याणां चित्तं ह्लादयन्त्य इत्यर्थः । **अति यन्ति** अतीत्यान्यतो गच्छन्ति **आपः** । इन्द्रेण भिन्नान्मेघान्निस्सृत्यान्यतो गच्छन्तीत्यर्थः । चित् शब्दः पदपूरणः, एवार्थो वा । **याः** एव **वृत्रः महिना** महता सेनालक्षणेन स्वशरीरेण वा **पर्यतिष्ठत्** परिवृत्यातिष्टत् **तासाम्** एवेन्द्रेण हते वृत्रे **अहिः** मेघः **पत्सुतःशीर्बभूव** । पादशब्दात् तृतीयार्थे सप्तमी । 'पादः पत्' (पा.६-४-१३०) इति पद्भावः । पत्सु । तृतीयार्थवृत्तित्वात् सप्तम्याः सप्तम्यन्तादप्यस्मात् 'तेनैकदिक्', 'तसिश्च' (पा.४,३,११२,११३) इति तस् । सप्तमीविभक्तेस्लुक् । पत्सुतः शेते तिष्ठतीति पत्सुतःशीः । यतः पादौ ततः स्थाता बभूव ।

अधोवृत्तिर्बभूवेत्यर्थः । हताद्धि मेघादूर्ध्वं निश्चरन्तीनामपां पादतः स्थायी भवति मेघः । अत एवमुच्यते– तासामेवाहिपत्सुतःशीर्बभूवेति ।। ८ ।।

**वेङ्कटमाधव–** यथा **भिन्नम्** सेतुम् **आपः अति यन्ति**, एवम् अनया पृथिव्या सह **शयानम्** मनुष्याणाम् **मनः** आरोहन्त्यो ह्लादयन्त्योऽतीत्य गच्छन्ति । **याः चित्** अपः **वृत्रः** शरीरमहत्तया परिवृत्य **अतिष्ठत् तासाम् अहिः** असुरः पत्तःशायी बभूव ।। ८ ।।

**मुद्गल– अमुया** अमुष्यां पृथिव्याम् **शयानम्** पतितं मृतं वृत्रम् **आपः** जलानि **अति यन्ति** अतिक्रम्य गच्छन्ति । दृष्टान्तः । **भिन्नम्** बहुधाभिन्नकूलम् **नदम् न** सिन्धुमिव । यथा वृष्टिकाले प्रभूता आपः नद्याः कूलं भित्वा अतिक्रम्य गच्छन्ति तद्वत् । कीदृश्य आपः । **मनः रुहाणाः** नृणां चित्तमारोहन्त्यः पुरा वृत्रे जीवति सति तेन निरुद्धा मेघस्थिता आपः भूमौ वृष्ट्या न पतन्ति । तदानीं नृणां मनः स्रियते । मृते तु वृत्रे निरोधरहिता आपो वृत्रशरीरमुल्लङ्घ्य प्रवहन्ति । तदा वृष्टिलाभेन तु मनुष्यास्तुष्यन्तीत्यर्थः । तदेवोत्तरार्द्धेन स्पष्टीक्रियते । **वृत्रः** जीवनदशायाम् **महिना** स्वकीयेन महिम्ना **याः चित्** वा एव मेघगता अपः **पर्यतिष्ठत्** परिवृत्य स्थितवान्, अहिः वृत्रो मेघ **तासाम्** अपां पत्सुतःशीः पादस्याधःशयानः बभूव । यद्यपि अपां पादो नास्ति तथाप्यद्भिर्वृत्रस्याभिलङ्घितत्वात् पादस्याधःशयनमुपपद्यते ।। ८ ।।

**सायण– अमुया** अमुष्यां पृथिव्याम् **शयानम्** पतितं मृतं वृत्रम् **आपः** जलानि **अति यन्ति** अतिक्रम्य गच्छन्ति । तत्र दृष्टान्तः । **भिन्नम्** बहुधाभिन्नकूलम् **नदम् न** सिन्धुमिव । यथा वृष्टिकाले प्रभूता आपः नद्याः कूलं भित्वा अतिक्रम्य गच्छन्ति तद्वत् । कीदृश्य आपः । **मनः रुहाणाः** नृणां चित्तमारोहन्त्यः पुरा वृत्रे जीवति सति तेन निरुद्धा मेघस्थिता आपः भूमौ वृष्ट्या न पतन्ति । तदानीं नृणां मनः स्रियते । मृते तु वृत्रे निरोधरहिता आपो वृत्रशरीरमुल्लङ्घ्य प्रवहन्ति । तदा वृष्टिलाभेन तु मनुष्यास्तुष्यन्तीत्यर्थः । तदेवोत्तरार्द्धेन स्पष्टीक्रियते । **वृत्रः** जीवनदशायाम् **महिना** स्वकीयेन महिम्ना **याः चित्** वा एव मेघगता अपः **पर्यतिष्ठत्** परिवृत्य स्थितवान्, अहिः वृत्रो मेघ **तासाम्** अपां पत्सुतःशीः पादस्याधःशयानः बभूव । यद्यपि अपां पादो नास्ति तथाप्यद्भिर्वृत्रस्याभिलङ्घितत्वात् पादस्याधःशयनमुपपद्यते ।

भिन्नम् । 'रदाभ्यां निष्ठातो नः' (पा.सू.८-२-४२) इति नत्वम् । अमुया । 'सुपां सुलुक्' इति सप्तम्या याजादेशः । शयानम् । 'शीङः सार्वधातुके गुणः' (पा.सू.७-४-२१)। धातोर्ङित्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । रुहाणाः । 'रुह बीजजन्मनि प्रादुर्भावे' । व्यत्ययेन शानच् । कर्तरि शपि प्राप्ते व्यत्ययेन शः । 'अनित्यमागमशासनम्' इति वचनात् मुगभावः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरे प्राप्ते व्यत्ययेन धातुस्वरः । महिना । 'मह पूजायाम्' । 'इन्सर्वधातुभ्यः' इति इन्प्रत्ययः । व्यत्ययेन विभक्तेरुदात्तत्वम् । यद्वा । महिना महिम्ना । महच्छब्दस्य पृथ्वादिषु पाठात् 'तस्य भावः' इत्येतस्मिन्नर्थे 'पृथ्वादिभ्य इमनिज्वा' (पा.सू.५-१-१२२) इति इमनिच्प्रत्ययः । 'टेः' इति टिलोपः । 'चितः' इत्यन्तोदात्तत्वम् । तृतीयैकवचने अल्लोपे सति उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम् । मकारलोपश्छान्दसः । पत्सुतःशीः । पादस्याधःशेते इति पत्सुतःशीः । 'क्विप् च' इति क्विप् । तसि 'पद्दन्' इत्यादिना पादशब्दस्य पदादेशः । 'शस्प्रभृतिषु' इति प्रभृतिशब्दः प्रकारवचनः इति शला दोषणी इत्यत्रापि दोषन्नादेशो भवति इत्युक्तत्वात् (का.६-१-६३) । मध्ये सु इति शब्दोपजनश्छान्दसः । यद्वा । पादशब्दस्य सप्तमीबहुवचने पदादेशे कृते 'इतराभ्योऽपि दृश्यन्ते' (पा.सू.५-३-१४) इति सप्तम्यर्थे तसिल् । लुगभावश्छान्दसः ॥ ८ ॥

**सिद्धाञ्जनम्– अमुया** इत्थंभूतलक्षणया **शयानं** पतितं वृत्रं **आपः अतियन्ति** अतिक्रम्य गच्छन्ति । 'अमुया अमुष्यां भूमौ' इति सायणः । अत्र दृष्टान्तः । **भिन्नं नदं न** बहुधा भिन्नकूलं सिन्धुमिव, यथा वृष्टौ नदीकूलभेदनेन प्रवहन्त्यापस्तथा मृतं वृत्रमतिक्रामन्तीत्यर्थः । कीदृश्य आपः? **मनो रुहाणाः** मनुष्याणां चित्तं आयोहन्त्यः (रुह-धातोः व्यत्ययेन शानच् अन्यच्च छान्दसम्)। एवं अपामधः शयाने मृते वृत्रे आपः मन आरोहन्तीत्युक्तम् । उत्तरत्र गूढार्थविचारे तात्पर्यं निरीक्षणीयम् । अथ यासामपावरकोऽत एव बन्धकोऽभूद् वृत्रः तासामेव पादेषु पतितोऽवस्थित इत्याह । **वृत्रः महिना** स्वमहिम्ना **याः चित्** या अप एव **पर्यतिष्ठत्** परिवृत्य स्थितवान् **अहिः** वृत्रः **तासां** अपां **पत्सुतःशीः** पादस्य अधस्तात् शयानः **बभूव** (पादशब्दस्य पद् आदेशः सु इति उपजनश्छान्दसः, सप्तम्यर्थे तसिल् ततः शेत इति क्विप्) ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार ।**
**उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ॥ ९ ॥**

नीचाऽवयाः । अभवत् । वृत्रऽपुत्रा । इन्द्रः । अस्याः । अव । वधः । जभार । उत्ऽतरा । सूः । अधरः । पुत्रः । आसीत् । दानुः । शये । सहऽवत्सा । न धेनुः ॥ ९ ॥

## ऋग्भाष्यम्

**नीचस्थाने बन्धनं याऽपि चापां करोति दानुर्वृत्रमाता दनुः सा ।**
**वृत्रो ह्यभूद्दनुजः कश्यपाच्च पापात्माऽसौ वैष्णवस्त्वष्टृजातः ।**
**वृत्रः पुत्रोऽस्या इति सा वृत्रपुत्रा वधं तस्या अहरत्पूर्वमिन्द्रः ।**
**प्रकृतिर्वा वृत्रमाता तमो हि तस्या अभूत्तां जघानेशिता वा ।**
**प्रातिस्विकी प्रकृतिर्यत्तमश्च दोषाश्चान्ये पुंस्स्वतो युक्तमेतत् ।**
**सुतावनार्थमुपरिस्था बभूव सुतस्य माता तां निहत्यामुमेव ।**
**जघानेन्द्रः कारणस्यापि(स्यैव) नाशात्कार्योत्थानं वारयामास विष्णुः ।**
**स्यादेव पूर्वं कार्यनाशो ह्यथापि निःशेषनाशः कारणस्यैव नाशात् ।**
**एवं भक्ताननुजग्राह देवो नारायणः पारयन् संसृतेश्च ।**
**उत्तरत्वं प्रकृतेः शक्तितः स्यात्.......................॥ ९ ॥**

**ऋग्भाष्यटीका– नीचावयाः** । नीचस्थाने । उत्तरवाक्येनैकवाक्यतासिद्धये या सेत्यध्याहरति । यापि च सा **वृत्रपुत्रा** वृत्रमाता **दानुः** दनुरित्युत्तरार्धस्य व्याख्यानम् । **नीचावया अभवत्** । 'वय बन्धने' । नीचे वयति बध्नातीति नीचावयाः साभवत् । नीचस्थानेऽहेरप्यनन्तरेऽपां बन्धनं करोति । अकार्षीदिति यावत् । सम्बन्धस्तूत्तरत्र । ननु दनुः कश्यपस्य भार्या न च वृत्रः कश्यपपुत्रः किन्तु त्वष्टुः तत्कथं दनुर्वृत्रमातेत्यत आह । **वृत्रो हीति** ॥ द्वौ वृत्रौ तत्रैकः कश्यपाद्दनुजोऽभूत् । दैत्यत्वं च तामसत्वात् । अपरश्च त्वष्टृजात इति न विरोधः । कुतो द्वयोः कल्पना । असौ दनुजः पापात्मा श्रूयते दीर्घं तम आशयदिन्द्रशत्रुरिति । त्वष्टृजातस्तु वैष्णवः । पुण्यात्मा प्रसिद्धः । अतो द्वौ कल्प्यौ । अथापि वृत्रपुत्रेत्यस्य वृत्रमातेति व्याख्यानं कथमित्यत आह । **वृत्र इति** ॥ अस्यास्तस्या दनोर्वधो वधं **इन्द्रोऽव** अधस्तने काले वृत्रवधात्पूर्वमेव **जभार** जहार अहरन् ।

कृतवान् । अध्यात्मं वृत्रमातरमाह । **प्रकृतिर्वेति** ।। मूलप्रकृतिः । कथमित्यत आह । **तमो हीति** ।। इन्द्रो अस्या इत्येतदध्यात्मं व्याचष्टे । **तामिति** ।। भिन्नवाक्यत्वाद्वा द्वयम् ।

ननु यदि प्रकृतिरज्ञानं संशयादयोऽन्ये दोषाश्चेश्वरेण नाशितास्तर्हीदानीं पुरुषेषु संसारदर्शनमयुक्तं स्यात् न ततो वेदवाक्यमिदं युक्तमित्यत आह । **प्रातिस्विकीति** ।। यद्यस्मात् । न केवलमनुस्यूता किंतु प्रातिस्विकी चास्तीत्यर्थः । प्रथमं दनोर्वधे किं कारणम् । सूत इति सूर्माता दनुः । सुतावनार्थमुत्तरा सुतस्योपरिस्थासीद्बभूव । **पुत्रस्त्वधर आसीत्** । तस्मादिन्द्र उपरिस्थां तां दनुं निहत्यैवाधस्थममुं वृत्रं जघानेति शेषः । ततो **दानुः** दनुः **सहवत्सा धेनुर्न** धेनुरिव सपुत्रा **शये** । अशेत । पतिता । अध्यात्मं प्रथमं प्रकृतिं जघानेत्येतत्किं निमित्तमित्यत आह । **कारणस्येति** ।। तत्किं प्रथमं कार्यनाशो न भवति । भवत्येवेत्याह । **स्यादेवेति** ।। तर्हि किं प्रकृतेः पूर्वनाशेनेत्यत आह । **अथापीति** ।। परमेश्वरस्याज्ञानादिभिर्युद्धप्रतिपादनेनाज्ञानादिकं तत्सम्बन्धीति प्रतीतिः स्यात् तद्वारणायोक्तवक्ष्यमाणतात्पर्यमाह । **एवमिति** ।। प्रकृतेरज्ञानापेक्षयोत्तरत्वं कथमित्यत आह । **उत्तरत्वमिति** ।। शक्तितोऽधिकत्वमिति शेषः । न तु कालापेक्षयानन्तरत्वमित्यर्थः । 'दो अवखण्डन' इत्यतः प्रकृतिर्दानुः ।। ९ ।।

**मन्त्रार्थमञ्जरी–** (यापि) वृत्रपुत्रा, बहुव्रीहिः वृत्रमाता । (दानुः) दनुः । नीचावयाः अभवत्, 'वय बन्धने', नीचे नीचस्थाने वयति बध्नातीति नीचावयाः, साभवत्, नीचस्थानेऽहेरप्यनन्तरमियं बन्धनमकार्षीदिति यावत् । अस्याः, दनोः । वधः, वधम् । इन्द्रः । अवः, अधस्तने काले, वृत्रवधात्पूर्वमेव । जभार, आहरत्, कृतवान् । प्रथमं दनोर्वधे को हेतुः ? उच्यते सूः, सूत इति सूर्माता दनुः । सुतावनार्थम् उत्तरा, सुतस्योपरिस्था । (आसीत्) बभूव । पुत्रः (तु) अधरः आसीत् । तस्मात् (इन्द्रः) (उपरि स्थितां तां दनुं निहत्यैवाधस्तनममुं वृत्रं जघान) इति शेषः । ततः दानुः, (दनुः) सहवत्सा धेनुः न, धेनुरिव सपुत्रा । शये, अशेत, पतिता । अध्यात्मं तु (या) वृत्रपुत्रा, अज्ञानादिदोषजननी । (दानुः) दनुः, 'दो अवखण्डने' खण्डचत्वहेतुना दनुनाम्नी प्रातिस्विकी प्रकृतिः । नीचावयाः, अज्ञजनबन्धिका । (अभवत्) आसीत् । तद्वधं पूर्वं कृत्वा पश्चादज्ञानादितत्कार्यं नाशितवान् (ईश्वरः), कारणीभूतप्रकृतेः सामर्थ्यातिशयेनोत्तरत्वात्तादृशशक्तिवैधुर्यादज्ञानादेरुत्तराधरत्वं चास्तीति पूर्वं तन्नाशकारणं ज्ञेयम्, योजना तु प्रागिव ।। ९ ।।

**स्कन्द– वयाः** शाखा अन्यत्र, इह तु शाखास्थानीये भुजे वयश्शब्दो वर्तते । नीचा वयो यस्या सा **नीचावयाः** प्रलम्बबाहुः **अभवत्** । का । **वृत्रपुत्रा** वृत्रः पुत्रो यस्याः सा वृत्रपुत्रा । वृत्रस्य माता । वृत्रे हन्यमाने तन्माता तद्वधपरिरक्षया तस्योपरि प्रसार्य बाहू अतिष्ठदित्यर्थः । तथा व्यवस्थिताया अपि **इन्द्रः अस्याः अव वधः जभार** वधः वज्रनामैतत् (निघ.२-२०) । वज्रं जभार प्रापितवान् । तयाऽवष्टब्दोऽपि वृत्रस्यैव शरीरे वज्रं क्षिप्तवा-नित्यर्थः । केन पुनः प्रकारेण नीचावया अभवत् । **उत्तरा** उपरिवर्तिनी वृत्रस्योपरि निकुटिता प्रलम्बितबाहुः सूः सूत इति सूर्माता । **अधरः** अधोवर्ती बाहुजङ्घान्तरस्थायी **पुत्र आसात्** । **दानुः** वृत्रस्य माता **शये** स्थितवती । **सहवत्सा न धेनुः** वत्ससहितेन धेनुः ।। ९ ।।

**वेङ्कटमाधव–** नीचीनबाहुशाखा **अभवत्** वृत्रो यस्याः पुत्रः । वृत्रे हन्यमाने तन्माता तद्वधपरिरिरक्षिषया तस्योपरि बाहू प्रसार्यातिष्ठत् । अथ **इन्द्रः अस्याः** अधस्ताद् वृत्रशरीर एव वज्रं प्रहृतवान् । तदानीं वृत्रस्य उपरि **आसीत्** तन्माता **पुत्रः** च अधः । तदानीम् **दानुः** वृत्रमाता वत्ससहिता **धेनुः** इव **शये** ।। ९ ।।

**मुद्गल– वृत्रपुत्रा** वृत्रः पुत्रो यस्या मातुः सेयं माता वृत्रपुत्रा **नीचावयाः** न्यग्भावं प्राप्ता हता(?) **अभवत्** । पुत्रं प्रहाराद्रक्षितुं पुत्रदेहस्योपरि तिरश्ची पतितवतीत्यर्थः । तदानीमयम् **इन्द्रः अस्याः** मातुः **अव** अधोभागे वृत्रस्योपरि **वधः** हननसाधनमायुधम् **जभार** प्रहृतवान् । तदानीम् **सूः** माता **उत्तरा** उपरिस्थिता आसीत् । **पुत्रः** तु **अधरः** अधोभागे स्थित **आसीत्** । सा च **दानुः** दानवी वृत्रमाता **शये** मृता(?) शयनं कृतवती । दृष्टान्तः । **धेनुः** गौः **सहवत्सा** न यथा वत्ससहिता शयनं करोति तद्वत् ।। ९ ।।

**सायण– वृत्रपुत्रा** वृत्रः पुत्रो यस्या मातुः सेयं माता वृत्रपुत्रा **नीचावयाः** न्यग्भावं प्राप्ता हता(?) **अभवत्** । पुत्रं प्रहाराद्रक्षितुं पुत्रदेहस्योपरि तिरश्ची पतितवतीत्यर्थः । तदानीमयम् **इन्द्रः अस्याः** मातुः **अव** अधोभागे वृत्रस्योपरि **वधः** हननसाधनमायुधम् **जभार** प्रहृतवान् । तदानीम् **सूः** माता **उत्तरा** उपरिस्थिता आसीत् । **पुत्रः** तु **अधरः** अधोभागे स्थित **आसीत्** । सा च **दानुः** दानवी वृत्रमाता **शये** मृता(?) शयनं कृतवती । दृष्टान्तः । **धेनुः** गौः **सहवत्सा** न यथा वत्ससहिता शयनं करोति तद्वत् ।

नीचावयाः । वेति खादतीति वयो बाहुः । औणादिकः असिप्रत्ययः । न्यञ्चौ वयसौ यस्याः सा नीचावयाः । न्यच्शब्दादुत्तरस्या विभक्तेः 'सुपां सुपो भवन्ति' इति तृतीयैकवचनादेशः । 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । 'अञ्चेश्छन्दस्यसर्वनामस्थानम्' (पा.सू.६-१-१७०) इति तस्योदात्तत्वम् । समासे लुगभावश्छान्दसः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यद्वा । नीचौ निकृष्टौ वयसौ यस्याः सा । पूर्वपदस्य दीर्घश्छान्दसः । वधः । हन्यतेऽनेनेति वधः । असुनि हन्तेर्वधादेशः । नित्त्वादाद्युदात्तत्वम् । जभार । 'हृग्रहोर्भः' इति भत्वम् । सूः । 'षूञ् प्राणिगर्भविमोचने' । सूते गर्भं विमुञ्चतीति सूः माता । 'क्विप् च ' इति क्विप् । दानुः । 'दो अवखण्डने' । 'दाभाभ्यां नुः' (उ.सू.३-३१२) । शये । लटि 'लोपस्त आत्मनेपदेषु' (पा.सू.७-१-४१) इति तलोपः । 'शीङः सार्वधातुके' इति गुणे अयादेशः ।। ९ ।।

**सिद्धाञ्जनम्– वृत्रपुत्रा** वृत्रः पुत्रो यस्याः सा वृत्रमाता **नीचावयाः** नीचौ वयसौ यस्याः सा, वयाः शाखानाम, शाखास्थानीयत्वात् भुजयोः प्रलम्बबाहुः **अभवत्** पुत्रे हन्यमाने तद्वधपरिहाराय तस्योपरि बाहू प्रसार्य स्थितेत्यर्थः । **इन्द्रः** तथा अवस्थिताया अपि **अस्याः** वृत्रमातुः **अव** अधः, वृत्रस्योपरि **वधः** वधसाधनं वज्रं (असुनि हन्तेर्वधादेशः) **जभार** प्रहृतवान् (हृ-ग्रहोः भत्वम्) । तदानीं **सूः** माता (सूत इति सूः क्विप्) **दानुः उत्तरा** उपरि स्थिता **पुत्रः** वृत्रः **अधरः** अधोभागस्थित **आसीत्** । सा च **सहवत्सा** वत्ससहिता **धेनुर्न** गौरिव **शये** शयनं कृतवती । केयं पुराणकथा? तत्वमन्वेष्टव्यम् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।**
**वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ।। १०,३७ ।।**

अतिष्ठन्तीनाम् । अनिऽवेशनानाम् । काष्ठानाम् । मध्ये । निऽहितम् । शरीरम् । वृत्रस्य । निण्यम् । वि । चरन्ति । आपः । दीर्घम् । तमः । आ । अशयत् । इन्द्रऽशत्रुः ।। १०,३७ ।।

## ऋग्भाष्यम्

**........................अनन्तत्वान्नैव तिष्ठन्ति काष्ठाः ।**
**अतस्तासां न गृहं किञ्चिदस्ति निण्यं सुखेनैव चरन्ति चापः ।**

**दीर्घं तमो वृत्रसंज्ञं तमो वा दीर्घमन्धं प्राप वृत्रः स एव ।। १०, ३७ ।।**

**ऋग्भाष्यटीका– अतिष्ठन्तीनाम् ।** अत्र काष्ठानां विशेषणद्वयमुक्तं तत्प्रकृतोपयोगितया व्याचष्टे । **अनन्तत्वादिति** ।। दिशामनन्तत्वेन देवदत्तस्य तदभावनिमित्ता गतिनिवृत्तिर्न भवतीत्यतस्ता नैव तिष्ठन्तीत्युच्यन्ते । अतोऽनन्तत्वादेव तासां निविशन्तेऽस्मिन्निति निवेशनं गृहमन्तर्भावकं किञ्चिन्नास्तीत्यनिवेशना अप्यभिधीयन्ते । मृतस्य **वृत्रस्य शरीरमतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितम्** एवं नामस्थूलं यदनन्ता दिशो व्याप्य स्थितमित्यद्भुतोक्तिः । तथा च प्रतिबन्धके निवृत्ते सति **आपो निण्यं** नीत्यतिशयार्थे । णः सुखमेव ण्यम् । क्रियाविशेषणमेतत् । सुखेनैवानायासेनैव **विचरन्ति** व्यचरन् । दीर्घन्तम आशयदिन्द्रशत्रुरिति वाक्यं त्रेधा व्याचष्टे । **दीर्घमिति** ।। स वृत्र एव दीर्घन्तम इत्येतावता **दीर्घन्तमो** महातामस **इन्द्रशत्रुरेवं आशयत्** अशेत पतित इत्येकोऽर्थः । वृत्रसंज्ञं तमो वेत्यनेनाध्यात्ममिन्द्रशत्रुरीश्वरशत्रुभूतं **दीर्घं** महद्वृत्रसंज्ञं **तमो**ऽज्ञानमेवं **आशयदिति** द्वितीयः । दीर्घमन्धमित्यादिना मृतोऽसाविन्द्रशत्रुर्वृत्रो दीर्घं पुनरावृत्तिरहितं तमोन्धमाशयत् । 'अशू व्याप्तौ' इत्यस्य स्वार्थे ण्यन्तस्य रूपमेतत् । प्रापेति तृतीयः ।। १०,३७ ।।

**मन्त्रार्थमञ्जरी–** मृतस्य वृत्रस्य शरीरम् । अतिष्ठन्तीनाम्, अपर्यवसितानाम् । अनिवेशनानाम्, निवेशनमन्तर्भावकम्, अनन्तत्वाद्धेतोस्तद्रहितानाम् । काष्ठानाम्, दिशाम् । मध्ये निहितम् । एवं नाम स्थूलम्, यत् 'अनन्ता दिशो व्याप्य स्थितम्' इत्यद्भुतोक्तिः । तदा च प्रतिबन्धके निवृत्ते सति आपः । निण्यम्, 'नि' इत्यतिशयार्थे, णं सुखमेव ण्यम्, क्रियाविशेषणमेतत् सुखेनैव, अनायासेनैव । वि चरन्ति, व्यचरन् । दीर्घम् तमः, महातामसः । इन्द्रशत्रुः, (वृत्रः) आ अशयत् अशेत ।। १ ।।

इन्द्रशत्रुः, ईश्वरशत्रुः । दीर्घम्, महत् । तमः, अज्ञानम् । एवम् आ अशयत् (अशेत) ।। २ ।।

मृतोऽसौ इन्द्रशत्रुः, वृत्रः । दीर्घम्, पुनरावृत्तिहीनम् । तमः, अन्धम् । आ अशयत्, 'अशू व्याप्तौ' इत्यस्य स्वार्थे ण्यन्तस्य रूपमेतत्, प्राप ।। ३ ।। इत्यस्यान्त्यपादस्य त्रेधार्थो ध्येयः ।। १० ।।

**स्कन्द– अतिष्ठन्तीनाम्** अनवस्थायिनीनां चलानाम् **अनिवेशनानाम्** निविश्यते क्षीयते यस्मिन् नदीनदादौ स्थाने तन्निवेशनम्, तद् यासां नास्ति भूयस्त्वात् तासामनिवेशनानाम् । भूयस्त्वादसम्भविव्यवस्थानां चलानां वह्नीनां चेत्यर्थः । **काष्ठानाम् मध्ये** आपः काष्ठा उच्यन्ते । अपाम् मध्ये **निहितम्** स्थापितम् शरीरम् । कस्य । **वृत्रस्य** वृत्रनाम्नोऽसुरस्य । कथं च पुनर्निहितम् । **निण्यम्** अन्तर्हितनामैतत् । अन्तर्हितं मरणभयात् गुप्तं निहितमित्यर्थः । एवम्भूतमपि **वि चरन्ति आपः** चरतिर्गत्यर्थः । सर्वे च गत्यर्था ज्ञानार्थाः । सामर्थ्याच्चा-प्रान्तर्णीतण्यर्थता । विज्ञापयन्ति आप आत्मनो मध्ये । ता इन्द्राय प्रकाशयन्त्याप इत्यर्थः । प्रकाशितेऽस्मिन्निन्द्रेण हते **दीर्घम्** मरणलक्षणम् **तमः आशयत्** आस्थितवान् **इन्द्रशत्रुः** वृत्रः । अथवा वृत्रो मेघः तस्य शरीरमध्ये आपो निधीयन्ते । तच्छरीरमपां मध्ये इत्येतस्याः सप्तम्या निराकाङ्क्षीकरणार्थमवस्थितानामिति वाक्यशेषः । अपां मध्येऽवस्थितानां बहिर्निहितं शरीरं मेघस्य । तथापि तु व्यवस्थितस्य वृत्रस्य निण्यं वि चरन्त्यापः । निण्यमिति नान्तर्हितनाम । किं तर्हि । येन प्रदेशेन मेघो नीचैर्नमति छिद्रीभवति तदपां निर्गमनबिलं निण्यम् । विचरन्तीत्यपि शुद्धज्ञानार्थ एव, नान्तर्णीतण्यर्थः । मेघनिर्गमनबिलं विजानन्त्याप इत्यर्थः । अप्सु च निर्जिगमिषन्तीषु तदवरुरुत्सया दीर्घं समस्तनभोमण्डलव्यापि तम आशयत् आस्थितवानिन्द्रशत्रुर्मेघः । तमोरूपेण स्वरूपेण मेघः समस्तं नभो व्याप्यातिष्ठदित्यर्थः ।। १० ।।

**वेङ्कटमाधव– अनिष्ठन्तीनाम्** अस्थानानाम् अपाम् **मध्ये वृत्रस्य शरीरम्** अन्तर्हितं प्रति गच्छन्ति **आपः** इन्द्रस्य वृत्रं निलीनं दर्शयितुम् । तत इन्द्रेण हतः वृत्रः **दीर्घम् तमः आशयत्** ममारेति ।। १० ।।

**मुद्गल– वृत्रस्य शरीरम् आपः वि चरन्ति** विशेषेण उपरि आक्रम्य प्रवहन्ति । कीदृशं शरीरम् । **निण्यम्** निर्नामधेयम् । अप्सु मग्नत्वेन गूढत्वात् तदीयं नाम केनापि न ज्ञायते । एतदेव स्पष्टीक्रियते । **काष्ठानाम्** अपाम् **मध्ये निहितम्** निक्षिप्तम् । कीदृशीनां काष्ठानाम् । **अतिष्ठन्तीनाम्** स्थितिरहितानाम् **अनिवेशनानाम्** उपवेशनरहितानाम् । प्रवहणस्वभावत्वादेतासां मनुष्यवन्न क्वापि स्थितिः सम्भवति । **इन्द्रशत्रुः** वृत्रो जलमध्ये शरीरे प्रक्षिप्ते सति **दीर्घम् तमः** दीर्घनिद्रात्मकं मरणं यथा भवति तद्वत् **आशयत्** सर्वतः पतितवान् ।। १० ।।

**सायण– वृत्रस्य शरीरम् आपः वि चरन्ति** विशेषेण उपरि आक्रम्य प्रवहन्ति । कीदृशं शरीरम् । **निण्यम्** निर्नामधेयम् । अप्सु मग्नत्वेन गूढत्वात् तदीयं नाम केनापि न ज्ञायते । एतदेव स्पष्टीक्रियते । **काष्ठानाम्** अपाम् **मध्ये निहितम्** निक्षिप्तम् । कीदृशीनां काष्ठानाम् । **अतिष्ठन्तीनाम्** स्थितिरहितानाम् **अनिवेशनानाम्** उपवेशनरहितानाम् । प्रवहणस्वभावत्वादेतासां मनुष्यवन्न क्वापि स्थितिः सम्भवति । **इन्द्रशत्रुः** वृत्रो जलमध्ये शरीरे प्रक्षिप्ते सति **दीर्घम् तमः** दीर्घनिद्रात्मकं मरणं यथा भवति तथा **आशयत्** सर्वतः पतितवान् ।।

अतिष्ठन्तीनाम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अनिवेशनानाम् । निविशन्तेऽस्मिन्निति निवेशनं स्थानम् । 'करणाधिकरणयोश्च' इति अधिकरणे ल्युट् । तद्रहितानाम् । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । क्रान्त्वा स्थिताः काष्ठाः । पृषोदरादि । निहितम् । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अत्र यास्कः– 'अतिष्ठन्तीनामनिविशमानाना-मित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः । शरीरं शृणातेः शम्नातेर्वा । वृत्रस्य निण्यं निर्णामं विचरन्ति विजानन्त्याप इति दीर्घं द्राघतेस्तमस्तनोतेराशयदाशेतेरिन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा तस्मादिन्द्रशत्रुः । तत्को वृत्रो मेघ इति नैरुक्तास्त्वाष्ट्रोऽसुर इत्यैतिहासिकाः' (निरु.२-१६) इति ।। १०,३७ ।।

**सिद्धाञ्जनम्– अतिष्ठन्तीनां** अनवस्थितानाम् चलानामित्यर्थः **अनिवेशनानां** निविशन्तेऽस्मिन् इति निवेशनं स्थानं तद्रहितानां उपवेशनरहितानां प्रवहन्तीनां काष्ठानां अपां (काष्ठाः क्रान्त्वा स्थिताः, पृषोदरादिः) **मध्ये निहितं** स्थापितं **शरीरम्** । कस्य ? **वृत्रस्य** । कीदृशं तत् ? **निण्यं** अन्तर्हितं गुप्तमदृश्यमिति यावत्, तादृशं अपां अन्तर्निमग्नं शरीरं (कर्म) **आपः विचरन्ति** विशेषेण आक्रम्य प्रवहन्ति । एवं जलमध्ये वृत्रशरीरे प्रक्षिप्ते सति **इन्द्रशत्रुः** वृत्रः **दीर्घं तमः** दीर्घनिद्रात्मकं निधनं प्राप्य, तद्यथा भवति तथा **आशयत्** सर्वतः पतितवान् ।। १० ।।

**।। इति प्रथमाष्टके द्वितीयाध्याये सप्तत्रिंशो वर्गः ।।**

## ।। अथ अष्टत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।**
**अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ।। ११ ।।**

दासऽपत्नीः । अहिऽगोपाः । अतिष्ठन् । निऽरुद्धाः । आपः । पणिनाऽइव । गावः । अपाम् । बिलम् । अपिऽहितम् । यत् । आसीत् । वृत्रम् । जघन्वान् । अप । तत् । ववार ।। ११ ।।

## ऋग्भाष्यम्

**दासस्य विष्णोर्वरुणस्य पत्न्यो निरुद्धा आसन्नहिना यद्वदेव ।**
**गावो बलेनेन्द्रयज्ञे सुक्लृप्ता वृत्रं हत्वा तमहिं चाशु शक्रः ।**
**उद्घाटयामास बिलं तदाऽपां शुभद्वारं भगवान्वा तमो घ्नन् ।। ११ ।।**

**ऋग्भाष्यटीका– दासपत्नीः** । दासस्य । इन्द्रयज्ञे सुक्लृप्ता **गावः पणिनेव** पणिविशेषेण बलेन यद्वद्यथा तथैव **दासपत्नीः** विष्णोर्दासस्य वरुणस्य पत्न्यः **आपो** नद्यो **अहि गोपाः** अहिर्गोपो गोप्ता यासां ताः अहिना गुप्ता इति शेषः । न केवलमहिगोपाः किन्तु **निरुद्धाः** वृत्रेणापीति शेषः । **अतिष्ठन्** आसन् । अन्यथा पूर्वोत्तरार्धयोरसंङ्गतिः स्यात् । अत एव तमहिं चेति वक्ष्यति । तदा शक्रो **वृत्रं जघन्वान्** हत्वेति यावत् । अहिं च हत्वा । अनुक्तोऽहिः कस्माद्गृह्यत इत्यतस्तं पूर्वार्धोक्तमित्युक्तम् । स्वयमेव कस्मान्नोक्त इत्यत उक्तम् । **आश्विति** ।। अनायासेन । **यदपां बिलं** ताभ्यां **अपिहितं** आच्छादितमासीत् **तदपववार** अपावृतवान् । उद्घाटयामास । अध्यात्मं व्याचष्टे । **शुभेति** ।। शुभकर्मणां द्वारमास्तिक्यादिकं तमःशब्देन संशयोऽपि लक्ष्यते । अत्र दासो यः कोऽपि । पत्न्य इव पत्न्यः ।। ११ ।।

**मन्त्रार्थमञ्जरी–** इन्द्रयज्ञे क्लृप्ताः गावः । पणिनेव, पणिविशेषेण बलेन यथा । (तथैव) दासपत्नीः, विष्णोर्दासस्य वरुणस्य पत्न्यः । आपः, नद्यः । अहिगोपाः, अहिर्गोपा गोप्ता यासां ताः । न केवलमहिगोपाः, किं तु निरुद्धाः । (वृत्रेण) इति शेषः । अतिष्ठन्, आसन् । तदा शक्रः । वृत्रम् (अहिं च) जघन्वान्, हन्तेः लिटः क्वसुः, हो हन्तेर्घः । यत् अपाम् बिलम् ।

ताभ्याम् अपिहितम्, आच्छादितम् । आसीत् तत् । अप ववार, अपावृतवान्, उद्घाटयामास । अध्यात्मं तु दासपत्नीः, दासो यः कश्चिद्भक्तस्तत्पत्न्य इव पत्न्योऽधीनाः । आपः, क्रियाः । वृत्रम्, अज्ञानम् । (अहिम्) संशयम् । (च) जघन्वान् । अपाम्, शुभकर्मणाम् । बिलम्, द्वारम्, आस्तिक्यादिकम् । ताभ्याम् अपिहितम् अप तत् ववार । इति । (यथायोग्यमन्यत्प्रागिव योज्यम् ।। ११ ।।)

**स्कन्द– दासपत्नीः** दस्यतेरुपक्षयार्थस्य दासः । श्रमादिना उपक्षीणशक्तिः कर्मकरादिः । तस्य पालयित्र्यो दासपत्न्यः । उपक्षीणशक्तिं हि श्रान्तं कर्मकरादिं पीतमात्रा एवापः आप्यायनेन पालयन्ति । **अहिगोपाः** अहिना गुप्ताः मेघोदरान्तर्गताः **अतिष्ठन् निरुद्धाः** । केन निरुद्धाः । अहिगोपा इति वचनादहिना । वृत्रं जघन्वानिति वावचनात् परस्ताद् वृत्रेण ता निरुद्धा अतिष्ठन् **आपः** । **पणिना इव गावः** 'पणिर्वणिग् भवति' (या.२-१७) । यथा विक्रयार्थं वणिजा गावो निरुद्धास्तिष्ठेयुः तद्वत् । एवं निरुद्धानां तासाम् **अपाम्** निर्गमनबिलम् **अपिहितम्** घटितम् । **यत् आसीत्, वृत्रम्** मेघं तद्रक्षितारमसुरं वा **जघन्वान्** शत्रर्थोऽयं क्वसुः । घ्नन् **अप तत् ववार** बिलमपावृतवान् उद्घाटितवान् ।। ११ ।।

**वेङ्कटमाधव–** दासाधिपत्न्यः अहिना गुप्ताः **अतिष्ठन् निरुद्धाः आपः** असुरैः **इव गावः** । तत्र **अपाम् बिलम् अपिदितम् यन् आसीत् वृत्रम्** जघ्निवान् **अप ववार तत्** इति ।। ११ ।।

**मुद्गल– दासपत्नीः** दासः विश्वोपक्षयहेतुः वृत्रः पतिः स्वामी यासामपां ताः दासपत्नीः । अत एव **अहिगोपाः** अहिर्वृत्रो गोपाः रक्षको यासां ताः । गोपनं नाम स्वच्छन्देन यथा न प्रवहन्ति तथा निरोधनम् । एतदेव स्पष्टीक्रियते । **आपः निरुद्धा अतिष्ठन्** इति । दृष्टान्तः । **पणिनेव गावः** पणिनामकोऽसुरो गा अपहृत्य बिले स्थापयित्वा बिलद्वारमाच्छाद्य यथा निरुद्धवांस्तथेत्यर्थः । **अपाम् यत् बिलम्** प्रवहणद्वारम् **अपिहितम्** वृत्रेण निरुद्धम् **आसीत् तत्** बिलप्रवहणद्वारम् **वृत्रम् जघन्वान्** हतवानिन्द्रः **अप ववार** अपावृतमकरोत् । वृत्रकृतमपां निरोधं परिहृतवान् ।। ११ ।।

**सायण– दासपत्नीः** दासः विश्वोपक्षयहेतुः वृत्रः पतिः स्वामी यासामपां ताः दासपत्नीः ।

अत एव **अहिगोपाः** अहिर्वृत्रो गोपाः रक्षको यासां ताः । गोपनं नाम स्वच्छन्देन यथा न प्रवहन्ति तथा निरोधनम् । एतदेव स्पष्टीक्रियते । **आपः निरुद्धा अतिष्ठन्** इति । दृष्टान्तः । **पणिनेव गावः** पणिनामकोऽसुरो गा अपहृत्य बिले स्थापयित्वा बिलद्वारमाच्छाद्य यथा निरुद्धवांस्तथेत्यर्थः । **अपाम् यत् बिलम्** प्रवहणद्वारम् **अपिहितम्** वृत्रेण निरुद्धम् **आसीत् तत्** बिलप्रवहणद्वारम् **वृत्रम् जघन्वान्** हतवानिन्द्रः **अप ववार** अपावृतमकरोत् । वृत्रकृतमपां निरोधं परिहृतवान् ।

अत्र यास्कः– 'दासपत्नीर्दासाधिपत्न्यो दासो दस्यतेरुपदासयति कर्माण्यहिगोपा अतिष्ठन्नहिना गुप्ताः । अहिरयनादेत्यन्तरिक्षेऽयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग आहन्तीति । निरुद्धा आपः पणिनेव गावः । पणिर्वणिग्भवति पणिः पणनाद्वणिक् पण्यं नेनेक्ति । अपां बिलमपिहितं यदासीत् । बिलं भरं भवति बिभर्तेर्वृत्रं जघ्निवानपववार तद्वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा । यदवृणोत्तद्वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्तत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते । 'यदवर्धत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते' (निरु.२-१७) इति । दासपत्नीः । 'दसु उपक्षये' । दासयतीति दासो वृत्रः । पचाद्यच् । 'चितः' इत्यन्तोदात्तत्वम् । दासः पतिर्यासाम् । 'विभाषा सपूर्वस्य' (पा.सू.४-१-३४) इति ङीप्; तत्सन्नियोगेन इकारस्य नकारः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यद्वा । दासस्य पालयित्र्यः । 'पत्यावैश्वर्य' इति पूर्वपदप्रकृतिस्वरत्वम् । अहिगोपाः । 'गुपू रक्षणे' । गोपायतीति गोपाः । 'आयादय आर्धधातुके वा' (पा.सू.३-१-३१) इति आयप्रत्ययः । ततः क्विप् । 'अतो लोपः' । 'वेरपृक्तलोपाद्वलिलोपो बलीयान्' इति पूर्वं यकारलोपः (पा.सू.६-१-६६-६७) । न च 'अचः परस्मिन्' इति अतो लोपस्य स्थानिवत्त्वं 'न पदान्तद्विर्वचन' इति प्रतिषेधात् । अहिगोपा यासाम् । पूर्ववत् स्वरः । निरुद्धाः । 'रुधिर् आवरणे' । 'झषस्तथोर्धोऽधः' (पा.सू.८-२-४०) इति निष्ठातकारस्य धकारः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । जघन्वान् । हन्तेर्लिटः क्वसुः । 'अभ्यासाच्च' (पा.सू.७-३-५५) इति अभ्यासादुत्तरस्य हकारस्य कुत्वम् । क्रादिनियमप्राप्तस्य इटः 'विभाषा गमहन' (पा.सू.७-२-६८ ) इत्यादिना विकल्पविधानादभावः । संहितायां नकारस्य स्वानुनासिकावुक्तौ ।। ११ ।।

**सिद्धाञ्जनम्– दासपत्नीः** दासः पतिः यासां ताः (दसु उपक्षये) दासयतीति दासो वृत्रो विश्वस्य क्षपयिता यासामपां स्वामी ता आपः, **अहिगोपाः** अहिः वृत्रः गोपाः रक्षकः यासां

ताः आपः ('गुपू रक्षणे' गोपनं अत्र निरोधनं भवति) **निरुद्धाः अतिष्ठन्** बन्धनस्थाः आसन्। का इव ? **पणिनेव** एतन्नामकेनासुरेण गवां अपहर्त्रा निरुद्धा **गावः** यथा स्थितास्तथा । **यत् अपां बिलं** गोपनस्थानद्वारं प्रवहणद्वारं वा **अपिहितं आसीत्** निरुद्धमभवत् । **वृत्रं जघन्वान्** हतवान् (हन्तेः लिट्, क्वसुन्) इन्द्रः **तत्** तद्बिलं **अपववार** अपावृतवान्, अपां प्रवाहाय द्वारमुद्धाटितवान् ।। ११ ।।

**नीतिमञ्जरी–** बहुभिः स्पर्द्धा न कार्येत्याह–

**हिंसाक्रूरतराचारैर्न व्रजेद्विश्वशत्रुताम् ।**
**विश्वशत्रुर्हतो वृत्र इन्द्रेणापां निरोधकः ।। १३ ।।**

हिंसा च क्रूरतराश्च ते आचाराश्च तैर्विश्वशत्रुतां विश्वानिष्टतां प्राज्ञो न व्रजेत् । तत्र वृत्रदृष्टान्तेन दृढयति । यथा वृत्रो विश्वावरकः विश्वशत्रुः हिंसया कुत्सिताचारैः अपां उदकानां निरोधको यद्येवंविधोऽभूत् तर्हि इन्द्रेण जगन्मित्रेण निहतः तस्माद्विश्वशत्रुतां न व्रजेदित्यर्थः ।

एतदर्थप्रतिपादनार्थमृक्–

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।। अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अपतद्ववार ।। ११ ।।

हिरण्यस्तूप इन्द्रं स्तौति त्रिष्टुभा– अथापि स्तुतिरेव भवति नाशीर्वादः 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इति यास्केन स्तुतिरुक्ता (नि० ७।२) । ज्योतिष्टोमे निष्केवल्ये विनियुक्तं महाव्रते च । इन्द्रस्य नु वीर्याणीति (ऋ० १.३२) रथन्तरपृष्ठ इति सूत्रितम् ।

अयमर्थः । **दासः** विश्वोपक्षयहेतुः वृत्रः पतिः स्वामी यासां ताः । 'दसु उपक्षये' । **अहिगोपाः** अहिर्गोपाः वृत्रो रक्षको यासां ताः । गोपनं नाम यथा स्वच्छन्देन न प्रविशन्ति तथा निरोधनम् । एवंविधा **आपः निरुद्धा अतिष्ठन्** स्थिताः । केनेव । **पणिना** गाव इव । यथा पणिना असुरेण पूर्वं गा अपहृत्य बिले स्थापयित्वा बिलद्वारं निरुद्धं तथाऽनेन अपां द्वारं निरुद्धमित्यर्थः । **यत्** यदा **अपां** यद्बिलं प्रवहणद्वारं **अपिहितं** वृत्रेण निरुद्धं आसीत् तदा इन्द्रः **वृत्रं** विश्वशत्रुं **जघन्वान्** । हत्वा **अपववार** अपवृतमकरोत् । वृत्रकृतमपां निरोधं परिहृतवान् ।

'विवृद्ध्या शरीरस्य स्रोतांसि निवारयाश्चकार । तस्मिन्हते प्रसस्यन्दिर आप' इति । 'दासपत्नीर्दासाधिपत्न्यः' इति यास्कः (नि० २-१७) । जघन्वाँ-नकार आकारोपध० (ऋ० प्रा० ४-६४ ) इति नलोपः ।

इन्द्रस्य वृत्रवधो बहुधा प्रपश्चितः–
अहन्वृत्रं वृत्रतरम् (ऋ.सं.१-३२-५)
वृत्रं जघानाशन्येव वृक्षम् (ऋ.सं.२-१४-२)
जघान वृत्रं स्वधितिर्वनेव (ऋ.सं.१०-८९-७) इत्येवमादयः ।

## ऋक्संहिता पदपाठसहिता

**अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः ।**
**अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून् ॥ १२ ॥**

अश्व्यः । वारः । अभवः । तत् । इन्द्र । सृके । यत् । त्वा । प्रतिऽअहन् । देवः । एकः । अजयः । गाः । अजयः । शूर । सोमम् । अव । असृजः । सर्तवे । सप्त । सिन्धून् ॥ १२ ॥

## ऋग्भाष्यम्

**सृके युद्धे प्रत्यहंस्त्वां यदि स्म देवः प्रधानोऽपि तदश्ववारः ।**
**वालीव त्वं ननु देवस्तदानीं प्रतिहन्ता ते नैव कश्चिद्धि तस्मात् ।**
**अजयो बलाद्वा अजयो हिरण्यं सोमं गन्तुममुचः सप्त सिन्धून् ॥ १२ ॥**

**ऋग्भाष्यटीका–** अश्व्यः । सृके । हे इन्द्र! यत् यदि । **सृके** आयुधनामैतत् । तत्सम्बन्धाद्युद्धं लक्ष्यते । युद्धनामैव वा । युद्धे **एकः** प्रधानोऽपि **देवः** त्वां **प्रत्यहन् तत्** तदानीं त्वं **अश्व्यो**ऽश्वसम्बन्धी **वारो** वारकः । तदश्ववारः । तस्य प्रतिभटस्याश्वानां निवारकोऽभवः । प्रत्यायनाय भाष्यकृद्दृष्टान्तमाचष्टे । **वालीवेति** ॥ यथा वाली स्वदृष्टिपातमात्रेण परबलापहारं करोति तथा त्वं दृष्टिपातमात्रेण रिपुरथे योजितानामश्वानां बलमपहृत्य तानपवाहयसीति । यद्वा । अश्ववार इत्यश्ववाहकः प्रसिद्धः । तदा पराङ्मुखतयेत्युपस्कर्तव्यम् । यदि देवोऽपि त्वां प्रत्यहंस्तदा तदश्वनिवारको भव इत्युक्त्या प्रथमं तावत्प्रहारविषयो भवतीति

प्राप्नोति अतोऽभिप्रायमाह । **तस्मादिति** ।। तस्मात् दृष्टिमात्रेण बलापहारित्वात्ते प्रतिहन्ता कश्चिद्देवोऽपि नैवास्तीति । ततश्च प्रत्यहान्नेति प्रतिहन्तुमैच्छदित्यर्थः । अत एव किलार्थः स्मशब्दोऽत्रापि हिशब्दः । किञ्च । हे **शूर!** विक्रान्त त्वं रिपूणां **गाः अजयः** । शूरेत्यस्य तात्पर्यं बलादिति । पुनरजयो हिरण्यमिति शेषः । सोमस्यापरकीयत्वान्न कर्मत्वम् । त्वं **सप्तसिन्धून्** प्रधाननदीः **सोमं सर्तवे** गन्तुम् । तुमर्थ इत्यादिना तवेन् । **अवासृजः** अमुचः । नदीजलैः सोमं संयोजयितुं नदीः प्रवर्तितवानसीति ।। १२ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । यत्, यदि । सृके, आयुधनामैतत् (वै० नि० २।२०) तत्सम्बन्धाद्युद्धं लक्ष्यते, युद्धनामैव । वा, युद्धे । एकः, प्रधानः । (अपि) देवः, त्वा, त्वाम् । प्रत्याहन्, लक्षणया प्रतिहन्तुमैच्छत् । तत्, तदानीम् (त्वम्) । अश्व्यः, अश्वसम्बन्धी । वारः वारकोऽश्ववारः, प्रतिभटस्याश्वानां निवारकः । अभवः । किं च (हे) शूर, विक्रान्त (त्वम्) रिपूणाम् गाः अजयः । पुनः 'अजयः' इत्यस्य (हिरण्यम्) इति शेषः । (त्वम्) सप्त सिन्धून्, प्रधाननदीः । सोमम् । सर्तवे गन्तुम्, 'तुमर्थे सेसेनसे' इत्यादिना तवेन्प्रत्ययः । अव असृजः, अमुचः, नदीजलैः सोमं संयोजयितुं नदीः प्रवर्तितवानसि । अध्यात्मं तु गमेः डोप्रत्ययान्तरूपत्वात् गाः, ज्ञानानि (भक्तानाम्) इति शेषः । मिथ्याबोधतः अजयः, मिथ्याज्ञानेनाभिभूतानि तदपाकृत्य स्थिराण्यकार्षीः । सोमम्, अस्मन्मनः । (च) शब्दादिका-द्विषयजातात् अजयः, विषयैरपहृतं विरक्तमकार्षीः । सप्त । सिन्धून्, समुद्रानिव दुस्तरान्मह-त्तत्त्वादीन्, महत्तत्त्वांशं चित्तमहंकारांशमहंकारं पञ्चभूतांशाँश्च देहस्थान् । सर्तवे, न्यायमार्गे गन्तुम् । अव असृजः, अमुचः, प्रेरितवानसि इति । (शिष्टं स्पष्टम्) ।। १२ ।।

**स्कन्द–** अश्वशब्दोऽत्र 'अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति' (या.२-५) इत्येवमश्वा-वयवे पृष्ठे वर्तते । अश्वपृष्ठे साधुः स्थिरयानः **अश्व्यः** । **वारः** वाहयिता । अपोहयितरि वारशब्दः प्रसिद्धः अश्ववार इति । अश्वस्य वा वाहयिताऽश्ववार उच्यते । अथवा शत्रूणां वारः अभवः । **तत्** तदा हे **इन्द्र!** कदा । उच्यते । **सुके** 'सूक्त' (निघ.२-२०) इति वज्रनाम । 'यस्य च भावेन (पा.सू.२-३-३७) इत्येव चैषा सप्तमी । तच्छ्रुतेश्च लवणभूतयोग्यक्रियाध्याहारः । सङ्ग्रामनाम वा अपठितोऽपि सामर्थ्यात् । सृकशब्दः वज्रगृहीते सङ्ग्रामे वा । **यत्** यदा त्वाम् **प्रत्यहन्** हन्तिरत्र गत्यर्थः । **त्वा** प्रतिगतवान् **देवः एकः** । कतमः । मरुद्गणः । एव ह्यैतरेयिण

इतिहासमधीयते– 'इन्द्रो वै वृत्रं हनिष्यन् सर्वा देवता अब्रवीत् अनु मोपतिष्ठध्वमुप मा ह्वयध्वमिति । तथेति त हनिष्यन्तः आद्रवन् । सोऽवेन्मां वै हनिष्यन्त आद्रवन्ति हन्तेमान् भीषया इति । तानभि प्राश्वसीत् । तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन् । मरुतो हैनं नाजहुः । प्रहर भगवो जहि वीरयस्वेत्येवैनमेतां वाचं वदन्त उपातिष्टन्त' (ऐ.ब्रा.३-२०) इति । तदेतदिहोच्यते– सृके यत् त्वा प्रत्यहन् देव एक इति । अथवा सृक इति तृतीयार्थे सप्तमी । आयुधसामान्याच्च वृत्रायुधे सृकशब्दो वर्तते । हन्तिश्च वधार्थ एव । सृकेण स्वेनायुधेन यदा त्वां प्रतिहतवान् वृत्र इत्यर्थः । किञ्च तदैव त्वं देवः दानादिगुणयुक्तः एक एव तम् **अजयः** । **गाः** तदैव **अजयः** । हे **शूर! सोमम्,** तदैव **अव असृजः** । अवसर्गोऽनुज्ञा । अनुज्ञातवान् । **सर्तवे** गमनाय **सप्त सिन्धून्** सप्तसङ्ख्याका गङ्गाद्याः प्रधानभूता नदीः ॥१२॥

**वेङ्कटमाधव–** यदा तव प्रतिबोधनार्थमसुरैः पीड्यमानः कश्चित् **देवः त्वा** त्वदीये वज्रे निहन्ति, तदा त्वम् अश्वपृष्ठस्थः दंशानां वारको बाल इव भवसि । शत्रूनुभयतो हंसि । स त्वमसुरेभ्यः **अजयः गाः** । **अजयः** च **सोमम्** । **अव असृजः** सरणाय **सप्त सिन्धून्** गङ्गाद्या सप्त देवनदीः ॥ १२ ॥

**मुद्गल– सृके** वज्रे **देवः** दीप्यमानः सर्वायुधकुशलः **एकः** अद्वितीयो वृत्रः **यत्** यदा **त्वा** त्वाम् **प्रति अहन्** प्रतिकूलत्वेन प्रहृतवान् । तदानीं त्वम् **अश्व्यः वारः** अश्वसम्बन्धी वालः **अभवः** । यथाऽश्वस्य वालोऽनायासेन मक्षिकादीन् वारयति तद्वद्वृत्रमगणयित्वा निराकृतवानित्यर्थः । किं च **गाः** पणिनापहृताः त्वम् **अजयः** जितवान् । हे **शूर!** इन्द्र! **सोमम् अजयः** जितवान् । **सप्त सिन्धून्** गङ्गायमुनासरस्वतीशुतुद्रीपरुष्णीमरुद्वृधार्जीकीयाख्याः सप्त नदीः **सर्तवे** सर्तुं प्रवाहरूपेण गन्तुम् **अव असृजः** त्यक्तवान् । वृत्रकृतं प्रवाहनिरोधं निराकृतवानित्यर्थः ॥ १२ ॥

**सायण– सृके** वज्रे । 'सृकः वृकः' (नि.२-२०-६) इति वज्रनामसु पठितत्वात् । **देवः** दीप्यमानः सर्वायुधकुशलः **एकः** अद्वितीयो वृत्रः **यत्** यदा **त्वा** त्वाम् **प्रति अहन्** प्रतिकूलत्वेन प्रहृतवान् । **तत्** तदानीं त्वम् **अश्व्यः वारः** अश्वसम्बन्धी वालः **अभवः** । यथाऽश्वस्य वालोऽनायासेन मक्षिकादीन् वारयति तद्वद्वृत्रमगणयित्वा निराकृतवानित्यर्थः । किं च **गाः** पणिनापहृताः त्वम् **अजयः** जितवान् । हे **शूर!** शौर्ययुक्त इन्द्र! **सोमम् अजयः** जितवान् ।

तथा च तैत्तिरीयाः– 'त्वष्टा हतपुत्रः' इत्यस्मिन्नुपाख्याने समामनन्ति- 'स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्' (तै.सं.२.४.१२.१) इति । **सप्त सिन्धून्** 'इमं मे गङ्गे' (ऋ.सं.१०-७५-५) इत्यस्यामृच्याम्नाता गङ्गाद्याः सप्तसंख्याका नदीः **सर्तवे** सर्तुं प्रवाहरूपेण गन्तुम् **अव असृजः** त्यक्तवान् । वृत्रकृतं प्रवाहनिरोधं निराकृतवानित्यर्थः ।।

अश्व्यः । अश्वे भवः । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । वारयति दंशमशकानिति वारः । पचाद्यच् । कपिलकादित्वात् लत्वविकल्पः (पा.सू.८-२-१८)। पृषादित्वादानुदात्तत्वम् । प्रत्यहन् । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः । 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम् । अजयः । गाः इत्यस्य वाक्यान्तरगतत्वात् तदपेक्षयास्य 'तिङ्ङतिङः' इति निघातो न भवति, 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' (पा.सू.८-१-१८.५) इति वचनात् । सर्तवे । 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ।। १२ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र!**, **यत्** यदा **त्वा** त्वाम् **सृके** वज्रायुधे (सृकः वज्रनाम, सृ-धातोः कक्प्रत्ययः) **प्रत्यहन्** प्रतिकूलं प्रहृतवान् वृत्रः, **तत्** तदा त्वं **अश्व्यः** अश्वे भवः अश्वावयवभूतः **वारः** वालः (लत्वविकल्पः) मक्षिकादीनां निवारयिता अश्ववाल इव वृत्रस्य निराकर्ता **अभवः** । अथ **एकः** अद्वितीयः **देवः** त्वं **गाः अजयः** निरुद्धाः गाः पुनर्लब्धवान् त्वं, हे **शूर!** शौर्ययुक्त, **सोमं** सोमं च **अजयः**, **सप्त सिन्धून्** सप्तसङ्ख्याकाः नदीः, स्यन्दमाना अपः **सर्तवे** सर्तुं प्रवाहरुपेण गन्तुं **अवासृजः** अवसृष्टवान् विमोचितवानित्यर्थः । अस्यामृचि 'देव एकः' देदीप्यमानः सर्वायुधकुशलः अद्वितीयः वृत्र इत्येके । अत्र वृत्रहत्या, गोलाभः, सोमप्राप्तिः, सप्तसिन्धुविमोचनम्, इत्येतेषां कः सम्बन्धः, ईदृश आख्यानस्य का वा विवक्षा? उत्तरत्र पश्यामः ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**नास्मै॑ वि॒द्युन्न त॑न्य॒तुः सि॑षेध॒ न यां मिह॒मकि॑रद्ध्रा॒दुनिं॑ च ।**
**इन्द्र॑श्च॒ यद्यु॑यु॒धाते॒ अहि॑श्चो॒ताप॒रीभ्यो॑ म॒घवा॒ वि जि॑ग्ये ।। १३ ।।**

न । अ॒स्मै॒ । वि॒ऽद्युत् । न । त॒न्य॒तुः । सि॒से॒ध॒ । न । याम् । मिह॑म् । अकि॑रत् । ह्रा॒दुनि॑म् । च॒ ।। इन्द्रः॑ । च॒ । यत् । यु॒यु॒धाते॒ इति॑ । अहिः॑ । च॒ । उ॒त । अ॒परी॒भ्यः॑ । म॒घऽवा॑ । वि । जि॒ग्ये॒ ।।

## ऋग्भाष्यम्

**अशनिं यां विद्युतं यां मिहं च नाम्ना हेतिं वेद्युपमां सुतीक्ष्णाम् ।**
**अशनिभेदं ह्रादुनिनामधेयं त्वामुद्दिश्यैवाकिरत् सोऽहिरुग्रः ।**
**त्वां प्रत्येतन्नैव सिद्धिं चकार पश्चात्काले त्वजयस्त्वं तमेव ।। १३ ।।**

**ऋग्भाष्यटीका– नास्मै** । अशनिम् । **यत्** यदा **इन्द्रश्चाहिश्च युयुधाते** हे इन्द्र! यदा तवाहिना युद्धं प्रवृत्तं तदा **विद्युन्नामायुधं अस्मै** अहये **न सिषेध** । अस्य प्रयोजनसिद्धिं न चकार । **तन्यतुश्च** आयुधं **न सिषेध** । **यां मिहं ह्रादुनिं च** आयुधे अहिः **अकिरत्** त्वां प्रतिक्षिप्तवान् ते च न सिद्धिं चक्रतुः । सर्वस्य तात्पर्यमाह ।। यान्तन्यतुशब्दोक्तामशनिं वज्रं यां च विद्युतं यां च नाम्ना मिहं हेतिं यद्वज्रवेद्युपमां सुतीक्ष्णां यं च ह्रादुनिनामधेयमशनिभेदं वज्रप्रभेदं सोऽहिरुग्रः त्वामुद्दिश्यैवाकिरत् । एतत्सर्वमायुधजातं त्वां प्रति । त्वत्सम्बन्धिनीं त्वदुपहतिरूपाम् अस्य सिद्धिं नैव चकार । किं तु **अपरीभ्यो** पराभ्यो परस्यां वेलायां पश्चात्काले तु **मघवोत** मघवैव **विजिग्ये** त्वमेव तमहिमजयः ।। १३ ।।

**मन्त्रार्थमञ्जरी–** यत्, यदा । इन्द्रः च अहिः च युयुधाते, हे इन्द्र ! यदा तवाहिता युद्धं प्रवृत्तम् । (तदा) (विद्युत्) विद्युन्नामायुधम् । अस्मै, अहये । न (सिसेध), अस्य प्रयोजन-सिद्धिं न चकार । तन्यतुः (च), आयुधम् । न सिसेध । याम् । मिहम्, (हेतिम्) ह्रादुनिम् च, (अशनिम्) युद्धे (अहिः) अकिरत्, त्वां प्रति क्षिप्तवान् । (ते च) न (सिद्धिं च क्रतुः) किं तु अपरीभ्यः (अ) परस्यां वेलायाम्, पश्चात्काले । (तु) मघवा उत, मघवैव, त्वमेव । तमहिम् विजिग्ये, अजयः । अध्यात्मं तु विद्युत्, विपरीता द्युत्, 'द्युत दीप्तौ', भावे क्विप्, दीप्तिः, 'मतिः' इति (भाष्ये) प्रतिवादिनां प्रमाणदूषणाभासप्रयोगरूपशब्दः । (इष्टं तन्यतेऽनया वक्तृशक्त्येति तनोतेः यतुच्, तन्यतुः, वक्तृशक्तिः) मिहम्, जन्मान्तरवासनारूपशक्तिम् । ह्रादुनिम् च, हुंकृतिं च, 'ह्राद अव्यक्ते शब्दे' उनिः । (याम्, ये) (अहिः) अज्ञानम् । अकिरत्, उत्थापितवान् । अनादिवासनारूपवासनाशक्त्या ज्ञानेन च प्रवर्तितम् (सा) हुंकृत्यादिकम्, यत्प्रतिवादिनस्तत्सर्वम् । परेशानुग्रहे सति अस्मै, भक्ताय । न (न न) सिसेध, न सिद्धिकरं भवति, व्यर्थं भवति इत्यर्थः । इन्द्रः च । अहिः च, संशयश्च । यत्, यदा । युयुधाते (तदा)

मघवा उत अपरीभ्यः । भक्तहृदिस्थः सँस्तदीयाहिं (तदीय) संशयम् विजिग्ये, जितवान्, भक्तानां संशयं पर्यहार्षीत् इत्यर्थः ।। १३ ।।

**स्कन्द–** **न अस्मै** षष्ठ्यर्थे चतुर्थी तादर्थ्ये वा । अस्येन्द्रस्य स्वभूता अस्य वेन्द्रस्यार्थाय न **विद्युत्** नापि **तन्यतुः** स्तनयित्नुशब्दः **सिषेध** अन्तर्णीतण्यर्थोऽत्र सिधिः । अहिं संसाधितवात् । वशीकृतवानित्यर्थः । अथवा सिधिरत्रापनयनार्थः । 'ते सेधन्ति पथो वृकम्' (ऋ.सं.१-१०५-११) इति यथा । अहमपनीतवानित्यर्थः । नापि **याम् मिहम्** 'मिह सेचने' । वृष्टिरत्र मिट् उच्यते । **आकरन्** विकीर्णवान् । **ह्रादुनिम् च** ह्रादुनिः ह्रात्कारः हनहनशब्दः स च वृष्टिश्चापि न सिषिधतुः । न कश्चिदप्यन्यः सिषेधेत्यर्थः । **इन्द्रः च** । **यत्** यदा **युयुधाते** **अहिः च** यदेति वचनात् उतशब्दोऽपि तदार्थे । **अपरीभ्यः** अपरीशब्दोऽन्यवचनः । तादर्थ्ये चात्र चतुर्थी । अन्यासां प्रजानामर्थाय । मघवा **वि जिग्ये** विजितवान् अहिम् ।। १३ ।।

**वेङ्कटमाधव–** अहिर्मेघरूपं धारयन्निन्द्रस्य वधार्थं विद्युदादीनकरोत् । सर्वानेव तानिन्द्रो जिगाय । **न अस्मै** इन्द्राय वारणार्थमभवत् **विद्युत्** । न च गर्जितशब्दः । **न च याम्** वृष्टिम् अकरोत् अशनिम् **च** । यदा **इन्द्रः च अहिः च युयुधाते** तदानीं विद्युदादिव्यतिरिक्ताभ्योऽपि मायाभ्यः **वि जिग्ये** अहिम् इन्द्रः ।। १३ ।।

**मुद्गल–** **अस्मै** इन्द्रार्थं वृत्रेण निर्मिता **विद्युन् न सिषेध** इन्द्रं न प्राप्नोत् । तथा **तन्यतुः** गर्जनम् । **याम् मिहम्** सेचनं यां वृष्टिम् **अकिरत्** वृत्रो विक्षिप्तवान् सापि वृष्टिः **न** सिषेध । **ह्रादुनिम् च** अशनिमपि यां वृत्रः प्रयुक्तवान् सापि **न** सिषेध । **इन्द्रः च अहिश्च** इन्द्रवृत्रावुभावपि **यत्** यदा **युयुधाते** युद्धं कृतवन्तौ तदानीं विद्युदादयो न प्राप्ता इति पूर्वत्रान्वयः । **उत** अपि च मघवा धनवानिन्द्रः **अपरीभ्यः** अपराभ्यः अन्यासामपि वृत्रनिर्मितानां मायानां सकाशात् **वि जिग्ये** विशेषेण जितवान् ।। १३ ।।

**सायण–** इन्द्रं निषेद्धुं वृत्रो यान् विद्युदादीन् मायया निर्मितवान् ते सर्वेऽप्येनं निषेद्धुमशक्ताः । सोऽयमर्थोऽनेन मन्त्रेणोच्यते । **अस्मै** इन्द्रार्थं वृत्रेण निर्मिता **विद्युन् न सिषेध** इन्द्रं न प्राप्नोत् । तथा **तन्यतुः** गर्जनम् । **याम् मिहम्** सेचनं यां वृष्टिम् **अकिरत्** वृत्रो विक्षिप्तवान् सापि वृष्टिः **न** सिषेध । **ह्रादुनिम् च** अशनिमपि यां वृत्रः प्रयुक्तवान् सापि **न** सिषेध । **इन्द्रः**

**च अहिश्च** इन्द्रवृत्रावुभावपि **यत्** यदा **युयुधाते** युद्धं कृतवन्तौ तदानीं विद्युदादयो न प्राप्ता इति पूर्वत्रान्वयः । **उत** अपि च मघवा धनवानिन्द्रः **अपरीभ्यः** अपराभ्यः अन्यासामपि वृत्रनिर्मितानां मायानां सकाशात् **वि जिग्ये** विशेषेण जितवान् ।

सिषेध । 'षिधु गत्याम्' । मिहम् । 'मिह सेचने' । मेहति सिञ्चतीति मिट् वृष्टिः । 'क्विप् च' इति क्विप् । अकिरत् । 'कॄ विक्षेपे'। 'तुदादिभ्यः शः' । 'ऋत इद्धातोः' इति इत्वम् । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । युयुधाते । 'युध संप्रहारे' । लिटि प्रत्ययस्वरः । जिग्ये । 'सन्लिटोर्जेः' (पा.सू.७-३-५७) इति अभ्यासादुत्तरस्य जकारस्य कुत्वम् ॥१३॥

**सिद्धाञ्जनम्– अस्मै** इन्द्राय, इन्द्रमुद्दिश्य वृत्रेण प्रयुक्ता **विद्यूत् न सिषेध** इन्द्रं न प्राप ('षिधु गत्याम्', लिट्) तथा **तन्यतुः** गर्जनं (तनोतेर्यतुच्) **न** प्राप । **यां मिहं** वृष्टिं ('मिह सेचने' मेहति सिञ्चतीति मिट्, क्विप्) **अकिरत्** विक्षिप्तवान् यां **ह्रादुनिं** च ह्रात्कारयुक्तां अशिनिं च प्रयुक्तवान् साऽपि **न** सिषेध, इन्द्रं न प्राप्नोत् । यत् यदा **इन्द्रश्च अहिश्च** उभावपि **युयुधाते** युद्धं चक्रतुः, तदा विद्युदादयः इन्द्रं न सिषेध इति पूर्वत्र सम्बन्धः । **उत** अपि च **मघवा** इन्द्रः **अपरीभ्यः** अपराभ्यः वृत्रकृतमायाभ्यः सकाशात् (अपरीशब्दः अन्यवचनः) **विजिग्ये** विशेषेण जितवान् ॥ १३ ॥

## ऋक्संहिता पदपाठसहिता

**अहे॑र्या॒तारं॒ कम॑पश्य इन्द्र हृ॒दि यत्ते॑ ज॒घ्नुषो॒ भीरग॑च्छत् ।**
**नव॑ च॒ यन्न॑व॒तिं च॒ स्रव॑न्तीः श्ये॒नो न भी॒तो अत॑रो॒ रजां॑सि ॥ १४ ॥**
अहेः॑ । या॒तार॑म् । कम् । अ॒प॒श्यः॒ । इ॒न्द्र॒ । हृ॒दि । यत् । ते॒ । ज॒घ्नुषः॑ । भीः । अग॑च्छत् । नव॑ । च॒ । यत् । न॒व॒तिम् । च॒ । स्रव॑न्तीः । श्ये॒नः । न । भी॒तः । अत॑रः । रजां॑सि ॥ १४ ॥

## ऋग्भाष्यम्

**अहेर्योद्धारं कमपश्य इन्द्र यज्जघ्नुषस्तेऽपि भयं जगाम ।**
**ज्ञानानि मिथ्याबोधतोऽस्मन्मनश्च शब्दादिकादमुचः सप्तसिन्धून् ।**
**महत्तत्त्वादीन्विपरीता मतिस्तु विद्युच्छब्दाः स्तन्यतुर्वक्तृशक्तिः ।**
**मिहेत्युक्ता ह्रादुनिर्हुंकृतिश्च प्रतिवक्तृणामनुकूले रमेशे(परेशे) ।**

**न साधयंति स्म तमस्समुत्था जयत्येनं संशयं वासुदेवः ।**
**स्वभक्तार्थे तद्धृदिस्थः क एव त्वदन्योऽहेरभिगन्ता भवेत ।**
**तवैव यस्मात्संशयं जघ्नुषस्तु त्वदीयानां भयमञ्जो व्यपैति ।**
**शतमेकोनमतरस्त्वं नदीनामहिं दैत्यं घ्नन्यथाकाशदेशात् ।**
**भीतः श्येनो ह्यभिगच्छेत्तथैव नानानदीवारकत्वात्तु तस्य ।**
**ईशो देवानां तावतां तावतीश्च सृत्यापगास्तारयामास यद्वत् ।**
**भीतः श्येनस्तरतीत्थं तथैषां कृत्वोपमां तारयामास देवः ।**
**स्वातंत्र्ये भेदकरणे चोक्त एव व्यत्यास इत्यनवद्यं तदेतत् ।**
**वस्वादित्या मरुतश्चाश्विनौ च बृहस्पतिः शेषविपानिरुद्धाः ।**
**ब्रह्मा ब्रह्माण ऋभवश्चैव रुद्रा ऊनं शतं देवतासंहितोक्तम् ।। १४ ।।**

**ऋग्भाष्यटीका– अहेः** । पूर्वार्धां तावद्व्याख्याति । **अहेरिति** ।। हे **इन्द्र! अहेः** असुरस्य **यातारं** तं प्रतिगन्तारं तस्य प्रतियोद्धारं त्वां विना **कमपश्यः** न कमपि । सकललोक-वृत्तान्तविदापि त्वया तस्य प्रतिभटो न दृष्टः । कुतः । **यत्** यस्मात्तं **जघ्नुषोऽपि ते हृदि भीरगच्छत्** भयं जगाम । त्वन्मनस्यपि पुरा भयमुत्पन्नम् । एवं भूतमपि त्वं हतवानसीति । सिंहावलोकन्यायेनाजयो गा इत्यादींश्चतुरोऽर्धर्चानध्यात्मं व्याख्याति । **ज्ञानानीति** ।। गमेर्डो इत्यतो गोशब्दो गमेरूपम् । गत्यर्थाश्च ज्ञानार्थाः । अतो गाः ज्ञानानि भक्तानामिति शेषः । मिथ्याबोधतोऽजयः । मिथ्याज्ञानेनाभिभूतानि तदपाकृत्य स्थिराण्यकार्षीः । सोममस्मन्मनश्चास्माकं भक्तानां मनश्च शब्दादिविषयजातादजयः । विषयैरपहृतं विरक्तमकार्षीः । सप्तसिन्धून् समुद्रानिव दुस्तरान्महत्तत्वादीन् महत्तत्वांशं चित्तं महत्तत्वांशमहंकारं पञ्चानां महाभूतानामंशांश्च देहस्थान् सर्तवे न्यायमार्गे गन्तुमवासृजोऽमुचः । प्रेरितवानसीति । नास्मै विद्युदित्यत्र विद्युदादिशब्दार्था-स्तावदाह । **विपरीतेति** ।। प्रतिवक्तृणां प्रतिवादिनां विपरीता मतिस्तु विद्युत् । 'द्युत दीप्तौ' इत्यतो द्युत्समीचीना मतिः तद्विरुद्धत्वाद्विपरीता मतिर्विद्युत् । प्रतिवक्तृणामिति सर्वत्र सम्बध्यते । शब्दाः प्रमाणदूषणाभासप्रयोगास्तन्यतुः । स्तनतेः शब्दार्थस्य हीदं रूपम् । वक्तृशक्तिः वक्तृत्वशक्तिर्मिहेत्युक्ता अकार उच्चारणार्थः । 'मिह सेचने' । शक्त्या हि सिक्तोपोद्बलिता वाक्प्रवर्तते । न त्वभ्यासमात्रेण । जन्मान्तरवासना शक्तिः । हुंकृतिः ह्रादुनिः ।

ह्रादतेरव्यक्तशब्दार्थत्वात् इदानीं नास्मा इत्यस्य तात्पर्यमाह । **अनुकूल इति** ।। परेशेऽनुकूलेऽनुग्राहके सत्येते विद्युदादयः स्वकार्यं भगवद्भक्तपराभवं न साधयन्ति स्म । अहिरकिरदित्यस्यार्थस्तमः समुत्था इति । उतापरीभ्य इत्यस्यार्थो जयतीति । वासुदेवस्य संशयकृतोपद्रवाभावात्कथमेतदित्यतोऽभिप्रायमाह । **स्वभक्तेति** ।। अहेरित्यर्धस्यार्थः **एकवेति** । अहेः संशयस्य । कुतोऽन्यो नास्ति । यद्यस्मात्ते तवैव संशयं जघ्नुषः सतस्त्वदीयानां हृदि स्थितं भयं सम्यग्व्यपैति न त्वन्येषु संशयनाशाय प्रवृत्तेष्वित्यर्थः । नव चेत्यर्धर्चं प्रसिद्धेन्द्रे व्याख्याति । **शतमिति** ।। यद्यस्मात्त्वं **रजांसि भीतः श्येनो न** रज इत्यन्तरिक्षनाम । बहुवचनं च प्रदेशाभिप्रायम् । यथा ह्याकाशदेशान् भीतः श्येनोऽतिगच्छेत् । श्येन एव वेगी भीतस्तु सुतरामिति तदुपपादनम् । तथा **नव च नवतिं च स्रवन्तीः** नदीः नदीनामेकोनशतम् **अतरः** तीर्णवानसि । तस्मात्त्वदन्योऽहेरभिगन्ता नास्ति । असङ्गतिपरिहारायाहिं घ्नन्नित्युक्तम् । हेतौ शतृप्रत्ययः । दैत्यमिति बाह्यविषयत्वसूचनार्थम् । नदीतरणस्याहिवधे कथमुपयोग इत्यत उक्तम् । **नानेति** ।। तस्याहेः न ह्यन्यस्यैतत्कर्म सम्भवतीति भावः । ईश्वरे व्याख्याति । **ईश इति** ।। ईशो विष्णुस्तावतां नवतेर्नवानां च देवानां तावतीर्नवतिं नव च स्रवन्तीः नदीः सृत्यापगास्तानेव देवांस्तारयामासेति तात्पर्यम् ।

योजना तु यद्यस्मात्त्वं नव च नवतिं च स्रवतीः संसारनदीरतरस्तानेव देवानतारयोऽतस्त्वमेव संशयस्य हन्तेति । दृष्टान्तं व्याख्याति । यद्वदिति । ननु प्रयोजककर्तारमभिधाय स्वतन्त्रकर्तोदाह्रियते कथमित्यत आह । **तथेति** ।। एषां देवानाम् । तथा ताम् । एतदुक्तं भवति । यथा भीतः श्येनो रजांसि तरति तथा तरतो देवांस्तारयामासेति व्याख्यानान्न दोष इति । नन्वतर इत्येव श्रूयते न त्वतारय इति तत्कथमेतद्व्याख्यानमित्यत आह । **स्वातन्त्र्य इति** ।। अत्र तु स्वातंत्र्ये । के ते नव नवतिश्च देवा इत्यत आह । **वस्विति** ।। वसवोऽष्टौ, आदित्या विष्णुव्यतिरिक्ता एकादश, मरुतः प्रधानेन सहिताः पञ्चाशत् ब्रह्माणो, नव प्रजापतयः, ऋभवस्त्रयः, । रुद्रा एकादश । ऊनमेकोन । देवता संहितानामग्रन्थविशेषः ।। १४ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । अहेः, असुरस्य । यातारम्, प्रतिगन्तारम्, तस्य प्रतियोद्धारम् । त्वां विना कम् अपश्यः, न कमपि सकललोकवृत्तान्तविदापि त्वया तस्य प्रतिभटो न दृष्टः । कुतः? यत्, यस्मात् । तम् जघ्नुषः (अपि) ते हृदि । भीः अगच्छत्, भयं जगाम, त्वन्मनस्यपि

पूर्वं भयमुत्पन्नम्, एवं भूतमपि त्वं हतवानसि । यत्, यस्मात् । (त्वम्) रजांसि, 'रजः' इत्यन्तरिक्षनाम, बहुवचनं च प्रदेशाभिप्रायम्, आकाशप्रदेशान् । भीतः, श्येनः न, यथा भीतः श्येनस्तरत्यतिगच्छेत्, 'श्येन एव स्वभावतो वेगी, भीतस्तु सुतराम्' इति तदुपपादनम् । (तथा) नव च नवतिम् च । स्रवन्तीः, नदीः, नदीनामेकोनशतम् । अतरः, तीर्णवानसि । तस्मात्त्व-दन्योऽहेरभिगन्ता नास्ति, नानानदीवारकत्वादहेः, तद्वधार्थं शीघ्रं तास्तीर्त्वा तमहन् इति भावः । अध्यात्मं तु अहेः, संशयस्य । यातारम्, प्रतिगन्तारम् । कम् अपश्यः । (हे) इन्द्र, हरे । त्वदन्यः कोऽप्यभिगन्ता न इत्यर्थः । कुतः ? यत्, यस्मात् । ते, तव । (एव) संशयम् जघ्नुषः (सतः) त्वदीयानाम् (हृदि भीः अगच्छत्) हृदि स्थितं भयं सम्यग्व्यपैति, न त्वन्येषु संशयनाशाय प्रवृत्तेषु इत्यर्थः । किं च, यत्, यस्मात् । (त्वम्) नव च नवतिम् च, एकोनशतम् (देवान्) (भीतः श्येनः न), यथा भीतः श्येनः । रजांसि । तरति (तथा) संसृतीस्तरतस्तान् । (नव च नवतिम् च) स्रवन्तीः, एकोनशतं संसारनदीः । अतरः, अन्तर्णीतणिच्, अतारयः । अतस्त्वमेवाहेः संशयस्य हन्ता इति । एकोनशतं देवास्तु 'अष्टौ वसवः, ८ । विष्णुवर्ज्या एकादशादित्याः ।। ११ ।। प्रधानेन सह पञ्चाशन्मरुतः ।। ५० ।। द्वावश्विनौ २। बृहस्पतिः, १। शेषः, १ विपः, १। अनिरुद्धः १। ब्रह्मा, १। नव प्रजापतयः, ९। ऋभवस्त्रयः, ३। एकादश रुद्राः, ११। इत्येवं ९९ ज्ञेयाः, (अत्र वस्वादित्या मरुतश्चाश्विनौ च बृहस्पतिः शेषविपानिरुद्धाः । ब्रह्माब्राह्मण ऋभवश्चैव रुद्रा ऊनं शतं देवताः संहितोक्तम्' इति भाष्यं मानम् ।। १४ ।।

**स्कन्द– अहेः यातारम्** 'यया वज्रिवः' (ऋ.६-३७-४), 'यातेव भीमः' (ऋ.१,७०,६) इति प्रयोगदर्शनात् 'वियातः' इति च वधकर्मसु पाठात् (निघ.२-१९) यातिर्वधार्थोऽपि, न प्रापणार्थं एवेति गम्यते । वधकर्मसु हि वियात इत्येतद् याते रूपमभिप्रेतम्, न यातयतेः, भेदेन पठितत्वात् । अहेर्यातार हन्तार स्वतोऽन्यम् **कम् अपश्य** हे **इन्द्र! हृदि** हृदये **यत्** यस्मात् **ते जघ्नुष** अन्तर्णीतसन्नर्थोऽत्र हन्ति । जिघांसो **भीः अगच्छत्** भयं गतम् । उत्पत्तिरत्र गमनमभिप्रेतम् । अन्यो हनिष्यतीति हृदये भयमुत्पन्नमित्यर्थः । यद्भीतः किं कृतवान् । उच्यते । **नव च यत् नवतिम् स्रवन्तीः** नदीश्च **श्येनः न** श्येन इव **भीतः** अहिं हन्तुं शीघ्रम् **अतरः** तीर्णवान् **रजांसि** लोकाश्च त्रीनपि । एतदुक्तं भवति– कोऽन्यस्त्वत्तोऽहेर्हन्ता, येन तस्य वधशङ्काक्षोभितहृदयो नवनवतीर्नदीर्लोकत्रयं च तीर्त्वाऽहिं हन्तुं त्वरितोऽगम इति ।। १४ ।।

**वेङ्कटमाधव–** 'इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतो जगाम' (तु.ऐ.ब्रा. ३-१५) । तदाह– **अहेः** असुरस्य हन्तारं त्वतोऽन्यं **कम् अपश्य इन्द्र!** यातिर्वधकर्मा । हृदये **यत्** तत्र भयम् आगतं वृत्रम् जघ्नुषः । यदा **नव च** नवतीः **च** उदकानि **अतरः श्येनः** इव शीघ्रम् **भीतः** त्वमिति ।। १४ ।।

**मुद्गल–** हे **इन्द्र! जघ्नुषः** वृत्रं हतवत **ते** तव **हृदि** चित्ते **यत्** यदि **भीः अगच्छत्** न हतवानस्मीति बुद्ध्या भयं प्राप्नुयात् तर्हि **अहेः** वृत्रस्य **यातारम्** हन्तारम् **कम् अपश्यः** त्वत्तोऽन्यं कं पुरुषं दृष्टवानसि । तादृशपुरुषान्तरस्याभावात् मा भूत् तव भयमित्यर्थः । **यत्** यस्मात् कारणात् त्वम् **नव नवतिम् च स्रवन्तीः** एकोनशतसङ्ख्याकाः प्रवहन्तीर्नदीः प्राप्य **रजांसि** तत्र तान्युदकानि **अतरः** तीर्णवानसि । दृष्टान्तः । **श्येनः न भीतः** श्येननामको बलवान् पक्षी इव दूरगमनात् तव भयमासीदिति गम्यते । तद्वयं मा भूदित्यभिप्रायः ।। १४ ।।

**सायण–** हे **इन्द्र! जघ्नुषः** वृत्रं हतवत **ते** तव **हृदि** चित्ते **यत्** यदि **भीः अगच्छत्** न हतवानस्मीति बुद्ध्या भयं प्राप्नुयात् तर्हि **अहेः** वृत्रस्य **यातारम्** हन्तारम् **कम् अपश्यः** त्वत्तोऽन्यं कं पुरुषं दृष्टवानसि । तादृशपुरुषान्तरस्याभावात् मा भूत् तव भयमित्यर्थः । **यत्** यस्मात् कारणात् त्वम् **नव नवतिम् च स्रवन्तीः** एकोनशतसङ्ख्याकाः प्रवहन्तीर्नदीः प्राप्य **रजांसि** तत्र तान्युदकानि **अतरः** तीर्णवानसि । तत्र दृष्टान्तः । **श्येनः न भीतः** श्येननामको बलवान् पक्षी इव दूरगमनात् तव भयमासीदिति गम्यते । तद्वयं मा भूदित्यभिप्रायः ।

तच्च दूरगमनं ब्राह्मणे समाम्नातम्- 'इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतो जगाम' (ऐ.ब्रा.३-१५) इति । तैत्तिरीयाश्चामनन्ति- 'इन्द्रो वृत्रं हत्वा परां परावतमगच्छ-दपाराधमिति मन्यमानः' (तै.सं.२-५.३.६) इति ।। हृदि । 'पद्दन्' इत्यादिना हृदयशब्दस्य हृदादेशः । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । जघ्नुषः । हन्तेर्लिटः क्वसुः । षष्ठ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणपरपूर्वत्वे । 'शासिवसिघसीनां च' इति षत्वम् । न च 'षत्वतुकोरसिद्धः' (पा.सू.६-१-८६) इत्येकादेशस्यासिद्धत्वात् षत्वं न प्राप्नुयादिति वाच्यं, 'संप्रसारणङीट्सु प्रतिषेधो वक्तव्यः' (का.६-१-८६) इति असिद्धवद्भावस्य प्रतिषिद्धत्वात् । 'गमहन' इत्यादिना उपधालोपः । न च 'असिद्धवदत्राभात्' इति संप्रसारणस्यासिद्धवद्भावः, भिन्नाश्रयत्वात् । संप्रसारणं हि षष्ठ्येकवचने उपधालोपस्तु वसाविति भिन्नाश्रयत्वम् । स्रवन्तीः ।

'स्रु गतौ' । 'शीघ्र्यनोर्नित्यम्' (पा.सू.७-१-८१) इति नुमागमः । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधानुकस्वरेणाद्युदात्तत्वम् । अतरः । यद्वृत्तयोगादनिघातः ।। १४ ।।

**सिद्धाञ्जनम्–** वृत्रं हतवत इन्द्रस्य किं मृतो वृत्र उत नेति शङ्काऽभवत् तस्मात् परावतः अत्यन्तदूरदेशात् नदीरतरत्, लोकांश्चातरत् वृत्रहत्याविनिश्चयाय । इन्द्रमन्तरा को वा वृत्रस्य हन्ता भवेत् ? इममर्थं प्राह । मयैव हन्तव्यः, अन्येन केनापि घातिता मा भूद् वृत्र इति वेगेन शङ्कया नदीस्तीर्त्वाऽगच्छत् जिघांसुरिन्द्र इति एके व्याख्यातारः । वृत्रहत्यया पापं कृतवानस्मीति भीतिरिन्द्रस्य जातेत्यन्वाख्यानानि उदाहरन्त्येके । नायमर्थः सम्मतोऽस्माकम् । हे **इन्द्र!**, **जघ्नुषः** वृत्रं हतवतः (हन्तेः लिट्, क्वसुन्, जिघांसोः अन्तर्भावितसनर्थ इति स्कन्दस्वामी) **ते** तव **हृदि** मनसि **यत्** यदि **भीः** किं हतवान् अस्मि वा इति शङ्कारूपा **अगच्छत्** प्राप्नुयात् तर्हि **अहेः** वृत्रस्य **यातारं** अभिगन्तारं हन्तारमिति यावत्, **कं अपश्यः** कमन्यं दृष्टवानसि, न कोऽपि वर्तते । **यत्** यस्मात् **नव च नवतिं च** एकोनशतसङ्ख्याकाः **स्रवन्तीः** नदीः **रजांसि** लोकांश्च **अतरः** तीर्णवानसि, अन्येन हतो मा भूदिति, किं हतो मृत एव वा न वेति, **भीतः** शङ्कितः अतर इति सम्बन्धः । क इव ? **श्येनो न** दूरगमनशाली बलवान् पक्षीव (श्येनः श्येङ् गतौ इनन्) ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रो॑ या॒तोऽव॑सितस्य॒ राजा॒ शम॑स्य च शृ॒ङ्गिणो॒ वज्र॑बाहुः ।**
**सेदु॒ राजा॑ क्षयति चर्षणी॒नाम॒रान्न ने॒मिः परि॒ ता ब॑भूव ।। १५,३८,२,३२ ।।**

इन्द्रः॑ । या॒तः । अव॑ऽसितस्य । राजा॑ । शम॑स्य । च॒ । शृ॒ङ्गिणः॑ । वज्र॑ऽबाहुः । सः । इत् । ऊँ॒इति॑ । राजा॑ । क्ष॒यति॒ । च॒र्ष॒णी॒नाम् । अ॒रान् । न । ने॒मिः । परि॑ । ता । ब॒भू॒व ।। १५,३८,२,३२ ।।

## ऋग्भाष्यम्

**स एवेन्द्रो भगवांस्तत्प्रसादात्प्राप्तो भक्तैः पर्यवसानगन्तुः ।**
**मुक्तस्य राजाऽथापि शमस्य मुक्तेर्ज्ञानं शृङ्गं तद्वतश्चैव नित्यम् ।**
**स एव राजा क्षयति प्रजानां भूतान्यराणीव च पर्यभूत् सः ।।१५,३८,१३।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमदृग्भाष्ये द्वितीयोऽध्यायः ।।

**ऋग्भाष्यटीका– इन्द्रः** । स एव । अत्रैवशब्देनेयमृगीश्वरविषयैवेति सूचयति । **स** इत्यत्रोक्तगुणवत्तया प्रसिद्धः इन्द्रो भगवान्यातोऽभक्तैस्तत्प्रसादात् प्राप्तो ज्ञातो भवति । न तु परोक्तरीत्या सर्वथाऽविदितः । अज्ञेयत्वोक्तिस्त्वभक्तैस्त्वत्प्रसादेन विना न ज्ञायत इत्येवमर्थेति भावः । **अवसितस्य** पर्यवसानं गन्तुः संसारपारङ्गतस्य मुक्तस्य **राजा** स्वामी । न केवलं प्राप्तमोक्षाणामधिपतिः किन्तु शमस्य च मुक्तेरपि । किञ्च । **वज्रबाहुः** वज्रं ज्ञानं तदात्मकबाह्वादिमान् । **स इत्** । स एव । उशब्दोप्येवार्थः । तस्य **नित्यमि**त्यध्याहृतेन सम्बन्धः । नित्यमेव । **शृङ्गिणः** शृङ्गशब्दः प्रकाशवाचकः । तथा चाह । शृङ्गं प्रकाशस्तद्वतो नक्षत्रादेरिति । अतो ज्ञानं शृङ्गम् । तद्वतश्च ज्ञानिसमूहस्य **राजा चर्षणीनां** मुक्तातिरिक्तानां प्रजानां **क्षयति** ऐश्वर्यकर्मायम् । ईश्वरो भवति । सर्वं दृष्टान्तेनाह **नेमिरारान्न** अराणीव । **स च** स एव । **ताः** तानि सर्वाणि भूतानि **परिबभूव** । पर्यभूत् । परिभूतवान् । वशीकृतवान् । **यातो** जङ्गमस्य **अवसितस्य** स्थावरस्य **शमस्य** शान्तेः **शृङ्गिणो** नक्षत्रादेरिति प्रसिद्धेन्द्रेऽपि योज्यम् । वज्रमिव दृढौ बाहू यस्यासौ **वज्रबाहुः** । वज्रहस्त इति वेति ।। १५, ३८, ३२ ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ऋग्भाष्यस्य टीकायां जयतीर्थमुनिविरचितायां द्वितीयोऽध्यायः ।।**

**मन्त्रार्थमञ्जरी–** (सः) इत्यादिना उक्तगुणवत्तया प्रसिद्धः । इन्द्रः, भगवान् । यातः, भक्तैस्तत्प्रसादात्प्राप्तो ज्ञातो भवति । अवसितस्य, पर्यवसानं गन्तुः, संसारपारं गतस्य मुक्तस्य । राजा, स्वामी । न केवलं प्राप्तमोक्षाणां स्वामी, किं तु शमस्य च, मुक्तेरपि । किं च वज्रबाहुः, वज्रं ज्ञानम्, ज्ञानात्मकबाह्वादिमान् । सः इत्, स एव । उशब्दोऽप्येवार्थः, तस्य (नित्यम्) इत्यध्याहृतेनान्वयः नित्यमेव । शृङ्गिणः, शृङ्गशब्दः प्रकाशवाचकः, शृङ्गिणो ज्ञानिसमूहस्य । (च) राजा । चर्षणीनाम्, उक्तातिरिक्तानां (प्रजानाम्) क्षयति, ऐश्वर्यकर्मायम् (वै० नि० २।२१) ईश्वरो भवति । सर्वं दृष्टान्तेनाह नेमिः अरान् न, चक्रमराणीव । (सः च) स एव । ता, तानि, सर्वाणि भूतानि । परि बभूव, पर्यभूत्, परिभूतवान्, वशीकृतवान् । प्रसिद्धेन्द्रे तु यातः, जङ्गमस्य । अवसितस्य, स्थावरस्य । शमस्य, शान्तेः । शृङ्गिणः, प्रकाशवतः, नक्षत्रादेः । च राजा । वज्रबाहुः, वज्रवद्दृढबाहुः (वज्रं बाहौ हस्तौ यस्य स इति) 'वज्रहस्तः' इति वार्थो ध्येयः, (शिष्टं स्पष्टम्) ।। १५ ।।

द्वितीयाध्यायमन्त्रार्थान्भाष्यटीकानिरूपितान् ।
समग्रहीष्म बालानां बोधाय प्रीतये हरेः ।।

**।। इति श्रीमद्राघवेन्द्रतीर्थविरचितायां मन्त्रार्थमञ्जर्यां प्रथमाष्टके द्वितीयोऽध्यायः ।। २ ।।**

**द्वात्रिंशं सूक्तम् ।। ३२ ।।**

**स्कन्द– इन्द्रः यातः** गच्छतः जङ्गमस्याश्वादेः । **अवसितस्य** 'षिञ् बन्धने' । अवबद्धस्य । स्यादस्य जङ्गमस्य च इत्यर्थः । किम् । **राजा** ईश्वरः । **शमस्य** शान्तस्य च ऋष्यादेः । **शृङ्गिणः** गवादेः । अथवा जङ्गमग्रहणेनैव गवादेः शृङ्गवतो गृहीतत्वात् शृङ्गशब्दोऽत्र दीप्तिवचनः । दीप्तिमतो नक्षत्रादेः । कीदृशः । **वज्रबाहुः** बाहुशब्देनात्र हस्तो लक्ष्यते । वज्रहस्तः । **सः इत् उ** स एव **राजा** 'राजृ दीप्तौ' । दीप्तः । **क्षयति** क्षयतेरैश्वर्यकर्मणः एतद्रूपम् । ईष्टे । **चर्षणीनाम्** मनुष्याणामपि । न केवलमीष्टे एव । किं तर्हि । **अरान् न नेमिः** रथचक्रपृष्टं हि नेमिरच्यते । स यथा अरान् परिगृह्णाति तद्वत् । **परि ता बभूव** परिपूर्वो भवति परिग्रहे । ता इति सर्वेषां मनुष्याणां वा जङ्गमादीनां वा प्रतिनिर्देशः । तान् मनुष्यान् तानि वा जङ्गमादीनि परिगृह्णाति वशीकरोतीत्यर्थः ।। १५ ।।

**वलभीविनिवास्येतामृगर्थागमसंहृतिम् ।**
**भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति ।।**

**।। इति भर्तृद्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये द्वितीयोऽध्यायः ।।**

**वेङ्कटमाधव– इन्द्रः** जङ्गमस्य स्थावरस्य च **राजा** शान्तस्य हरिणादेः **शृङ्गिणः** महिषादेः च **वज्रबाहुः** । सः एव मनुष्याणाम् राजा भूत्वा निवसति । **परि** भवति च तानि भूतानि **अरान्** इव **नेमिः** ।। १५ ।।

**।। इत्थं द्वितीयमध्यायं व्याकरोत् प्रथमेऽष्टके गाधिनिर्माधवो नाम सङ्ख्यार्थं प्रकाशयन् ।।**

**।। इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने प्रथमाष्टके द्वितीयोऽध्यायः ।।**

**मुद्गल– वज्रबाहुः इन्द्रः** शत्रौ हते सति निःसपत्नो भूत्वा **यातः** गच्छतो जङ्गमस्य **अवसितस्य** एतत्रैव स्थितस्य स्थावरस्य **शमस्य** शान्तस्य शृङ्गराहित्येन प्रहरणादावप्रवृत्त-

स्याश्वगर्दभादेः **शृङ्गिणः** शृङ्गोपेतस्य महिषबलीवर्दादेश्च **राजा** अभूत् । **सः इत् उ** स एव इन्द्रः **चर्षणीनाम्** मनुष्याणाम् राजा भूत्वा **क्षयति** निवसति । **ता** तानि पूर्वोक्तानि जङ्गमादीनि सर्वाणि **परि बभूव** व्याप्तवान् । दृष्टान्तः । **अरान् न नेमिः** यथा रथचक्रस्य परितो वर्तमाना नेमिः अरान् नाभौ कीलितान् काष्ठविशेषान् व्याप्नोति तद्वत् ।। १५ ।।

।। इति प्रथमाष्टके द्वितीयाध्याये अष्टात्रिंशो वर्गः ।।

।। इति ऋग्भाष्ये द्वितीयोऽध्यायः समाप्तः ।।

**सायण– वज्रबाहुः इन्द्रः** शत्रौ हते सति निःसपत्नो भूत्वा **यातः** गच्छतो जङ्गमस्य **अवसितस्य** एतत्रैव स्थितस्य स्थावरस्य **शमस्य** शान्तस्य शृङ्गराहित्येन प्रहरणादाव-प्रवृत्तस्याश्वगर्दभादेः **शृङ्गिणः** शृङ्गोपेतस्य महिषबलीवर्दादेश्च **राजा** अभूत् । **सः इत् उ** स एव इन्द्रः **चर्षणीनाम्** मनुष्याणाम् राजा भूत्वा **क्षयति** निवसति । **ता** तानि पूर्वोक्तानि जङ्गमादीनि सर्वाणि **परि बभूव** व्याप्तवान् । दृष्टान्तः । **अरान् न नेमिः** यथा रथचक्रस्य परितो वर्तमाना नेमिः अरान् नाभौ कीलितान् काष्ठविशेषान् व्याप्नोति तद्वत् ।

यातः । 'या प्रापणे' । याति गच्छतीति यात् । लटः शतृ । 'सावेकाचः' इति विभक्ते-रुदात्तत्वम् । सः । 'सोऽचि लोपे चेत्' इति संहितायां सोर्लोपः । ता । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । बभूव । भवतेर्लिटो णलि 'भवतेरः' (पा.सू.७-४-७३) इति अभ्यासस्य अत्वम् । कृताकृतप्रसङ्गितया वुगागमस्य नित्यत्वात् वृद्धेः पूर्वं वुगागमः । यद्वा । 'इन्धिभवतिभ्यां च' (पा.सू.१-२-६) इति लिटः कित्त्वात् वृद्ध्यभावः । न च 'असिद्धवदत्राभात्' इति तस्यासिद्धत्वान् उवङ्आदेशः शङ्कनीयः, 'वुग्युटावुवङ्यणोः सिद्धौ भवतः' (पा.सू.६-४-२२.१४) इति तस्य सिद्धत्वात् । 'तिङ्ङतिङः' इति निघातः ।। १५,३८ ।।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ।।

।। इनि श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण
सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
प्रथमाष्टके द्वितीयोऽध्यायः समाप्तः ।।

**सिद्धाञ्जनम्**– वृत्रे हते **वज्रबाहुः इन्द्र, यातः** गच्छतः जङ्गमस्य (यातीति यत् शतृ) **अवसितस्य** अवबद्धस्य स्थावरस्य ('षिञ् बन्धने') **शमस्य** शान्तस्य **शृङ्गिणः च** आयुध-स्थानीयशृङ्गलक्षितदर्पयुक्तस्य **राजा** अभूत्, सर्वस्यापि चरस्य अचरस्य, शान्तस्य शक्तस्य च ईश्वरोऽभूदित्यर्थः । 'शृङ्गिणः महिषबलीवर्दादेः' इति पूर्वव्याख्यानं नोपपन्नम्, महिषादे-र्जङ्गमेऽन्तर्भावात् । अथ च 'यातः अवसितस्य' इति एकं द्वन्द्वम्, 'शमस्य शृङ्गिण' इत्यन्यद् द्वन्द्वं उक्तमवधेयम् । **सः इत्** स एव इन्द्रः (सः संहितायां सोर्लोपः छान्दसः) **चर्षणीनां** मनुष्याणां **राजा** भवन् **क्षयति** ईष्टे (क्षयतिः ऐश्वर्यकर्मा) सः **ता** तानि पूर्वोक्तानि सर्वाणि **परि बभूव** परितो व्याप्तवान् । तत्र दृष्टान्तः । **नेमिः** रथचक्रपृष्ठं **अरान् न** नाभौ कीलितान् काष्ठविशेषान् इव, यथा रथचक्रस्य परितो वर्तमाना नेमिः नाभौ कीलितान् अरान्परितो भवति, तथा इन्द्रः सर्वं परितो भवतीत्यर्थः ।। १५ ।।

प्रथमाष्टके द्वितीयेऽस्मिन्नध्याये अन्तिमं सूक्तद्वयं हिरण्यस्तूपस्यार्षेयं व्याख्यातम् । तत्रैक-माग्नेयम् ऐन्द्रमन्यत् । आग्नेयस्य व्याख्याने अङ्गिरोविचारोऽन्यत्र क्रियत इति उक्तम् । ऐन्द्रस्य व्याख्याने वृत्रकथा प्रसक्ता, अत्रापि विवरणं नोक्तम् । अत्रोभयोः विचारः कर्तव्यः । यत आङ्गिरसवृत्तानि वृत्रवृत्तान्तश्च तत्र तत्र दाशतय्यामुदाहृतानि स्थगन्ति ब्रह्मकोशस्थमितिहास-वेषमार्षं रहस्यम् । परोक्षवचनैर्मन्त्रवर्णा तत्त्वगर्भितं इतिहासमाचक्षते । परोक्षवचनत्वं तादृशानां मन्त्राणामप्युपगन्तव्यम् । तदन्तरेण स्थूलपक्षीयं सूक्ष्मार्थपक्षीयं वा तात्पर्यमसङ्गतं भवति । इदं च प्राक् प्रपञ्चितं 'यत्र ग्रावा' इति सूक्तार्थविवरणे, अन्यत्र च भूमिकायामावेदितम् । अथ पश्यामस्तावत् किंविधमङ्गिरसमधिकृत्य मन्त्रवर्णेषु वर्णनम् ।

अङ्गिर इति सकृत् अकारान्तः शब्दोऽयं सप्तम्येकवचने प्रयुक्तः । तद्यथा 'नवग्वे अङ्गिरे दशग्वे सप्तास्ये' (४-५१-४) इत्यत्र अङ्गिरसां गणः अङ्गिर इति प्रोक्तम् । सकृत् प्रथमाबहुवचने अकारान्त एव प्रयुक्तः 'आत् अङ्गिराः प्रथमं दधिरे' इति । अत्र अङ्गिराः अङ्गिरसः । अन्यत्र सकारान्तस्यैव प्रयोगो वेदे लोके च प्रसिद्धः । उभयोश्च रूपयोरेक एव अवयवार्थः । अङ्गार-अग्निशब्दाविव अङ्गिरःशब्दोऽपि अङ्गतेर्धातोर्निष्पन्नो बोध्यः । 'अग्निमीळे' सूक्तव्याख्याने अग्निपदनिर्वचनमधिकृत्य समासेनोपन्यस्तम् । अग्न्यादीनां वक्ष्यमाणानां चतुर्णां शब्दानां व्युत्पादनेषु इमान्युणादिसूत्राण्यवधेयानि भवन्ति । 'अङ्गेर्नलोपश्च' अग्निः । 'अङ्गिमदिमन्दिभ्य आरन्'

अङ्गारः । 'अङ्गतेरसिरि कडागमश्च' अङ्गिराः । 'ऋज्रेन्द्राग्रादयः रन्नन्ताः' अग्रम् । अत एव अग्निशब्दस्य अवयवार्थकथने ब्राह्मणवाक्यबलेन अग्रणीरग्निरित्याहुः । अग्न्यङ्गाराङ्गिरसां अव्यतिरेकमामनन्ति ब्राह्मणानि । 'ये अङ्गारा आसन् ते अङ्गिरसोऽभवन्' इति । 'अङ्गारेषु यो बभूव सोऽङ्गिराः' इति नैरुक्ताः । अन्ये च 'अङ्गिरोभिः ऋषिभिः सम्पादितत्वात् अङ्गसौष्ठवाद्वा अङ्गिराः अग्निरूपः' इति । अङ्गिरसमधिकृत्य विविधं वर्णयन्ति मन्त्रवर्णाः । अग्निः प्रथमोऽङ्गिराः, अग्निपुत्राः अङ्गिरसः, अग्निरङ्गिराः शक्तिसूनुः इति च प्राहुः । 'सहसः सूनो अङ्गिरः........ ऊर्जो नपातमीमहेऽग्निम्' (८-६०-२) 'कया ते अग्ने अङ्गिर ऊर्जो नपात्' (८-८४-४) 'त्वामग्ने अङ्गिरसो गुहा हितं अन्वविन्दन् शिश्रियाणं वने वने । स जायसे मध्यमानः सहो महत् त्वामाहुः सहसस्पुत्रमङ्गिरः ॥' (५-११-६) । इत्येवंविधैर्मन्त्रवर्णैः सर्वथा आङ्गिरसं तत्त्वं अग्निवैभवसम्बन्धीति स्पष्टं अवगम्यते । तस्मात् पावकत्वशोचिष्मत्वहोतृत्वकविक्रतुत्वादयोऽग्नेर्ये गुणाः प्रथिताः, तैः सम्पन्नः अङ्गिरा अङ्गिरसां गणो वेति ग्राह्यम् । यथा अग्निर्देवो देवानां अर्थे स्थितः, तथा 'दिवस्पुत्रासः' अङ्गिरसोऽपि ।

अङ्गिरसो देवाश्चेत् कथं पुनरिमे पितरो मनुष्या ऋषयः प्रसिद्धा गीयन्ते ? देवा मनुष्या इति द्विधाऽपि निर्दिष्टा भवन्ति । उभयथाऽप्युपपत्तिं पश्यामः । आर्भवतत्त्वविचारे यदुक्तं तदिह स्मार्यम् । अङ्गिरस ऋषयो मनुष्याः सन्तस्तपसा यजनेन द्विव्यमध्वानं अधिगम्य देवभावं प्राप्ताः । पूर्वं देवा एव स्वर्धामानोऽग्निविभवा ऋषिषु मनुष्येषु लब्धजन्मानः अत्रिभृगुकुत्सादय इव दिव्यभावप्राप्तिप्रदर्शनाय दृष्टान्तभूताश्चेति बोध्यम् । तत्र प्रथमं तावत् मनुष्या अङ्गिरसोऽस्माकं पितर इति मन्त्रान् कीर्तयतो कांश्चिन्निर्दिशामः । 'वीळु चिद् दृळ्हा पितरो न उक्थैरद्रिं रुजन्नङ्गिरसो रवेण । चक्रुर्दिवो बृहतो गातुमस्मे अहः स्वर्विविदुः केतुमुस्राः (१-७१-२) ॥' 'अस्माकमत्र पितरो मनुष्या अभि प्रसेदुर्ऋतमाशुषाणाः' (४-१-१३) 'दृळ्हं नरो वचसा दैव्येन व्रजं गोमन्तमुशिजो वि वव्रुः'(४-१-१५) एवंविधाः बहवो मन्त्रा मनुष्यानृषीन् पूर्वान् पितृन् देवभावं प्राप्तान् मनुष्योपकारिणो देवसाहाय्यकारिणोऽपि गायन्ति ।

अथ देवर्षयो देवा एवेमेऽङ्गिरसो बृहस्पतिभावं ब्राह्मणस्पत्यं वा प्राप्ताः इन्द्रकार्यसाधका अभिवर्ण्यन्ते, तथा अश्विभ्यां मरुद्भिः सह कीर्तिता भवन्ति । अङ्गिरसां सप्तसङ्ख्यया कीर्तने प्रसिद्धेऽपि बृहस्पतिरूपत्वेन तेषां एकरूपप्रतिपादनं 'इमां धियं सप्तशीर्ष्णीं पिता नः' (१०-

६७-१) इत्यादौ स्पष्टं द्रष्टव्यम् । 'यो अद्रिभित् प्रथमजा ऋतावा बृहस्पतिराङ्गिरसो हविष्मान्' (६-७३-१) इत्यत्रापि बृहस्पतिराङ्गिरसः । अङ्गिरोभिरिन्द्रः श्रेष्ठोऽङ्गिरा भवतीत्यन्यत्र बहुशः प्रथितः । तथा च 'सो अङ्गिरोभिरङ्गिरस्तमो भूद् वृषावृषभिः सखिभिः सखा सन्' (१-१००-४) 'विश्वरूपा मरुतो न सामभिः' (१०-७८-५) 'आ युवानः कवयो यज्ञियासो मरुतो...... नक्षन्तो नरो अङ्गिरस्वत्' (६-४६-५) इत्यादौ मरुत्सम्बन्धित्वमप्यङ्गिरसामुक्तम् । तथा दिवो देवी दुहिता दधात्यङ्गिरस्तमा सुकृते वसूनि' (७-७६-३) बहुभ्यो मन्त्रेभ्य आङ्गिरसप्रसङ्ग उषसः प्राप्तौ गवां लाभे अद्रिभेदने इन्द्रविजयादौ चावगम्यते । इमानि सर्वाणि एकस्यैव वृत्तान्तस्य सम्बन्धीनि भवन्ति । स च इन्द्रकृतवृत्रवधो भवति । वृत्रहतेः युगपत्फलानि चत्वारि परस्परसम्बद्धानि बोध्यानि । यद्यपि तानि बहुभिर्मन्त्रैर्बोध्यानि भवन्ति, तथाऽपि एकस्यैव पर्वतपदवेदनीय-वृत्रभञ्जनस्य युगपत् प्राप्तानि फलानि ज्ञापयन्तं मन्त्रं उदाहरामः । 'त्वमपो वि दुरो विषूचीः इन्द्र दृळ्हमरुजः पर्वतस्य । राजा भवो जगतश्चर्षणीनां साकं सूर्यं जनयन्द्यामुषासम्' (६-३०-५) ।

इदं मन्त्रतात्पर्यम्- हे इन्द्र, त्वं वृत्रेणावृता अपः यथा सर्वतः प्रसृता भवन्ति तथा व्यसृजः । कथमिदं शक्यमभवत् ? पर्वतस्य दृढं अपां बन्धकप्रदेशं अभाङ्क्षीः तस्मादिदं फलितम् । अन्यानि च 'साकं' युगपत् फलितानि । तानि सूर्यस्य, उषसः, दिवश्च जन्मानि । गवां विमोचनं च उषसा सूर्येण सह वा वेदे कीर्तितं बोध्यम्– 'गृणानो अङ्गिरोभिर्दस्म विवरुषसा सूर्येण गोभिरन्धः' (१-६२-५)। एवं इन्द्रसाहाय्ये वृत्रवधार्थे गवामधिगमे उषःप्रादुर्भावे सूर्यजन्मनि च अङ्गिरः प्रस्तावस्तत्र तत्र ऋक्संहितायां श्रूयते । इन्द्रकृत्यवृत्रवधस्य गूढार्थे निर्णीते अङ्गिरसतत्त्वगुणविभवाः स्वतः स्फुटाः स्युः ।

वृत्रकथा तर्हि निरीक्षणीया । किमनया प्रतिपिपादयिष्यते ? बाह्यपक्षेऽपि गौणार्थमन्तरा न तात्पर्यसिद्धिः । अत एव गौणाः शब्दा इति शबरः । तमेव 'उपमार्थे युद्धवर्णा भवन्ति..... उषसमस्य स्वसारमाह साहचर्यात्' इति यास्कः । परोक्षवचनानीति ब्राह्मणानि । 'निण्यं वचः' इति ऋग्वेदः । तमेव गूढार्थं अवद्योतयन् सङ्केतरूपः शब्द इति वयम् ।

वृत्रवृत्तान्तस्य मुख्यो विषयो यथा वृत्रवधनिष्पादितः अपामुत्सर्गो भवति, तथा आङ्गिरस-कथाया गवां विमोचनमेव सारवान् विषयः । यत्र वलो मुख्यः पणयोऽन्ये च तमसस्पुत्रा असुरवीराः

प्रधाना भवन्ति । इमाश्च गावो न चतुष्पात्पशवो भवन्ति, नाप्यापो भौतिकं जलम् । गावो रश्मयः बाह्या अपि अन्तःप्रकाशसङ्केतभूताः, अत एव ऋतरश्मयो बोध्याः । ऋतं च ज्योतिरुत्तमं सूर्यशब्दवाच्यं वेदे । तमसा वृत्रेण आक्रान्ता आपस्तु वृत्रवधात्परं विसृष्टाः सत्यस्यैव धारा भवन्ति । इमाश्च 'ऋतस्य धाराः' 'सप्त सिन्धवः' क्वचित् 'स्वर्वतीरप' इत्युल्लिखिताः सप्त-तत्त्वात्मकविश्वधारणसत्यशक्तिधारा भवन्ति । पर्वतो मेघो भवति । वलस्य पर्वतस्तु गुहामयः, यत्र अन्धकारमये स्थले गावश्चिद्रश्मयोऽपहृत्य वलेन निक्षिप्ता भवन्ति । अङ्गिरा आङ्गिरसो वा बृहस्पतिः सप्तास्यो ब्रह्मणा हार्दवाग्वीर्यज्वलितेन मन्त्रेण वलेनाधिष्ठितं पर्वतं भित्त्वा गाः निर्गमयति, तथा इन्द्रेण 'युजा' सहायेन अपामुत्सर्गं निरवर्तयदिति च (२-२३-१८) बहुशो गीयते वेदे । उत्तरत्रापि प्रसक्तिवशात् तान् मुख्यान् मन्त्रवर्णान् गूढार्थपरतयैव व्याख्येयान् अन्यार्थपरतायामयुक्तान् प्रदर्शयिष्यामः । ऋक्संहितायां सर्वाणि वृत्रवधस्थलानि आङ्गिरसप्रस्ताव-स्थलानि च परीक्षितानि चेत्, वल-वृत्र-पणिप्रभृतयोऽसुराः, आपः, गावः, पर्वतः इत्यादीनि अन्तर्यागपराणां ऋषीणां रहस्यभाषितानि 'परोक्षवचनानि' 'निण्या वचांसि' इत्यसंशयं दृढं भवेदित्यलमिह विस्तरेण ।। १५,३८ ।।

**।। इति प्रथमस्य द्वितीये अष्टात्रिंशो वर्गः ।।**

**।। प्रथमाष्टके द्वितीयोऽध्यायः समाप्तः ।।**

**।। श्रीकृष्णार्पणमस्तु ।।**

'यो हि सात्विकप्रकृतिर्लोकप्रवादात् कार्यत्वादिलिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठितमानसस्तत्संस्कारवशाच्चान्यदगणयन् वर्तते तं प्रत्याप्तो बन्धुरिवायं समस्तो वेदस्तत्स्वरूपं स्वप्राधानमेव प्रतिपादयति । ततो वाक्यार्थज्ञानादवाप्तपरमानन्दस्तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवतीति तदर्थं कर्मविधयः । अथवा यः सांसारिकविविधदुःखं जिहासुः परमानन्दं च प्रेप्सुस्तत्साधनं जिज्ञासते, तं प्रति परमेश्वर एव प्रसन्नः परमेष्टसाधनतयोपदिश्यते । ततः कथमसौ प्रतीदतीत्यपेक्षायां तत्साक्षात्कारस्तदङ्गतया कर्माणीत्युभयथा स्वप्रधान एव परमेश्वरो वेदार्थः' ।

तदेतद्वैदिकं महातात्पर्यं श्रीमदानन्दतीर्थकृतभाष्याधीत्यैव ज्ञायते । भाष्यश्चानन्दतीर्थीयं श्रीमज्जयतीर्थकृतटीकासहायेनैव परिज्ञाततात्पर्यं भवतीति विदितमेव विपश्चिदपश्चिमानाम् ।